MADRAS GOVERNMENT ORIENTAL MANUSCRIPTS SERIES No. 33.




# ॥ पाणिनिसूत्रव्याख्या ॥

( सोदाहरणश्लोका )

पूर्वार्धम्

मणलूर् - वीरराघवाचार्यविरचिता

# PĀṆINISŪTRAVYĀKHYA

(With Illustrations from Classical Works)

PŪRVĀRDHAM

*by*

VĪRARĀGHAVĀCĀRYA

*of*

Manaḷūr

*Edited by*

T. CHANDRASEKHARAN, M.A., L.T.

*Curator, Government Oriental Manuscripts Library, Madras.*

*(Prepared under the orders of the Government of Madras)*

1954

**Price Rs. 13—12—0**

# INTRODUCTION

The term Saṁskṛtam has got the special significance of denoting a language which is well refined. As such it can be applied to any language that is refined. But since there is no other language which is as pure and as refined as Saṁskṛtam, the term has come to be applied only to this particular language.

There has been a criticism levelled against Saṁskṛt that it is too difficult to grasp both for the youngsters and the adults on account of its complex system of grammar. To some extent this is true but on that account its greatness is not in any way affected. On the other hand, it redounds to its greatness and superiority among the galaxy of languages in the world. No system of grammar is as precise as that of the Sanskrit language; naturally there must be some difficulty in learning such a grammar.

Of late, there have been attempts and demands from the public to simplify Sanskrit grammar. Any such attempt will not in any way make the learning of the language easier; on the other hand the divinity of the language will be abused and it will lose its greatness by falling down to the level of any other language. Instead of simplifying the system of Sanskrit grammar, attempts should be made to make the study of grammar easier and more interesting to keep up the sustained interest of the students. This does not mean that the rules of grammar should not be studied in the usual proper way. What is needed is to make the students forget the monotanous and dry-as-dust nature of grammar by making them forget that they are merely getting by heart some rules which have no literary value. This has now been done by attempting to give the illustrations to the various Sūtras of Pāṇini not in single words but by quoting from literary works of famous authors passages which contain the particular illustrations.

The present work, "Paṇini-Sūtra-Vyakhyā" is a comparatively very recent one compiled by one Vīraraghavācarya with the main object of making the study of grammar easy and interesting. He closely follows the order of the Sūtras as given by Bhaṭṭoji Dikṣita in his Siddhanta Kaumudī. He has completely left out the Samjñā, Sandhitraya and the S'abdādhikara and begins from Strīpratyayaprakaraṇa. A few of the Sūtras are omitted probably due to their not requiring any illustrations. Similarly only a few Vārtikas are given under the respective Sūtras. The commentary is practically a reproduction of the Siddhanta Kaumudī,

The numbering of the Sūtras in the Siddhānta Kaumudi of the Balamanorama Press editon is followed here with the result that in a few places where some of the Sūtras are omitted, the numbers are not continuous. The illustrative verses and prose passages are printed with the actual words (which constitute the examples) in antique type. These examples are also explained in some cases. The illustrations are taken from the following works :--

Bhaṭṭikāvya, S'iśupālavadha, Anargharāghava, Kirātārjuniya, Naiṣadha, Raghuvaṁśa, Bhoja Campū, Kumārasambhava, Campubhārata, Meghasandeśa, Śrīmad Vālmīki Rāmāyaṇa, Viśvaguṇādarśa, Uttararāmacarita, Bhojacaritra, Vallīpariṇaya Campū, and Stotraratna of Yāmunamuni.

Care has been taken to identify the verses and give the exact reference. Where it is not a verse but a prose passage, it has been indicated by prefixing the letter "ग" to the passage and the reference to it is given by the number of the verse immediately preceding it. All the passages that are given as illustrations have been serially numbered for facilitating easy reference. When the same verse or passage is repeated, it is not printed for a second time but a reference to the number of the verse is given as "अस्मिन्नेव ग्रन्थे श्लो०".

The present volume consists of Sūtras in the Pūrvardha of the Siddhānta Kaumudī beginning from the Strīpratyaya-prakaraṇa and ending with the Dvirukta-prakaraṇa. The printing of the second volume containing the Sūtras of the Uttarārdha is in progress and will be completed during the current year. To make the work useful as a book of reference, the following indices are also under preparation and they will be added at the end of the second volume.

1. Index of Authors quoted.
2. " of works quoted.
3. " of Sūtras.
4. " of Vartikas.
5. " of verses cited as illustrations.
6. " of words given as examples.

In the preparation of the press-copy of the work, a single manuscript written in Grantha character, bearing No. R. 4395-A has been utilized. This is in 2 volumes. A restored copy of the same in 3 volumes bearing R. No. 7588 is also available.

The description of the original manuscript utilised for the preparation of the press-copy of the present edition is as follows :—

"(i) R. No. 4395-A, Paper 8 3/5 X 7 inches. Foll. 429. Lines, 25 on a page. Grantha. Condition, good.

Presented in 1923-24 by Sri Ramanujacaryar, Retired Tamil Pandit, Government College, Kumbakonam.

Bound in two volumes."

My thanks are due to the Sanskrit Pandits of this Library S'rīmāns T. H. Visvanathan, N. S. Ramanujam. M. S. Vaidyanathan and V. R. Kalyanasundaram for preparing the press-copy and correcting the proofs. The work was given to the press in the end of February 1954 and three sets of proofs,—galley, page and form were received daily from the press, and it was really a great strain for the Pandits to go through all these proofs every day. The Rathnam Press has also co-operated with me in completing the printing of this work as early as possible without any delay on their part.

Govt. Oriental Manuscripts Library, Madras-5.
*Dated 11th May 1954.*

**T. CHANDRASEKHARAN,**
CURATOR.

# प्रास्ताविकम् ।

अतिरोहितमिदं सर्वेषामेव संस्कृतयाथात्म्यवेदिनां रसिकजनानां यत् सम्प्रति लोके प्रचरन्तीषु सर्वासु भाषासु, देवैरपि व्यवह्रियमाणा अत एव 'संस्कृतं नाम दैवी वागन्वाख्याता महर्षिभिः' इति तत्रभवता दण्डिना मुक्तकण्ठमुद्घुष्यमाणा, इहापि मानुषे लोके 'शवतिर्गतिकर्मा कम्बोजेष्वेव भाषितो भवति विकार एनमार्या भाषन्ते शव इति । हम्मतिः सुराष्ट्रेषु, रंहतिः प्राच्यमध्यमेषु, गमिमेव त्वार्याः प्रयुञ्जते । दातिर्लवनार्थे प्राच्येषु, दात्रमुदीच्येषु ।' इत्यादिमहाभाष्यवाक्यपर्यालोचनेन व्यवहारपथमलमकार्षीत्यवगम्यमाना संस्कृतभाषैवोत्कर्षविशेषमश्नुते इति । अनितरसाधारणमस्याः संस्कृताख्यं नामापि इतराभ्यो विद्यमानमुत्कर्षं सूचयति । तत्किल नामधेयं तामेव भाषामाख्यातुं प्रभवति या संस्कारविशेषं प्राप्ता प्रापिता वा । भगवता पाणिनिना साध्वसाधुशब्दविवेचनपूर्वकं संस्कारं प्रापिता, तत्रभवता वररुचिना उक्तानुक्तदुरुक्तादिचिन्तनमुखेनाभिवर्धिता, सर्वपथीनप्रतिभाशालिना महर्षिणा पतञ्जलिना व्यवहारघण्टापथमानीता एवमन्वर्थनाम्नी संस्कृतभाषैव संस्कृतशब्दव्यपदेशमर्हति । नैवंरूपो व्याकरणसंस्कार इतरासु भाषासु वर्तते ।

इदानीन्तनाः केचिज्जना एवमाशेरते यत् संस्कृतं सर्वैरक्लेशेन व्यवहर्तुमशक्या भाषा, यतस्तदीयं व्याकरणमुत्सर्गापवादबहुलं मितम्पचमतिदुरूहशैलीगुम्फितं चकास्तीति । वयं तु मन्यामहे सत्स्वपीतरेष्वेतदुत्कर्षाधायकेषु हेतुषु तैरुच्यमानमिदमेकमेव अस्या इतरोत्कर्षं द्रढयितुं पर्याप्तमिति । सर्वलक्ष्यानुगुणं इतरैरदृश्यमानाव्याप्त्यतिव्याप्त्यादिदोषरहितशब्दसाधुत्वशिक्षणकृत् तत्तत्कालिकनियमपरिणामादिकृताव्यवस्थाशून्यं सम्पूर्णं व्याकरणं न कस्या अपि भाषाया अस्ति ऋते संस्कृतात् । लक्ष्यग्रन्थपठनापेक्षया लक्षणभूतव्याकरणाध्ययने अन्यास्वपि भाषास्वनुभूयमानं काठिन्यं संस्कृतेऽपि समानं न दोषमावहेत् ।

कियतश्चित् कालादारभ्य संस्कृताभिवृद्धिं कांक्षमाणाः केचित् व्यवहारमार्गात्परिभ्रष्टा दुरूहव्याकरणोपेता सेयं भाषा केनोपायेन, विना क्लेशं इतरभाषावद्व्यवहारगोचरतां नेतुं शक्येति चिन्तयन्तः एवमभिप्रयन्ति, यत 'संस्कृतव्याकरणं विपरिणमनीयम् । तत्रत्या नियमास्सङ्कोचनीयाः' इत्यादि । उत्कर्षसम्पादकत्वेनाभ्यूह्यमानोऽयं नूत्नः पन्था नूनं वर्तमानमप्यतिशयं निस्सार्य संस्कृतापकर्षमेव सम्पादयिष्यति । दुरूहस्य व्याकरणस्य पठने परिमितमतीनामपि श्रद्धा उत्पादनीया चेत्, न तत्र विद्यमानव्याकरणान्यथाकरणमुपायो भवितुमर्हति । किन्तु येन प्रकारेण कठिनतरेऽपि ग्रन्थेऽध्याप्यमाने सर्वेषां शुश्रूषा अनायासबोधश्च जायेत स कश्चिदध्यापनमार्गोऽवलम्बनीयः । सौत्रपदविभाग-

तदर्थवर्णनोदाहरणप्रदर्शनतत्प्रक्रियाकथनदलप्रयोजनविचारादिपूर्वकमध्यापके पाठयति सति तच्छ्रवणौन्मुख्यं तदर्थावगमश्च केषाञ्चित् शास्त्रवासनावासितान्तःकरणानामेव भवेन्न सर्वेषाम् ।

अतश्चिरादनुवर्तमानामिमामेकरूपां रीतिं परित्यज्य अनया सह, व्याकरणग्रन्थोदाहृतानि पदानि वाक्यानि वा योजयित्वा येन कविना गद्यानि श्लोका वा न्यबध्यन्त तानपि प्रतिसूत्रं प्रदर्श्य तदर्थवर्णनञ्च कृत्वा सूत्रोदाहरणभूतं पदमिहास्तीति निर्दिश्यते चेत् वस्तुतः काव्यश्लोकानां हृदयरञ्जकतया सूत्रतात्पर्यदलप्रयोजनादिश्रवणकृतक्लेशभाङ् मनः नूनं कञ्चनाह्लादविशेषं लप्स्यते । अनेनाध्यापनमार्गेण साहित्यव्युत्पत्तिरपि सम्पादिता भवति अक्लेशेन व्याकरणव्युत्पत्तिरपि । तथा लक्ष्यानुसारित्वात् प्रयुक्तान्वाख्यानत्वाच्च व्याकरणस्य सूत्रोदाहरणानि प्रयुक्तानि स्युर्वा इत्येवं आपातत उद्यन् संशयोऽप्यपगमिष्यति ।

प्रकृतेऽस्माभिर्मुद्रणीयतया उपात्तः प्रदर्शितां रीतिमेवावलम्ब्य श्रीमता मणलूर् वीरराघवाचार्येण विरचितः पाणिनिसूत्रव्याख्याख्यो ग्रन्थोऽपि सर्वेषामुपकारको भविष्यति व्याकरणाध्ययनश्रद्धां जनयिष्यतीति च विश्वसिमः । अयं ग्रन्थकर्तापि श्रीभट्टोजीदीक्षितचरणाः स्वकीयसिद्धान्तकौमुद्यां यं क्रममवलम्ब्य सूत्राणि व्याचख्युः तमेव क्रममनुसरति । अनेन संज्ञाप्रकरणसन्धित्रयशब्दाधिकाराव्ययप्रकरणानि न व्याख्यातानि व्याख्यातानि वा अस्माभिर्नोपलब्धानि । स्त्रीप्रत्ययप्रकरणमारभ्य लिङ्गानुशासनप्रकरणपर्यन्तं विद्यमानानि सूत्राणि व्याख्यातानि । तत्रापि मध्ये मध्ये कानिचित्सूत्राणि सन्त्यक्तानि । कानिचित्सूत्राणि विनैव काव्यश्लोकोदाहरणं वृत्त्या सह पठितानि । प्रतिसूत्रं सिद्धान्तकौमुद्यां वर्तमाना वृत्तिस्तदुदाहरणानि चेह पुनः पठ्यन्ते । परन्तु उदाहृतपदानां काव्यश्लोकेषूदाहृतत्वप्रदर्शनं ग्रन्थकृदकरोत् क्वचिदुदाहरणानि व्यवृणोच्च ।

बालमनोरमायामाश्रिता सूत्रक्रमसङ्ख्यैव इहाप्याश्रिता । केषाञ्चित्सूत्राणां परित्यागात् क्वचित्संख्यानुस्यूतिर्न वर्तते । उदाहरणश्लोकेषु गद्येषु वा विद्यमानानि उदाहरणानि बृहद्भिः अक्षरैर्मुद्रितानि ।

उदाहरणानि चात्र गद्यपद्यात्मकानि अधोनिर्दिष्टेभ्यो ग्रन्थेभ्य उद्धृतानि—

भट्टिकाव्यम्, शिशुपालवधम्, अनर्घराघवम्, किरातार्जुनीयम्, नैषधम्, रघुवंशः, भोजचम्पूः, कुमारसंभवः, चम्पूभारतम्, मेघसंदेशः, श्रीमद्वाल्मीकिरामायणम्,

विश्वगुणादर्शः, उत्तररामचरितम्, भोजचरित्रम्, नटीपरिणयचम्पूः, यामुनमुनिविरचितस्तोत्ररत्नम् ।

उदाहृताश्चात्र श्लोका यत्र काव्ये यत्र सर्गे यया वा संख्यया उपलभ्यन्ते ते तथैवात्र निर्दिष्टाः । अत्रोदाहृतानि गद्यानि 'ग' इत्येवंरूपेण चिह्नेनोपक्रम्य मुद्रितानि । परन्तु तेषां गद्यानां काव्येषु पृथक् संख्याया अनुपलम्भात् ततः अव्यवहितस्य श्लोकस्य या संख्या सैवात्रापि न्यवेशि । अत्रोदाहरणतया प्रदर्श्यमानानां गद्यानां पद्यानाञ्च एकरूपा संख्यैव दत्ता न गद्यानां पृथक् । एकत्रोदाहृतयोर्गद्यपद्ययोरुदाहरणार्थं पुनरुपादाने न तत्र पुनस्ते लिख्येते । अपि तु 'अस्मिन्नेव ग्रन्थे श्लो०' इति वा 'ग०' इति वा प्रदर्श्येते ।

भागद्वयात्मना मुमुद्रापयिषितोऽयं ग्रन्थः । सम्प्रति मुद्राप्यमाणे प्रथमभागे स्त्रीप्रत्ययप्रकरणमारभ्य द्विरुक्तप्रकरणान्तर्गतानि सूत्राणि वर्तन्ते । उत्तरार्धप्रकरणं द्वितीयभागात्मना आगामिनि वत्सरे मुद्रापयिष्यते । एतद्ग्रन्थाध्ययनाध्यापनाद्युपयोगिन्यः सूत्रवार्तिकोदाहरणश्लोकोदाहृतपदप्रक्रमसंख्याव्याख्याकर्तृनिर्दिष्टग्रन्थतत्कर्तृसूचिका अपि द्वितीयभागे प्रकाशयिष्यन्ते ।

एतद्ग्रन्थमुद्रापणाय आदर्शतया मद्रपुरराजकीयप्राच्यपुस्तकभाण्डागारस्थः सम्पूर्णः भागद्वयात्मकः ग्रन्थाक्षरलिखितः पत्रात्मकश्च एकः कोशः परिगृहीतः ।

(R. 4395 a)

एतद्ग्रन्थमुद्रापणोपयोगिमातृकां निर्माय नानाग्रन्थपरिशीलनपूर्वकं पाठान् शोधयित्वा नान्तरीयकं सकलमपि श्रमम विगणय्य प्रतिदिनं मुद्रणालयादागच्छन्ति भागत्रयात्मना विभक्तानि पत्राणि संशोध्य परिमित एव काले महतोऽस्य कार्यस्य निर्वर्तने महदुपकृतवतां एतत्कोशालयसंस्कृतपण्डितानां श्रीयुतानां विश्वनाथ, रामानुज, वैद्यनाथ, कल्याणसुन्दरमहोदयानां कृते मदीयां कृतज्ञतामावेदयामि । तथा अस्माभिर्नियमिते काले विलम्बमन्तरेण एतन्मुद्रणं सम्पादितवतां रत्नमुद्रणालयाधिकृतानाञ्च कार्तज्ञ्यं प्रकटयामि ।

मद्रपुरी, इत्थं

11-5-1954. ति. चन्द्रशेखरः ।

## ॥ विषयानुक्रमणिका ॥



॥ विषयानुक्रमणिका समाप्ता ॥

॥ श्रीः ॥

# ॥ पाणिनिसूत्रव्याख्या ॥

## ( सोदाहरणश्लोका )

## ॥ स्त्रीप्रत्ययप्रकरणम् ॥

### ४५३ । स्त्रियाम् । ( ४. १. ३ )

### ४५४ । अजाद्यतष्टाप् । ( ४. १. ४ )

अजादीनामकारान्तस्य च स्त्रियां टाप् स्यात् । अजादिगणपाठः—

अध्यायः ४. पादः १.

भोजचरिते—श्लो. 27.

स्वाम्युक्ते यो न यतते स भृत्यो भृत्यपाशकः ।
तज्जीवनमपि व्यर्थमजागलकुचाविव ॥ 1 ॥

अजा—'जातेरस्त्री'ति (सू. 518) ङीषि प्राप्ते टाप् ।

रघुवंशे—XII. 39.

लक्ष्मणः प्रथमं श्रुत्वा कोकिलामञ्जुवादिनीम् ।
शिवाघोरस्वनां पश्चाद् बुबुधे विकृतेति ताम् ॥ 2 ॥

घोरस्वना—अदन्तत्वाट्टाप् । कोकिला—अजादित्वाट्टाप् ।

रघुवंशे—XII. 34.

कलत्रवानहं बाले कनीयांसं भजस्व मे ।
इति रामो वृषस्यन्तीं वृषस्कन्धः शशास ताम् ॥ 3 ॥

बाला—अजादित्वाट्टाप् ।

चम्पूभारते—I. 42.

ग—वत्से भवत्सेवासम्प्रदायेन सम्प्रति भृशं प्रसीदामीति व्याहृत्य स मुनिरनुकम्पितचेता मह्यमत्यर्थमभीप्सितार्थसमर्थापनपरतन्त्रं कमपि मन्त्रमुपादिक्षत् ॥ 4 ॥

वत्सा—अजादित्वाट्टाप् ।

वा० । शूद्रा चामहत्पूर्वा । जातिः । [2400, 2401]

पुंयोगे तु शूद्री ।

चम्पूरामायणे—II. 58.

अहं वैश्यस्य शूद्रायां जातस्तस्मान्न संभवेत् ।
ब्रह्महत्येति मामुक्त्वा स्वर्गतो दुर्गतो मुनिः ॥ 5 ॥

शूद्रा—टाप् ।

शूद्री शूद्रस्य भार्या स्याच्छूद्रा तज्जातिरङ्गना ।
आभीरी तु महाशूद्री जातिपुंयोगयोः समे ॥ इत्यमरः । II. vi. 13.

'ऋन्नेभ्यो ङीप्' (सू. 306) कर्त्री, दण्डिनी ।

घिनुण् । कुमारसम्भवे—VIII. 76.

आर्द्रकेसरसुगन्धि ते मुखं मत्तरक्तनयनं स्वभावतः ।
अत्र लब्धवसतिर्गुणान्तरं किं विलासिनि मदः करिष्यति ॥ 6 ॥

विलासिनी—ङीप् ।

४५५ । उगितश्च । (४. १. ६)

इति ङीप् ।

ईयसुन् । माघे—I. 18.

अशेषतीर्थोपहृताः कमण्डलो-
र्निधाय पाणावृषिणाभ्युदीरिताः ।
अघौघविध्वंसविधौ पटीयसी-
र्नतेन मूर्ध्ना हरिरग्रहीदपः ॥ 7 ॥

**पटीयसी**—ईयसुनि ङीप् ।

चम्पूभारते—V. 81.

तत्रान्तरे ज्वलितवर्णवपुः कदाचि-
दङ्गेषु शब्द इव कर्णमवाप्य रात्रौ ।
भासां पतिः कृतनमस्करणाय तस्मै
प्रेम्णाशिषः प्रणिजगाद **यवीयसीं** गाम् ॥ 8 ॥

**यवीयसी**—पूर्ववत् ।

क्तवतुप्रत्ययः । माघे—XII. 58.

स **व्याप्तवत्या** परितोऽपथान्यपि
स्वसेनया सर्वपथीनया तया ।
अम्भोभिरुल्लङ्घिततुङ्गरोधसः
प्रतीपनाम्नीः कुरुते स्म निम्नगाः ॥ 9 ॥

**व्याप्तवती**—क्तवतौ ङीप् ।

क्वसुः । रघुवंशे—II. 6.

स्थितः स्थितामुच्चलितः प्रयातां **निषेदुषीमा**सनबन्धधीरः ।
जलाभिलाषी जलमाददानां छायेव तां भूपतिरन्वगच्छत् ॥ 10 ॥

**निषेदुषी**—क्वसुप्रत्ययान्तात् ङीप् ।

ड्मतुप् । भट्टिकाव्ये—II. 4.

निशातुषारैर्नयनाम्बुकल्पैः पत्रान्तपर्यागलदच्छबिन्दुः ।
उपारुरोदेव नदत्पतङ्गः **कुमुद्वतीं** तीरतरुर्दिनादौ ॥ 11 ॥

**कुमुद्वती**—ङीप् ।

मतुप् । चम्पूभारते—I. 48.

अपि क्षुधामावसतेरमुष्मान्मत्वा गुरुत्वं वरमन्तलाभे ।
**अपुष्पवत्यामपि** मे दशायामामोदभारोऽधिकमाविरासीत् ॥ 12 ॥

**अपुष्पवती**—ङीप् ।

शतृ । अस्मिन्नेव ग्रन्थे श्लो० 8. वृषस्यन्ती— ङीप् ।

विदेः शतुर्वसुः । नैषधे—II. 20.

चिकुरप्रकरा जयन्ति ते विदुषी मूर्धनि सा बिभर्ति यान् ।
पशुनाप्यपुरस्कृतेन तत्तुलनामिच्छतु चामरेण कः ॥ 13 ॥

विदुषी—ङीप् ।

वयसि दन्तस्य दतृ । रघुवंशे—VI. 37.

तामग्रतस्तामरसान्तराभामनूपराजस्य गुणैरनूनाम् ।
निधाय सृष्टिं ललितां विधातुर्जगाद भूयः सुदतीं सुनन्दा ॥ 14 ॥

सुदती—ङीप् ।

भट्टिकाव्ये—VI. 7.

सीतां सौमित्रिणा त्यक्तां सध्रीचीं त्रस्नुमेकिकाम् ।
विज्ञायामंस्त काकुत्स्थः क्षये क्षेमं सुदुर्लभम् ॥ 15 ॥

सध्रीची—ङीप् । त्रस्नुः क्नुप्रत्ययः उकारान्तो न ङीप् ।

घिनुण् । ऋन्नेभ्यो ङीप् । कुमारसम्भवे—VIII. 76.

आर्द्रकेसरसुगन्धि ते मुखं मत्तरक्तनयनं स्वभावतः ।
अत्र लब्धवसतिर्गुणान्तरं किं विलासिनि मदः करिष्यति ॥ 16 ॥

विलासिनी—घिनुण् । उगन्तप्रत्ययान्तस्योकारान्तभिन्नस्यैव ङीप् । न तु उप्रत्ययालुच्प्रत्ययान्तादेरुकारान्तशब्दस्य । आदिना, इष्णुच्, घिष्णुच् ।

माघे—VIII. 19

आसीना तटभुवि सस्मितेन भर्त्रा
रम्भोरूरवतरितुं सरस्यनिच्छुः ।
धुन्वाना करयुगमीक्षितुं विलासान्
शीतालुः सलिलगतेन सिच्यते स्म ॥ 17 ॥

अनिच्छुः—उप्रत्यय उकारान्तः । शीतालुः—आलुच्प्रत्यय उकारान्तः ।

४५६ । वनो र च । (४. १. ७)

वन्निति ङ्वनिप्क्वनिप्वनिपां सामान्यग्रहणम् । ङीप् स्यात् रश्चान्तादेशः । 'सुयजोर्ङ्वनिप्' (सू. 3091), 'अन्येभ्योऽपि दृश्यन्ते' (सू. 2980), वनिप् । 'दृशेः क्वनिप्' (सू. 3004), 'सहे च' (सू. 3006), इति 'करोतेः क्वनिप्' पारं दृष्टवान् पारदृश्वा, पारदृश्वानौ । पुंसि—'विड्वनोः' (सू. 2982) इत्यात्वम् । स्त्रियां तु पारं दृष्टवती पारदृश्वरी ।

भट्टिकाव्ये—V. 34.

**यमास्यदृश्वरी** तस्य ताटका वेद विक्रमम् ।
शूरंमन्यो रणाच्चाहं निरस्तः छिन्ननर्दिना ॥ 18 ॥

नैषधे—I. 12.

सितांशुवर्णैर्वयति स्म तद्गुणै-
र्महासिवेम्नः **सहकृत्वरी** बहुम् ।
दिगङ्गनाङ्गावरणं रणाङ्गणे
यशःपटं तद्भटचातुरी तुरी ॥ 19 ॥

४५७ । पादोऽन्यतरस्याम् । (४. १. ८.)

संख्यासुपूर्वस्य (सू. 879) इति पादशब्दस्य लोपः समासान्तः बहुव्रीहौ । द्विपात्, सुपात् । पुंसि । स्त्रियां तु ङीप् वा स्यात् । द्विपदी-सुपदी, द्विपात्-सुपात् । 'कर्णजलूका शतपद्युभे' इत्यमरः । II. v. 14.

भट्टिकाव्ये—IV. 17.

**सुपाद्द्विरदनासोरूर्मृदुपाणितलाङ्गुलिः ।**
**प्रथिमानं दधानेन जघनेन घनेन सा ॥ 20 ॥**

शोभनौ पादौ यस्याः सा सुपात् । 'सङ्ख्या' (सू. 879) इति लोपः । अनेन विकल्पान्न ङीप् ।

४५९ । मनः । (४. १. ११)

मन्नन्तान्न ङीप् । सीमा, सीमानौ

चम्पूभारते—V. 5.

आस्थानसीम्नि तनयाद्गिरिशेन युद्ध-
माकर्ण्य हर्षविकसन्मनसो मघोनः ।
अङ्गेऽखिले प्रसरतां पुलकाङ्कुराणा-
मक्ष्णां सहस्रतयमेव बभूव विघ्नः ॥ 21 ॥

## ४६० । अनो बहुव्रीहेः । ( ४. १. १२ )

अन्नन्ताद्बहुव्रीहेर्न ङीप् । बहुयज्वा, बहुयज्वानौ ।

माघे— VIII. 41.

सङ्क्रान्तं प्रियतमवक्षसोऽङ्गरागं
साध्वस्याः सरसि हृतेऽधुनाम्भः ।
तुष्ट्वैवं सपदि हृतेऽपि तत्र तेपे
कस्याश्चित्स्फुटनखलक्ष्मणः सपत्न्या ॥ 22 ॥

माघे—1. 48.

विनोदमिच्छन्नथ दर्पजन्मनो
रणेन कण्डूस्त्रिदशैः समं पुनः ।
स रावणो नाम निकामभीषणं
बभुव रक्षः क्षतरक्षणं दिवः ॥ 23 ॥

अनर्घराघवे—V. 45.

चिराय रात्रिञ्चरवीरचक्र-
माराङ्कवैज्ञानिक पश्यतस्त्वाम् ।
सुधासधर्माणमिमां च वाचं
न शृण्वतस्तृप्यति मानसं मे ॥ 24 ॥

## ४६१ । डाबुभाभ्यामन्यतरस्याम् । ( ४. १. १३ )

सूत्रद्वयोपात्ताभ्यां डाब् वा स्यात् । सीमा सीमे सीमानौ । दामा दामे दामानौ ।
'न पुंसि दाम' इत्यमरः । II. ix. 78. बहुयज्वा बहुयज्वे बहुयज्वानौ ।

चम्पूभारते—II. 27.

एतां प्रशास्ति भुजया वनराज्यसीमा-
मेकः स्वयं नरभुजामृषभो हिडिम्बः ।
अर्धांशभागजनवधे सममन्तकेन
तुल्याभिधानपदया स्वसृमान्मया यः ॥ 25 ॥

माघे—XIV. 22.

बद्धदर्भमयकाञ्चिदामया
वीक्षितानि यजमानजायया ।
शुष्मणि प्रणयनादिसंस्कृते
तैर्हवींषि जुहवाम्बभूविरे ॥ 26 ॥

४६२ । अन उपधालोपिनोऽन्यतरस्याम् । (४. १. २८)

अन्नन्ताद्बहुव्रीहेरुपधालोपिनो वा ङीप् स्यात् ।

अस्मिन्नेव ग्रन्थे श्लो° 9.

प्रतीपं नाम यासां ताः **प्रतीपनाम्न्यः** ।

चम्पूभारते—IV. 16.

ग—सनातनः पुमान् पुरीं पुरानुभूतकुशस्थलीं**सुषाम्नीं** प्रतस्थे ॥ 27 ॥

भट्टिकाव्ये—IX. 85.

**सुषाम्नीं** सर्वतेजस्सु तन्वीं ज्योतिष्टमां शुभाम् ।
निष्टपन्तीमिवात्मानं ज्योतिःसात्कुर्वतीं वनम् ॥ 28 ॥

शोभनं साम सान्त्वं यस्यास्तां **सुषाम्नीम्** । सुषामादिषु च, (सू. 1022) इति षत्वम् ।

माघे—II. 39.

त्वयि भौमं गते जेतुमरौत्सीत्स पुरीमिमाम् ।
प्रोषितार्यमणं मेरोरन्धकारस्तटीमिव ॥ 29 ॥

अनर्घराघवे—V. 8.

ग—ततश्च विराधवधक्षणाक्षिप्तहृदये दुःसहशोकदीर्घाह्नीमौर्ध्वदेहिकीं पितुः क्रियामतिवाह्य भगवता चतुःसमुद्रचुलुकिशयेन विन्ध्याचलचापलारम्भविस्तब्धघातिना वातापिदानवदीर्घयात्रामङ्गलकलशेन कलशयोनिना सनाथामरण्यवीथीं प्रतिपद्यमाने दाशरथौ पथि धाराधरो नाम वायसः सहसैव वैदेहीमुपाद्रवत् ॥ 30 ॥

दीर्घमहः यस्यां सा दीर्घाह्नी । उपधालोपिनः किम् ।

किरातार्जुनीये—XI. 23.

दुरासदानरीनुग्रान्धृतेर्विश्वासजन्मनः ।
भोगान्भोगानिवाहेयानध्यास्यापन्न दुर्लभा ॥ 31 ॥

धृतेर्विश्वासजन्मनः—अत्र ङीप् नैव ।

४६३ । प्रत्ययस्थात्कात्पूर्वस्यात इदाप्यसुपः । ( ७. ३. ४४ )

अस्मिन्नेव ग्रन्थे श्लो० 15.

एकिकां कात्पूर्वस्येत्वम् । 'एकादाकिनिच्चासहाये' (सू. 1998) इति कन् । एककः - पुं, एकिका - स्त्री ।

नैषधे—I. 6.

दिगीशवृन्दांशविभूतिरीशिता दिशां स कामप्रसरावरोधिनीम् ।
बभार शास्त्राणि दृशं द्व्यधिकां निजत्रिनेत्रावतरत्वबोधिकाम् ॥ 32 ॥

बोधयतीति बोधिका ण्वुल् ।

'मुनिर्भृशाश्व' इत्यत्र ताटका । अत्र ककारो न प्रत्ययस्थः ।

४६४ । न यासयोः । ( ७. ३. ४५ )

वा० । त्यकनश्च निषेधः । [ 4526 ]

इति इत्वनिषेधः । उपाधिभ्यां त्यकन्नासन्नारूढयोः ( सू. 1885) इति त्यकन् ।

भट्टिकाव्ये—V. 89.

समुद्रोपत्यका हैमी पर्वताधित्यका पुरी ।
रत्नपारायणं नाम्ना लङ्केति मम मैथिलि ॥ 33 ॥

'उपत्यकाद्रेरासन्ना भूमिरूर्ध्वमधित्यका' इत्यमरः । II. iii. 7.

वा० । क्षिपकादीनां च न । ( 4530 )

क्षिपकादिः—७. ५.

'चटकः कलविङ्कःस्यात्तस्य स्त्री चटका तयोः' इत्यमरः । II. v. 19.

चम्पूभारते—I. 51.

कन्यकात्वेऽपि मय्येषा कामुकीति स्मरन्निव ।
प्रसूतिदिवसं कुन्त्याः प्रादिद्युतदहस्करः ॥ 34 ॥

चम्पूभारते—III. 39.

मणलूरपुरे सम्पद्गुणलूनालकामदे ।
जनदृष्टिकृतानन्दो जगाम कुरुकुञ्जरः ॥ 35 ॥

वा० । तारका ज्योतिषि । ( 4531 )

रघुवंशे—III. 2.

शरीरसादादसमग्रभूषणा मुखेन सालक्ष्यत लोध्रपाण्डुना ।
तनुप्रकाशेन विचेयतारका प्रभातकल्पा शशिनेव शर्वरी ॥ 36 ॥

वा० । सूतकापुत्रिकावृन्दारकाणां वेति वक्तव्यम् । ( 4535 )

सूतिका - सूतकेत्यादि ।

भट्टिकाव्ये—V. 18.

योषिद्वृन्दारिका तस्य दयिता हंसनादिनी ।
दूर्वाकाण्डमिव श्यामा न्यग्रोधपरिमण्डला ॥ 37 ॥

शृङ्गवृन्दाभ्यामारकन् । वृन्दारकः, वृन्दारका वृन्दारिका ।

४६९ । अनुपसर्जनात् । ( ४. १. १४ )

न ङीप् ।

किरातार्जुनीये—XI. 51.

तामैक्षन्त क्षणं सभ्याः दुःशासनपुरःसराम् ।
अभिसार्यार्कमावृत्तां छायामिव महातरोः ॥ 38 ॥

चम्पूरामायणे—I. 18.

ग—एवं भगवतः कुशलानुयोगपुरःसराममृतासारसरसां सरस्वतीमाकर्ण्य सम्पूर्णमनोरथानां सुमनसां संसत्पुंसे परस्मै विज्ञापयामास ॥ ३९ ॥

४७० । टिड्ढाणञ्द्वयसज्दघ्नञ्मात्रच्तयप्ठक्ठञ्कञ्क्वरपः ॥४. १. १५॥

वा० । नञ्स्नञीकक्ख्युंस्तरुणतलुनानामुपसङ्ख्यानम् । (2425)

ङीप् स्यात् ।

टित् - कर्तरि ल्युट्. माघे—XIII. 52.

निलयेषु लोहितकनिर्मिता भुवः
शितिरत्नरश्मिहरितीकृतान्तराः ।
जमदग्निसूनुपितृतर्पणीरपो
वहति स्म या विरलशैवला इव ॥ 40 ॥

माघे—VI. 37.

निजरजःपटवासमिवाकिरत्
धृतपटोपमवारिमुचां दिशाम् ।
प्रियवियुक्तवधूजनचेतसा-
मनवनी नवनीपवनावलिः ॥ 41 ॥

अवतीति अवनी । कर्तरि ल्युट् । न अवनी अनवनी ।

चम्पूभारते—I. 2.

तुहिनकिरणवंशस्थूलमुक्ताफलानां
विपुलभुजविराजद्वीरलक्ष्मीविभूम्नाम् ।

हसितसुरपुरश्रीरस्ति सा हस्तिनाख्या
रिपुजनदुरवापा राजधानी कुरूणाम् ॥ 42 ॥

राजानो धीयन्तेऽस्यामिति राजधानी । अधिकरणे ल्युट् ।

भट्टिकाव्ये—II. 47.

हिरण्मयी साललतेव जङ्गमा
च्युता दिवः स्थास्नुरिवाचिरप्रभा ।
शशाङ्ककान्तेरधिदेवताकृतिः
सुता ददे तस्य सुताय मैथिली ॥ 43 ॥

हिरण्यस्य विकारो हिरण्मयी ।

चम्पूभारते—VI. 6.

त्रिदण्डकाषायकमण्डलूज्ज्वलो
जपस्फुरद्दन्तपुटो युधिष्ठिरः ।
उपानहं दारुमयीं पदा स्पृश-
न्नुपासदत्संसदि मेदिनीश्वरम् ॥ 44 ॥

तस्य पूरणे डट् । चम्पूरामायणे—II. 59.

मुनिशापकृतोत्पत्तिविपत्तिर्निष्प्रतिक्रिया ।
ततो दशरथायाशु दिदेश दशमीं दशाम् ॥ 45 ॥

चम्पूरामायणे—V. 30.

सौख्यावहस्य पवनात्मजनीयमान-
रामाङ्गुलीयकविलोकनवासरस्य ।
सत्यं कलां शततमीं भुवि नैव भेजे
पाणिग्रहोत्सवदिनं जनकात्मजायाः ॥ 46 ॥

माघे—XIV. 18.

आननेन शशिनः कलां दध-
द्दर्शनक्षपितकामविभ्रमः ।

आप्लुतः स विमलैर्जलैरमु-
दष्टमूर्तिधरमूर्तिरष्टमी ॥ 47 ॥

भूतपूर्वे चरट् । विश्वगुणादर्शे—223.

एषा भूतपुरी निरीक्षितचरी दोषापहन्त्री मया
श्रीमानत्र गुणाब्धिराविरभवद्रामानुजार्यो मुनिः ।
लय्यन्तामृतसिन्धुमन्थनभवद्धैयङ्गवीनात्मकं
विज्ञानं यदुपज्ञमेव विदुषामद्यापि विद्योतते ॥ 48 ॥

पचाद्यचि नदट् देवट् चरडिति टित्करणात् ङीप् ।

माघे—III. 48.

स्फुरत्तुषारांशुमरीचिजालै-
र्विनिह्नुताः स्फाटिकसौधपङ्क्तीः ।
आरुह्य नार्यः क्षणदासु यस्यां
नभोगता देव्य इव व्यराजन् ॥ 49 ॥

भट्टिकाव्ये—IV. 20.

सौमित्रे मामुपायंस्थाः कम्रामिच्छुर्वशंवदाम् ।
त्वभोगीनां सहचरीमशङ्कः पुरुषायुषम् ॥ 50 ॥

चरतीति चरी । तेन सहशब्दस्य सुप्सुपेति समासः । केचित् सह चरतीति सहचरी 'भिक्षासेनादायेषु च' (सू. 2931), इति चकाराट्टप्रत्यय इत्याहुः । उभयत्रापि टित्वात् ङीप् । चरेष्टः ।

भट्टिकाव्ये—II. 23.

तं विप्रदर्शं कृतघातयत्ना यान्तं वने रात्रिचरी डुढौके ।
जिघांसुवेदं धृतभासुरास्त्रस्तां ताटकाख्यां निजघान रामः ॥ 51 ॥

नैषधे—II. 95.

परिघावलयच्छलेन या न परेषां ग्रहणस्य गोचरा ।
फणिभाषितभाष्यफक्किकाविषमा कुण्डलनामवापिता ॥ 52 ॥

गोचरेति घप्रत्ययः । 'कृञो हेत्वि' (सू. 2934) त्यादिनात्र टः ।

किरातार्जुनीये—XI. 19.

यः करोति वधोदर्का निःश्रेयसकरीः क्रियाः ।
ग्लानिदोषच्छिदः स्वच्छाः स मूढः पङ्कयत्यपः ॥ 53 ॥

ट्यु । चम्पूभारते—VIII. 57.

दुग्धाम्बुराशितनयानयनद्वयेन
तुल्याकृतित्वमहिमानमिवोपगन्तुम् ।
मत्स्यत्वमेत्य भुवि यः सुरवैरिनीता
मध्ये समुद्रमनवीनगवीर्विचिक्ये ॥ 54 ॥

'सायंचिरम्' (सू. 1391) इत्यादिना ट्युः । भट्टिकाव्ये—V. 65.

सायन्तनीं तिथिप्रण्यः पङ्कजानां दिवातनीम् ।
कान्तिं कान्त्या सदातन्या ह्रेपयन्ती शुचिस्मिता ॥ 55 ॥

ढक् । 'स्त्रीभ्यो ढक्' । (सू. 1123) रघुवंशे—II. 3.

निवर्त्य राजा दयितां दयालु-
स्तां सौरभेयीं सुरभिर्यशोभिः ।
पयोधरीभूतचतुःसमुद्रां
जुगोप गोरूपधरामिवोर्वीम् ॥ 56 ॥

'धुरो यड्ढञौ' । (सू. 1628) चम्पूभारते—II. 67.

धौम्यस्य सुधामधुरिमधौरेयीभिः स्वयंवरकथाभिः ।
द्रुपदपुरःसरणिरेषां द्वित्राण्यभवत्पदानीव ॥ 57 ॥

'पथ्यतिथी'ति ढञ् । (सू. 1656) किरातार्जुनीये—XI. 9.

आतिथेयीमथासाद्य सुतादपचितिं हरिः ।
विश्रम्य विष्टरे नाम व्याजहारेति भारतीम् ॥ 58 ॥

'एण्या ढञ्'। (सू. 1537) अनर्घराघवे—II. 29.

वारांस्त्रीनभिषुण्वते विदधते वन्यैः शरीरस्थिती-
रैणेय्यां त्वचि संविशन्ति वसते चापि त्वचस्तारवीः।
तत्पश्यन्ति च धाम नाभिपततो यच्चर्मणे चक्षुषी
धन्यानां विरजस्तमा भगवती चर्येयमाह्लादते ॥ 59 ॥

अण्। 'तस्येदमि' (सू. 1500) त्यण्। माघे—II. 2.

गुरुकाव्यानुगां बिभ्रच्चान्द्रीमभिनभःश्रियम्।
सार्धमुद्धवसीरिभ्यामथासावासदत्सदः ॥ 60 ॥

चन्द्रस्येयं चान्द्री।

'कर्मण्यण्'। (सू. 2913) रघुवंशे— IV. 20.

इक्षुच्छायानिषादिन्यस्तस्य गोप्तुर्गुणोदयम्।
आकुमारकथोद्घातं शालिगोप्यो जगुर्यशः ॥ 61 ॥

शालीन् गोपायन्तीति शालिगोप्यः।

रघुवंशे—XIX. 35.

वेणुना दशनपीडिताधरा वीणया नखपदाङ्कितोरवः।
शिल्पकार्य उभयेन वेजितास्तं विजिह्मनयना व्यलोभयन्॥ 62 ॥

शिल्पं कुर्वन्तीति शिल्पकार्यः।

माघे—III. 51.

चिक्रंसया कृत्रिमपत्रिपङ्क्तेः कपोतपालीषु निकेतनानाम्।
मार्जारमप्यायतनिश्चलाङ्गं यस्यां जनः कृत्रिममेव मेने ॥ 63 ॥

कपोतान्पालयन्तीति कपोतपाल्यः।

'प्राणिरजतादिभ्योऽञ्' (सू. 1532) अस्मिन्नेव ग्रन्थे श्लो० 33. हैमि...

भट्टिकाव्ये—VII. 95.

यत्न प्रोर्णुवितुं तूर्णं दिशं कुरुत दक्षिणाम् ।
प्रोर्णवित्रीं दिवस्तत्र पुरीं द्रक्ष्यथ काञ्चनीम् ॥ 64 ॥

'उत्सादिभ्योऽञ्' (सू. 1078) । माघे—II. 11.

न दूये सात्त्वतीसूनुर्यन्मह्यमपराध्यति ।
यत्तु दन्दह्यते लोकमतो दुःखाकरोति माम् ॥ 65 ॥

सत्त्वतोऽपत्यं स्त्री सात्त्वती ।

'महाकुलादञ्खञौ' । (सू. 1164) भट्टिकाव्ये—VII. 90.

केनापि दौष्कुलेयेन कुल्यां माहाकुलीं प्रियाम् ।
हृतां माहाकुलीनस्य तस्य लिप्सामहे वयम् ॥ 66 ॥

महाकुलस्यापत्यं स्त्री माहाकुली ।

'प्रमाणे द्वयसज्दघ्नञ्मात्रचः' (सू. 1838) इति द्वयसच् । माघे - VI. 55.

गजपतिद्वयसीरपि हैमन-
स्तुहिनयन् सरितः पृषतां पतिः ।
सलिलसन्ततिमध्वगयोषिता-
मतनुतातनुतापकृतं दृशोः ॥ 67 ॥

गजपतिः प्रमाणमासां गजपतिद्वयस्यः ।

चम्पूभारते—VI. 75.

विलोक्य तं भ्रातरमात्तशोका मृत्युद्विपस्येव पिधानपिण्डम् ।
ज्यायानिवामी विदधुस्स्थलीं तामस्रेण गुल्फद्वयसीं निजेन ॥ 68 ॥

अनर्घराघवे—II. 74.

नैवायं भगवानुदञ्चति शशी गव्यूतिमात्रीमपि
ग्रामद्यापि तमस्तु कैरवकुलश्रीचाटुकाराः कराः ।
मज्जन्ति स्थलसीम्नि शैलगहनोत्सङ्गेषु संरुन्धते
जीवग्राहमिव क्वचित्क्वचिदपि च्छायासु गृह्णन्ति च ॥ 69 ॥

'सङ्ख्याया अवयवे तयप्' । (सू. 1843) अनर्घराघवे—I. 53

त्वं तास्ताः स्तुतवानृचो दशतयीस्त्वत्प्रीतये यज्वभिः
स्वाहाकारमुपाहितं हविरिह त्रेताग्निराचामति ।
त्वां क्षीरोदजलेशयं क्रतुलिहः पृथ्वीमवातीतर-
न्नुद्धूता दशकन्धरप्रभृतयो निग्राहितारस्त्वया ॥ 70 ॥

'द्वित्रिभ्यां तयस्यायज्वा' । (सू. 1844) माघे—II. 3.

जाज्वल्यमाना जगतः शान्तये समुपेयुषी ।
व्यद्योतिष्ट सभावेद्यामसौ नरशिखित्रयी ॥ 71 ॥

'उभादुदात्तो नित्यम्' । (सू. 1845) माघे—XI. 27.

मुदितयुवमनस्कास्तुल्यमेव प्रदोषे
रुचमदधुरुभय्यः कल्पिता भूषिताश्च ।
परिमलरुचिराभिर्न्यकृतास्तु प्रभाते
युवतिभिरुपभोगान्नीरुचः पुष्पमालाः ॥ 72 ॥

'ओजः सहो' (सू. 1577), इति ठक् । माघे—IX. 59.

अवधीर्य धैर्यकलिता दयितं विदधे विरोधमथ तेन सह ।
तव गोप्यते किमिव कर्तुमिदं न सहास्मि साहसमसाहसिकी ॥ 73 ॥

'तत्प्रत्यनु' (सू. 1578), इति ठक् । भट्टिकाव्ये—V. 94

तां प्रातिकूलिकीं मत्वा जिहीर्षुर्भीमविग्रहः ।
बाहूपपीडमाश्लिष्य जगाहे द्यां निशाचरः ॥ 74 ॥

'तत्र नियुक्त' (सू. 1620) इति ठक् । रघुवंशे—VI. 59.

अथोरगाख्यस्य पुरस्य नाथं दौवारिकी देवसरूपमेत्य ।
इतश्चकोराक्षि विलोकयेति पूर्वानुशिष्टां निजगाद भोज्याम् ॥ 75 ॥

द्वारे नियुक्ता दौवारिकी ।

'तस्य च दक्षिणा' (सू. 1759) इति ठक् । माघे—XIV. 33.

दक्षिणीयमधिगम्य पङ्क्तिशः
पङ्क्तिपावनमथ द्विजव्रजम् ।
दक्षिणः क्षितिपतिर्व्यशिश्रण-
द्दक्षिणाः सदसि राजसूयिकीः ॥ 76 ॥

राजसूयस्य दक्षिणाः राजसूयिकीः ।

'प्रयोजनम्' (सू. 1772) इति ठञ् । भट्टिकाव्ये—I. 26.

इषुमति रघुसिंहे दन्दशूकान् जिघांसौ
धनुररिभिरसह्यं मुष्टिपीडं दधाने ।
व्रजति पुरतरुण्यो बद्धचित्राङ्गुलित्रे
कथमपि गुरुशोकान्मारुदन्माङ्गलिक्यः ॥ 77 ॥

मङ्गलं प्रयोजनमासां माङ्गलिक्यः ।

'आकालिक' (सू. 1777) इति ठञ् । समानकालावाद्यन्तौ अस्याः-आकालिकी । समानकालस्याकालादेशः । 'अध्यात्मादेष्ठञिष्यते' । (वा॰ सू. 1437) केचित्तु अकालशब्दादेव भवार्थे ठञित्याहुः ।

कुमारसम्भवे—III. 34.

तपस्विनः स्थाणुवनौकसस्तामाकालिकीं वीक्ष्य मधुप्रवृत्तिम् ।
प्रयत्नसंस्तम्भितविक्रियाणां कथंचिदीशा मनसां बभूवुः ॥ 78 ॥

चम्पूभारते—V. 65.

तं वीक्ष्य तत्र तरुमावरणं भजन्ती
सा पार्वती सविधवल्लिपरम्परासु ।
हासैः कराङ्गुलिबिलादसकृद्गलद्भि-
राकालिकीं कुसुमपङ्क्तिमिव व्यतानीत् ॥ 79 ॥

'कालाट्ठञ्' (सू. 1381)। अनर्घराघवे—II. 10.

ग—प्राभातिकी भुवनस्य लक्ष्मीः ॥ 80 ॥

प्रभाते भवा प्राभातिकी ।

'त्यदादिष्वि'ति (सू. 429) कञ्। 'समानान्ययोः' (सू. 2974) इति कञ्। 'दृग्दृश' (सू. 1017) इति समानस्य सभावः। सदृशः। रूढिशब्दोऽयम्; नात्र दर्शनक्रिया विद्यते। नैषधे—V. 106.

यन्मतौ विमलदर्पणिकायां संमुखस्थमखिलं खलु तत्त्वम् ।
तेऽपि किं वितरथेदृशमाज्ञां या न यस्य सदृशी वितरीतुम् ॥ 81 ॥

'इण्नश' (सू. 3143) इति क्वरप्। चम्पूभारते—IV. 67.

निरुध्य वायुं निभृतं तपस्यतः शिरःसमुत्था दशदिग्विसृत्वरी ।
नटत्स्फुलिङ्गा नवधूमसन्ततिः स्फुटीचकारास्य धनञ्जयाभिधाम् ॥ 82 ॥

चम्पूभारते—VII. 20.

स्नेहे जिष्णुर्न तत्रारेः सेनाधूलिं विसृत्वरीम् ।
प्रायेण मानिना पुंसा परागो न हि सह्यते ॥ 83 ॥

अनर्घराघवे—VII. 108.

कमितुरभिसृत्वरीणां गौराङ्गीणामिहेन्दुगौरीषु ।
उडुयमानानामिव रजनिषु परमीक्ष्यते छाया ॥ 84 ॥

'गत्वरश्च' इति (सू. 3144) क्वरबन्तो निपातः । किरातार्जुनीये—XI. 12.

शरदम्बुधरच्छाया गत्वर्यो यौवनश्रियः ।
आपातरम्या विषयाः पर्यन्तपरितापिनः ॥ 85 ॥

'स्त्रीपुंसाभ्यां नञ्स्नञौ' (सू. 1079.) इति नञ्स्नञौ। नैषधे—VI. 47.

पुनानिवासस्पर्शि मया व्रजन्त्या छाया मया पुंस इव व्यलोकि ।
ब्रुवन्निवातर्कि मयापि कश्चिदिति स स स्त्रैणगिरः शृणोति ॥ 86 ॥

स्त्रीषु भवाः स्त्रैण्यः। स्त्रैण्यश्च ता गिरश्च स्त्रैणगिरः। पुंवद्भावः।

स्नञ् । भट्टिकाव्ये—V. 91.

सङ्गच्छ **पौंस्नि** स्त्रैणं मां युवानं तरुणी शुभे ।
राघवः प्रोष्य पापीयान् जहीहि तमकिञ्चनम् ॥ 87 ॥

पुंसे हिता पौंस्नी । तस्याः सम्बुद्धिः **पौंस्नि** । तरुणस्योपसंख्यानात् तरुणी ।

आढ्यसुभग (सू. 2973) इति ख्युन् । चम्पूभारते—X. 37.

द्रोणस्य सेनाचरधूलिपाली श्रोणेस्तु **नग्नंकरणी** बभूव ॥
घटाथ तस्याः करदानपूरैः पटं पुनः सङ्कटयाञ्चकार ॥ 88 ॥

अनग्ना नग्ना क्रियतेऽनयेति **नग्नंकरणी** ।

अनर्घराघवे—I. 15.

तस्याज्ञयैव परिपालयतः प्रजां मे
कर्णोपकण्ठ**पलितंकरणी** जरेयम् ।
यद्गर्भरूपमिव मामनुशास्ति सर्व-
मद्यापि तन्मयि गुरुर्गुरुपक्षपातः ॥ 89 ॥

अनर्घराघवे—.V 21.

प्रतिपरिसरं भूयानर्घः शिखण्डभृतां यथा-
मिलितमलिभिः सम्भुज्यन्ते कदम्बविभूतयः ।
अभिनवघनव्यूढोरस्कः प्रवर्षति गाल्यवान्
विषधरवधूगर्भाधान**प्रियङ्करणी**रपः ॥ 90 ॥

**४७१ । यञश्च । (४. १. १६)**

**४७२. । हलस्तद्धितस्य । (६. ४. १५०)**

इति लोपः । मानुषी ।

माघे—X. 38.

लीलयैव सुतनोस्तुलयित्वा गौरवाढ्यमपि **लावणिकेन** ।
मानवञ्चनविदा वचनेन क्रीतमेव हृदयं दयितेन ॥ 91 ॥

लावण्यं कान्तिविशेषोऽस्यास्तीति लावणिकम् । लावण्यवत् । 'अत इनिठनौ' ( सू. 1922. ) इति ठन्प्रत्यये इकादेशः । 'यस्येति च' ( सू. 311 ) इति लोपे 'हलस्तद्धितस्य' ( सू. 472. ) इति यकारलोपः । अन्यत्र तु लवणं पण्यमस्येति लावणिकः । लवणव्यवहारी । 'लवणाट्ठञ्' ( सू. 1602 ) ।

४७८. । वयसि प्रथमे । ( ४. १. २० )

रघुवंशे—VI. 20.

ततो नृपाणां श्रुतवृत्तवंशा पुंवत्प्रगल्भा प्रतिहाररक्षी ।
प्राक् सन्निकर्षं मगधेश्वरस्य नीत्वा कुमारीमवदत्सुनन्दा ॥ 92 ॥

वा० वयस्यचरम इति वाच्यम् । ( 2435 )

चम्पूरामायणे—V. 57.

रक्षःस्त्रीवदनारविन्दरजनीं विश्वम्भरानर्हिणी-
वर्षारम्भदशां दशाननयशःकादम्बकादम्बिनीम् ।
वैधव्योचितवेषनिश्चितमनोलङ्कावधूटीजटां
वैदेह्यास्त्रिजटासमां समकिरद्भूम्यां हनूमान्दिवि ॥ 93 ॥

वधूटचिरण्टशब्दौ यौवनवाचिनौ ।

'अचरम' इति निषेधात्र ङीप् । माघे—IV. 29.

अश्रमतिजरठाः प्रकामगुर्वीरलघुविलम्बिपयोधरोपरुद्धाः ।
सततमसुमतामगम्यरूपाः परिणतदिक्करिकास्तटीर्बिभर्ति ॥ 94 ॥

कन्याया न । 'कन्यायाः कनीन चे'ति ( सू. 1119 ) निर्देशात् ।

विश्वगुणादर्शे—394

पीताम्बरालंकृतमध्यभागा कल्हारमालाकमनीयवेणी ।
सह्याद्रिकन्या जनकस्य गेहात्पत्युः समीपं व्रजति प्रसन्ना ॥ 95 ॥

४७९ । द्विगोः । ( ४. १. २१ )

इति ङीप् । रघुवंशे—XII. 31.

पञ्चवट्यां ततो रामः शासनात्कुम्भजन्मनः ।
अनपोढस्थितिस्तस्थौ विन्ध्याद्रिः प्रकृताविव ॥ 96 ॥

पञ्चानां वटानां समाहारः पञ्चवटी । 'तद्धितार्थेति' (सू. 728.) तत्पुरुषः । 'सङ्ख्यापूर्वो द्विगु'रिति (सू. 730.) द्विगुसंज्ञा । 'द्विगुरेकवचन'मिति (सू. 731.) एकवचनम् ।

चम्पूरामायणे—IV. 18.

नाहं सुकेतुतनया न च सप्तसाली
वाली न च त्रिभुवनप्रथितप्रभावः ।
तारास्मि वज्रहृदया विशिखैरभेद्या
धन्वी कथं भवसि राघव मामविध्वा ॥ 97 ॥

सप्तानां सालानां समाहारः सप्तसाली । त्रयाणां भुवनानां समाहारः त्रिभुवनम् ।

४८३ । ऊधसोऽनङ् । (५. ४. १३१)

ऊधसोऽन्तस्य बहुव्रीहेरनङादेशः स्यात्स्त्रियाम् ।

४८४ । बहुव्रीहेरूधसो ङीष् । (४. १. २५)

ऊधोऽन्ताद्बहुव्रीहेर्ङीष् स्यात्स्त्रियाम् ।

रघुवंशे—II. 49.

अथैकधेनोरपराधचण्डाद्गुरोः कृशानुप्रतिमाद्बिभेषि ।
शक्योऽस्य मन्युर्भविता विनेतुं गाः कोटिशः स्पर्शयता घटोध्नीः ॥98॥

घटा इवोधांसि यासां ता घटोध्न्यः । स्त्रियां किम् ?

किरातार्जुनीये—IV. 10.

उपारताः पश्चिमरात्रिगोचरादपारयन्तः पतितुं जवेन गाम् ।
तमुत्सुकाश्चक्रुरवेक्षणोत्सुकं गवां गणाः प्रस्नुतपीवरोधसः ॥ 99 ॥

प्रस्नुतं पीवरं ऊधो येषां ते प्रस्नुतपीवरोधसः । अत्रानङ्ङीषौ न ।

४८५ । सङ्ख्याव्ययादेर्ङीप् । (४. १. २६)

४८६ । दामहायनान्ताच्च । (४. १. २७)

४८७ । नित्यं संज्ञाच्छन्दसोः । (४. १. २९)

अन्नन्ताद्बहुव्रीहेरुपधालोपिनो ङीप् स्यात्संज्ञाच्छन्दसोः । सुराज्ञी नाम नगरी । अन्यत्र पूर्वेण विकल्प एव । वेदे तु शतमूर्ध्नी ।

४८९ । अन्तर्वत्पतिवतोर्नुक् । (४. १. ३२)

एतयोः स्त्रियां नुक् स्यात् । अन्तर्वत् पतिवत् इति मतुबन्तौ निपातौ । 'उगितश्च' इति (सू. 455) ङीप् ।

रघुवंशे—XV. 13.

तस्यामेवास्य यामिन्यामन्तर्वत्नी प्रजावती ।
सुतावसूत सम्पन्नौ कोशदण्डाविव क्षितिः ॥ 100 ॥

अन्तरस्या अस्तीति अन्तर्वत्नी । 'अन्तर्वत्नी तु गर्भिणी' इत्यमरः । II. vi. 22.

विश्वगुणादर्शे—45.

कृत्वा सेतुं किल जलनिधौ खण्डयित्वा दुरध्वान्
लब्ध्वा देवीं स्फुटविदितसंशुद्धिमग्निप्रवेशात् ।
भूयोऽप्येनां भुवनजननीं भूमिकन्यामनन्या-
मन्तर्वत्नीमनयत वनं हन्त पौलस्त्यहन्ता ॥ 101 ॥

रघुवंशे—XV. 35.

इतरेऽपि रघोर्वंश्यास्त्रयस्त्रेताग्नितेजसः ।
तद्योगात्पतिवत्नीषु पत्नीष्वासन्द्विसूनवः ॥ 102 ॥

पतिरासामस्तीति पतिवत्न्यः । 'पतिवत्नी सभर्तृका' इत्यमरः । II. vi. 12.
पतिमती पृथिवी ।

चम्पूभारते—VI. 34.

प्रत्याख्यते चपलता पतिवत्नीषु या हठात् ।
इष्टार्थसिद्धेः प्रागेव दिष्टान्तं दोग्धि सा नृणाम् ॥ 103 ॥

भट्टिकाव्ये—IV. 23.

उग्रम्पश्याकुलेऽरण्ये शालीनत्वविवर्जिता ।
कामुकप्रार्थनापट्वी पतिवत्नी कथं न वा ॥ 104 ॥

चम्पूभारते—III. 28.

इत्येकिकां स रजनीमपनीय तत्र
श्वासैः समं स्वकुलसम्भवपृष्ठमितैः ।
मुक्तस्तया तटगतोऽनुचरान् द्विजाती-
नन्तर्वतोऽद्भुतरसैरतनोत्स्ववृत्त्या ॥ 105 ॥

स्त्रियामेव नुक्ङीपौ, नान्यत्र ।

४९० । पत्युर्नो यज्ञसंयोगे । (४. १. ३३)

पतिशब्दस्य नकारादेशः स्याद्यज्ञेन सम्बन्धे । वसिष्ठस्य पत्नी । तत्कर्तृक-यज्ञस्य फलभोक्त्रीत्यर्थः ।

भट्टिकाव्ये—I. 9.

धर्म्यासु कामार्थयशस्करीषु मतासु लोकेऽधिगतासु काले ।
विद्यासु विद्वानिव सोऽभिरेमे पत्नीषु राजा तिसृषूत्तमासु ॥ 106 ॥

अस्मिन्नेव ग्रन्थे श्लो० 102. पत्नीषु ।

चम्पूरामायणे—IV. 4.

आद्यौ सिद्धौषधिरिव हिता केलिकाले वयस्या
पत्नी त्रेतायजनसमये क्षत्रियाण्येव युद्धे ।
शिष्या देवद्विजपितृसमाराधने बन्धुरार्तौ
सीता सा मे शिशिरितमहाकानने का न जाता ॥ 107 ॥

४९१ । विभाषा सपूर्वस्य । (४. १. ३४)

पतिशब्दान्तस्य सपूर्वस्य प्रातिपदिकस्य नो वा स्यात् । गृहस्य पतिः गृहपतिः गृहपत्नी । बहुव्रीहावपि दृढपत्नी दृढपतिः । सपूर्वस्य किम्? गवां पतिः स्त्री ।

भट्टिकाव्ये—X. 38.

तस्याधिवासे तनुरुत्सुकासौ दृष्टा मया रामपतिः प्रमन्युः ।
कार्यस्य सारोऽयमुदीरितो वः प्रोक्तेन शेषेण किमुद्धतेन ॥ 108 ॥

रामः पतिर्यस्याः सा रामपतिः । नकाराभावपक्षः ।

४९२ । नित्यं सपत्न्यादिषु । (४. १. ३५)

सपत्न्यादिः. ४-३. समानस्य सभावोऽपि निपात्यते । समानः पतिर्यस्याः सा सपत्नी । एकपत्नी, वीरपत्नी ।

माघे—VII. 59.

समदनमवतंसितेऽधिकर्णं प्रणयवता कुसुमे सुमध्यमायाः ।
व्रजदपि लघुतां बभूव भारः सपदि हिरण्मयमण्डनं सपत्न्याः ॥ 109 ॥

अस्मिन्नेव ग्रन्थे श्लो० 22. सपत्न्याः ।

४९३. । पूतक्रतोरै च । (४. १. ३६)

अस्य स्त्रियाम् ऐ आदेशो ङीप् च । इयं त्रिसूत्री पुंयोग एवेष्यते । पूतक्रतोः स्त्री पूतक्रतायी ।

भट्टिकाव्ये—V. 28.

हृतरत्नश्च्युतोद्योगो रक्षोभ्यः करदो दिवि ।
पूतक्रतायीमभ्येति सत्रपः किं न गोत्रभित् ॥ 110 ॥

४९४. । वृषाकप्यग्निकुसितकुसिदानामुदात्तः (४. १. ३७)

एषामुदात्त ऐ आदेशः स्यात् ङीप् च । वृषाकपेः स्त्री वृषाकपायी । 'हरविष्णू वृषाकपी' III. iii. 130. इत्यमरः । 'वृषाकपायी श्रीगौर्योः' III. iii. 156. इति च । अग्नायी ।

भट्टिकाव्ये—V. 22.

नैवेन्द्राणी न रुद्राणी न मनावी न रोहिणी ।
वरुणानी न नाग्नायी तस्याः सीमन्तिनी समा ॥ 111 ॥

४९५ । मनोरौ वा । (४. १. ३८)

मनुशब्दस्यौकारादेशः स्यादुदात्त ऐकारश्च वा । ताभ्यां सन्नियोगशिष्टो ङीप् च । मनोः स्त्री मनायी मनावी मनुः ।

अस्मिन्नेव ग्रन्थे श्लो० 111. मनावी ।

४९६ । वर्णादनुदात्तात्तोपधात्तो नः । (४. १. ३९)

इति विकल्पः ङीप्, तकारस्य च नकारः ।

माघे—XVII. 18.

विवर्तयन्मदकलुषीकृते दृशौ कराहतक्षितिकृतभैरवारवः ।
क्रुधा दधत्तनुमतिलोहिनीमभूत्प्रसेनजित् गज इव गैरिकारुणः ॥ 112 ॥

लोहिनी लोहिता ।

किरातार्जुनीये—V. 31.

नीतोच्छ्रायं मुहुरशिशिररश्मेरुस्रै-
रानीलाभैर्विरचितपरभागा रत्नैः ।
ज्योत्स्नाशङ्कामिह वितरति हंसश्येनी
मध्येऽप्यह्नः स्फटिकरजतभित्तिच्छाया ॥ 113 ॥

श्येनी श्वेतवर्णा । 'विशदश्येतपाण्डरा' I. iv. 12. इत्यमरः । श्येतशब्दात् ङीप् । तकारस्य च नकारः ।

अस्मिन्नेव ग्रन्थे श्लो० 111. रोहिणी चन्द्रभार्या । रोहितशब्दात् ङीप्, तकारस्य नकारश्च ।

वा० । पिशङ्गादुपसङ्ख्यानम् । (2455)

माघे—III. 33.

मध्येसमुद्रं ककुभः पिशङ्गीर्या कुर्वती काञ्चनवप्रभासा ।
तुरङ्गकान्तामुखहव्यवाहज्वालेव भित्त्वा जलमुल्ललास ॥ 114 ॥

किरातार्जुनीये—IX. 22.

लेखया विमलविद्रुमभासा सन्ततं तिमिरमिन्दुरुदासे ।
दंष्ट्रया कनकटङ्कपिशङ्ग्या मण्डलं भुव इवादिवराहः ॥ 115 ॥

वा० असितपलितयोर्न । (2453.)

माघे—VIII. 2.

यान्तीनां सममसितभ्रुवां नतत्वा-
दंसानां महति नितान्तमन्तरेऽपि ।
संसक्तैर्विपुलतया मिथो नितम्बैः
संबाधं बृहदपि तद्बभूव वर्त्म ॥ 116 ॥

असिता भ्रूर्यासां ता असितभ्रुवः ।

माघे—VI. 51.

विगतवारिधरावरणाः क्वचि-
द्ददृशुरुल्लसितासिलतासिताः ।
क्वचिदिवेन्द्रगजाजिनकञ्चुकाः
शरदि नीरदिनीर्यदवो दिशः ॥ 117 ॥

अवदातशब्दस्तु न वर्णवाची, किं तु विशुद्धवाची । अतो न ङीप् ।

भट्टिकाव्ये—II. 18.

सितारविन्दप्रचयेषु लीनाः संसक्तफेनेषु च सैकतेषु ।
कुन्दावदाताः कलहंसमालाः प्रतीयिरे श्रोत्रसुखैर्निनादैः ॥ 118 ॥

## ४९८ । षिद्गौरादिभ्यश्च । (४. १. ४१)

षिद्भ्यो गौरादिभ्यश्च ङीष् स्यात् । गौरादिः, ४-४. गौरादयः पितः ।
'कॄ. गॄ' (उ. सू. 279) इत्यौणादिकः ष्वरच् । शर्वरी ङीष् ।

अस्मिन्नेव ग्रन्थे श्लो० 36. शर्वरी ।

पृथे. षिवन् । पृथिवी । षवन्नित्येके । पृथवी । 'पृथवी पृथिवी पृथ्वी' इति शब्दार्णवः । माघे—III. 34.

कृतास्पदा भूमिभृतां सहस्रैरुदन्वदम्भः परिवीतमूर्तिः ।
अनिर्विदा या विदधे विधात्रा पृथ्वी पृथिव्याः प्रतियातनेव ॥ 119 ॥

पृथुः पृथ्वी । 'वोतो गुणवचनात्' ( सू. 502 ) इति ङीष् ।

'जल्पभिक्ष' ( सू. 3135 ) इति षाकन् । भट्टिकाव्ये— VII. 19.

जल्पाकीभिः सहासीनः स्त्रीभिः प्रजविना त्वया ।
गत्वा लक्ष्मण वक्तव्यो जयिना निष्ठुरं वचः ॥ 120 ॥

अनर्घराघवे - II. 77.

त्रिभुवनतमोलुण्टाकीनामहोमिहिरत्विषा-
मभिविधिरसौ कोकश्रेणीमनस्यवशिष्यते ।
क्षुधमपि तमःकोपादन्तः प्रविश्य विनिघ्नतः
शशधरकरानच्छिन्नाग्रांश्चरन्ति चकोरकाः ॥ 121 ॥

'शिल्पिनि ष्वुन्' ( सू. 2907 ) इति ष्वुन्प्रत्ययः नृतिखनिरञ्जिभ्य एव ।

रघुवंशे— XIX. 14

स स्वयं प्रहतपुष्करः कृती लोलमाल्यवलयो हरन्मनः ।
नर्तकीरभिनयातिलङ्घिनीः पार्श्ववर्तिषु गुरुष्वलज्जयत् ॥ 122 ॥

किरातार्जुनीये— X. 41.

प्रकृतमनुससार नाभिनेयं प्रविकसदङ्गुलि पाणिपल्लवं वा ।
प्रथममुपहितं विलासि चक्षुः सिततुरगे न चचाल नर्तकीनाम् ॥ 123 ॥

'वत्सोक्षाश्व' ( सू. 2046 ) इति ष्टरच् । अनर्घराघवे—II. 14.

तत्तादृक्तृणपूलकोपनयनक्लेशाच्चिरद्वेषिभि-
र्मेध्या वत्सतरी विहस्य वटुभिः सोल्लुण्ठमालभ्यते ।

अप्येष प्रतनूभवत्यतिथिभिः सोच्छ्वासनासापुटै-
रापीतो मधुपर्कपाकसुरभिः प्राग्वंशजन्मानिलः ॥ 124 ॥

उत्तररामचरिते— IV. 2.

ग—समांसो मधुपर्क इत्याम्नायं बहुमन्यमानाः श्रोत्रियायाभ्यागताय वत्सतरीं महोक्षं वा महाजं वा पचन्ति गृहमेधिन इति हि धर्मसूत्रकाराः समामनन्ति ॥ 125 ॥

**वत्सतरी** । वर्षद्वयवयस्का गौः । ष्टरच् । 'महोक्षं वा वत्सतरीं दद्यादतिथये गृही' इति स्मृतेः ।

माघे—VII. 48.

मृदुचरणलताग्रदुःस्थितत्वादसहतरा कुचकुम्भयोर्भरस्य ।
उपरि निरवलम्बनं प्रियस्य न्यपतदथोच्चतरोच्चिचीषयान्या ॥ 126 ॥

न सहत इत्यसहा । अतिशयेनासहासहतरा । अयं तरप्प्रत्ययः । अतष्टाप् ।

'बहुव्रीहौ सक्थ्यक्ष्णोः' (सू. 852) इति षच् । माघे—VIII. 6.

संस्पर्शप्रभवसुखोपचीयमाने
सर्वाङ्गे करतललग्नवल्लभायाः ।
कौशेयं व्रजदपि गाढतामजस्रं
सस्रंसे विगलितनीवि **नीरजाक्ष्याः** ॥ 127 ॥

नीरजे इव अक्षिणी यस्याः सा नीरजाक्षी । षित्करणात् ङीष् 'षित्करणादीकारो बहुलमि'ति वामनवचनाद्वैकल्पिकः ।

भट्टिकाव्ये—X. 50.

अथ ददृशुरुदीर्णधूमधूम्रां
दिशमुदधिव्यवधिं समेतसीताम् ।
सहरघुतनयाः प्लवङ्गसेनाः
पवनसुताङ्गुलिदर्शितामुदक्षाः ॥ 128 ॥

उद्गते अक्षिणी यासां ता **उदक्षाः** । अत्र न ङीष् ।

'गुणवचनब्राह्मणादिभ्यः' (सू. 1788) इति ष्यञ्। माघे—IV. 26.

एकत्र स्फटिकतटांशुभिन्ननीरा
नीलाश्मद्युतिभिदुरांभसोऽपरत्र।
कालिन्दीजलजनितश्रियः श्रयन्ते
वैदग्धीमिह सरितः सुरापगायाः॥ 129॥

विदग्धाया भावो वैदग्धी। षित्करणात् ङीष्। वैदग्ध्यमिति च स्यात्।

अस्मिन्नेव ग्रन्थे श्लो० 19. चतुराणां भावश्चातुरी। चातुर्यमिति च स्यात्।

चम्पूभारते—II. 28.

वीतशङ्कमिह तेऽद्य तिष्ठतः कीदृशं ककुदमित्ययं मम।
चित्तरङ्गभुवि नृत्तकौशलीमुत्तरङ्गयति चित्रलासकः॥ 130॥

कुशलस्य भावः कौशली। षित्करणादीकारः। कौशल्यमिति। युवादित्वादणि कौशलमिति च स्यात्।

माघे—XVII. 67.

गते मुखच्छदपटसादृशीं दृशः
पथस्तिरोदधति घने रजस्यपि।
मदानिलैरधिमधुचूतगन्धिभि-
र्द्विपा द्विपानभिययुरेव रंहसा॥ 131॥

सदृशस्य भावः सादृशी। सादृश्यमिति च।

गौरादिः। माघे—IV. 8.

विलम्बिनीलोत्पलकर्णपूराः
कपोलभित्तीरिव लोध्रगौरीः।
नवोलपालङ्कृतसैकताभाः
शुचीरपः शैवलिनीर्दधानम्॥ 132॥

नैषधे—I. 124.

निधाय मूर्तिं कपटेन वामनीं
स्वयं बलिध्वंसिविडम्बिनीमयम्।

उपेतपार्श्वैश्चरणेन मौनिना
नृपः पतङ्गं समधत्त पाणिना ॥ 133 ॥

वामनः वामनी ।

नैषधे—II. 37.

तरुमूरुयुगेन सुन्दरी किमु रम्भां परिणाहिना परम् ।
तरुणीमपि जिष्णुरेव तां धनदापत्यतपःफलस्तनीम् ॥ 134 ॥

सुन्दरः सुन्दरी ।

माघे—IV. 59.

एतस्मिन्नधिकपयःश्रियं वहन्त्यः
संक्षोभं पवनभुवा जवेन नीताः ।
वाल्मीकेररहितरामलक्ष्मणानां
साधर्म्यं दधति गिरां महासरस्यः ॥ 135 ॥

महत्यश्च ताः सरस्यश्च महासरस्यः । महान् महती ।

किरातार्जुनीये—XVII. 41.

प्रतिक्रियायै विधुरः स तस्मात्कृच्छ्रेण विश्लेषमियाय हस्तः ।
पराङ्मुखत्वेऽपि कृतोपकारात्तूणीमुखान्मित्रकुलादिवार्यः ॥ 136 ॥

तूणशब्दात् ङीष् ।

४९९ । सूर्यतिष्यागस्त्यमत्स्यानां य उपधायाः । ( ६. ४. १४९ )

इत्युपधायकारस्य लोपः ।

वा० । मत्स्यस्य ङ्यां । (4198)
वा० । सूर्यागस्त्ययोश्छे च ङ्यां च । ( 4199 )
वा० । तिष्यपुष्ययोर्नक्षत्राणि यलोप इति वाच्यम । ( 4200 )

रघुवंशे—X. 59.

ताभिर्गर्भः प्रजाभूत्यै दध्रे देवांशसम्भवः ।
सौरीभिरिव नाडीभिरमृताख्याभिरम्मयः ॥ 137 ॥

सूर्यस्यायं सौर्यः । 'तस्येद' (सू. 1500.) मित्यण् । 'टिड्ढाणञ्' (सू. 470.) इत्यादिना ङीप् । सूर्यस्येयं **सौरी** । अत्र यलोपः ।

किरातार्जुनीये—XVI. 17.

इयं च दुर्वारमहारथानामाक्षिप्य वीर्यं महतां बलानाम् ।
शक्तिर्ममावस्यति हीनयुद्धे **सौरीव** ताराधिपधाम्नि दीप्तिः ॥ 138 ॥

रघुवंशे—XVIII. 32.

तस्य प्रभानिर्जितपुष्यरागं **पौष्यां** तिथौ पुष्यमसूत पत्नी ।
तस्मिन्नपुष्यन्नुदिते समग्रां पुष्टिं जनाः पुष्य इव द्वितीये ॥ 139 ॥

**पौष्यां** पुष्यनक्षत्रयुक्तायां पौर्णमास्यां तिथौ । 'पुष्ययुक्ता पौर्णमासी पौषी' I. iii. 14. इत्यमरः । 'नक्षत्रेण युक्तः कालः' (सू. 1204.) इत्यण् । टिड्ढाणञि' (सू. 470.) त्यादिना ङीपि यलोपः ।

माघे—III. 1.

कौबेरदिग्भागमपास्य मार्ग**मागस्त्य**मुष्णांशुरिवावतीर्णः ।
अपेतयुद्धाभिनिवेशसौम्यो हरिर्हरिप्रस्थमथ प्रतस्थे ॥ 140 ॥

अगस्त्यस्याय**मागस्त्यः** । 'तस्येदमि' (सू. 1500.) त्यण् । 'टिड्ढाणञि' (सू. 470) त्यादिना ङीपि अगस्तीति यलोपः स्यात् ।

**५०० ॥ जानपदकुण्डगोणस्थलभाजनागकालनीलकुशकामुककबराद्वृत्त्यमत्रावपनाकृत्रिमाश्राणास्थौल्यवर्णानाच्छादनायोविकारमैथुनेच्छाकेशवेशेषु ॥ (४. १. ४२)**

एकादशभ्यः प्रातिपदिकेभ्यः क्रमात् वृत्त्यादिष्वर्थेषु ङीष् स्यात् । जानपदी वृत्तिश्चेत् । अन्या तु जानपदा । उत्सादित्वादञन्तत्वेन ' टिड्ढाणञि ' (सू. 470 )ति ङीष् । कुण्डी अमत्रं चेत् । जारजा कुण्डा ।

विश्वगुणादर्शे—278.

आशामीशानबन्धोश्चरणनखरुचां धारया स्मेरयन्ती
कुण्डीडिम्भस्य काष्ठामपि मणिमकुटन्युप्तमुक्तामयूखैः ।

पर्यङ्के शब्दविद्यापरिमलसरले पङ्कजस्पर्धिनेत्रा
व्यक्तिर्वेगापगायां स्वपिति समुदिता कापि तापिच्छवर्णा ॥ 141 ॥

गोणी आवपनं चेत् । माघे—XII. 10.

नस्यागृहीतोऽपि धुवन् विषाणयो-
र्युगं ससूत्कारविवर्तितत्रिकः ।
**गोणीं** जनेन स्म निधातुमुद्यता-
मनुक्षणं नोक्षतरः प्रतीच्छति ॥ 142 ॥

किरातार्जुनीये—IV. 2.

विनम्रशालिप्रसवौघशालिनी-
रपेतपङ्काः ससरोरुहाम्भसः ।
ननन्द पश्यन्नुपसीम स **स्थली-**
रुपायिनीभूतशरद्गुणश्रियः ॥ 143 ॥

**स्थली:** अकृत्रिमा भुवः । अकृत्रिमार्थे ङीष् ।
भाजी श्राणा चेत् । नागी स्थूला चेत् । गजवाची नागशब्दः ।

काली वर्णश्चेत् । माघे—XII. 68

यस्या महानीलतटीरिव द्रुताः
प्रयान्ति पीत्वा हिमपिण्डपाण्डवः ।
**कालीरपस्ताभिरिवानुरञ्जिताः**
क्षणेन भिन्नाञ्जनवर्णतां घनाः ॥ 144 ॥

**काली:** कृष्णवर्णाः । नीली अनाच्छादनं चेत् । नीलान्या । नील्या रक्ता शाटीत्यर्थः । 'नील्या अन्वक्तव्य' (वा॰ 2680. सू. 1203) इत्यन् । अनाच्छादनेऽपि न सर्वत्र । किं तु

वा॰ नीलादोषधौ (2456.) नीली ।

वा॰ प्राणिनि च (2458.) नीली गौः ।

वा॰ संज्ञायां वा (2457.) नीली नीला ।

माघे— IV. 44.

मुक्तं मुक्तागौरमिह क्षीरमिवाभ्रै-
र्वापीष्वन्तर्लीनमहानीलदलासु ।

शश्वीश्यामैरंशुभिराशु द्रुतमम्भ-
श्छायामच्छामृच्छति नीलीसलिलस्य ॥ 145 ॥

**नीली** नील्याख्यौषधिः । 'नीली काला क्लीतकिका' II. iv. 95. इत्यमरः ।

माघे—XX. 51.

प्रस्रुतं रभसादयोऽभिनीला
प्रतिपादं परितोऽभिवेष्टयन्ती ।
तनुरायतिशालिनी महाहे-
र्गजमन्द्रूरिव निश्चलं चकार ॥ 146 ॥

**नीला** नीलवर्णा । टाप् । कुशी अयोविकारश्चेत् । कामुकी मैथुनेच्छा चेत् । कामुकान्या । 'इच्छावती कामुका स्याद्वृषस्यन्ती तु कामुकी' II. vi. 9. इत्यमरः ।

अस्मिन्नेव ग्रन्थे श्लो० 34.

**कामुकी** । 'लषपत' (सू. 3134) इत्युकञ् । ङीष । कबरी केशानां संनिवेशश्चेत् , कबरान्या । चित्रेत्यर्थः ।

माघे—V. 19.

दृष्ट्वैव निर्जितकलापभरामधस्ता-
द्व्याकीर्णमाल्यकबरां **कबरीं** तरुण्याः ।
प्रादुद्रुवत्सपदि चन्द्रकवान् द्रुमाग्रात्
सङ्घर्षिणा सह गुणाभ्यधिकैर्दुरासन् ॥ 147 ॥

अत्र द्वयमपि वर्तते ।

**५०१ । शोणात्प्राचाम् । (४. १. ४३)**

शोणी शोणा ।

चम्पूभारते—III. 114.

**शोण**रुचा शिखयातिमहत्या बाणपुरावृतित्रासनयेव ।
चण्डतरोऽस्य वनस्य समन्तात् कुण्डलनां कलयन्ववृधेऽग्निः ॥ 148 ॥

शोणी शोणा वा रुक् यस्याः सा **शोणरुक्** , उभयत्रापि पुंवद्भावः ।

## ५०२ । वोतो गुणवचनात् । (४. १. ४४)

उदन्ताद्गुणवाचिनो वा ङीष् स्यात् ।

अस्मिन्नेव ग्रन्थे श्लो० 94. **गुर्वीः** ।

भट्टिकाव्ये—XVII. 90.

अश्वान्विभीषणोऽतुभ्नात्स्यन्दनं चाक्षिणोद् द्रुतम् ।
नाक्षुभ्नाद्राक्षसो भ्रातुः शक्तिं चोदवृहद् **गुरुम्** ॥ 149 ॥

**गुरुमि**ति विकल्पे न ङीष् ।

अस्मिन्नेव ग्रन्थे श्लो० 28. **तन्वीमि**ति ङीष् ।

कुमारसम्भवे—VI. 25.

अथ मौलिगतस्येन्दोर्विशदैर्दशनांशुभिः ।
उपचिन्वन्प्रभां **तन्वीं** प्रत्याह परमेश्वरः ॥ 150 ॥

**तन्वीमि**ति ङीष् ।

किरातार्जुनीये—X. 53.

कुसुमितमवलम्ब्य चूतमुच्चै-
**स्तनुरि**भकुम्भपृथुस्तनानताङ्गी ।
तदभिमुखमनङ्गचापयष्टि-
विसृतगुणेव समुन्ननाम काचित् ॥ 151 ॥

**तनुरि**ति न ङीष् ।

अस्मिन्नेव ग्रन्थे श्लो० 108. **तनुरि**ति न ङीष् ।

अस्मिन्नेव ग्रन्थे श्लो० 104.

**पट्वी**ति ङीष् । पटुरिति च स्यात् ।

नैषधे—II. 107.

अथ कनकपतत्रस्तत्र तां राजपुत्रीं
सदसि सदृशभासां विस्फुरन्तीं सखीनाम् ।

उडुपरिषदि मध्यस्थायिशीतांशुलेखा-
नुकरणपटुलक्ष्मीमक्षिलक्षीचकार ॥ 152 ॥

पट्व्यः पटवो वा लक्ष्म्यो यस्याः सा पटुलक्ष्मीः ।

अस्मिन्नेव ग्रन्थे श्लो० 119.

पृथ्वीति ङीष् , पृथुरिति च स्यात् ।

चम्पूभारते—III. 123.

ज्वालतापभरकुण्डलिताङ्गीः क्ष्वेडसारघृतसेचनमृद्वीः ।
सर्पपुङ्गवततीरतिहृष्टः शष्कुलीरिव चचर्व कृशानुः ॥ 153 ॥

मृद्वीरिति ङीष् । मृदुरिति च स्यात् ।

५०३ । **बह्वादिभ्यश्च** । (४. १. ४५)

एभ्यो वा ङीष् स्यात् । बह्वी बहुः । बह्वादिः. ४-५.

माघे—VII. 2.

दधति सुमनसो वनानि बह्वीर्युवतियुता यदवः प्रयातुमीषुः ।
मनसिशयमहास्त्रमन्यथामी न कुसुमपञ्चकमप्यलं विसोढुम् ॥ 154 ॥

बह्वीरिति ङीष् ।

अस्मिन्नेव ग्रन्थे श्लो० 145. शस्त्री ङीष् ।
माघे—XVIII. 57.

पौनःपुन्यादस्रगन्धेन मत्तो मृद्नन्कोपाल्लोकमायोधनोर्व्याम् ।
पादे लग्नामन्त्रमालामिभेन्द्रः पाशीकल्पामायतामाचकर्ष ॥ 155 ॥

पाशी ।

माघे—XII. 8.

गण्डोज्ज्वलामुज्ज्वलनाभिचक्रया विराजमानां नवयोदरश्रिया ।
कश्चित्सुखं प्राप्तुमनाः सुसारथी रथीं युयोजाविधुरां वधूमिव ॥ 156 ॥

रथीमिति ङीष् ।

रघुवंशे—I. 87.

अदूरवर्तिनीं सिद्धिं राजन्विगणयात्मनः ।
उपस्थितेयं कल्याणी नाम्नि कीर्तित एव यत् ॥ 157 ॥

कल्याणी ।

रघुवंशे—XII. 5.

सा किलाश्वासिता चण्डी भर्त्रा तत्संश्रुतौ वरौ ।
उद्ववामेन्द्रसिक्ता भूर्बिलमग्नाविवोरगौ ॥ 158 ॥

चण्डीति ङीष् ।

(ग. सू.) कृदिकारादक्तिनः 50.

वा ङीष् ।

रघुवंशे—XVII. 66.

खनिभिः सुषुवे रत्नं क्षेत्रैः सस्यं वनैर्गजान् ।
दिदेश वेतनं तस्मै रक्षासदृशमेव भूः ॥ 159 ॥

'खनिकषि' (उ. सू. 579) इत्यौणादिक इप्रत्ययः । खनिः । 'खनिः स्त्रियामाकरः स्यात्' II. iii. 7. इत्यमरः ।

नैषधे—II. 25.

हृतसारमिवेन्दुमण्डलं दमयन्तीवदनाय वेधसा ।
कृतमध्यबिलं विलोक्यते धृतगम्भीरखनीखनीलिम ॥ 160 ॥

खनीति विकल्पे ङीष् ।

रघुवंशे—VI. 22.

कामं नृपाः सन्तु सहस्रशोऽन्ये राजन्वतीमाहुरनेन भूमिम् ।
नक्षत्रताराग्रहसंकुलापि ज्योतिष्मती चन्द्रमसैव रात्रिः ॥ 161 ॥

'राशदिभ्यां त्रिप्' (उ. सू. 507) इत्यौणादिकः त्रिप् । न ङीष् ।

भट्टिकाव्ये—XIV. 43.

तिरोबभूवे सूर्येण प्रापे च निशयास्पदम् ।
जग्रसे कालरात्रीव वानरान्राक्षसांश्च सा ॥ 162 ॥

रात्रीति ङीष् ।

अनर्घराघवे — V. 28.

समन्तादुन्मीलद्बहलल्लहरीलङ्घनकला-
लघुप्रेङ्खत्पम्पानिलविदलदेलासुरभयः ।
अमिथावैदेहीशतलिपिकरीणां मम प्रिया-
ममी हस्तालम्बं विपिनविनिवेशा विदधते ॥ 163 ॥

सर्वधातुभ्य इन्नित्यनुवृत्तौ 'इगुपधात्कित्' (उ. सू. 559) इत्यौणादिक इन् । **लिपिः** स्त्री । न ङीष् ।

नैषधे — VI. 64.

विलेखितुं भीमभुवो **लिपीषु** सख्यातिविख्यातिभृतापि यत्र ।
अशाकि लीलाकमलं न पाणिरपारि कर्णोत्पलमक्षि नैव ॥ 164 ॥

**लिपीति** ङीष् । अक्तिन इति क्तिन्प्रत्ययान्तस्य ङीप्निषेधाद्विख्यातिरिति ह्रस्वान्त एव ।

चम्पूरामायणे — V. 19.

**रजनि**चरमभागे वारसीमन्तिनीनां
करतलकलिताभिर्दीपिकामार्जनीभिः ।
दिशि दिशि परिमृष्टं यत्तमस्तत्समस्तं
हृदयमवजगाहे केवलं रावणस्य ॥ 165 ॥

**रजनि**रितीकारान्तः । 'अर्तिसृ' (उ. सू. 259) इति अनिः ।

अस्मिन्नेव ग्रन्थे श्लो० 93. **रजनी**ति ङीष् ।

नैषधे — I. 102.

विलासवापीतटवीचिवादनात्
पिकालिगीतेः शिखिलास्यलाघवात् ।
वनेऽपि तौर्यत्रिकमारराध तं
क भोगमाप्नोति न भाग्यभाग्जनः ॥ 166 ॥

'वेञो डिच्च' (उ. सू. 512) इत्यौणादिक ईचिप्रत्ययः । 'स्त्रियां वीचिरथोर्मिषु' I. ix. 5. इत्यमरः ।

माघे— VIII. 54.

आरूढः पतित इति स्वसम्भवोऽपि
स्वच्छानां परिहरणीयतामुपैति ।
कर्णेभ्यश्च्युतमसितोत्पलं वधूनां
वीचीभिस्तटमनुयन्निरासुरापः ॥ 167 ॥

**वीचीति** ङीष् ।

किरातार्जुनीये— I. 9.

कृतारिषड्वर्गजयेन मानवीमगम्यरूपां पदवीं प्रपित्सुना ।
विभज्य नक्तंदिवमस्त**तन्द्रिणा** वितन्यते तेन नयेन पौरुषम् ॥ 168 ॥

**तन्द्रि**रालस्यम् । तदिस्सौत्रो धातुः । तस्मात् ' वङ्क्रयादयश्च ' ( उ. सू. 506) इत्यौणादिकः क्रिन्प्रत्ययः । ' वन्दीघटीतरीतन्द्रीति ङीषन्तोऽपी 'ति क्षीरस्वामी ।

**५०४ । पुंयोगादाख्यायाम् । ( ४. १. ४८ )**

ङीष् ।

किरातार्जुनीये— IV. 33.

कृतावधानं जितबर्हिणध्वनौ सुरक्त**गोपी**जनगीतनिस्वने ।
इदं जिघत्सामपहाय भूयसीं न सस्यमभ्येति मृगीकदम्बकम् ॥ 169 ॥

गाः पान्तीति गोपाः । तेषां भार्या **गोप्यः** ।

माघे— V. 17.

यानाज्जनः परिजनैरवरोप्यमाणा
**राज्ञी**र्नरापनयनाकुलसौविदल्लाः ।
स्रस्तावगुण्ठनपटक्षणलक्ष्यमाण-
वक्त्रश्रियः सभयकौतुकमीक्षते स्म ॥ 170 ॥

**राज्ञी ।**

नैषधे— V. 47.

मानुषीमनुसरत्यथ पत्यौ खर्वभावमवलम्ब्य **मघोनी** ।
खण्डितं निजमसूचयदुच्चैर्मानमाननसरोरुहनत्या ॥ 171 ॥

मघोनः स्त्री **मघोनी** । शची । मानुषी । 'जातेरस्त्री' ( सू. 518 ) इत्यादिना ङीष् ।

वा० । पालकान्तान्न । ( 2461 )

वा० । सूर्याद्देवतायां चाप् वाच्यः । ( 2471 )

सूर्यस्य स्त्री देवता सूर्या । देवतायां किम् । सूरी कुन्ती । मानुषीयम् । 'सूर्यागस्त्ययोश्छे च ङ्यां च' ( वा. 4199. सू. 499 ) इति ङ्यां यलोपः ।

**५०५ । इन्द्रवरुणभवशर्वरुद्रमृडहिमारण्ययवयवनमातुलाचार्याणामानुक् । ( ४. १. ४९ )**

एषामानुगागमः स्यात् ङीष् च । इन्द्रादीनां षण्णां मातुलाचार्ययोश्च पुंयोग एवेष्यते । तत्र ङीषि सिद्धे आनुगागममात्रं विधीयते । इतरेषां चतुर्णामुभयम् ।

अस्मिन्नेव ग्रन्थे श्लो० 111. इन्द्रस्य स्त्री **इन्द्राणी** । वरुणस्य स्त्री **वरुणानी** । रुद्रस्य स्त्री **रुद्राणी** ।

चम्पूभारते—IV. 71.

आपादलम्बिजटमातपमात्तभक्ष-
मूर्ध्वीभवद्भुजमुदारतपःकृशाङ्गम् ।
दृष्ट्वानुगृह्य कुरुवीरमुनीन्द्रमेनं
त्रेधा बभूव सुतवत्सलता **भवान्याः** ॥ 172 ॥

भवस्य स्त्री **भवानी** । 'शिवा भवानी रुद्राणी शर्वाणी सर्वमङ्गला' I. i. 37. इत्यमरः ।

वा० । हिमारण्ययोर्महत्वे । ( 2472 )

महद्धिमं हिमानी । 'हिमानी हिमसन्ततिः' I. ii. 19. इति 'महारण्यमरण्यानी' II. iv. 1. इति चामरः ।

चम्पूभारते—IV. 56.

यस्मिन्हिमानीभृति यक्षवृन्दमङ्गेषु सर्वेष्वपि मञ्जुलेषु ।
नखंपचोष्णं नलिनेक्षणानामुरोजमेवातितरामुपास्ते ॥ 173 ॥

किरातार्जुनीये — IV. 12.

विमुच्यमानैरपि तस्य मन्थरं
गवां हिमानीविशदैः कदम्बकैः ।
शरन्नदीनां पुलिनैः कुतूहलं
गलद्दुकूलैर्जघनैरिवादधे ॥ 174 ॥

भट्टिकाव्ये — IV. 2.

अटाट्यमानोऽरण्यानीं ससीतः सहलक्ष्मणः ।
बलाद् बुभुक्षुणोत्क्षिप्य जह्रे भीमेन रक्षसा ॥ 175 ॥

महदरण्यमरण्यानी ।

**वा० । यवाद्दोषे । ( 2473 )**

दुष्टो यवो यवानी ।

**वा० । यवनाल्लिप्याम् । ( 2474 )**

यवनानां लिपिर्यवनानी ।

विश्वगुणादर्शे 184.

उपनयनविवाहावुत्सवैकप्रधानौ
कलिविभवत एषां कालभेदानभिज्ञौ ।
विजहति न कदाचिद्वेदपाठैकयोग्ये
वयसि च यवनानीवाचनाभ्यासमेते ॥ 176 ॥

**वा० । मातुलोपाध्याययोरानुग्वा ।**

मातुलानी - मातुली । उपाध्यायानी - उपाध्यायी । तत्र वा ङीप् वाच्यः उपाध्यायी उपाध्याया ।

**वा० । आचार्यादणत्वं च । ( 2477 )**

आचार्यस्य स्त्री आचार्यानी । पुंयोग इत्येव ।

**वा० । अर्यक्षत्रियाभ्यां वा स्वार्थे । ( 2478 )**

अर्याणी अर्या, क्षत्रियाणी क्षत्रिया । पुंयोगे तु अर्यी क्षत्रियी । 'अर्याणी स्वयमर्या स्यात् क्षत्रिया क्षत्रियाण्यपि' II. vi. 14. इत्यमरः ।

अस्मिन्नेव ग्रन्थे श्लो० 107. क्षत्रियाणी ।

अनर्घराघवे—IV. 44.

ग—आः पाप क्षत्रियायाः पुत्र ! क्षत्रियभ्रूणहत्यापातकिन् ! निसर्गनिष्प्राणं हि प्रहरणमिक्ष्वाकूणां ब्राह्मणेषु ॥ 177 ॥

५०७ । क्तादल्पाख्यायाम् (४. १. ५१)

करणादेः क्तान्तात् स्त्रियां ङीष् स्यात् अल्पत्वे द्योत्ये । अभ्रलिप्ती द्यौः । अल्पाख्यायां किम् ? चन्दनलिप्ताङ्गना ।

अनर्घराघवे—IV. 57.

कन्या काचिदिहापि कर्मणि पणः स्यादित्यसूयावल-
त्सीतापाङ्गमयूखमांसलमुखज्योत्स्नाविलिप्तीं दिवम् ।
कुर्वाणेन रघूद्वहेन चकृषे नारायणीयं धनुः
सन्धायाथ शरश्च भार्गवगतिच्छेदादमोघीकृतः ॥ 178 ॥

विलिप्तीं अल्पविलिप्ताम् ।

५१० । स्वाङ्गाच्चोपसर्जनादसंयोगोपधात् । (४. १. ५४)

वा ङीष् ।

माघे—VI. 13.

इति वदन्तमनन्तरमङ्गना भुजयुगोन्नमनोच्चतरस्तनी ।
प्रणयिनं रभसादुदरश्रिया वलिभयालिभयादभिषस्वजे ॥ 179 ॥

उच्चतरौ स्तनौ यस्याः सोच्चतरस्तनी ङीष् ।

अस्मिन्नेव ग्रन्थे श्लो० 134. तपःफलस्तनीम् । ङीष् ।

कुमारसंभवे—III. 39.

पर्याप्तपुष्पस्तबकस्तनाभ्यः स्फुरत्प्रवालोष्ठमनोहराभ्यः ।
लतावधूभ्यस्तरवोऽप्यवापुर्विनम्रशाखाभुजबन्धनानि ॥ 180 ॥

विकल्पे न ङीष् ।

कुमारसम्भवे—IV. 4.

अथ सा पुनरेव विह्वला वसुधालिङ्गनधूसरस्तनी ।
विललाप विकीर्णमूर्धजा समदुःखामिव कुर्वती स्थलीम् ॥ 181 ॥

माघे—VI. 38.

प्रणयकोपभृतोऽपि पराङ्मुखाः सपदि वारिधरारवभीरवः ।
प्रणयिनः परिरब्धुमनन्तरं ववलिरे वलिरेचितमध्यमाः ॥ 182 ॥

पराङ्मुखा इति विकल्पादनीकारः ।

माघे—VI. 53.

हरितपत्रमयीव मरुद्गणैः स्रगवनद्धमनोरमपल्लवा ।
मधुरिपोरभिताम्रमुखी मुदं दिवि तदा विततान शुकावलिः ॥ 183 ॥

अभिताम्रमुखीति ङीष् ।

कुमारसम्भवे—VII. 59.

विलोचनं दक्षिणमञ्जनेन सम्भाव्य तद्वञ्चितवामनेत्रा ।
तथैव वातायनसंनिकर्षं ययौ शलाकामपरा वहन्ती ॥ 184 ॥

तद्वञ्चितं वामनेत्रं यस्याः सा तद्वञ्चितवामनेत्रा । असंयोगोपधादिति निषेधान्न ङीष् ।

स्वाङ्गं त्रिधा—

अद्रवं मूर्तिमत्स्वाङ्गं प्राणिस्थमविकारजम् ।

सुस्वेदा द्रवत्वात् । सुज्ञाना अमूर्तत्वात् । सुमुखा शाला अप्राणिस्थत्वात् । सुशोफा विकारजत्वात् ।

अतत्स्थं तत्र दृष्टं च

सुकेशी सुकेशा वा रथ्या । अप्राणिस्थस्यापि प्राणिनि दृष्टत्वात् ।

कुमारसम्भवे—V. 68.

चतुष्कपुष्पप्रकरावकीर्णयोः परोऽपि को नाम तवानुमन्यते ।
अलक्तकाङ्कानि पदानि पादयोर्विकीर्णकेशासु परेतभूमिषु ॥ 185 ॥

विकीर्णकेशास्विति विकल्पान्न ङीष् ।

तेन चेत्तत्तथायुतम् ॥

सुस्तनी सुस्तना वा प्रतिमा । प्राणिवत्प्राणिसदृशे स्थितत्वात् ।

५११ । नासिकोदरौष्ठजङ्घादन्तकर्णशृङ्गाच्च । ( ४. १. ५५. )

एभ्यो वा ङीष् । तुङ्गनासिकी तुङ्गनासिकेत्यादि ।

नैषधे— II. 40.

सरसीः परिशीलितुं मया गमिकर्मीकृतनैकनीवृता ।
अतिथित्वमनायि सा दृशोः सदसत्संशयगोचरोदरी ॥ 186 ॥

रघुवंशे—X. 69.

शय्यागतेन रामेण माता शातोदरी बभौ ।
सैकताम्भोजबलिना जाह्नवीव शरत्कृशा ॥ 187 ॥

माघे—XIII. 16.

इभकुम्भतुङ्गघटितेतरेतर-
स्तनभारदूरविनिवारितोदराः ।
परिफुल्लगण्डफलकाः परस्परं
परिरेभिरे कुकुरकौरवस्त्रियः ॥ 188 ॥

विकल्पान्न ङीप् ।

चम्पूभारते—VII. 10.

इदं निशम्य स्मितलाञ्छितोष्ठ्या
तत्रोत्तरा केशकृता प्रणुन्ना ।
बृहन्नलां सारथिकृत्यदक्षां
आत्रे निवेद्यानयति स्म चैनाम् ॥ 189 ॥

ङीष् ।

मेघसन्देशे—II. 19.

तन्वी श्यामा शिखरिदशना पक्वबिम्बाधरोष्ठी
मध्ये क्षामा चकितहरिणीप्रेक्षणा निम्ननाभिः ।

श्रोणीभारादलसगमना स्तोकनम्रा स्तनाभ्यां
या तत्र स्यात् युवतिविषये सृष्टिराद्येव धातुः ॥ 190 ॥

(वृत्तिः) । अङ्गगात्रकण्ठेभ्यो वक्तव्यम् ।

संयोगोपधादपि । स्वङ्गी स्वङ्गेत्यादि ।

नैषधे—I. 85.

नवा लता गन्धवहेन चुम्बिता
करम्बिताङ्गी मकरन्दशीकरैः ।
दृशा नृपेण स्मितशोभिकुड्मला
दरादराभ्यां दरकम्पिनी पपे ॥ 191 ॥

अस्मिन्नेव ग्रन्थे श्लो० 151. आनताङ्गीं । ङीष् ।

चम्पूभारते—VI. 29.

कूपस्य तीरे निवसन्नपायं को वा न धत्ते वद कोमलाङ्गि ।
त्वन्नाभिकूपस्य वसन् हि तीरे न दृश्यते सम्प्रति मध्यभागः ॥ 192 ॥

चम्पूभारते—VI. 23.

नतगात्रि यदागमेन मां नयसे मोदगिरेरधित्यकाम् ।
चिरपुण्यफलोदयश्रियां दिवसो वैजननस्तदेष मे ॥ 193 ॥

कुमारसम्भवे—VII. 85.

ध्रुवेण भर्त्रा ध्रुवदर्शनाय प्रयुज्यमाना प्रियदर्शनेन ।
सा दृष्ट इत्याननमुन्नमय्य ह्रीसन्नकण्ठी कथमप्युवाच ॥ 194 ॥

## ५१२ । न क्रोडादिबह्वचः । ( ४. १. ५६ )

क्रोडादेर्बह्वचश्च स्वाङ्गान्न ङीष् । कल्याणक्रोडा । अश्वानामुरः क्रोडा । आकृतिगणोऽयम् । सुजघना ।

माघे—VI. 25.

स्फुरदधीरतडिन्नयना मुहुः
प्रियमिवागलितोरुपयोधरा ।

जलधरावलिरप्रतिपालित-
स्वसमया समयाज्जगतीधरम् ॥ 195 ॥

नयनपयोधरयोर्बह्वच्कत्वान्न ङीष् ।

अस्मिन्नेव ग्रन्थे श्लो० 62. अधरनयने च तथा ।

भट्टिकाव्ये—X. 15.

घनगिरीन्द्रविलङ्घनशालिना
वनगता वनजद्युतिलोचना ।
जनमता ददृशे जनकात्मजा
तरुमृगेण तरुस्थलशायिनी ॥ 196 ॥

लोचनं च तथा ।

५१३ । सहनञ्विद्यमानपूर्वाच्च । (४. १. ५७)

सहेत्यादित्रिकपूर्वान्न ङीष् । सकेशा । अकेशा । विद्यमाननासिका ।

५१४ । नखमुखात्संज्ञायाम् । (४. १. ५८)

ङीष् न स्यात् । शूर्पणखा । गौरमुखा । संज्ञायां किम् । ताम्रमुखी कन्या ।

रघुवंशे—XII. 51.

राघवास्त्रविदीर्णानां रावणं प्रति रक्षसाम् ।
तेषां शूर्पणखैवैका दुष्प्रवृत्तिहराभवत् ॥ 197 ॥

शूर्पवन्नखानि यस्याः सा शूर्पणखा ।

५१५ । दिक्पूर्वपदान्ङीप् । (४. १. ६०)

कुमारसम्भवे—VII. 13.

तां प्राङ्मुखीं तत्र निवेश्य तन्वीं
क्षणं व्यलम्बन्त पुरो निषण्णाः ।
भूतार्थशोभाह्रियमाणनेत्राः
प्रसाधने सन्निहितेऽपि नार्यः ॥ 198 ॥

५१७। सख्यशिश्वीति भाषायाम्। (४. १. ६२)

सखी। अशिश्वी।

माघे—VII. 8.

न च सुतनु न वेद्मि यन्महीया-
नसुनिरसस्तव निश्चयः परेण।
वितथयति न जातु मद्वचोऽसा-
विति च तथापि सखीषु मेऽभिमानः॥ 199॥

५१८। जातेरस्त्रीविषयादयोपधात्। (४. १. ६३)

ङीष् स्यात्।

रघुवंशे—IV. 61.

यवनीमुखपद्मानां सेहे मधुमदं न सः।
बालातपमिवाब्जानामकालजलदोदयः॥ 200॥

यवनी।

अस्मिन्नेव ग्रन्थे श्लो० 171. मानुषी।

रघुवंशे—XII. 37.

फलमस्योपहासस्य सद्यः प्राप्स्यसि पश्य माम्।
मृग्याः परिभवो व्याघ्र्यामित्यवेहि त्वया कृतम्॥ 201॥

मृगी। व्याघ्री।

माघे—VIII. 13.

मुग्धायाः स्मरललितेषु चक्रवाक्या
निःशङ्कं दयिततमेन चुम्बितायाः।
प्राणेशानभि विदधुर्विधूतहस्ताः
सीत्कारं समुचितमुत्तरं तरुण्यः॥ 202॥

चक्रवाकी।

चम्पूरामायणे—II. 31.

> कल्याणवादसुखितां सहसैव कान्तां
> कान्तारचारकथया कलुषीचकार ।
> अम्भोदनादमुदितां विपिने मयूरीं
> संत्रासयन्निव धनुर्ध्वनिना पुलिन्दः ॥ 203 ॥

मयूरी । अस्त्रीविषयात्किम् । बलाका । अयोपधात्किम् । क्षत्रिया ।

वा० । हयगवयमुकयमनुष्यमत्स्यानामप्रतिषेधः । (2495)

हयी । गवयी । मुकयी । मानुषी । 'तत आगत' (सू. 1453) इत्यणि ङीप् । 'मत्स्यस्य ङ्याम्' (वा. 4198. सू. 499) । मत्सी ।

५२० । इतो मनुष्यजातेः । (४. १. ६५)

ङीष् स्यात् । दाक्षी । अत इञ् । ततो ङीष् । यद्वा 'तस्यापत्य' (सू. 1088) मित्यण् । 'टिड्ढाणञि' (सू. 470) त्यादिना ङीप् ।

रघुवंशे—I. 1.

> वागर्थाविव संपृक्तौ वागर्थप्रतिपत्तये ।
> जगतः पितरौ वन्दे पार्वतीपरमेश्वरौ ॥ 204 ॥

अस्मिन्नेव ग्रन्थे श्लो 43. मैथिली मैथिलस्यापत्यम् । अत इञ् । तदन्तात् ङीष् ।

५२१ । ऊङुतः । (४. १. ६६)

उकारान्तादयोपधान्मनुष्यवाचिनः स्त्रियामूङ् स्यात् ।

रघुवंशे—XIII. 24.

> त्वं रक्षसा भीरु यतोऽपनीता तं मार्गमेताः कृपया लता मे ।
> अदर्शयन्वक्तुमशक्नुवन्त्यः शाखाभिरावर्जितपल्लवाभिः ॥ 205 ॥

भीरु । सम्बुद्धौ ह्रस्वः ।

अस्मिन्नेव ग्रन्थे श्लो० 108. प्रमन्युः प्रकृष्टशोका । अयोपधादिति निषेधादूङ् न ।

भट्टिकाव्ये—IV. 21.

तामुवाच सगौष्ठीने वने स्त्रीपुंसभीषणे ।
असूर्यंपश्यरूपा त्वं किमभीरुररार्यसे ॥ 206 ॥

अभीरुः शूर्पणखा । अमनुष्यत्वादूङ् न ।

वा० अप्राणिजातेश्चारज्ज्वादीनामुपसंख्यानम् । (2502)

भट्टिकाव्ये—VIII. 65.

मन्दायमानगमनो हरितायत्तरूः कपिः ।
द्रुमैः शकशकायद्भिर्मारुतेनाट सर्वतः ॥ 207 ॥

हरितायन्तस्तरवो यस्यां तां हरितायत्तरूम् । ऊङ् ।

५२२ । बाह्वन्तात्संज्ञायाम् । (४. १. ६७)

स्त्रियामूङ् स्यात् । भद्रबाहूः । संज्ञायां किम् । वृत्तबाहुः ।

५२३ । पङ्गोश्च । (४. १. ६८)

वा० । श्वशुरस्योकाराकारलोपश्च । (5039)

चादूङ् । पुंयोगलक्षणस्य ङीषोऽपवादः ।

रघुवंशे—XIV. 13.

श्वश्रूजनानुष्ठितचारुवेषां कर्णीरथस्थां रघुवीरपत्नीम् ।
प्रासादवातायनदृश्यबन्धैः साकेतनार्योऽञ्जलिभिः प्रणेमुः ॥ 208 ॥

५२४ । ऊरूत्तरपदादौपम्ये । (४. १. ६९)

इत्यूङ्प्रत्ययः ।

अस्मिन्नेव ग्रन्थे श्लो० 17. रम्भे कदलीस्तम्भाविव ऊरू यस्याः सा रम्भोरूः ।

अस्मिन्नेव ग्रन्थे श्लो० 20. द्विरदनासेव ऊरू यस्याः सा द्विरदनासोरूः ।

माघे—VI. 24.

निदधिरे दयितोरसि तत्क्षण-
स्नपनवारितुषारभृतस्तनाः ।

सरसचन्दनरेणुरनुक्षणं
विचकरे च करेण **वरोरुभिः** ॥ 209 ॥

वरावूरू यस्याः सा **वरोरुः** । अनौपम्ये ऊङ् न । करेणुकरोरुभिरिति पाठस्तु ऊङभावाद्धेयः ।

अस्मिन्नेव ग्रन्थे श्लो० 62. **नखपदाङ्कितोरवः** । ऊङ् न ।

**५२५ । संहितशफलक्षणवामादेश्च । (४. १. ७०)**

संहितोरूः । सैव शफोरूः । शफाविव खुराविव संश्लिष्टत्वादुपचारात् ।

लक्षणशब्दादर्श आद्यच् । लक्षणोरूः । वामोरूः ।

**वा०** । सहितसहाभ्यां चेति वक्तव्यम् । (2503).

हितेन सह सहितावूरू यस्याः सा सहितोरूः । सहेते इति सहौ ऊरू यस्याः सा सहोरूः ।

माघे—VIII. 24.

त्रस्यन्ती चलशफरी**विघट्टितोरु-**
**र्वामोरूर**तिशयमाप विभ्रमस्य ।
क्षुभ्यन्ति प्रसभमहो विनापि हेतो-
र्लीलाभिः किमु सति कारणे तरुण्यः ॥ 210 ॥

वामौ सुन्दरौ ऊरू यस्या सा **वामोरूः** । ऊङ् । विघट्टितावूरू यस्याः सा **विघट्टितोरुः** । ऊङ् न ।

किरातार्जुनीये—VIII. 45.

परिस्फुरन्मीन**विघट्टितोरवः**
सुराङ्गनास्त्रासविलोलदृष्टयः ।
उपाययुः कम्पितपाणिपल्लवाः
सखीजनस्यापि विलोकनीयताम् ॥ 211 ॥

**५२६ । संज्ञायाम् । (४. १. ७२)**

इत्यूङ् ।

माघे—XX. 43.

कृतकेशविडम्बनैर्विहायो विजयं तत्क्षणमिच्छुमिश्छलेन ।
अमृताग्रभुवः पुरेव पुच्छं वडवाभर्तुरवारि काद्रवेयैः ॥ 212 ॥

कद्रूः सर्पमाता ।

५२७ । शार्ङ्गरवाद्यञो ङीन् । (४. १. ७३)

शार्ङ्गरवादिः—४. ६.

कुमारसम्भवे—I. 48.

लज्जा तिरश्चां यदि चेतसि स्या-
दसंशयं पर्वतराजपुत्र्याः ।
तं केशपाशं प्रसमीक्ष्य कुर्यु-
र्वालप्रियत्वं शिथिलं चमर्यः ॥ 213 ॥

पुत्रशब्दात् ङीन् ।

(ग. सू.) नृनरयोर्वृद्धिश्च । 54.

नारी । नैषधे—I. 94.

मरुल्ललत्पल्लवकण्टकैः क्षतं
समुच्चलच्चन्दनसारसौरभम् ।
स वारनारीमुखसंचितोपमं
ददर्श मालूरफलं पचेलिमम् ॥ 214 ॥

५२८ । यङश्चाप् । (४. १. ७४)

ञ्यङ्ष्यङोः सामान्यग्रहणम् । 'कौड्यादिभ्यश्च' (सू. 1200) इति ष्यङ् । अस्मिन्नेव ग्रन्थे श्लो० 75. भोजस्य राज्ञो गोत्रापत्यं स्त्रियं भोज्यामिन्दुमतीम् । भोजक्षत्रिय इत्युपसङ्ख्यानात् ष्यङ् । 'वृद्धेत्कोसलाजादाञ्ञ्यङ्' (सू. 1189) इति ञ्यङ् ।

भट्टिकाव्ये—I. 14.

कौसल्ययासावि सुखेन रामः
प्राक्केकयीतो भरतस्ततोऽभूत् ।

मासोष्ट शत्रुघ्नमुदारचेष्ट-
मेका सुमित्रा सह लक्ष्मणेन ॥ 215 ॥

कोसलस्य राज्ञोऽपत्यं स्त्री कौसल्या ।

वा० । पाद्यञश्चाप् वाच्यः । (2505.)

पौतिमाष्या ।

५३० । तद्धिताः । ( ४. १. ७६ )

आपञ्चमसमाप्तेरधिकारोऽयम् ।

५३१ । यूनस्तिः । ( ४. १. ७७ )

युवन्शब्दात्तिप्रत्ययः , स च तद्धितः । युवतिः । अनुपसर्जनादित्येव । बहवो युवानो यस्यां सा बहुयुवा । युवतीति तु यौतेः शत्रन्तात् ङीपि बोध्यम् ।

अस्मिन्नेव ग्रन्थे श्लो० 154. युवतिः ।

इति पाणिनिसूत्रव्याख्यायां सोदाहरणश्लोकायां

स्त्रीप्रत्ययप्रकरणम्

---

## ॥ अथ कारकप्रकरणम् ॥

५३२ । प्रातिपदिकार्थलिङ्गपरिमाणवचनमात्रे प्रथमा । ( २. ३. ४६ )

भट्टिकाव्ये—VIII. 118.

इदं मैथिल्यभिज्ञानं काकुत्स्थस्याङ्गुलीयकम् ।
भवत्याः स्मरतात्यर्थमर्पितं सादरं मम ॥ 216 ॥

इदमङ्गुलीयकमिति प्रथमा ।

५३३ । सम्बोधने च । ( २. ३. ४७ )

इह प्रथमा स्यात् । हे राम ।

अस्मिन्नेव ग्रन्थे श्लो० 216. हे मैथिलि इति ।

५३४ । कारके । ( १. ४. २३ )

इत्यधिकृत्य ।

५३५ । कर्तुरीप्सिततमं कर्म । ( १. ४. ४९ )

कर्तुः क्रिययाप्तुमिष्टतमं कारकं कर्मसंज्ञं स्यात् ।

भट्टिकाव्ये—VIII. 81.

मावमंस्था नमस्यन्तमकार्यज्ञे जगत्पतिम् ।
संदृष्टे मयि काकुत्स्थमधन्यं कामयेत का ॥ 217 ॥

जगत्पतिमिति कर्मत्वम् ।

५३६ । अनभिहिते । ( २. ३. १ )

इत्यधिकृत्य ।

५३७। कर्मणि द्वितीया। (२. ३. २)

अनुक्ते कर्मणि द्वितीया स्यात्। हरिं भजति। अभिहिते तु कर्मणि प्रथमैव। हरिः सेव्यते।

भट्टिकाव्ये—VIII. 94.

ततः खड्गं समुद्यम्य रावणः क्रूरविग्रहः।
वैदेहीमन्तरा क्रुद्धः क्षणमूचे विनिश्वसन्॥ 218॥

खड्गमित्यनभिहिते कर्मणि द्वितीया।

५३८। तथायुक्तं चानीप्सितम्। (१. ४. ५०)

अस्मिन्नेव ग्रन्थे श्लो० 217. काकुत्स्थम्।

५३९। अकथितं च (१. ४. ५१)

अपादानादिविशेषैरविवक्षितं कारकं कर्मसंज्ञं स्यात्।

दुह्याच्पच्दण्ड्रुधिप्रच्छिचिब्रूशासुजिमथ्मुषाम्।
कर्मयुक्स्यादकथितं तथा स्यान्नीहृकृष्वहाम्॥

दुहियाचिरुधिप्रच्छिभिक्षिचिञामुपयोगनिमित्तमपूर्वविधौ।
ब्रुविशासिगुणेन च यत्सचते तदकीर्तितमाचरितं कविना॥ इतिवचनात्

जिदण्डिकर्षिकृन्मुण्डिनीह्रन्मुषिवहिग्रहाम्।
द्विकर्मसु पचादीनां चोपसङ्ख्यानमिष्यते॥

भट्टिकाव्ये—VIII. 82.

यः पयो दोग्धि पाषाणं स रामाद्भूतिमाप्नुयात्।
रावणं गमय प्रीतिं बोधयन्तं हिताहितम्॥ 219॥

दुहेर्द्विकर्मकत्वम्। तत्र पयस ईप्सितकर्मत्वम्। पाषाणमित्यकथितकर्मत्वम्।

भट्टिकाव्ये—VI. 8.

सोऽपृच्छल्लक्ष्मणं सीतां याचमानः शिवं सुरान्।
रामं यथास्थितं सर्वं भ्राता ब्रूते स्म विक्लवः॥ 220॥

भट्टिकाव्ये—VI. 9.

सन्दृश्य शरणं शून्यं भिक्षमाणो वनं प्रियाम् ।
प्राणान्दुहन्निवात्मानं शोकं चित्तमवारुधत् ॥ 221 ॥

भट्टिकाव्ये—VI. 10.

गता स्यादवचिन्वाना कुसुमान्याश्रमद्रुमान् ।
आ यत्र तापसान्धर्मं सुतीक्ष्णः शास्ति तत्र सा ॥ 222 ॥

सोऽपृच्छदित्यादिश्लोकत्रये सर्वत्र सीतादीनां प्रधानकर्मणामीप्सितकर्मत्वम् ; लक्ष्मणादीनामप्रधानकर्मणामकथितकर्मत्वं च द्रष्टव्यम् ।

भट्टिकाव्ये—VIII. 85.

वचनं रक्षसां पत्युरनु क्रुद्धा पतिप्रिया ।
पापान्ववसितं सीता रावणं प्राब्रवीद्वचः ॥ 223 ॥

ब्रूञः द्विकर्मकत्वम् ।

भट्टिकाव्ये—VII. 99.

मुषित्वा धनदं पापो यां गृहीत्वाऽवसद् द्विषन् ।
तां रुदित्वेव शक्रेण यात लङ्कामुपेक्षिताम् ॥ 224 ॥

मुषिग्रह्योर्द्विकर्मकत्वम् ।

माघे—II. 64.

निरुद्धवीवधासारप्रसारा गा इव व्रजम् ।
उपरुन्धन्तु दाशार्हाः पुरीं माहिष्मतीं द्विषः ॥ 225 ॥

माघे—XII. 40.

प्रीत्या नियुक्ताँल्लिहतीः स्तनन्धयान्
निगृह्य पारीमुभयेन जानुनोः ।
वर्धिष्णुधाराध्वनि रोहिणीः पयः-
श्चिरं निदध्यौ दुहतः स गोदुहः ॥ 226 ॥

माघे—XIV. 1.

तं जगाद गिरमुद्गिरन्निव स्नेहमाहितविकासया दृशा ।
यज्ञकर्मणि मनः समादधद्वाग्मिनां वरमकद्वदो नृपः ॥ 227 ॥

किरातार्जुनीये—I. 5.

स किंसखा साधु न शास्ति योऽधिपं
हितान्न यः संशृणुते स किंप्रभुः ।
सदानुकूलेषु हि कुर्वते रतिं
नृपेष्वमात्येषु च सर्वसम्पदः ॥ 228 ॥

नैषधे—III. 25.

दारिद्र्यदारिद्रविणौघवर्षै-
रमोघमेघव्रतमर्थिसार्थे ।
सन्तुष्टमिष्टानि तमिष्टदेवं
नाथन्ति के नाम न लोकनाथम् ॥ 229 ॥

नाथतेर्याच्ञार्थत्वाद् द्विकर्मकत्वम् ॥ 'अप्रधाने दुहादीनामिति' वचनात् ।

किरातार्जुनीये—V. 30.

येनापविद्धसलिलः स्फुटनागसद्मा
देवासुरैरमृतमम्बुनिधिर्ममन्थे ।
व्यावर्तनैरहिपतेरयमाहिताङ्कः
खं व्यालिखन्निव विभाति स मन्दराद्रिः ॥ 230 ॥

मथ्नातेर्द्विकर्मकत्वादप्रधाने कर्मणि लिट् ।

रघुवंशे—XI. 1.

कौशिकेन स किल क्षितीश्वरो
राममध्वरविघातशान्तये ।
काकपक्षधरमेत्य याचित-
स्तेजसां हि न वयः समीक्ष्यते ॥ 231 ॥

कौशिकेनेति कर्ता । राममिति प्रधानकर्म । क्षितीश्वर इति अप्रधानकर्म । याचित इति कर्मणि क्तः ।

वा० । अकर्मकधातुभियोंगे देशः कालो भावो गन्तव्योऽध्वा च कर्मसंज्ञक इति वाच्यम् । (1103 - 1104.)

कालभावाध्वगन्तव्याः कर्मसंज्ञा ह्यकर्मणाम् ।
देशश्चाकर्मकाणां च कर्मसंज्ञा भवेदिह ॥

कुमारसम्भवे—III. 31.

मृगाः प्रियालद्रुममञ्जरीणां
रजःकणैर्विघ्नितदृष्टिपाताः ।
मदोद्धताः प्रत्यनिलं विचेरु-
र्वनस्थलीर्मर्मरपत्रमोक्षाः ॥ 232 ॥

चरतेः सकर्मकत्वम् ।

रघुवंशे—II. 8.

लताप्रतानोद्ग्रथितैः स केशै-
रधिज्यधन्वा विचचार दावम् ।
रक्षापदेशान्मुनिहोमधेनो-
र्वन्यान्विनेष्यन्निव दुष्टसत्त्वान् ॥ 233 ॥

दावस्य देशत्वात् चरतेः सकर्मकत्वम् ।

अस्मिन्नेव ग्रन्थे श्लो० 175. अरण्यानीम् ।

५४० । गतिबुद्धिप्रत्यवसानार्थशब्दकर्माकर्मकाणामणि कर्ता स णौ । (१. ४. ५२)

गत्याद्यर्थानां शब्दकर्मणामकर्मकाणां चाणौ यः कर्ता स णौ कर्म स्यात् ।

शत्रूनगमयत्स्वर्गं वेदार्थं स्वानवेदयत् ।
आशयच्चामृतं देवान्वेदमध्यापयद्विधिम् ॥

आसयत्सलिले पृथ्वीं यः स मे श्रीहरिर्गतिः ॥

अस्मिन्नेव ग्रन्थे श्लो० 219. रावणम् । उभयत्रापि अणि कर्तुः कर्मत्वम् ।

भट्टिकाव्ये—VIII. 83.

प्रीतोऽहं भोजयिष्यामि भवतीं भुवनत्रयम् ।
किं विलापयसेऽत्यर्थं पार्श्वे शायय रावणम् ॥ 234॥

सर्वत्राणिकर्तुः कर्मत्वम् ।

भट्टिकाव्ये—VII. 28.

तं जागरूकः कार्येषु दन्दशूकरिपुं कपिः ।
अकम्पं मारुतिर्दीप्रं नम्रः प्रावेशयद्गुहाम् ॥ 235 ॥

विशेर्हेतुमण्ण्यन्ताल्लङ् । गत्यर्थकत्वादणिकर्तुः कर्मत्वम् ।

माघे—XII. 46.

प्रायेण नीचानपि मेदिनीभृतो
जनः समेनैव पथाधिरोहति ।
सेना मुरारेः पथ एव सा पुन-
र्महामहीध्रान्परितोऽध्यरोहयत् ॥ 236 ॥

रोहतेर्गत्यर्थत्वात् पथः कर्मत्वम् ।

चम्पूरामायणे—I. 96.

अयं महात्मा तपसः प्रभावा-
दारोपयामास दिवं त्रिशङ्कुम् ।
नीलाम्बरं निह्नुतराजत्रेषं
वर्षानिशीथादविशेषवेषम् ॥ 237 ॥

चम्पूरामायणे—I. 88.

तया तटिन्या जाह्नव्या प्रापयत् त्रिदिवं पितॄन् ।
भगीरथः पुरं प्राप परिपूर्णमनोरथः ॥ 238 ॥

रघुवंशे—I. 74.

सोऽपश्यत्प्रणिधानेन सन्ततिस्तम्भकारणम् ।
भावितात्मा भुवो भर्तुरथैनं प्रत्यबोधयत् ॥ 239 ॥

नैषधे—IV. 31.

त्वदितरोऽपि हृदा न मया धृतः
पतिरितीव नलं हृदयेशयम् ।
सरहविर्भुजि बोधयति स्म सा
विरहपाण्डुतया निजशुद्धताम् ॥ 240 ॥

भट्टिकाव्ये—VII. 34.

ततः कपिसमाहारमेकनिश्वायमागतम् ।
उपाध्याय इवायामं सुग्रीवोऽध्यापिपद्दिशाम् ॥ 241 ॥

अध्यापिपद्बोधितवान् ।

भट्टिकाव्ये—VIII. 62.

ज्योत्स्नामृतं शशी यस्यां वापीर्विकसितोत्पलाः ।
अपाययत सम्पूर्णः मदा दशमुखाज्ञया ॥ 242 ॥

कुमारसम्भवे—VIII 77.

मान्यभक्तिरथवा सखीजनः
सेव्यतामिदमनङ्गदीपनम् ।
इत्युदारमभिधाय शङ्करः-
स्तामपाययत पानमम्बिकाम् ॥ 243 ॥

माघे—X. 2.

सोपचारमुपशान्तविचारं सानुतर्षमनुतर्षपदेन ।
ते मुहूर्तमथ मूर्तमपीप्यन्प्रेम मानमवधूय वधूः स्वाः ॥ 244 ॥

वधूरित्यणिकर्तुः कर्मत्वम् ।

रघुवंशे—XIII. 9.

मुखार्पणेषु प्रकृतिप्रगल्भाः
स्वयं तरङ्गाधरदानदक्षः ।
अनन्यसामान्यकलत्रवृत्ति-
र्पिबत्यसौ पाययते च सिन्धूः ॥ 245 ॥

सिन्धूरित्यणिकर्तुः कर्मत्वम् ।

चम्पूभारते—VI. 67.

सुराभिकत्वेऽपि पदे वितीर्णे
मह्यं तवास्त्येव हि कृत्यशेषः ।
कुरुष्व मेरोरधिके कुचे मां
सुधाधिकं पायय चाधरोष्ठम् ॥ 246 ॥

भट्टिकाव्ये—III. 25.

अशिश्रवत्नात्ययिकं तमेत्य
दूता यदार्थं प्रयियासयन्तः ।
आंहिष्ट जाताञ्जिहिषस्तदासा-
वुत्कण्ठमानो भरतो गुरूणाम् ॥ 247 ॥

शृणोतेः शब्दकर्मत्वादणिकर्तुः कर्मत्वम् ।

रघुवंशे—XV. 33.

साङ्गं च वेदमध्याप्य किंचिदुत्क्रान्तशैशवौ ।
स्वकृतिं गापयामास कविप्रथमपद्धतिम् ॥ 248 ॥

गायतेः शब्दकर्मत्वादणिकर्तुः कर्मत्वम् ।

रघुवंशे—IX. 19.

स किल संयुगमूर्ध्नि सहायतां
मघवतः प्रतिपद्य महारथः ।

स्वभुजवीर्यमगापयदुच्छ्रितं
सुरवधूरवधूतभयाः शरैः ॥ 249 ॥

रघुवंशे—IV. 78.

शरैरुत्सवसङ्केतान् स कृत्वा विरतोत्सवान् ।
जयोदाहरणं बाह्वोर्गापयामास किन्नरान् ॥ 250 ॥

भट्टिकाव्ये—XVII. 25.

तावभाषत पौलस्त्यो मा स्म मरुदितं युवाम् ।
ध्रुवं स मोहयित्वास्मान् पापोऽगच्छन्निकुम्भिलाम् ॥ 251 ॥

मुहेरकर्मकत्वात् अणिकर्तुः कर्मत्वम् ।

कुमारसम्भवे—VII. 27.

तामर्चिताभ्यः कुलदेवताभ्यः
कुलप्रतिष्ठां प्रणमय्य माता ।
अकारयत्कारयितव्यदक्षा
क्रमेण पादग्रहणं सतीनाम् ॥ 252 ॥

नमेरकर्मकत्वादणिकर्तुः कर्मत्वम् ।

भट्टिकाव्ये—V. 104.

सन्त्रासयांचकारारिं सुरान् पिप्राय पश्यतः ।
स त्याजयांचकाराथ सीतां विंशतिबाहुना ॥ 253 ॥

अकर्मकत्वात् त्रासेर्ण्यन्तावस्थायां अरेः कर्तृत्वम् ।

वा० । नीवह्योर्न । (1109)

रघुवंशे—XV. 74.

इति प्रतिश्रुते राज्ञा जानकीमाश्रमान्मुनिः ।
शिष्यैरानाययामास स्वसिद्धिं नियमैरिव ॥ 254 ॥

चम्पूभारते—II. 117.

वृत्तान्तमेवमवकर्ण्य स राजवृद्धः
क्षत्ता सकाशमुपनाय्य सहानुजातैः ।

धर्मात्मजाय धुरि कंसभिदोऽर्थभावा-
दन्वर्थतामथ विभज्य ददौ स्वनाम्नः ॥ 255 ॥

भट्टिकाव्ये—I. 10.

पुत्रीयता तेन वराङ्गनाभिरानायि विद्वान्क्रतुषु क्रियावान् ।
विपक्तिमज्ञानगतिर्मनस्वी मान्यो मुनिः स्वां पुरमृष्यशृङ्गः ॥ 256 ॥

वा० । आदिखाद्योर्न । (1109.)

भट्टिकाव्ये—XVI. 22.

मारयिष्यामि वैदेहीं खादयिष्यामि राक्षसैः ।
भूमौ वा निखनिष्यामि विध्वंसस्यास्य कारणम् ॥ 257 ॥

प्रतिषेधात्कर्तृसंज्ञैव भवति। 'बुध' (सू. 2752) 'निगरणचलनार्थ' (सू. 2753) 'अणावकर्मका' (सू. 2754) दित्यादिना परस्मैपदम् । 'अदेः प्रतिषेधः' (वा. 959. सू. 2753.) इति प्रतिषेधादात्मनेपदम्, 'न पा' (सू. 2755.) इति परस्मैपद-निषेधात् 'णिचश्च' (सू. 2564) त्यात्मनेपदविकल्पात्पाक्षिकं परस्मैपदम् ।

५४१ । हृक्रोरन्यतरस्याम् । (१. ४. ५३)

हृक्रोरणौ यः कर्ता स णौ वा कर्मसंज्ञः स्यात् । हारयति कारयति वा भृत्यं भृत्येन वा कटम् ।

अस्मिन्नेव ग्रन्थे श्लो० 252. तां पादग्रहणमकारयदिति अणिकर्तुः कर्मत्वम् ।

कुमारसंभवे—VII 80.

तौ दम्पती त्रिः परिणीय वह्निमन्योन्यसंस्पर्शनिमीलिताक्षौ ।
स कारयामास वधूं पुरोधास्तस्मिन्समिद्धार्चिषि लाजमोक्षम् ॥ 258 ॥

विकल्पादणिकर्तुः कर्मत्वम् ।

नैषधे—I 73.

अचीकरच्चारु हयेन या भ्रमीर्निजातपत्रस्य तलस्थले नलः ।
मरुत्किमद्यापि न तासु शिक्षते वितत्य वात्यामयचक्रचङ्क्रमान् ॥ 259 ॥

विकल्पादणिकर्तुर्हयेनेति तृतीया ।

भट्टिकाव्ये—V. 33.

भवन्तं कार्तवीर्यो यो हीनसन्धिमचीकरत् ।
जिगाय तस्य हन्तारं स रामः सार्वलौकिकः ॥ 260 ॥

भवन्तमित्यणिकर्तुः कर्मत्वम् ।

भट्टिकाव्ये—VIII. 84.

आज्ञां कारय रक्षोभिर्मां प्रियाण्युपहारय ।
कः शक्रेण कृतं नेच्छेदधिमूर्धानमञ्जलिम् ॥ 261 ॥

रक्षोभिरिति तृतीया । मामिति द्वितीया ।

भट्टिकाव्ये—XV. 84.

अलसच्चाहतो मूर्ध्नि खड्गं चाजीहरद् द्विषा ।
प्राणानौज्झीच्च खड्गेन छिन्नैस्तेनैव मूर्धभिः ॥ 262 ॥

द्विषा इति तृतीया ।

मेघसंदेशे—I. 4.

प्रत्यासन्ने नभसि दयिताजीवितालम्बनार्थी
जीमूतेन स्वकुशलमयीं हारयिष्यन्प्रवृत्तिम् ।
स प्रत्यग्रैः कुटजकुसुमैः कल्पितार्घाय तस्मै
प्रीतः प्रीतिप्रमुखवचनं स्वागतं व्याजहार ॥ 263 ॥

जीमूतेनेति तृतीया ।

वा० । अभिवादिदृशोरात्मनेपदे वेति वाच्यम् । (1114)

अभिवादयते दर्शयते देवं भक्तं भक्तेन वा ।

नैषधे—V. 71.

नैषधे बत वृते दमयन्त्या व्रीडितो हि न बहिर्भवितास्मि ।
त्वां गृहेऽपि वनितां कथमास्ये ह्रीनिमीलि खलु दर्शयिताहे ॥ 264 ॥

अणिकर्त्र्या वनितायाः वैकल्पिकं कर्मत्वम् ।

भट्टिकाव्ये—XIV. 54.

दर्शयाञ्चक्रिरे रामं सीतां राज्ञश्च शासनात् ।
तस्या मिमीलतुर्नेत्रे लुलुठे पुष्पकोदरे ॥ 265 ॥

किरातार्जुनीये—I. 10.

सखीनिव प्रीतियुजोऽनुजीविनः
समानमानान्सुहृदश्च बन्धुभिः ।
स सन्ततं दर्शयते गतस्मयः
कृताधिपत्यामिव साधु बन्धुताम् ॥ 266 ॥

अनर्घराघवे—V. 23.

स्ववपुषि नखलक्ष्म स्वेन कृत्वा भवत्या
कृतमिति चतुराणां दर्शयिष्ये सखीनाम् ।
इति रहसि मया ते भीषितायाः स्मरामि
स्मरपरिमलमुद्राभङ्गसर्वंसहायाः ॥ 267 ॥

५४२ । अधिशीङ्स्थासां कर्म । ( १. ४. ४६ )

अधिपूर्वाणामेषामाधारः कर्म स्यात् । अधिशेते अधितिष्ठति अध्यास्ते वा वैकुण्ठं हरिः ।

माघे—XI. 66.

प्रलयमखिलतारालोकमह्नाय नीत्वा
श्रियमनतिशयश्रीः सानुरागां दधानः ।
गगनसलिलराशिं रात्रिकल्पावसाने
मधुरिपुरिव भास्वानेष एकोऽधिशेते ॥ 268 ॥

भट्टिकाव्ये—XV. 114.

अक्रोकूयिष्ट तत्सैन्यं प्रपलायिष्ट चाकुलम् ।
अच्युनच्च क्षतं रक्तं हतं चाध्यशयिष्ट गाम् ॥ 269 ॥

भट्टिकाव्ये—VIII. 79.

आस्स्व साकं मया सौधे माधिष्ठा निर्जनं वनम् ।
माधिवात्सीर्भुवं शय्याम धिशेष्व स्मरोत्सुका ॥ 270 ॥

भट्टिकाव्ये — II. 46.

त्रिवर्गपारीणमसौ भवन्तमध्यासयन्नासनमेकमिन्द्रः ।
विवेकदृश्वत्वमगात्सुराणां तं मैथिलो वाक्यमिदं बभाषे ॥ 271 ॥

रघुवंशे — I. 80

हविषे दीर्घसत्रस्य सा चेदानीं प्रचेतसः ।
भुजङ्गपिहितद्वारं पातालमधितिष्ठति ॥ 272 ॥

माघे — II. 5.

अध्यासामासुरुत्तुङ्गहेमपीठानि यान्यमी ।
तैरूहे केसरिक्रान्तत्रिकूटशिखरोपमा ॥ 273 ॥

५४३ । अभिनिविशश्च । (१. ४. ४७)

अभिनीत्येतत्सङ्घातपूर्वस्य विशतेराधारः कर्म स्यात् । अभिनिविशते सन्मार्गम् । 'परिक्रयणे' (सू. 580) इति सूत्रादिह मण्डूकप्लुत्यान्यतरस्यांग्रहणमनुवर्त्य व्यवस्थित-विभाषाश्रयणात्क्वचिन्न । पापेऽभिनिवेशः ।

भट्टिकाव्ये VIII. 80.

अभिन्यविक्षथास्त्वं मे यथैवाव्याहता मनः ।
तवाप्यध्यावसन्तं मां मा रौत्सीर्हृदयं तथा ॥ 274 ॥

'नेर्विशः' (सू. 2683) इत्यात्मनेपदम् ।

अस्मिन्नेव ग्रन्थे श्लो० 59. सम्पूर्वाद्विशतेर्नात्मनेपदम् । कर्म च ।

५४४ । उपान्वध्याङ्वसः । (१. ४. ४८)

उपादिपूर्वस्य वसतेराधारः कर्म स्यात् । उपवसति अनुवसति अधिवसति आवसति वा वैकुण्ठं हरिः ।

वा० । अभुक्त्यर्थस्य न । (1087)

वने उपवसति ।

अस्मिन्नेव ग्रन्थे श्लो० 270. भुवं माधिवात्सीः । भुवः कर्मत्वम् ।

अस्मिन्नेव ग्रन्थे श्लो० 274. हृदयमिति कर्म ।

अनर्घराघवे—VII. 129.

> श्यामो नाम वट: सोऽयमेतस्याद्भुतकर्मण: ।
> छायामप्यधिवास्तव्यै: परं ज्योतिर्निषेव्यते ॥ 275 ॥

छायामित्याधारस्य कर्मता ।

भट्टिकाव्ये—V. 75.

> क: पण्डितायमानस्त्वामादायामिषसन्निभाम् ।
> त्रस्यन्वैरायमाणेभ्य: शून्यमन्ववसद्वनम् ॥ 276 ॥

वनमित्यधिकरणस्य कर्मत्वम् ।

चम्पूरामायणे—I. 12.

> तामावसद्दशरथ: सुरवन्दितेन
> सङ्क्रन्दनेन विहितासनसंविभाग: ।
> बृन्दारकारिविजये सुरलोकलब्ध-
> मन्दारमाल्यमधुवासितवासभूमि: ॥ 277 ॥

वा० । उभसर्वतसो: कार्या धिगुपर्यादिषु त्रिषु ।
द्वितीयाम्रेडितान्तेषु ततोऽन्यत्रापि दृश्यते ॥ ( 1444 )

उभयत: कृष्णं गोपा: । सर्वत: कृष्णम् । धिक् कृष्णाभक्तम् । उपर्युपरि लोकं हरि: । अध्यधि लोकम् । अधोऽधो लोकम् । 'उपर्यध्यधस:सामीप्ये' (सू. 2142.) इति द्विर्भाव: । 'उपर्यादिषु सामीप्ये द्विरुक्तेषु द्वितीया' इति वामन: ।

नैषधे—III. 32.

> धिक् तं विधे: पाणिमजातलज्जं
> निर्माति य: पर्वणि पूर्णमिन्दुम् ।
> मन्ये स विज्ञ: स्मृततन्मुखश्री:
> कृत्वार्धमौज्झद्धरमूर्ध्नि यस्तम् ॥ 278 ॥

भट्टिकाव्ये—V. 98.

यशस्करसमाचारं ख्यातं भुवि दयाकरम् ।
पितुर्वाक्यकरं रामं धिक् त्वां दुष्कृतमत्रपम् ॥ 279 ॥

भट्टिकाव्ये—V. 40.

अघानि ताटका तेन लज्जाभयविभूषणा ।

स्त्रीजने यदि तच्छ्लाघ्यं धिक् लोकं क्षुद्रमानसम् ॥ 280 ॥

माघे—IV. 2.

गुर्वीरजस्रं दृषदः समन्ता
दुपर्युपर्यम्बुमुचां वितानैः ।
विन्ध्यायमानं दिवसस्य भर्तु-
र्मार्गं पुना रोद्धुमिवोन्नमद्भिः ॥ 281 ॥

अनर्घराघवे—VII. 57.

ग—कथमुपर्युपरि पुष्करावर्तकानभ्रमुवल्लभः ॥ 282 ॥

माघे—I. 4.

नवानधोऽधो बृहतः पयोधरान्
समूढकर्पूरपरागपाण्डुरम् ।
क्षणं क्षणोत्क्षिप्तगजेन्द्रकृत्तिना
स्फुटोपमं भूतिसितेन शम्भुना ॥ 283 ॥

वा० । अभितःपरितःसमयानिकषाहाप्रतियोगेऽपि । ( 1442. 1443. )

अभितः कृष्णं, परितः कृष्णं, ग्रामं समया, निकषा लङ्कां, हा कृष्णाभक्तम् । तस्य शोच्यतेत्यर्थः । बुभुक्षितं न प्रतिभाति किंचित् । 'पर्यभिभ्यां च' ( सू. 1956.) इति तसिल् ।

भट्टिकाव्ये—I. 12.

रक्षांसि वेदिं परितो निरास्थ-
दङ्गान्ययाक्षीदभितः प्रधानम् ।

शेषाण्यहौर्षीत्सुतसम्पदे च
वरं वरेण्यो नृपतेरमार्गीत् ॥ 284 ॥

रघुवंशे—III. 15.

**अरिष्टशय्यां परितो** विसारिणा
सुजन्मनस्तस्य निजेन तेजसा ।
निशीथदीपाः सहसा हतत्विषो
बभूवुरालेख्यसमर्पिता इव ॥ 285 ॥

भट्टिकाव्ये—V. I.

निराकरिष्णू वर्तिष्णू वर्धिष्णू **परितो रणम्** ।
उत्पतिष्णू सहिष्णू च चेरतुः खरदूषणौ ॥ 286 ॥

चम्पूरामायणे—IV. 3.

ग—तस्मिन्नसमशरसमरसमये **पम्पां समया** पर्यटन् पर्याकुलहृदयो हृदयदयितां हृदि लक्षयन् लक्ष्मणमिदमभाषत ॥ 287 ॥

माघे—I. 68.

सरत्यदो दाशरथिर्भवन्भवा-
नमुं वनान्ताद्वनितापहारिणम् ।
पयोधिमाविद्धचलज्जलाविलं
विलङ्घ्य **लङ्कां निकषा** हनिष्यति ॥ 288 ॥

**५४५ । अन्तरान्तरेणयुक्ते । (२. ३. ४)**

आभ्यां योगे द्वितीया स्यात् । अन्तरा त्वां मां हरिः । अन्तरेण हरिं न सुखम् ।

असिन्नेव ग्रन्थे श्लो० 218. **वैदेहीम्** आत्मानं चेति शेषः । **अन्तरा** उभयोर्मध्य इत्यर्थः । जयमङ्गलव्याख्याने **वैदेहीम् अन्तरा** क्रुद्धो वैदेह्या वधे कुपितः । **अन्तराशब्दो** मध्यमाधेयप्रधानमाचष्टे । आधेयश्चात्र वधः । इति ।

चम्पूरामायणे—I. 2.

उच्चैर्गतिर्जगति सिध्यति धर्मतश्चे-
तस्य प्रमा च वचनैः कृतकेतरैश्चेत् ।
तेषां प्रकाशनदशा च महीसुरैश्चे-
त्तानन्तरेण निपतेत्क नु मत्प्रणामः ॥ 289 ॥

५४६ । कर्मप्रवचनीयाः । ( १. ४. ८३. )

इत्यधिकृत्य ।

५४७ । अनुर्लक्षणे । ( १. ४. ८४ )

लक्षणमत्र हेतुः । लक्षणार्थे अनोः कर्मप्रवचनीयसंज्ञा स्यात् ।

५४८ । कर्मप्रवचनीययुक्ते द्वितीया । ( २. ३. ८. )

एतेन योगे द्वितीया स्यात् । जपमनु प्रावर्षत् । हेतुभूतजपोपलक्षितं वर्षणमित्यर्थः ।

अस्मिन्नेव ग्रन्थे श्लो० 223. वचनमनु क्रुद्धा । वचनेन हेतुना क्रुद्धा ।

‘ कर्मप्रवचनीयानां प्रतिषेधः’ ( वा० 1339. सू. 780 ) इति न समासः । वचनमनु ।

५४९. । तृतीयार्थे । ( १. ४. ८५ )

अस्मिन्द्योत्येऽनुरुक्तसंज्ञः स्यात् । नदीमन्ववसिता सेना । नद्या सह सम्बद्धे-त्यर्थः ।

अस्मिन्नेव ग्रन्थे श्लो० 223. पापमनु पापानु पापेन सहेत्यर्थः । कविना स्वातन्त्र्यात् द्वितीयेति योगविभागात् सुप् सुपेति वा समासः कृतः । ‘ कर्मप्रवचनीयानां प्रतिषेधः’ ( वा० 1339. सू. 780 ) इति अनुपापमित्यव्ययीभावसमासस्य प्रतिषेधः ।

रघुवंशे—VIII. 72.

प्रमदामनु संस्थितः शुचा नृपतिः सन्निति वाच्यदर्शनात् ।
न चकार शरीरमग्निसात्सह देव्या न तु जीवितेच्छया ॥ 290 ॥

माघे—IX. 17.

दिवसोऽनु मित्रमगमद्विलयं
किमिहास्यते बत मयाबलया ।
रुचिभर्तुरस्य विरहाधिगमा-
दिति सन्ध्ययापि सपदि व्यगमि ॥ 291 ॥

**अनु मित्र**मित्यव्ययीभावसमासस्य प्रतिषेधादनु मित्रमिति पदद्वयम् ।

**चम्पूरामायणे**—I. 31.

**तमेनमन्व**जायन्त त्रयस्तेतामितेजसः ।
अग्रजस्यानुकुर्वन्तस्तैस्तैर्लोकोत्तरैर्गुणैः ॥ 292 ॥

## ५५० । हीने । ( १. ४. ८६ )

हीने द्योत्येऽनुः प्राग्वत् । अनुहरिं सुराः । हरेर्हीना इत्यर्थः ।

भट्टिकाव्ये—VIII. 86.

न त्वं पापानु **रामं** चेदुर शूरेषु वा ततः ।
अपवाह्य छलाद्वीरौ किमर्थं मामिहाहरः ॥ 293 ॥

**राममनु** रामाद्धीनः । समासप्रतिषेधादनु राममिति पदद्वयम् ।

किरातार्जुनीये—XIII. 52.

लभ्यमेकसुकृतेन दुर्लभा रक्षितारमसुरक्ष्यभूतयः ।
स्वन्तमन्तविरसा जिगीषतां **मित्रलाभमनु** लाभसम्पदः ॥ 294 ॥

**मित्रलाभमनु** मित्रलाभाद्धीना निकृष्टा इत्यर्थः ।

## ५५१ । उपोऽधिके च । ( १. ४. ८७ )

**अधिके हीने च द्योत्ये उपेत्यव्ययं प्राक्संज्ञं स्यात् । 'यस्मादधिकं' (सू. 645) इत्यधिके सप्तमी । 'कर्मप्रवचनीययुक्ते द्वितीया' (सू. 548) इति हीने द्वितीया । उप सुरेषु हरिः । सुरेभ्योऽधिक इत्यर्थः । उप हरिं सुराः । हरेर्हीना इत्यर्थः ।**

अस्मिन्नेव ग्रन्थे श्लो० 293. उप शूरेषु शूरेभ्योऽधिक इत्यर्थः ।

भट्टिकाव्ये— VIII. 87.

उप शूरं न ते वृत्तं कथं रात्रिञ्चराधम ।
यत्सम्प्रत्यप लोकेभ्यो लङ्कायां वसतिर्भयात् ॥ 295 ॥

शूरमुप शूरजनाद्धीनम् ।

५५२ । लक्षणेत्थंभूताख्यानभागवीप्सासु प्रतिपर्यनवः । ( १. ४. ९० )

एष्वर्थेषु प्रत्यादय उक्तसंज्ञाः स्युः । लक्षणे, वृक्षं प्रतिपर्यनु वा विद्योतते विद्युत् । इत्थम्भूताख्याने, भक्तो विष्णुं प्रति पर्यनु वा । भागे, लक्ष्मीर्हरिं प्रति पर्यनु वा । हरेर्भाग इत्यर्थः । वीप्सायां, वृक्षं वृक्षं प्रति पर्यनु वा सिञ्चति । अत्रोपसर्गत्वाभावान्न षत्वम् । 'लक्षणेनाभिप्रती' ( सू. 668 ), '' अनुर्यत्समया ' ( सू. 669 ), ' यस्य चायामः' (सू. 670 ) इति वा समासो भवति ।

५५३ । अभिरभागे । ( १. ४. ९१ )

भागवर्जे लक्षणादावभिरुक्तसंज्ञः स्यात् । हरिमभि वर्तते । भक्तो हरिमभि । देवं देवमभिसिञ्चति ।

माघे —XVIII. 4.

क्रोधावेशाद्धावतां प्रत्यमित्रं दूरोत्क्षिप्तस्थूलबाहुध्वजानाम् ।
दीर्घास्तिर्यग्वैजयन्तीसदृक्षः पादातानां भ्रेजिरे खड्गलेखाः ॥ 296 ॥

प्रत्यमित्रं शत्रुं लक्षीकृत्य । लक्षणे प्रतेः कर्मप्रवचनीयत्वम् । तद्योगे अमित्रमिति द्वितीया । अव्ययीभावसमासो वा ।

भट्टिकाव्ये — III. 46.

वैखानसेभ्यः श्रुतरामवार्तास्ततो विसिञ्जानपतत्रिसङ्घम् ।
अभ्रंलिहाग्रं रविमार्गभङ्गमानंहिरेऽद्रिं प्रति चित्रकूटम् ॥ 297 ॥

अद्रिं प्रति लक्षीकृत्य ।

भट्टिकाव्ये—VIII. 88.

आ रामदर्शनात्पाप विद्योतस्व श्रियं प्रति ।
सद्वृत्तानन्तु दुर्वृत्तः परि स्त्रीं जातमन्मथः ॥ 298 ॥

सद्वृत्तानन्तु । अनोरित्थंभूताख्याने कर्मप्रवचनीयत्वम् । परि स्त्रीं, स्त्रीं स्त्रीं प्रति । परेर्वीप्सायां कर्मप्रवचनीयत्वम् । श्रियं प्रति लक्ष्मीं लक्षीकृत्य । प्रतेर्लक्षणार्थे कर्मप्रवचनीयत्वम् ।

भट्टिकाव्ये—VIII. 89.

अभि द्योतिष्यते रामो भवन्तमचिरादिह ।
उद्गूर्णबाणः संग्रामे यो नारायणतः प्रति ॥ 299 ॥

भवन्तमभि । अभेर्लक्षणार्थे कर्मप्रवचनीयत्वम् ।

माघे—VII. 40.

कृतकृतकरुषा सखीमपास्य त्वमकुशलेति कयाचिदात्मनैव ।
अभिमतमभि साभिलाषमाविष्कृतभुजमूलमबन्धि मूर्ध्नि माला ॥ 300 ॥

५५४ । अधिपरी अनर्थकौ । ( १. ४. ९३ )

उक्तसंज्ञौ स्तः । कुतोऽध्यागच्छति । कुतः पर्यागच्छति ।

भट्टिकाव्ये—VIII. 90.

कुतोऽधि यास्यसि क्रूर निहतस्तेन पत्रिभिः ।
न सूक्तं भवतात्युग्रमतिगामं मदोद्धत ॥ 301 ॥

कुतोऽधि यास्यसि । क्व यास्यसि इत्यर्थः । अधेरनर्थकत्वात्कर्मप्रवचनीयत्वम् ।

५५५ । सुः पूजायाम् । ( १. ४. ९४. )

सुसिक्तम्, सुस्तुतम् । अनुपसर्गत्वान्न षः ।
अस्मिन्नेव ग्रन्थे श्लो० 301. न सूक्तं साधु नोक्तम् ।

५५६ । अतिरतिक्रमणे च । ( १. ४. ९५ )

अतिक्रमणे पूजायां चातिः कर्मप्रवचनीयसंज्ञः स्यात् । अति देवान्कृष्णः । अस्मिन्नेव ग्रन्थे श्लो० 301. अति रामं राममतिक्रम्य ।

५५७ । अपिः पदार्थसम्भावनान्ववसर्गगर्हासमुच्चयेषु । (१. ४. ९६)

एषु द्योत्येषु अपिरुक्तसंज्ञः स्यात् । सर्पिषोऽपि स्यात् । सर्पिष इति षष्ठी । अपि स्तुयाद्विष्णुम् । अपि स्तुहि । धिक् देवदत्तमपि स्तुयाद्वृषलम् । अपि सिञ्च । अपि स्तुहि । अनुपसर्गत्वान्न षः ।

भट्टिकाव्ये—VIII. 91.

परिशेषं न नाम्नोऽपि स्थापयिष्यति ते विभुः ।
अपि स्थाणुं जयेद्रामो भवतो ग्रहणं कियत् ॥ 302 ॥

नाम्नोऽपि परिशेषं न स्थापयिष्यति किमु देहम् । पदार्थे कर्मप्रवचनीयसंज्ञा । पदस्य देहस्याप्रयुज्यमानस्यार्थे अपिशब्दो वर्तते । अपि स्थाणुं जयेद्रामः । जेतुं सम्भाव्यते । सम्भावनायां कर्मप्रवचनीयत्वम् ।

भट्टिकाव्ये VIII. 92.

अपि स्तुह्यपि सेधास्मांस्तथ्यमुक्तं नराशन ।
अपि सिञ्चेः कृशानौ त्वं दर्पं मय्यपि योऽसिचः ॥ 303 ॥

अस्मानपि स्तुहि । अपि सेध । अन्ववसर्गे कामचाराभ्यनुज्ञाने कर्मप्रवचनीयसंज्ञा । कृशानौ दर्पमपि सिञ्चेः । गर्हायां कर्मप्रवचनीयत्वम् । उपसर्गसंज्ञाभावात् स्तौतिसेधसिचां षत्वं न भवति ।

५५८ । कालाध्वनोरत्यन्तसंयोगे । ( २. ३. ५ )

द्वितीया स्यात् । मासं कल्याणी । मासमधीते । क्रोशं कुटिला नदी । क्रोशं गिरिः । अत्यन्तसंयोगे किम् । मासस्य द्विरधीते । क्रोशस्यैकदेशे पर्वतः । 'अत्यन्तसंयोगे' ( सू. 691 ) इति समासः स्यात् ।

अस्मिन्नेव ग्रन्थे श्लो० 218. क्षणमूचे । उक्तिक्रियया क्षणस्य कालस्य साकल्येन सम्बन्धात् द्वितीया भवति ।

५५९ । स्वतन्त्रः कर्ता । ( १. ४. ५४ )

क्रियायां स्वातन्त्र्येण विवक्षितोऽर्थः कर्ता स्यात् ।

अस्मिन्नेव ग्रन्थे श्लो० 261. को नेच्छेत् । क इति कर्तृसंज्ञा ।

५६० । साधकतमं करणम् ( १. ४. ४२ )

क्रियासिद्धौ प्रकृष्टोपकारकं कारकं करणसंज्ञं स्यात् ।

भट्टिकाव्ये—VIII. 78.

इच्छ स्नेहेन दीव्यन्ती विषयान्भुवनेश्वरम् ।
सम्भोगाय परिक्रीतः कर्तास्मि तव नाप्रियम् ॥ 304 ॥

स्नेहेनेति करणसंज्ञा ।

५६१ । कर्तृकरणयोस्तृतीया । ( २. ३. १८ )

अनभिहिते कर्तरि करणे च तृतीया स्यात् । रामेण बाणेन हतो वाली ।

भट्टिकाव्ये—VIII. 99.

तृणाय मत्वा ताः सर्वा वदन्तीस्त्रिजटावदत् ।
आत्मानं हत दुर्वृत्ताः स्वमांसैः कुरुताशनम् ॥ 305 ॥

स्वमांसैः इति करणे तृतीया ।

भट्टिकाव्ये—VIII. 100.

अद्य सीता मया दृष्टा सूर्यं चन्द्रमसा सह ।
स्वप्ने स्पृशन्ती मध्येन तन्वी श्यामा सुलोचना ॥ 306 ॥

मयेति कर्तरि तृतीया ।

भट्टिकाव्ये VIII. 102.

* आप्तया तर्जिताः सर्वा मुखैर्भीमा यथायथम् ।
ययुः प्रसुप्सवस्तल्पान् भीमैर्वचनकर्मभिः ॥ 307 ॥

आप्तया । कर्तरि तृतीया ।

---

* अयं श्लोकः मुद्रितपुस्तके नोपलभ्यते ।

सुहितार्थे करणे षष्ठीविधायकं प्रमाणं नास्ति । 'पूरणगुण' (सू. 705) इति सूत्रेण षष्ठीसमासनिषेधात् करणे षष्ठ्यनुमीयते । 'नाग्निस्तृप्यति काष्ठानां नापगानां महोदधिः' इति सुभाषितरत्नभाण्डागारे ।

नैषधे—III. 30.

अलं सजन् धर्मविधौ विधाता
रुणद्धि मौनस्य मिषेण वाणीम् ।
तत्कण्ठमालिङ्ग्य रसस्य तृप्तां
न वेद तां वेदजडः स वक्राम् ॥ 308 ॥

रसस्येति करणे षष्ठी । रसस्य तृप्तां रसतृप्तामिति समासो निषेधान्न स्यात् ।

चम्पूभारते—II. 25.

तत्र कापि तरुणी तटिदाभा
तं ययौ जतुगृहैः सुहितेन ।
चूषणाय तमसां वनमार्गे
चोदिता हुतवहेन शिखेव ॥ 309 ॥

जतुगृहैरिति करणे तृतीया । जतुगृहैः सुहितो जतुगृहसुहित इति समासस्तु स्यादेव ।

नैषधे—III. 93.

शुद्धान्तसम्भोगनितान्ततुष्टे
न नैषधे कार्यमिदं निगाद्यम् ।
अपां हि तृप्ताय न वारिधारा
स्वादुः सुगन्धिः स्वदते तुषारा ॥ 310 ॥

अनर्घराघवे—I. 34.

ग—भगवन् प्रसीद तावदुत्तरोत्तरेषां महोत्सवानां कदाचिदपि न तृप्यन्ति पुंसां हृदयानि ॥ 311 ॥

चम्पूभारते—III. 106.

क्षुत्प्रपीडयति मामयि वीरौ
कुक्षिमेत्य चकितेव युवाभ्याम् ।
याच्यते तदशनं बहु भोक्तुं
यस्य तृप्यति पुरातिथिरेषः ॥ 312 ॥

वा० । प्रकृत्यादिभ्य उपसंख्यानम् । (1466.)

प्रकृत्या चारुः ।

रघुवंशे—V. 11.

तवार्हतो नाभिगमेन तृप्तं
मनो नियोगक्रिययोत्सुकं मे ।
अप्याज्ञया शासितुरात्मना वा
प्राप्तोऽसि सम्भावयितुं वनान्माम् ॥ 313 ॥

आत्मना प्रकृत्यादित्वात्तृतीया ।

५६२ । दिवः कर्म च । (१. ४. ४३)

दिवः साधकतमं कारकं कर्मसंज्ञं स्यात् । चात्करणसंज्ञम् । अक्षैरक्षान्वा दीव्यति ।

भट्टिकाव्ये—IX. 32.

शस्त्रैर्दिदेविषुं संख्ये दुद्यूषुः परिघं कपिः ।
यशांस्यर्दिधिषुः कीर्तिमीर्त्सुं वृक्षैरताडयत् ॥ 314 ॥

शस्त्रैर्दिदेविषुं परिघं दुद्यूषुरिति च करणकर्मसंज्ञे ।

भट्टिकाव्ये—V. 57.

देहं बिभ्रत्क्षुरस्नाम्नौ मृगः प्राणैर्दिदेविषन् ।
ज्याघुष्टकठिनाङ्गुष्ठं राममायान्मुमूर्षया ॥ 315 ॥

प्राणैर्दिदेविषन्निति करणे तृतीया ।

भट्टिकाव्ये—V. 81.

दीव्यमानं शितान् बाणानस्यमानं महागदाः ।
निघ्नानं शात्रवान् रामं कथं त्वं नावगच्छसि ॥ 316 ॥

बाणानिति करणस्य कर्मत्वम् ।

अस्मिन्नेव ग्रन्थे श्लो० 304. विषयान्दीव्यतीति करणे कर्मत्वम् ।

माघे—VIII. 32.

मुग्धत्वादविदितकैतवप्रयोगा
गच्छन्त्यः सपदि पराजयं तरुण्यः ।
ताः कान्तैः सह करपुष्करेरिताम्बु-
व्यात्युक्षीमभिसरणग्लहामदीव्यन् ॥ 317 ॥

व्यात्युक्षीमिति कर्मत्वम् ।

भट्टिकाव्ये—XVII. 102.

अस्तृणादधिकं रामस्ततोऽदेवत सायकैः ।
अक्राम्यद्रावणस्तस्य सूतो रथमनाशयत् ॥ 318 ॥

सायकैरिति करणे तृतीया ।

५६३ । अपवर्गे तृतीया । (२. ३. ६)

अपवर्गः फलप्राप्तिस्तस्यां द्योत्यायां कालाध्वनोरत्यन्तसंयोगे तृतीया स्यात् । अह्ना क्रोशेन वानुवाकोऽधीतः ।

भट्टिकाव्ये—VIII. 95.

* संवत्सरेण यान्त्येव दुःखशीला अपि स्त्रियः ।
मार्दवं प्रार्थिताः पुंसां ग्रहाद्दोग्ध्र्योऽपि सत्स्त्रियः ॥ 319 ॥

संवत्सरेणेति तृतीया ।

---

* मुद्रितपुस्तके श्लोकोऽयं नोपलभ्यते ।

भट्टिकाव्ये—VIII. 95.

चिरेणानुगुणं प्रोक्ता प्रतिपत्तिपराङ्मुखी ।
न मासे प्रतिपन्नासे मां चेन्मर्तासि मैथिलि ॥ 320 ॥

चिरेणेत्यपवर्गे तृतीयार्थेऽव्ययम् ।

५६४ । सहयुक्तेऽप्रधाने ( २. ३. १९ )

सहार्थेन युक्तेऽप्रधाने तृतीया स्यात् । पुत्रेण सहागतः पिता । साकंसार्धंसमं-योगेऽपि । विनापि तद्योगं तृतीया । 'वृद्धो यूना' (सू. 931.) इति निर्देशात् ।

अस्मिन्नेव ग्रन्थे श्लो० 306. चन्द्रमसा सह सूर्यम् ।

अस्मिन्नेव ग्रन्थे श्लो० 290. देव्या सह नृपतिः ।

अस्मिन्नेव ग्रन्थे श्लो० 270. मया साकम् ।

अस्मिन्नेव ग्रन्थे श्लो० 60. सार्धमुद्धवसीरिभ्याम् ।

अस्मिन्नेव ग्रन्थे श्लो० 25. सममन्तकेन ।

माघे—XV. 88.

शठ नाकलोकललनाभिरविरतरतं रिरंससे ।
तेन वहसि मुदमित्यवदद्रणरागिणं रमणमीर्ष्ययापरा ॥ 321 ॥

ललनाभिः सहेत्यर्थः ।

५६५ । येनाङ्गविकारः । ( २. ३. २० )

येनाङ्गेन विकृतेनाङ्गिनो विकारो लक्ष्यते ततस्तृतीया स्यात् । अक्ष्णा काणः ।

अस्मिन्नेव ग्रन्थे श्लो० 306. मध्येन तन्वीं ।

अस्मिन्नेव ग्रन्थे श्लो० 307. मुखैर्भीमाः ।

माघे—I. 70.

स बाल आसीद्वपुषा चतुर्भुजो
मुखेन पूर्णेन्दुनिभस्त्रिलोचनः ।
युवा कराक्रान्तमहीभृदुच्चकै-
रसंशयं सम्प्रति तेजसा रविः ॥ 322 ॥

वपुषा मुखेनेति च तृतीया। हैन्यवदाभिकव्यमप्यङ्गानां विकारः। तेजसेति तु प्रकृत्यादित्वात्तृतीया।

नैषधे—V. 136.

> यं प्रासूत सहस्रपादुदभवत्पादेन खञ्जः कथं
> स च्छायातनयः सुतः किल पितुः सादृश्यमन्विच्छति।
> एतस्योत्तरमद्य नः समजनि त्वत्तेजसां लङ्घने
> साहस्रैरपि पङ्गुरङ्घ्रिभिरभिव्यक्तीभवन्भानुमान् ॥ 323 ॥

पादेन खञ्जः पङ्गुरङ्घ्रिभिरिति तृतीया।

अनर्घराघवे—III. 54.

> रुन्धन्नष्ट विधेः श्रुतीर्मुखरयन्नष्टौ दिशः क्रोडय-
> न्मूर्तीरष्ट महेश्वरस्य दलयन्नष्टौ कुलक्ष्माभृतः।
> तान्यक्ष्णा बधिराणि पन्नगकुलान्यष्टौ च संपादय-
> न्नुन्मीलत्ययमार्यदोर्बलदलत्कोदण्डकोलाहलः ॥ 324 ॥

पन्नगानां चक्षुःश्रवस्त्वात् अक्ष्णा बधिराणीति।

अनर्घराघवे—V. 3.

> रक्षोऽभिचारचरुभाण्डमिव स्तनं यो
> देव्या विदेहदुहितुर्विददार काकः।
> ऐषीकमस्त्रमधिकृत्य तदा तमक्ष्णा
> काणीचकार चरमो रघुराजपुत्रः ॥ 325 ॥

अक्ष्णेति तृतीया।

चम्पूभारते—III. 45.

> अन्धौ वानरपातिताचलशिलाभङ्गाभिघातैश्चिरा-
> दक्ष्णान्धैः कुणिभिः करेण च पदा खञ्जैः पयोमानुषैः।
> वीचीवीथिषु कीर्त्यमानमनघं वृत्तं रघूणां प्रभोः
> श्लाघंश्लाघमसौ तटेन हरितं प्राचेतसीमभ्यगात् ॥ 326 ॥

### ५६६। इत्थम्भूतलक्षणे। (२. ३. २१)

तृतीया स्यात् । जटाभिस्तापसः ।

अस्मिन्नेव ग्रन्थे श्लो० 307. **भीमैर्वचनकर्मभिरुपलक्षिताः** ।

भट्टिकाव्ये—IV. 16.

दधाना वलिभं मध्यं कर्णजाहविलोचना ।
**वाक्त्वचेना**तिसर्वेण चन्द्रलेखेव पक्षतौ ॥ 327 ॥

**वाक्त्वचेनो**पलक्षिता ।

भट्टिकाव्ये—V. 105.

असीतो रावणः कासांचक्रे **शस्त्रैर्निराकुलः** ।
भूयस्तं बेभिदांचक्रे नखतुण्डायुधः खगः ॥ 328 ॥

**शस्त्रै**रुपलक्षितः ।

अस्मिन्नेव ग्रन्थे श्लो० 233. **केशै**रुपलक्षितः ।

**५६७ । संज्ञोऽन्यतरस्यां कर्मणि । ( २. ३. २२ )**

संपूर्वस्य जानातेः कर्मणि तृतीया वा स्यात् । पित्रा पितरं वा **संजानीते** । 'सम्प्रतिभ्यामनाध्याने' ( सू.2719 ) इति आत्मनेपदम् ।

भट्टिकाव्ये—VIII. 10.

गतासु तासु **मैथिल्या संजानानो**ऽनिलात्मजः ।
आयातेन दशास्यस्य संस्थितोऽन्तर्हितश्चिरम् ॥ 329 ॥

**मैथिल्या संजानानः** । इयं सेत्यवगच्छन् । कर्मणि तृतीया ।

भट्टिकाव्ये—VIII. 118.

* रक्षोविद्वत्सु घोरेषु साधून्मायाप्रियानहम् ।
**निपुणा**न्मारयितृषु **संजानानो**ऽवसं शुभे ॥ 330 ॥

**निपुणान्संजानान** इति कर्मणि द्वितीया ।

**५६८ । हेतौ । ( २. ३. २३ )**

---

* श्लोकोऽयं मुद्रितपुस्तके न दृश्यते ।

हेत्वर्थे तृतीया स्यात् ।

अस्मिन्नेव ग्रन्थे श्लो० 329. आयातेन हेतुना । गम्यमानापि क्रिया कारकविभक्तौ प्रयोजिका । अलं श्रमेण । श्रमेण साध्यं नास्तीत्यर्थः ।

रघुवंशे—II. 34.

अलं महीपाल तव श्रमेण प्रयुक्तमप्यस्त्रमितो वृथा स्यात् ।
न पादपोन्मूलनशक्ति रंहः शिलोच्चये मूर्च्छति मारुतस्य ॥ 331 ॥

चम्पूभारते—VII. 23.

किं वा चिकीर्षुरसि हन्त बृहन्नले त्व-
मक्ष्णोर्न मान्ति कुरुराजबलान्यमूनि ।
सद्यो निवर्तय रथं समरेच्छयालं
नेष्याम्यहं निजगृहेष्ववशेषमायुः ॥ 332 ॥

वा० । अशिष्टव्यवहारे दाणः प्रयोगे चतुर्थ्यर्थे तृतीया । (5040.)

दास्या संयच्छते कामुकः । धर्मे तु भार्यायै संयच्छति । 'दाणश्च सा' (सू. 2728) इति तङ् ।

भट्टिकाव्ये—VIII. 32.

यानैः समचरन्तान्ये कुञ्जराश्वरथादिभिः ।
संप्रायच्छन्त बन्दीभिरन्ये पुष्पफलं शुभम् ॥ 333 ॥

बन्दीभिः संप्रायच्छन्त । बन्दीकृताभ्यः स्त्रीभ्यो ददुरित्यर्थः ।

५६९ । कर्मणा यमभिप्रैति स सम्प्रदानम् (१. ४. ३२.)

दानस्य कर्मणा यमभिप्रैति स सम्प्रदानसंज्ञः स्यात् ।

५७० । चतुर्थी सम्प्रदाने । (२. ३. १३)

विप्राय गां ददाति ।

भट्टिकाव्ये—VIII. 73.

रोचमानः कुदृष्टिभ्यो रक्षोभ्यः प्रत्तवान् श्रियम् ।
श्लाघमानः परस्त्रीभ्यस्तत्रागाद्राक्षसाधिपः ॥ 334 ॥

ददातिक्रियया राक्षसानामपि प्रीयमाणत्वात् ।

भट्टिकाव्ये—VIII. 96.

प्रायुङ्क्त राक्षसीर्भीमा मन्दिराय प्रतिव्रजन् ।
भयानि दत्त सीतायै सर्वा यूयं कृते मम ॥ ३३५ ॥

चम्पूरामायणे—V. 29.

ग—एवमभिहितया तया संभूतविस्रंभतया भयादपेतया तावदनुयुक्तः पवनतनयो वालिमरणकारणं सुग्रीवस्य सख्यमाख्याय प्राचेतसचेत इव सन्ततसन्निहितरामनाममङ्गलमङ्गुलीयकमस्यै प्रायच्छत् ॥ 336 ॥

माघे—XV. 15.

यदराज्ञि राजवदिहार्घ्यमुपहितमिदं मुरद्विषि ।
ग्राम्यमृग इव हविस्तदयं भजते ज्वलत्सु न महीशवह्निषु ॥ 337 ॥

मुरद्विषीति अपात्रताद्योतनार्थमसम्प्रदानविभक्तिनिर्देशः ।

वा० । क्रियया यमभिप्रैति सोऽपि संप्रदानम् । (1085.)

पत्ये शेते ।

कुमारसम्भवे—II. 18.

स्वागतं स्वानधीकारान्प्रभावैरवलंब्य वः ।
युगपद्युगबाहुभ्यः प्राप्तेभ्यः प्राज्यविक्रमाः ॥ 338 ॥

क्रियाग्रहणाच्चतुर्थी ।

भट्टिकाव्ये—III. 29.

दिदृक्षमाणः परितः ससीतं रामं यदा नैक्षत लक्ष्मणं च ।
रोरुद्यमानः स तदाभ्यपृच्छद्यथावदाख्यन्नथ वृत्तमस्मै ॥ 339 ॥

भट्टिकाव्ये—VI. 27.

गिरिमन्वसृपद्रामो लिप्सुर्जनकसम्भवाम् ।
तस्मिन्नायोधनं वृत्तं लक्ष्मणायाशिषन्महत् ॥ 340 ॥

लक्ष्मणायाशिषत् । क्रियाग्रहणाच्चतुर्थी । शासु अनुशिष्टौ लुङ् ।

माघे—IX. 60.

तदुपेत्य मा स्म तमुपालभथाः
किल दोषमस्य न हि विद्म वयम् ।
इति सम्प्रधार्य रमणाय वधू-
र्विहितागसेऽपि विससर्ज सखीम् ॥ 341 ॥

वा० । कर्मणः करणसंज्ञा सम्प्रदानस्य च कर्मसंज्ञा । (1086.)

पशुना रुद्रं यजते । पशुं रुद्राय ददातीत्यर्थः ।

५७१ । रुच्यर्थानां प्रीयमाणः । (१. ४. ३३)

रुच्यर्थानां धातूनां प्रीयमाणोऽर्थः सम्प्रदानं स्यात् । हरये रोचते भक्तिः ।

अस्मिन्नेव ग्रन्थे श्लो० 334. कुदृष्टिभ्यो रोचमानः रुचिकरः ।

अस्मिन्नेव ग्रन्थे श्लो० 310. अपां हि तृप्ताय न वारिधारा स्वदते रोचते ।

चम्पूरामायणे—II. 46.

ग—ततः परिजनकृताश्वासाल्लब्धसंज्ञाय राज्ञे कौसल्यासदनमरोचत ॥ 342 ॥

अनर्घराघवे—III. 57.

ग—सखे सीरध्वज यदभिरुचितं भवते ॥ 343 ॥

अनर्घराघवे—VII. 132.

वृन्तैरिव क्रतुसहस्रभुवां फलाना-
मालोक्य यूपनिकरैर्मधुरामयोध्याम् ।
राज्ञामिह प्रवसतां च विचिन्त्य सिद्धिं
देवः शचीसहचरोऽपि न रोचते नः ॥ 344 ॥

नोऽस्मभ्यम् ।

५७२ । श्लाघह्नुङ्स्थाशपां ज्ञीप्स्यमानः । (१. ४. ३४)

एषां प्रयोगे बोधयितुमिष्टः सम्प्रदानं स्यात् ।

अस्मिन्नेव ग्रन्थे श्लो० 334. परस्त्रीभ्यः श्लाघमानः ।

भट्टिकाव्ये—VIII. 74.

**अशप्यन्निह्नुवानोऽसौ सीतायै** स्मरमोहितः ।
धारयन्निव चैतस्यै वसूनि प्रत्यपद्यत ॥ 345 ॥

**सीतायै निह्नुवानः** स्वदौर्जन्यमपह्नुवानोऽशप्यच्छपथमकार्षीत् ।

भट्टिकाव्ये—XVII. 48.

अरोदीद्राक्षसानीकमरोदन्नृभुजां पतिः ।
**मैथिल्यै चाशपद्धन्तुं** तां प्राक्रमत चातुरः ॥ 346 ॥

**मैथिल्यै चाशपदाक्रुष्टवान् ।**

भट्टिकाव्ये—XVII. 4.

न्यस्यन् शस्त्राण्यभीष्टानि समनह्यंश्च वर्मभिः ।
अध्यासत सुयानानि **द्विषद्भ्यश्चाशपंस्तथा** ॥ 347 ॥

**द्विषद्भ्योऽशपन्ना**क्रुष्टवन्तः ।

भट्टिकाव्ये—VIII. 83.

कोपात्काश्चित्प्रियैः प्रत्तमुपायंसत नासवम् ।
प्रेम जिज्ञासमानाभ्य**स्ताभ्योऽशप्यन्त** कामिनः ॥ 348 ॥

**ताभ्यः** कामिनो**ऽशप्यन्त** । न मे त्वदन्या प्रियास्तीति तदीयशरीरस्पर्शनेन शपथं चक्रुः । 'शप उपालम्भने' (वा. 911. सू. 2688) इत्यात्मनेपदम् ।

भट्टिकाव्ये—IV. 15.

ददृशे पर्णशालायां राक्षस्याभीकयाथ सः ।
भार्योढं तमवज्ञाय **तस्थे सौमित्रयेऽसकौ** ॥ 349 ॥

**सौमित्रये तस्थे** । स्वाभिप्रायं प्रकाशयन्ती स्थिता । 'प्रकाशनस्थेयाख्ययोश्च' (सू. 2690) इति तङ् ।

भट्टिकाव्ये—VIII. 12.

त्वयि नस्तिष्ठते प्रीतिस्**तुभ्यं तिष्ठामहे** वयम् ।
उत्तिष्ठमानं मित्रार्थे कस्त्वां न बहु मन्यते ॥ 350 ॥

**वयं तुभ्यं तिष्ठामहे** स्वाभिप्रायं प्रकाशयामः ।

५७३ । धारेरुत्तमर्णः । ( १. ४. ३५ )

धारयतेः प्रयोगे उत्तमर्ण उक्तसंज्ञः स्यात् । भक्ताय धारयति मोक्षं हरिः ।

अस्मिन्नेव ग्रन्थे श्लो० 345. एतस्यै धारयन्निवाधमर्ण्ये तिष्ठन्निव ।

५७४ । स्पृहेरीप्सितः । ( १. ४. ३६ )

स्पृहयतेः प्रयोगे इष्टः सम्प्रदानं स्यात् । पुष्पेभ्यः स्पृहयति ।

भट्टिकाव्ये—VIII. 75.

तस्यै स्पृहयमाणोऽसौ बहु प्रियमभाषत ।
सानुनीतिश्च सीतायै नाकुप्यन्नाभ्यसूयत ॥ 351 ॥

तस्यै स्पृहयमाणः । तामीप्सन् ।

भट्टिकाव्ये—VII. 21.

स्पृहयालुं कपिं स्त्रीभ्यो निद्रालुमदयालुवत् ।
श्रद्धालुं भ्रामरं धारुं सद्गुमद्रौ वद द्रुतम् ॥ 352 ॥

स्त्रीभ्यः स्पृहयालुं स्त्रीकामुकं कपिं सुग्रीवम् ।

रघुवंशे—XVI. 42.

वसन् स तस्यां वसतौ रघूणां
पुराणशोभामधिरोपितायाम् ।
न मैथिलेयः स्पृहयाम्बभूव
भर्त्रे दिवो नाप्यलकेश्वराय ॥ 353 ॥

मैथिलेयः कुशो दिवो भर्त्रे अलकेश्वरायापि न स्पृहयाम्बभूव । न गणयामासेत्यर्थः ।

चम्पूभारते—VI. 33.

अन्तःपुरेषु विहरन्नयि कीचक त्वं
सैरन्ध्रये स्पृहयसीति विगर्ह्यमेतत् ।

रम्येषु कल्पकुसुमेषु चरन् द्विरेफो
रज्येत किं पितृवनद्रुमगुच्छिकायाम् ॥ 354 ॥

चम्पूभारते—III. 12.

एकस्मै स्पृहयालूनामिष्टाय सुधियामपि ।
करस्थमेव ब्रुवते कलहं निधनावधिम् ॥ 355 ॥

चम्पूरामायणे—V. 25.

ग—तदनन्तरमात्मत्यागाय स्पृहयन्त्यां मैथिल्यां मारुतिरियमनुपेक्षणीया तपस्विनीति नीतिमुञ्चन्तीं चिन्तां परिगृह्य नेदीयानस्या बभूव ॥ 356 ॥

अनर्घराघवे—V. 27.

ग—वत्स गुह स्पृहयामि सुग्रीवहनुमतोर्दर्शनाय । तदृश्यमूकगामिनं मार्गमावेदय ॥ 357 ॥

५७५ । क्रुधद्रुहेर्ष्यासूयार्थानां यं प्रति कोपः । (१. ४. ३७)

क्रुधाद्यर्थानां प्रयोगे यं प्रति कोपः स उक्तसंज्ञः स्यात् । हरये क्रुध्यति द्रुह्यति ईर्ष्यति असूयति । क्रोधोऽमर्षः । द्रोहोऽपकारः । ईर्ष्या अक्षमा । असूया गुणेषु दोषाविष्करणम् ।

अस्मिन्नेव ग्रन्थे श्लो० 351. सीतायै नाक्रुध्यत्, नाभ्यसूयत । सीतायाः संप्रदानत्वम् ।

किरातार्जुनीये—VII. 24.

आसन्नद्विपपदवीमदानिलाय
क्रुध्यन्तो धियमवमत्य धूर्गतानाम् ।
सव्याजं निजकरिणीभिरात्तचित्ताः
प्रस्थानं सुरकरिणः कथंचिदीषुः ॥ 358 ॥

मदानिलाय क्रुध्यन्तः । तं प्रति कुप्यन्तः ।

भट्टिकाव्ये—VI. 67.

न प्रणाय्यो जनः कश्चिन्निकाय्यं तेऽधितिष्ठति ।
देवकार्यविघाताय धर्मद्रोही महोदये ॥ 359 ॥

धर्माय द्रुह्यतीति धर्मद्रोही ।

चम्पूभारते—II. 9.

ग—ततस्ते सर्वोत्तरा अपि शासनेषु दक्षिणा गुरुदक्षिणां कुरुत मह्यं द्रुह्यतो द्रुपदस्य युधि बलाद् गृहीतस्य समर्पणमिति गुरुणा चोदिताः सर्वेऽप्यहम्पूर्विकया कयापि विमतेषु कृतावज्ञसेनं याज्ञसेनं पुरं निरुध्य चिरमयुध्यन्त ॥ 360 ॥

माघे—XV. 68.

गृहमागताय कृपया च कथमपि निसर्गदक्षिणाः ।
क्षान्तिमहितमनसो जननीस्वसुरात्मजाय चुकुपुर्न पाण्डवाः ॥ 361 ॥

पाण्डवाः आत्मजाय शिशुपालाय न चुकुपुः न चुक्रुधुः ।

रघुवंशे—III. 56.

जहार चान्येन मयूरपत्रिणा शरेण शक्रस्य महाशनिध्वजम् ।
चुकोप तस्मै स भृशं सुरश्रियः प्रसह्य केशव्यपरोपणादिव ॥ 362 ॥

अस्मिन्नेव ग्रन्थे श्लो० 65. मह्यमपराध्यति क्रुध्यति ।

भट्टिकाव्ये—VIII. 45.

गूहमानः स्वमाहात्म्यमटित्वा मन्त्रिसंसदः ।
नृभ्योऽपवदमानस्य रावणस्य गृहं ययौ ॥ 363 ॥

नृभ्योऽपवदमानस्य कुप्यतोऽसूयतो द्रुह्यतो वा ।

माघे—XVI. 20.

हरिमर्चितवान्स भूपति-
र्यदि राज्ञस्तव कोऽत्र मत्सरः ।
न्यसनाय ससौरभस्य क-
स्तरुसूनस्य शिरस्यसूयति ॥ 364 ॥

भट्टिकाव्ये—XVII. 61.

ततोऽद्विषुर्निरालोके स्वेभ्योऽन्येभ्यश्च राक्षसाः ।
अद्विषन् वानराश्चैव वानरेभ्योऽपि निर्दयाः ॥ 365 ॥

भट्टिकाव्ये—XVIII. 9.

द्वेष्टि प्रायो गुणेभ्यो यत्र च खिद्यति कस्यचित् ।
वैरायते महद्भिश्च शीयते वृद्धिमानपि ॥ 366 ॥

किरातार्जुनीये—IX. 53.

कुप्यताशु भवतानतचित्ताः
कोपितांश्च वरिवस्यत यूनः ।
इत्यनेक उपदेश इव स्म
स्वाद्यते युवतिभिर्मधुवारः ॥ 367 ॥

यूनः प्रियान् कुप्यत । नात्र यूनां सम्प्रदानत्वम् । अत्र कोपस्तावत्कृत्रिमः ।

५७६ । क्रुधद्रुहोरुपसृष्टयोः कर्म । ( १. ४. ३८ )

सोपसर्गयोरनयोरेव योगे यं प्रति कोपस्तत्कारकं कर्मसंज्ञं स्यात् । क्रूरमभिक्रुध्यति अभिद्रुह्यति ।

भट्टिकाव्ये—VIII. 76.

संक्रुध्यसि मृषा किं त्वं दिदृक्षुं मां मृगेक्षणे ।
ईक्षितव्यं परस्त्रीभ्यः स्वधर्मो रक्षसामयम् ॥ 368 ॥

मां संक्रुध्यसि ।

भट्टिकाव्ये— XX. 27.

दैवाद्बिभीहि काकुत्स्थ जिहीहि त्वं तथा जनात् ।
मिथ्या मामभिसंक्रुध्यन्नवशां शत्रुणा हृताम् ॥ 369 ॥

माघे—XV. 41.

न च तं तदेति शपमानमपि यदुनृपाः प्रचुक्रुधुः ।
शौरिसमयनिगृहीतधियः प्रभुचित्तमेव हि जनोऽनुवर्तते ॥ 370 ॥

यदुनृपास्तं चैवं न प्रचुक्रुधुः ।

किरातार्जुनीये—XI. 16.

प्रपित्सोः किं च ते मुक्तिं निःस्पृहस्य कलेबरे ।
महेषुधी धनुर्भीमं भूतानामनभिद्रुहः ॥ 371 ॥

भूतानामिति कर्मणि षष्ठी । अनभिद्रुहोऽहिंसकस्य । 'सत्सूद्विष' (सू. 2975) इति क्विप् । अन्येषां योगे सम्प्रदानं स्यात् ।

अस्मिन्नेव ग्रन्थे श्लो० 351. सीतायै नाभ्यसूयत ।

५७७ । राधीक्ष्योर्यस्य विप्रश्नः । ( १. ४. ३९ )

एतयोः कारकं सम्प्रदानं स्यात् । यदीयो विविधः प्रश्नः क्रियते । कृष्णाय राध्यति ईक्षते वा । पृष्टो गर्गः शुभाशुभं पर्यालोचयतीत्यर्थः ।

अस्मिन्नेव ग्रन्थे श्लो० 368. ईक्षितव्यं परस्त्रीभ्यः । का शुभा न शुभेति यदीक्षितव्यमीक्षणीयम् ।

५७८ । प्रत्याङ्भ्यां श्रुवः पूर्वस्य कर्ता । ( १. ४. ४० )

आभ्यां परस्य शृणोतेर्योगे पूर्वस्य प्रवर्तनारूप्यव्यापारस्य कर्ता संप्रदानं स्यात् । विप्राय गां प्रतिशृणोति । आशृणोति वा ।

भट्टिकाव्ये—VIII. 77.

शृण्वद्भ्यः प्रतिशृण्वन्ति मध्यमा भीरु नोत्तमाः ।
गृणद्भ्योऽनुगृणन्त्यन्ये कृतार्था नैव मद्विधाः ॥ 372 ॥

शृण्वद्भ्यः श्रुतिशालिभ्यः प्रतिशृण्वन्ति तथैव कुर्म इति प्रतिजानत इत्यर्थः ।

रघुवंशे—XII. 69.

तस्मै निशाचरैश्वर्यं प्रतिशुश्राव राघवः ।
काले खलु समारब्धाः फलं बध्नन्ति नीतयः ॥ 373 ॥

राघवस्तस्मै विभीषणाय निशाचरैश्वर्यं प्रतिशुश्राव प्रतिज्ञातवान् ।

रघुवंशे—XV. 4.

प्रतिशुश्राव काकुत्स्थस्तेभ्यो विघ्नप्रतिक्रियाम् ।
धर्मसंरक्षणार्थैव प्रवृत्तिर्भुवि शार्ङ्गिणः ॥ 374 ॥

काकुत्स्थस्तेभ्यो मुनिभ्यो विघ्नप्रतिक्रियां प्रतिशुश्राव प्रतिजज्ञे ।

कुमारसम्भवे—II. 56.

वृतं तेनेदमेव प्राङ् मया चास्मै प्रतिश्रुतम् ।
वरेण शमितं लोकानलं दग्धुं हि तत्तपः ॥ 375 ॥

प्राक् पूर्वं तेनेदमेव वृतं प्रार्थितं मया चास्मै तारकाय प्रतिश्रुतम् प्रतिज्ञातम् ।

५७९ । अनुप्रतिगृणश्च । (१. ४. ४१)

आभ्यां गृणातेः कारकं पूर्वव्यापारस्य कर्तृभूतमुक्तसंज्ञं स्यात् । होत्रेऽनुगृणाति प्रतिगृणाति । होता प्रथमं शंसति तमध्वर्युः प्रोत्साहयतीत्यर्थः ।

अस्मिन्नेव ग्रन्थे श्लो० 372. गृणद्भ्योऽनुगृणन्त्यन्ये । मध्यमा गृणद्भ्यः शंसद्भ्यः स्तावकेभ्योऽनुगृणन्ति दित्सासूचकालापैः प्रोत्साहयन्तीत्यर्थः ।

५८० । परिक्रयणे सम्प्रदानमन्यतरस्याम् । (१. ४. ४४)

सम्प्रदानं वा स्यात् । शतेन शताय वा परिक्रीतः ।

अस्मिन्नेव ग्रन्थे श्लो० 304. सम्भोगाय परिक्रीतः सम्भोगेन दासीकृतः ।

वा० । तादर्थ्ये चतुर्थी वाच्या । (1458.)

मुक्तये हरिं भजति ।

वा० । क्लृपि सम्पद्यमाने च । (1459.)

भक्तिर्ज्ञानाय कल्पते । सम्पद्यते जायत इत्यादि ।

अनर्घराघवे—III. 45.

> शाम्भवं चापमारोप्य योऽस्मानानन्दयिष्यति ।
> पूर्णपात्रमियं तस्मै मैथिली कल्पयिष्यते ॥ 376 ॥

चम्पूभारते—III. 62.

> कथं सुभद्राकमनीयतायाः
> 　कल्पेत नुत्यै कविरुन्नतोऽपि ।
> चतुर्थमप्याश्रममस्य येन
> 　तां साधनीभूय दिदृक्षते स्म ॥ 377 ॥

कविः नुत्यै कथं कल्पेत पर्याप्तो भवेत् । अलमर्थयोगात् 'नमःस्वस्ति' (सू. 583) इति चतुर्थी ।

विश्वगुणादर्शे—283.

> कल्पन्ते कामरामास्फुरदधरसुधागर्वसर्वस्वमोषो-
> 　द्युक्तान्युक्तान्यमीषां रसिकजनमुदे धातृयोषा हि येषाम् ।
> श्लाघावेलासु डोलायितनिजमुकुटाकल्पकल्पद्रुसूनो-
> 　द्गीर्णानि ध्वानतानाकलनपरिमिलच्चारुवीणाप्रगाना ॥ 378 ॥

उक्तानि रसिकजनमुदे कल्पन्ते ।

रघुवंशे—VIII. 40.

> नृपतेर्व्यजनादिभिस्तमो
> 　नुनुदे सा तु तथैव संस्थिता ।
> प्रतिकारविधानमायुषः
> 　सति शेषे हि फलाय कल्पते ॥ 379 ॥

आरोग्याय भवति ।

वा० । हितयोगे च । (1461.)

'तस्मै हितम्' (सू. 1665.) इति निर्देशात् सिद्धमिदम् ।

नैषधे—IV. 93.

यदतनुस्त्वमिदं जगते हितं
क स मुनिस्तव यः सहते हतीः ।
विशिखमाश्रवणं परिपूर्य चे-
दविचलद्भुजमुज्झितुमीशिषे ॥ 380 ॥

भट्टिकाव्ये—VII. 102.

बुभुत्सवो भुवं सीतां भुत्सीध्वं प्रब्रवीमि वः ।
मा स्म बुध्वं मृषोक्तं नः कृषीढ्वं स्वामिने हितम् ॥ 381 ॥

कृषीढ्वं स्वामिने हितम् ।

## ८१ । क्रियार्थोपपदस्य कर्मणि स्थानिनः ( २. ३. १४ )

क्रियार्था क्रिया उपपदं यस्य तस्य स्थानिनोऽप्रयुज्यमानस्य तुमुनः कर्मणि चतुर्थी स्यात् । फलेभ्यो याति । फलान्याहर्तुं यातीत्यर्थः । नमस्कुर्मो नृसिंहाय । नृसिंहमनुकूलयितुमित्यर्थः । एवं स्वयंभुवे नमस्कृत्येत्यादावपि ।

भट्टिकाव्ये—VIII. 97.

गते तस्मिन्समाजग्मुर्भयाय प्रति मैथिलीम् ।
राक्षस्यो रावणप्रीत्यै क्रूरं चोचुर्मुहुर्मुहुः ॥ 382 ॥

भयाय भयमुत्पादयितुम् ।

रघुवंशे—II. 1.

अथ प्रजानामधिपः प्रभाते जायाप्रतिग्राहितगन्धमाल्याम् ।
वनाय पीतप्रतिबद्धवत्सां यशोधनो धेनुमृषेर्मुमोच ॥ 383 ॥

वनाय वनं गन्तुम् ।

## ५८२ । तुमर्थाच्च भाववचनात् । ( २. ३. १५ )

'भाववचनाश्च' ( सू. 3180 ) इति सूत्रेण यो विहितस्तदन्ताच्चतुर्थी स्यात् । यागाय याति यष्टुं यातीत्यर्थः ।

अस्मिन्नेव ग्रन्थे श्लो० 382. **रावणप्रीत्यै** रावणं प्रीणयितुम् ।

भट्टिकाव्ये—VII. 29.

वयमद्यैव गच्छामो रामं द्रष्टुं त्वरान्विताः ।
कारका मित्रकार्याणि **सीतालाभाय** सोऽब्रवीत् ॥ 384 ॥

**सीतालाभाय** सीतां लब्धुम् ।

चम्पूभारते—II. 108.

अनयोर्बलयोर्महारथाना-
**मवलोकाय** नभोजुषां सुरीणाम् ।
सुदृशां च पुरस्य सौधभाजां
वरणस्त्रिधृतेव मेदिकाभूत् ॥ 385 ॥

**महारथानामवलोकाय** महारथानवलोकयितुम् ।

**५८३ । नमःस्वस्तिस्वाहास्वधालंवषड्योगाच्च । ( २. ३. १६ )**

एभिर्योगे चतुर्थी स्यात् । हरये नमः । उपपदविभक्तेः कारकविभक्तिर्बलीयसी । नमस्करोति देवान् । प्रजाभ्यः स्वस्ति । अग्नये स्वाहा । पितृभ्यः स्वधा । अलमिति पर्याप्त्यर्थग्रहणम् । तेन दैत्येभ्यो हरिरलं प्रभुः समर्थः शक्त इत्यादि । प्रभ्वादियोगे षष्ठ्यपि साधुः । तस्मै प्रभवति, स एषां ग्रामणीरिति निर्देशात् । तेन 'प्रभुर्बुभूपुर्भुवन-त्रयस्ये' ति सिद्धम् । वषडिन्द्राय ।

भट्टिकाव्ये—VIII. 98.

**रावणाय नमस्कुर्याः** स्यात्सीते **स्वस्ति ते** ध्रुवम् ।
अन्यथा **प्रातराशाय** कुर्याम त्वा**मलं** वयम् ॥ 386 ॥

**रावणाय नमस्कुर्यास्ते स्वस्ति** स्यात् । **प्रातराशायालं** पर्याप्तम् । सर्वत्र चतुर्थी ।

भट्टिकाव्ये—XIV. 84.

खमूयुर्वसुधामूवुः सायका रज्जुवत्तताः ।
तस्माद्बलैरपत्रेपे **पुप्रोथास्मै** न कश्चन ॥ 387 ॥

**अस्मै** अकम्पनाय न कश्चित्**पुप्रोथ** । न प्रभवति स्म । प्रोथ पर्याप्ताविति धातोर्लिट् ।

चम्पूभारते — V. 23.

भद्र स्वस्त्यस्तु तुभ्यं चिरमिह जरया निद्रयाप्यातुरोऽहं
प्रत्युत्थानादिकर्मण्यपटुरवयवैरस्मि तस्मात्त्वमेव ।
जात्यावस्थानरीत्यापि च विपिनपथे प्राप्ततिर्यक्त्वमेनं
वालाग्रे मां विकृष्य द्रुतमभिलषितप्राप्तये साधयेति ॥ 388 ॥

तुभ्यं स्वस्त्यस्तु ।

कुमारसम्भवे — V. 79.

तदङ्गसंसर्गमवाप्य कल्पते
ध्रुवं चिताभस्मरजो विशुद्धये ।
तथा हि नृत्याभिनयक्रियाच्युतं
विलिप्यते मौलिभिरम्बरौकसाम् ॥ 389 ॥

चिताभस्मरजः विशुद्धये कल्पते । अलं पर्याप्तं भवतीत्यर्थः ।

माघे — I. 49.

प्रभुर्बुभूषुर्भुवनत्रयस्य यः
शिरोऽतिरागाद्दशमं चिकर्तिषुः ।
अतर्कयद्विघ्नमिवेष्टसाहसः
प्रसादमिच्छासदृशं पिनाकिनः ॥ 390 ॥

भुवनत्रयस्य प्रभुरिति षष्ठी ।

मेघसंदेशे — I. 55.

तत्र व्यक्तं दृषदि चरणन्यासमर्धेन्दुमौलेः
शश्वत्सिद्धैरुपचितबलिं भक्तिनम्रः परीयाः ।
यस्मिन्दृष्टे करणविगमादूर्ध्वमुद्धूतपापाः
संकल्पन्ते स्थिरगणपदप्राप्तये श्रद्दधानाः ॥ 391 ॥

प्राप्तये संकल्पन्ते ।

**५८४ । मन्यकर्मण्यनादरे विभाषाप्राणिषु । ( २. ३. १७ )**

प्राणिवर्जे मन्यतेः कर्मणि चतुर्थी वा स्यात्तिरस्कारे । न त्वां तृणं मन्ये तृणाय वा । श्यना निर्देशात्तानादिकयोगे न ।

अस्मिन्नेव ग्रन्थे श्लो० 305. त्रिजटा राक्षसीस्तृणाय मत्वा तृणं मत्वा ।

चम्पूभारते—III. 41.

एलालवङ्गतरुपिप्पलिकापटीर-
ताम्बूलिकाक्रमुकदम्भ्रतिभावरम्याम् ।
उद्यानभूमिमुपगम्य तया स पार्थः
मुख्यन् पितुः पदमसमन्यत बल्बजेभ्यः ॥ 392 ॥

स पार्थ इन्द्रपदं बल्बजेभ्योऽमन्यत । जानिवानाहतवान् ।

चम्पूभारते—VI. 66.

गन्धर्वानपि दयितांस्तृणाय मत्वा
मामेवं रतिविषये प्रतीक्षसे यत् ।
देवत्वादपि सुतनु त्वयाधुना मे
मर्त्यत्वं जगति महत्तरं हि कृतम् ॥ 393 ॥

नैषधे—VI. 32.

तस्मादहश्यादपि नातिबिभ्यु-
स्तच्छायरूपाहितमोहलोलाः ।
मन्यन्त एवाहतमन्मथाज्ञाः
प्राणानपि स्वान्सुदृशस्तृणानि ॥ 394 ॥

सुदृशः स्वान्प्राणान् तृणानि मन्यन्त एव । मन्यतेः कर्मणि चतुर्थ्या वैभाषिकत्वाद् द्वितीया ।

**५८५ । गत्यर्थकर्मणि द्वितीयाचतुर्थ्यौ चेष्टायामनध्वनि । ( २. ३. १२ )**

अध्वभिन्ने गत्यर्थानां कर्मण्येते स्तश्चेष्टायाम् । ग्रामं ग्रामाय वा गच्छति ।

नैषधे— V. 42.

वीक्षितस्त्वमसि मामथ गन्तुं
तन्मनुष्यजगतेऽनुमनुष्व ।

किं भुवः परिवृढा न विवोढुं
तत्र तामुपगता विवदन्ते ॥ 395 ॥

**मनुष्यजगते गन्तुं** मर्त्यलोकं गन्तुमित्यर्थः ।

अस्मिन्नेव ग्रन्थे श्लो० 335. स रावणो **मन्दिराय प्रतिव्रजन्** मन्दिरं गच्छन् ।

भट्टिकाव्ये—III. 9.

ततः प्रविव्राजयिषुः कुमार-
मादिक्षद**स्याभिगमं वनाय** ।
सौमित्रिसीतानुचरस्य राजा
सुमन्त्रनेत्रेण रथेन शोचन् ॥ 396 ॥

राजा दशरथो **वनायाभिगमं** आदिक्षदाज्ञापितवान् ।

भट्टिकाव्ये— III. 6.

मातामहावासमुपेयिवांसं
मोहादपृष्ट्वा भरतं तदानीम् ।
तत्कैकयी सोढुमशक्नुवाना
ववार रामस्य **वनप्रयाणम्** ॥ 397 ॥

वनाय प्रयाणं **वनप्रयाणम्** । 'चतुर्थी' इति योगविभागात्समासः ।

चम्पूरामायणे—II. 27.

मातुराज्ञां वहन्मूर्ध्ना मालामिव महायशाः ।
**वनाय** रामो **वव्राज** जगतामवनाय च ॥ 398 ॥

रामो **वनाय वव्राज** ।

भट्टिकाव्ये—I. 25.

**प्रयास्यतः पुण्यवनाय** जिष्णो
रामस्य रोचिष्णुमुखस्य धृष्णुः ।

त्रैमातुरः कृत्स्नजितास्त्रशस्त्रः
सध्र्यङ् रतः श्रेयसि लक्ष्मणोऽभूत् ॥ 399 ॥

पुण्यवनाय प्रयास्यतः तपोवनं गमिष्यतः ।

भट्टिकाव्ये—III. 13.

असृष्ट यो यश्च भयेष्वरक्षीत्
यः सर्वदास्मानपुषत्स्वपोषम् ।
महोपकारस्य किमस्ति तस्य
तुच्छेन यानेन वनस्य मोक्षः ॥ 400 ॥

वनस्येति शेषषष्ठी । न कृल्लक्षणा । तस्यास्तु गत्यर्थकर्मणि चतुर्थ्या बाध्यमानत्वात् ।

५८६ । ध्रुवमपायेऽपादानम् ( १. ४. २४ )

अपायो विश्लेषस्तस्मिन्साध्ये ध्रुवमवधिभूतं कारकमपादानं स्यात् ।

५८७ । अपादाने पञ्चमी । ( २. ३. २८ )

ग्रामादायाति । धावतोऽश्वात्पतति ।

भट्टिकाव्ये—VIII. 70.

वृक्षाद् वृक्षं परिक्रामन् रावणाद्बिभ्यतीं भृशम् ।
शत्रोस्त्राणमपश्यन्तीमदृश्यो जनकात्मजाम् ॥ 401 ॥

वृक्षात्सकाशाद्वृक्षं परिक्रामन् ।

भट्टिकाव्ये—VIII. 104.

तं दृष्ट्वाचिन्तयत्सीता हेतोः कस्यैष रावणः ।
अवरुह्य तरोरारादेति वानरविग्रहः ॥ 402 ॥

अवरुह्य तरोरित्यपादाने पञ्चमी ।

माघे—XX. 15.

अमनोहरतां यती जनस्य
क्षणमालोकपथान्नभस्सदां च ।

रुरुधे पिहिताहिमद्युतिर्यो-
विशिखैरन्तरिता च्युता धरित्री ॥ 403 ॥

अत्र रोधस्यापायरूपत्वादालोकपथादिति पञ्चमी ।

वा० । जुगुप्साविरामप्रमादार्थानामुपसङ्ख्यानम् । ( 1079. )

पापाज्जुगुप्सते विरमति । धर्मात्प्रमाद्यति ।

चम्पूरामायणे—I. 112.

आदाय तत्सगुणमाशु विधाय तत्र
सन्धाय बाणमवधार्य तपोधनत्वम् ।
तज्जीवितस्य दयमानमना मनीषी
संभूतघोरसमराद्विरराम रामः ॥ 404 ॥

'व्याङ्परिभ्यो रमः' ( सू. 2749 ) इति परस्मैपदम् ।

चम्पूरामायणे—II. 34.

ग—देवि **विरम** रामाभिषेकसमुन्मिषिताह्लादाङ्कुरावग्रहाग्रहात् ॥ 405 ॥

मेघसन्देशे—I. 1.

कश्चित्कान्ताविरहगुरुणा **स्वाधिकारात्प्रमत्तः**
शापेनास्तङ्गमितमहिमा वर्षभोग्येन भर्तुः ।
यक्षश्चक्रे जनकतनयास्नानपुण्योदकेषु
स्निग्धच्छायातरुषु वसतिं रामगिर्याश्रमेषु ॥ 406 ॥

**स्वाधिकारात्प्रमत्तः** अनवहितः ।

विश्वगुणादर्शे—140.

शुचीभूताः स्नानैः श्रुतहितपुराणाश्च **नियमा-**
दपूतानां स्पर्शा**नवहित**हृदोऽमी विजहतः ।
सुराभ्यर्चां कृत्वा शुचिकृतमदन्त्यन्नमनघं
महाराष्ट्रे देशे विलसति महानेष हि गुणः ॥ 407 ॥

**नियमा**दाचाराद**वहित**हृदोऽप्रमत्तचित्ताः ।

भट्टिकाव्ये—XVIII. 8.

सर्वस्य जायते मानः स्वहिताच्च प्रमाद्यति ।
वृद्धौ भजति चापथ्यं नरो येन विनश्यति ॥ 408 ॥

५८८। भीत्रार्थानां भयहेतुः । (१. ४. २५)

भयार्थानां त्राणार्थानां च योगे भयहेतुरपादानं स्यात् । चोराद् बिभेति चोरात्त्रायते ।

अस्मिन्नेव ग्रन्थे श्लो० 401. राक्षसाद्रावणाद् बिभ्यती । शत्रोः रावणात्त्राणम् । उभयत्रापादानसंज्ञा ।

अनर्घराघवे—VI. 18.

व्यावर्तध्वमुपाध्वमुद्धुरशरज्वालामुखीं मातरं
देवीमस्त्रमयीं प्लवङ्गपशवः पश्यन्ति पृष्ठानि वः ।
चेतः शक्रजितोऽपि लक्ष्मणवधे बद्धोत्सवं मध्यमः
पौलस्त्यः स्वयमायुधं विधृतवानद्यापि रामाद्भयम् ॥ 409 ॥

५८९। पराजेरसोढः । (१. ४. २६)

पराजेः प्रयोगे असह्योऽर्थोऽपादानं स्यात् । अध्ययनात्पराजयते । ग्लायतीत्यर्थः । असोढः किम् । शत्रून्पराजयते । अभिभवतीत्यर्थः ।

भट्टिकाव्ये—VIII. 71.

तां पराजयमानां स प्रीते रक्ष्यां दशाननात् ।
अन्तर्दधानां रक्षोभ्यो मलिनां म्लानमूर्धजाम् ॥ 410 ॥

रावणस्य प्रीतेरनुरागात्पराजयमानां तामसहमानाम् । 'विपराभ्यां जेः' (सू. 2685) इत्यात्मनेपदम् ।

भट्टिकाव्ये—VIII. 9.

त्वं पराजयमानोऽसावुक्त्वा पवनात्मजम् ।
जगादाद्रिर्विजेषीष्ठा मयि विश्रम्य वैरिणम् ॥ 411 ॥

त्वमिति द्वितीया । पराजयमानोऽभिभवन् । इदं प्रत्युदाहरणं भवति ।

## ५९० । वारणार्थानामीप्सितः । ( १. ४. २७ )

प्रवृत्तिविघातो वारणम् । वारणार्थानां धातूनां प्रयोगे ईप्सितोऽर्थोऽपादानं स्यात् । यवेभ्यो गां वारयति ।

अस्मिन्नेव ग्रन्थे श्लो० 410. दशाननात्स्वकान्तादीप्सितात्तत्कान्ताभिः सीताचापलशङ्किनीभिः रक्ष्यां वार्याम् ।

## ५९१ । अन्तर्धौ येनादर्शनमिच्छति । ( १. ४. २८ )

व्यवधाने सति यत्कर्तृकस्यात्मनो दर्शनस्याभावमिच्छति तदपादानं स्यात् । मातुर्निलीयते कृष्णः ।

अस्मिन्नेव ग्रन्थे श्लो० 410. रक्षोभ्योऽन्तर्दधानां रक्षांसि मां मा द्राक्षुरिति लीयमानाम् ।

भट्टिकाव्ये— VI. 16.

अहं न्यवधिषं भीमं राक्षसं क्रूरविक्रमम् ।
मा घुक्षः पत्युरात्मानं मा न श्लिक्षः प्रियं प्रिये ॥ 412 ॥

आत्मानं पत्युः पञ्चमी, सम्बन्धसामान्ये षष्ठी वा । मा घुक्षः मा संवृणु । गुहू संवरणे लुङ् ।

## ५९२ । आख्यातोपयोगे । ( १. ४. २९ )

नियमपूर्वकविद्यास्वीकारे वक्ता प्राक्संज्ञः स्यात् । उपाध्यायादधीते । उपयोगे किम् ? नटस्य गाथां शृणोति ।

भट्टिकाव्ये VIII. 72.

रामादधीतसन्देशो वायोर्जातश्च्युतस्मिताम् ।
प्रभवन्तीमिवादित्यादपश्यत्कपिकुञ्जरः ॥ 413 ॥

रामादाख्यातुरधीतसन्देशो भक्त्या गृहीतवाचकः । रामस्यापादानत्वम् ।

अस्मिन्नेव ग्रन्थे श्लो० 228. यः प्रभुः स्वामी हितादासजनाद्धितोपदेष्टुः सकाशात् । पंचमी । न संशृणुते न शृणोति ।

अनर्घराघवे—II. 87.

असौ सीरध्वजो राजा यो देवाद् द्युमणेरपि ।
अध्यैष्ट याज्ञवल्क्यस्य मुखेन ब्रह्मसंहिताम् ॥ 414 ॥

सीरध्वजो जनकः द्युमणेः सूर्यात् । पंचमी । अध्यैष्ट अधीतवान् । इङ् अध्ययने लुङ् । ब्रह्मसंहितां वेदान्तम् । याज्ञवल्क्यस्य मुखेन । याज्ञवल्क्येन सूर्यादधीतम् । ततो जनकेन । सूर्यप्रशिष्योऽयमित्यर्थः ।

५९३ । जनिकर्तुः प्रकृतिः । ( १. ४. ३० )

जायमानस्य हेतुरपादानं स्यात् । ब्रह्मणः प्रजाः प्रजायन्ते ।
अस्मिन्नेव ग्रन्थे श्लो० 413. वायोः प्रकृतिभूताज्जात उत्पन्नः ।

५९४ । भुवः प्रभवः । ( १. ४. ३१ )

भूकर्तुः प्रभवस्तथा । हिमवतो गङ्गा प्रभवति । तत्र प्रकाशत इत्यर्थः ।

अस्मिन्नेव ग्रन्थे श्लो० 413. आदित्यात्प्रभवन्तीमिव तेजसा सूर्यात्प्रादुर्भवन्तीमिव स्थिताम् । आदित्यस्यापादानत्वम् ।

वा० । ल्यब्लोपे कर्मण्यधिकरणे च । ( 1474 - 1475. )

प्रासादात्प्रेक्षते । प्रासादमारुह्य प्रेक्षत इत्यर्थः । आसनात्प्रेक्षते । आसन उपविश्य प्रेक्षत इत्यर्थः । श्वशुराज्जिह्रेति श्वशुरं वीक्ष्येत्यर्थः ।

अस्मिन्नेव ग्रन्थे श्लो० 387. तस्मात् तमकम्पनं वीक्ष्य त्रेपे लज्जितम् ।

माघे—XVIII. 51.

आक्रम्यैकामग्रपादेन जङ्घा-
मन्यामुच्चैराददानः करेण ।
सास्थिस्वानं दारुवद्दारुणात्मा
कंचिन्मध्यात्पाटयामास दन्ती ॥ 415 ॥

मध्यात्पाटयामास । मध्यं विभज्य पाटयामास ।

५९५ । अन्यारादितरर्तेदिक्शब्दाञ्चूत्तरपदाजाहियुक्ते । (२. ३. २९)

एतैर्योगे पञ्चमी स्यात् । अन्य इत्यर्थग्रहणम् । इतरग्रहणं प्रपंचार्थम् । अन्यो भिन्न इतरो वा कृष्णात् । आराद्वनात् । ऋते कृष्णात् । पूर्वो ग्रामात् । दिशि दृष्टः शब्दो दिक्शब्दः । प्राक् प्रत्यग्वा ग्रामात् । आच्, दक्षिणा ग्रामात् । आहि, दक्षिणाहि ग्रामात् । 'अपादाने पंचमी'ति (सू. 587) सूत्रे 'कार्तिक्याः प्रभृती'ति भाष्यप्रयोगात् प्रभृत्यर्थयोगे पञ्चमी । भवात्प्रभृति आरभ्य वा सेव्यो हरिः । 'अपपरिबहिः' (सू. 666) इति समासविधानाज्ज्ञापकाद्बहिर्योगेऽपि पञ्चमी । ग्रामाद्बहिः ।

भट्टिकाव्ये—VIII. 105.

पूर्वस्मादन्यवद्भाति भावाद्दाशरथिं स्तुवन् ।
ऋते क्रौर्यात्समायातो मां विश्वासयितुं नु किम् ॥ 416 ॥

पूर्वस्मात्क्षणं दृष्टाद्रावणादन्यवद्भाति । क्रौर्यादृते क्रौर्यं विहाय ।

भट्टिकाव्ये— VIII. 106.

इतरो रावणादेष राघवार्थपरो यदि ।
सफलानि निमित्तानि प्राक् प्रभातात्ततो मम ॥ 417 ॥

रावणादितरः । प्रभातात्प्राक् । इतरपदाञ्चूत्तरपदयोगात्पञ्चम्यौ ।

भट्टिकाव्ये—VIII. 107.

उत्तराहि वसन्रामः समुद्राद्रक्षसां पुरीम् ।
अवैल्लवणतोयस्य स्थितां दक्षिणतः कथम् ॥ 418 ॥

समुद्रादुत्तराहि उत्तरदिग्भागे दूरे । 'आहि च दूरे' (सू. 1986.) 'उत्तराच्च' (सू. 1987.) इत्याहिप्रत्ययः । तद्योगात्समुद्रादिति पंचमी ।

भट्टिकाव्ये—XXII. 33.

दीपतुल्यः प्रबन्धोऽयं शब्दलक्षणचक्षुषाम् ।
हस्तामर्ष इवान्धानां भवेद्व्याकरणादृते ॥ 419 ॥

ऋतेयोगाद्व्याकरणादिति पंचमी ।

कुमारसम्भवे—II. 4.

नमस्त्रिमूर्तये तुभ्यं प्राक्सृष्टेः केवलात्मने ।
गुणत्रयविभागाय पश्चाद्भेदमुपेयुषे ॥ 420 ॥

सृष्टेः प्राक् । अञ्चूत्तरपदयोगेन पञ्चमी ।

चम्पूभारते—IX. 4.

तेषां कुरूणां कलहोदयात्प्राक्
रथस्वनानां करिबृंहितानाम् ।
आशामशेषां स्ववशे विधातु-
मन्योन्यमासीत्कलहो महीयान् ॥ 421 ॥

पूर्ववत्पंचमी ।

कुमारसम्भवे—III. 26.

असूत सद्यः कुसुमान्यशोकः
स्कन्धात्प्रभृत्येव सपल्लवानि ।
पादेन नापैक्षत सुन्दरीणां
संपर्कमाशिञ्जितनूपुरेण ॥ 422 ॥

स्कन्धात्प्रकाण्डात्प्रभृत्येव स्कन्धादारभ्येत्यर्थः । भाष्यकारवचनात्प्रभृतियोगे पञ्चमीति कैयटः ।

कुमारसंभवे—V. 86.

अद्य प्रभृत्यवनताङ्गि तवास्मि दासः
क्रीतस्तपोभिरिति वादिनि चन्द्रमौलौ ।
अह्नाय सा नियमजं क्लममुत्ससर्ज
क्लेशः फलेन हि पुनर्नवतां विधत्ते ॥ 423 ॥

अद्य प्रभृति अस्माद्दिनादारभ्य । प्रभृतियोगादद्येति सप्तम्यर्थवाचिनः पंचम्यर्थो लक्ष्यते ।

माघे—. XII. 1.

इत्थं रथाश्वेभनिषादिनां प्रगे
गणो नृपाणामथ तोरणाद्बहिः ।

प्रस्थानकालक्षमवेषकल्पना-
कृतक्षणक्षेपमुदैक्षताच्युतम् ॥ 424 ॥

तोरणाद्बहिः ।

रघुवंशे—VIII. 14.

स किलाश्रममन्त्यमाश्रितो
निवसन्नावसथे पुराद्बहिः ।
समुपास्यत पुत्रभोग्यया
स्नुषयेवाविकृतेन्द्रियः श्रिया ॥ 425 ॥

देशकालवृत्तिना योगेऽपि पञ्चमी ।

रघुवंशे—I. 66.

नूनं मत्तः परं वंश्याः पिण्डविच्छेददर्शिनः ।
न प्रकामभुजः श्राद्धे स्वधासंग्रहतत्पराः ॥ 426 ॥

मत्तः परं मदनन्तरम् । पंचम्यास्तसिल् ।

रघुवंशे—I. 67.

मत्परं दुर्लभं मत्वा नूनमावर्जितं मया ।
पयः पूर्वैः सनिश्वासैः कवोष्णमुपभुज्यते ॥ 427 ॥

माघे—XVIII. 1.

संजग्माते तावपायानपेक्षौ
सेनाम्भोधी धीरनादौ रयेण ।
पक्षच्छेदात्पूर्वमेकत्र देशे
वाञ्छन्तौ वा सह्यविन्ध्यौ निलेतुम् ॥ 428 ॥

पक्षच्छेदात्पूर्वम् ।

तस्यानन्तरमिति भाष्ये दर्शनात् संबन्धमात्रे षष्ठी । अथातो ब्रह्मजिज्ञासा ।

वेदाध्ययनादनन्तरमित्याचार्याः । कुमारसंभवे—VI. 9.

सर्गशेषप्रणयनाद्विश्वयोनेरनन्तरम् ।
पुरातनाः पुराविद्भिर्धातार इति कीर्तिताः ॥ 429 ॥

रघुवंशे—III. 7.

क्रमेण निस्तीर्य च दोहदव्यथां
प्रचीयमानावयवा रराज सा ।
पुराणपत्रापगमादनन्तरं
लतेव सन्नद्धमनोज्ञपल्लवा ॥ 430 ॥

कुमारसम्भवे—VI. 93.

वैवाहिकीं तिथिं पृष्टास्तत्क्षणं हरबन्धुना ।
ते त्र्यहादूर्ध्वमाख्याय चेरुश्चीरपरिग्रहाः ॥ 431 ॥

देशकालयोगे पञ्चमी ।

नैषधे—VI. 86.

इत्युक्तवत्या निहितादरेण
भैम्या गृहीता मघवत्प्रसादः ।
स्रक्पारिजातस्य ऋते नलाशां
वासैरशेषामपुपूरदाशाम् ॥ 432 ॥

नलाशामृते । पञ्चम्येव विहिता । मतान्तरे द्वितीयाप्यस्तीत्याहुः ।

## ५९६ । अपपरी वर्जने । (१. ४. ८८)

एतौ वर्जने कर्मप्रवचनीयौ स्तः ।

## ५९७ । आङ् मर्यादावचने । (१. ४. ८९)

आङ् मर्यादायामुक्तसंज्ञः स्यात् । वचनग्रहणादभिविधावपि ।

## ५९८ । पञ्चम्यपाङ्परिभिः । (२. ३. १०)

एतैः कर्मप्रवचनीयैर्योगे पंचमी स्यात् । अप हरेः, परि हरेः, संसारः । आ मुक्तेः संसारः । 'अपपरिबहिरञ्चवः पञ्चम्या' (सू. 666) इति वा समासः ।

'परेर्वर्जने वावचनम्'। (वा०. 4683. सू. 2141.) इति वैकल्पिको द्विर्भावः। द्विर्भावस्य समासो न। 'आङ् मर्यादाभिविध्योः' (सू. 667) इति वा समासः।

अस्मिन्नेव ग्रन्थे श्लो० 295. **अपलोकेभ्यः**। लोकान्वर्जयित्वा।

चम्पूरामायणे—II. 69.

अपिबदियममन्त्रे कालयोगान्नरेन्द्रे
वरयुगरसनाभ्यां प्राणवायुं तदीयम्।
**अपनगर**ममुष्या वर्तनं युक्तरूपं
पितृवनवसुमत्यां क्वापि वल्मीकवत्याम्॥ 433॥

**अपनगरं** नगरं वर्जयित्वा। अपनगरादपनगरमित्यव्ययीभावसमासः।

भट्टिकाव्ये—V. 69.

**परिपर्युदधे** रूपमाद्युलोकाच्च दुर्लभम्।
भावत्कं दृष्टवत्स्वेतदस्मास्वधि सुजीवितम्॥ 434॥

**परिपर्युदधेः** असमासपक्षे द्विर्वचनम्। उदधिं वर्जयित्वा। आद्युलोकादास्वर्गाच्च।

अस्मिन्नेव ग्रन्थे श्लो० 298. **आरामदर्शनात्** रामदर्शनपर्यन्तम्।

### ५९९। प्रतिः प्रतिनिधिप्रतिदानयोः। (१. ४. ९२)

एतयोरर्थयोः प्रतिरुक्तसंज्ञः स्यात्।

### ६००। प्रतिनिधिप्रतिदाने च यस्मात्। (२. ३. ११)

अत्र कर्मप्रवचनीयैर्योगे पञ्चमी स्यात्। प्रद्युम्नः कृष्णात्प्रति। तिलेभ्यः प्रतियच्छति माषान्। प्रतियोगे पञ्चम्यास्तसिः। प्रद्युम्नः कृष्णतः प्रति कृष्णसदृश इत्यर्थः।

अस्मिन्नेव ग्रन्थे श्लो० 299. रामो **नारायणतः प्रति**। नारायणात्प्रति तस्य प्रतिनिधिः।

### ६०१। अकर्तर्यृणे पञ्चमी। (२. ३. २४)

कर्तृवर्जितं यदृणं हेतुभूतं ततः पञ्चमी स्यात् । शताद्बद्धः । अकर्तरि किम् । शतेन बन्धितः ।

भट्टिकाव्ये—VIII. 103.

ऋणाद्बद्ध इवोन्मुक्तो वियोगेन क्रतुद्विषः ।
हेतोर्बोधस्य मैथिल्याः प्रास्तावीद्रामसंकथाम् ॥ 435 ॥

ऋणाद्धेतोर्बद्धः । ऋणस्याकर्तृहेतुत्वात् ।

## ६०२ । विभाषा गुणेऽस्त्रियाम् । (२. ३. २५)

गुणहेतावस्त्रीलिङ्गे पञ्चमी वा स्यात् । जाड्याज्जाड्येन वा बद्धः । गुणे किम् । धनेन कुलम् । अस्त्रियां किम् । बुद्ध्या मुक्तः । विभाषेति योगविभागात् अगुणे स्त्रियां च क्वचित् । धूमादग्निमान् । नास्ति घटोऽनुपलब्धेः ।

अस्मिन्नेव ग्रन्थे श्लो० 435. रावणस्य वियोगेनापगमेन हेतुनोन्मुक्तो निर्बन्धान्मुक्तः सन् ।

किरातार्जुनीये—6. 21.

अधरीचकार च विवेकगुणा-
दगुणेषु तस्य धियमस्तवतः ।
प्रतिघातिनीं विषयसङ्गरतिं
निरुपप्लवः शमसुखानुभवः ॥ 436 ॥

विवेक एव गुणस्तस्मात् तेन हेतुनेत्यर्थः । पञ्चमी ।

## ६०३ । पृथग्विनानानाभिस्तृतीयान्यतरस्याम् । (२. ३. ३२)

एभिर्योगे तृतीया स्यात्पञ्चमीद्वितीये च । पृथक् रामेण रामात् रामं वा । एवं विना नाना ।

भट्टिकाव्ये—VIII. 109.

पृथङ् नभस्वतश्चण्डाद्वैनतेयेन वा विना ।
गन्तुमुत्सहते नेदं कश्चित्किमुत वानरः ॥ 437 ॥

चण्डमारुतात्पृथक्, वैनतेयेन वा विना । विकल्पात्पञ्चमी तृतीया च ।

भट्टिकाव्ये—XVI. 3.

**अतिकायाद्विना** पाशं को वा च्छेत्स्यति वारुणम् ।
रावणं मंस्यते को वा स्वयंभूः कस्य तोक्ष्यति ॥ 438 ॥

**अतिकायाद्विना** । पञ्चमी ।

रघुवंशे—II. 14.

शशाम **वृष्ट्यापि विना** दवाग्नि-
रासीद्विशेषा फलपुष्पवृद्धिः ।
ऊनं न सत्वेष्वधिको बबाधे
तस्मिन्वनं गोप्तरि गाहमाने ॥ 439 ॥

**वृष्ट्यापि विना** । तृतीया ।

चम्पूभारते—3. .48

पापापनुत्यै परिकल्पितो यः प्रभासतीर्थे प्रथितोऽभिषेकः ।
सेतुं दृशा दृष्टवतोऽस्य सोऽसौ **साध्यं विना** जागरितो बभूव ॥ 440 ॥

**साध्यं विना** । द्वितीया ।

माघे—I. 33.

उदासितारं निगृहीतमानसै-
र्गृहीतमध्यात्मदृशा कथंचन ।
बहिर्विकारं **प्रकृतेः पृथग्विदुः**
पुरातनं त्वां पुरुषं पुराविदः ॥ 441 ॥

**प्रकृतेः पृथक्** । पञ्चमी । 'विनञ्भ्यां' ( सू. 1828 ) विना नाना ।

नैषधे—II. 45.

तव रूपमिदं **तया विना** विफलं पुष्पमिवावकेशिनः ।
इयमृद्धघना वृथावनी स्ववनी संप्रवदत्पिकापि का ॥ 442 ॥

**६०४ । करणे च स्तोकाल्पकृच्छ्रकतिपयस्यासत्ववचनस्य । (२. ३. ३३)**

एभ्योऽद्रव्यवचनेभ्यः करणे तृतीयापञ्चम्यौ स्तः । स्तोकेन स्तोकाद्वा मुक्तः । द्रव्ये तु स्तोकेन विषेण हतः ।

भट्टिकाव्ये—VIII. 110.

इति चिन्तावतीं कृच्छ्रात्समासाद्य कपिद्विपः ।
मुक्तां स्तोकेन रक्षोभिः प्रोचेऽहं रामकिङ्करः ॥ 443 ॥

रक्षोभिः कर्तृभिः स्तोकेन लेशेनापि मुक्तां सीतां कृच्छ्रात्समासाद्य । विकल्पात्पंचमी तृतीया च ।

## ६०५ । दूरान्तिकार्थेभ्यो द्वितीया च । ( २. ३. ३५ )

एभ्यो द्वितीया स्यात् । चात्पञ्चमीतृतीये । 'सप्तम्यधिकरणे च' (सू. 633) इति चकारात्सप्तमी । ग्रामस्य ग्रामद्वा दूरं दूरात् दूरेण दूरे वा । अन्तिकं अन्तिकात् अन्तिकेन अन्तिके वा ।

भट्टिकाव्ये—VIII. 111.

विप्रकृष्टं महेन्द्रस्य न दूरात् विन्ध्यपर्वतात् ।
नानभ्याशे समुद्रस्य तव माल्यवति प्रियः ॥ 444 ॥

महेन्द्रस्य विप्रकृष्टं न । दूराद् विन्ध्यपर्वतात् । दूराद् दूरम् । समुद्रस्य नानभ्याशे । अभ्याशे समीप इत्यर्थः । विप्रकृष्टदूराभ्याशशब्देभ्योऽसत्ववचनेभ्यः प्रातिपादिकार्थे विकल्पाद्द्वितीयापञ्चम्यौ । पूर्वोक्तचकारात्सप्तमी च ।

चम्पूभारते—III. 81.

एतेन खल्वकरुणेन तपागमेन
जीवातुरद्य मम देशत एव दूरात् ।
उत्सारितो मधुरितीव रुषा वनान्ते
तत्स्वागतं परभृतो न समाचचार ॥ 445 ॥

दूरादिति पञ्चमी ।

भट्टिकाव्ये—VIII. 127.

असौ दधदभिज्ञानं चिकीर्षुः कर्म दारुणम् ।
ग्रामुकोऽप्यन्तिकं भर्तुर्मनसाचिन्तयत्क्षणम् ॥ 446 ॥

भर्तुरन्तिकमिति द्वितीया ।

चम्पूभारते—I. 46.

धर्मात्प्राप युधिष्ठिरं पवनतो भीमं च भीमं द्विषां
जिष्णोर्जिष्णुमतीव धृष्णुमनघा कुन्ती मुनेर्विद्यया ।
अन्या सापि तथैव तत्र नकुलं रूपास्पदं गीष्पतेः
सच्छात्रं सहदेवमप्यजनयन्नासत्ययोरन्तिकात् ॥ 447 ॥

पञ्चमी ।

चम्पूरामायणे—VI. 10.

द्रष्टुं नालमगाधतां फणिपतिः सीमान्तरेखा दिशो
द्वीपाः सैकतमण्डलानि तदयं दूरे गिरां वारिधिः ।
येषामेष सुखादखानि नखरैर्येनाथवा पूरित-
स्तेषां नः कुलभूभुजामविहतस्थेम्ने महिम्ने नमः ॥ 448 ॥

गिरां दूर इति सप्तमी ।

भट्टिकाव्ये V. 5.

सम्प्राप्य राक्षससभं चक्रन्द क्रोधविह्वला ।
नामग्राहमरोदीत्सा भ्रातरौ रावणान्तिके ॥ 449 ॥

सप्तमी ।

### ६०६ । षष्ठी शेषे । (२. ३. ५०)

कारकप्रातिपदिकार्थव्यतिरिक्तः स्वस्वामिभावादिसम्बन्धः शेषस्तत्र षष्ठी स्यात् । राज्ञः पुरुषः । कर्मादीनामपि सम्बन्धमात्रविवक्षायां षष्ठ्येव । सतां गतम् । सर्पिषो जानीते । मातुः स्मरति । एधो दकस्योपस्कुरुते । भजे शम्भोश्चरणयोः । फलानां तृप्तः ।

अस्मिन्नेव ग्रन्थे श्लो० 216. इदं काकुत्स्थस्य रामस्य सम्बन्धि अङ्गुलीयकम् ।

मेघसन्देशे—II. 38.

तामायुष्मन्मम च वचनादात्मनश्चोपकर्तुं
ब्रूया एवं तव सहचरो रामगिर्याश्रमस्थः ।
अव्यापन्नः कुशलमबले पृच्छति त्वां वियुक्तः
पूर्वाभाष्यं सुलभविपदां प्राणिनामेतदेव ॥ 450 ॥

आत्मन उपकर्तुं आत्मानं कृतार्थयितुम् ।

किरातार्जुनीये—VII. 28.

सामोदाः कुसुमतरुश्रियो विविक्ताः
सम्पत्तिः किसलयशालिनी लतानाम् ।
साफल्यं ययुरमराङ्गनोपभुक्ताः
सा लक्ष्मीरुपकुरुते यया परेषाम् ॥ 451 ॥

परेषामुपकुरुते । अनुकरोति भगवतो नारायणस्येत्यादिवत् सम्बन्धसामान्ये षष्ठी ।

चम्पूभारते—II. 9.

कूलस्थस्यानुकुर्वन्कुरुसुतसदसः कुम्भयोनेः कदाचित्
स्नातुं मध्ये जलानां चिरकृतवसतेः सिन्धुभूवर्धमानः ।
आदौ पादौ निपीड्य स्फुटकमलरुचौ बिभ्रदन्तेवसत्वं
ग्राहो जग्राह कश्चित्स्वयमपि विजयास्नागमान्ते महान्तम् ॥452॥

कुमारसम्भवे—I. 44.

पुष्पं प्रवालोपहितं यदि स्या-
न्मुक्ताफलं वा स्फुटविद्रुमस्थम् ।
ततोऽनुकुर्याद्विशदस्य तस्या-
स्ताम्रोष्ठपर्यस्तरुचः स्मितस्य ॥ 453 ॥

स्मितस्यानुकुर्यात् । स्मितमनुकुर्यादित्यर्थः । माषाणामश्नीयादितिवत् सम्बन्धमात्रविवक्षायां षष्ठी ।

भट्टिकाव्ये—X. 46.

मधुकरविरुतैः प्रियाध्वनीनां
सरसिरुहैर्दयितास्यहास्यलक्ष्म्याः ।
स्फुटमनुहरमाणमादधानं
पुरुषपतेः सहसा परं प्रमोदम् ॥ 454 ॥

अनुहरमाणमनुकुर्वन्तम् ।

## ६०७ । षष्ठी हेतुप्रयोगे । ( २. ३. २६ )

हेतुशब्दप्रयोगे हेतौ द्योत्ये षष्ठी स्यात् । अन्नस्य हेतोर्वसति ।

किरातार्जुनीये—XII. 47.

चमरीगणैर्गणबलस्य बलवति भयेऽप्युपस्थिते ।
वंशविततिषु विषक्तपृथुप्रियबालवालधिभिराददे धृतिः ॥ 455 ॥

**गणबलस्ये**ति सम्बन्धमात्रविवक्षायां षष्ठी । अन्यथा '**भीत्रार्थानां भयहेतुः**' ( सू. 588 ) इति पञ्चमी स्यात् ।

रघुवंशे—II. 47.

एकातपत्रं जगतः प्रभुत्वं
नवं वयः कान्तमिदं वपुश्च ।
अल्पस्य हेतोर्बहु हातुमिच्छन्
विचारमूढः प्रतिभासि मे त्वम् ॥ 456 ॥

अल्पस्य हेतोः । अल्पेन कारणेन ।

अस्मिन्नेव ग्रन्थे श्लो० 435. मैथिल्या **बोधस्य हेतोः** । **बोधहेतौ सति । बोधार्थमित्यर्थः** ।

## ६०८ । सर्वनाम्नस्तृतीया च । ( २. ३. २७ )

सर्वनाम्नो हेतुशब्दस्य च प्रयोगे हेतौ द्योत्ये तृतीया स्यात्षष्ठी च । **केन हेतुना वसति । कस्य हेतोः** ।

वा० । निमित्तपर्यायप्रयोगे सर्वासां प्रायदर्शनम् । ( 1473. )

किं निमित्तं वसति, केन निमित्तेन, कस्मै निमित्ताय इत्यादि । एवं किं कारणं, को हेतुः, किं प्रयोजनम् इत्यादि ।

अस्मिन्नेव ग्रन्थे श्लो० 402. **कस्य हेतोः** ।

किरातार्जुनीये—XIV. 15.

मृगान्विनिघ्नन्मृगयुः स्वहेतुना
कृतोपकारः कथमिच्छतां तपः ।
कृपेति चेदस्तु मृगः क्षतः क्षणा-
दनेन पूर्वं न मयेति का गतिः ॥ 457 ॥

स्वमात्मैव हेतुः तेन **स्वहेतुना** । स्वार्थमित्यर्थः ।

माघे—XVIII. 48.

हस्तेनाग्रे वीतभीतिं गृहीत्वा
कंचिद्व्यालः क्षिप्तवानूर्ध्वमुच्चैः ।
आसीनानां व्योम्नि तस्यैव हेतोः ।
स्वर्गस्त्रीणामर्पयामास नूनम् ॥ 458 ॥

**तस्यैव हेतोस्तेनैव** हेतुना । तद्धरणार्थमेव ।

६०९ । **षष्ठ्यतसर्थप्रत्ययेन** । ( २. ३. ३० )

एतद्योगे षष्ठी स्यात् । दिक्शब्द अन्यारादिति पञ्चम्या अपवादः । 'दक्षिणोत्तराभ्यामतसुच् (सू. 1978) इत्यतसुच् । ग्रामस्य दक्षिणतः पुरः पुरस्तात् उपरि उपरिष्टात् ।

अस्मिन्नेव ग्रन्थे श्लो० 418. **लवणतोयस्य** दक्षिणतः दक्षिणदिग्भागे ।

किरातार्जुनीये—XII. 11.

परिकीर्णमुद्यतभुजस्य भुवनविवरे दुरासदम् ।
ज्योतिरुपरि **शिरसो** विततं जगृहे निजान्मुनिदिवौकसां पथः ॥ 459 ॥

**शिरस उपरि** इति षष्ठी ।

"धिगुपर्यादिषु त्रिषु। द्वितीयाम्रेडितान्तेषु" (वा. 1444. सू. 544) इति द्वितीया।

अस्मिन्नेव ग्रन्थे श्लो० 281. दृषदः द्वितीया। उपर्युपरि दृषदां समीपोपरिदेश इत्यर्थः।

६१०। एनपा द्वितीया। (२. ३. ३१)

एनबन्तेन योगे द्वितीया स्यात्। एनपेति योगविभागात्षष्ठ्यपि। दक्षिणेन ग्रामं ग्रामस्य वा। एवमुत्तरेण। 'एनबन्यतरस्याम्' (सू. 1984) इत्येनप्।

भट्टिकाव्ये—VIII. 108.

> दण्डकां दक्षिणेनाहं सरितोऽद्रीन्वनानि च।
> अतिक्रम्योदधिं चैव पुंसामगममाहृता॥ 460॥

दण्डकां दक्षिणेन, दण्डकाया दक्षिणतः।

मेघसन्देशे—II. 12

> तत्रागारं धनपतिगृहानुत्तरेणास्मदीयं
> दूराल्लक्ष्यं सुरपतिधनुश्चारुणा तोरणेन।
> यस्योपान्ते कृतकतनयः कान्तया वर्धितो मे
> हस्तप्राप्यस्तबकनमितो बालमन्दारवृक्षः॥ 461॥

अनर्घराघवे—VII. 5.

ग—देवि वैदेहि दृश्यतामितो लङ्कां पूर्वेण सुवेलं पश्चिमेन॥ 462॥

६११। दूरान्तिकार्थैः षष्ठ्यन्यतरस्याम्। (२. ३. ३४.)

एतैर्योगे षष्ठी स्यात्पञ्चमी च। ग्रामस्य ग्रामाद्वा दूरं दूराद्दूरेण दूरे वा। अन्तिकमन्तिकादन्तिकेनान्तिके वा।

अस्मिन्नेव ग्रन्थे श्लो० 444. महेन्द्रस्य षष्ठी। न विप्रकृष्टं न दूरम् विन्ध्यपर्वतात् पंचमी। नानभ्याशे समुद्रस्य षष्ठी।

कुमारसम्भवे—VII. 41.

> उपाददे तस्य सहस्ररश्मिस्त्वष्ट्रा नवं निर्मितमातपत्रम्।
> स तद्दुकूलादविदूरमौलिर्बभौ पतद्गङ्ग इवोत्तमाङ्गे॥ 463॥

तद्दुकूलात्पञ्चमी । अविदूरमौलिस्तद्दुकूलस्यासन्नमौलिरित्यर्थः ।

अस्मिन्नेव ग्रन्थे श्लो० 445. देशतः । पञ्चम्यास्तसिः । दूरात् ।

अस्मिन्नेव ग्रन्थे श्लो० 446. भर्तुः । षष्ठी । अन्तिकम् ।

अस्मिन्नेव ग्रन्थे श्लो० 447. नासत्ययोः । षष्ठी । अन्तिकात् ।

अस्मिन्नेव ग्रन्थे श्लो० 448. गिराम् । षष्ठी । दूरे ।

अस्मिन्नेव ग्रन्थे श्लो० 449. रावणस्य रावणाद्वा अन्तिके रावणान्तिके ।

६१२ । ज्ञोऽविदर्थस्य करणे । (२. ३. ५१)

जानातेरज्ञानार्थस्य करणे शेषत्वेन विवक्षिते षष्ठी स्यात् ।

भट्टिकाव्ये—VIII. 119.

जानीष्व प्रत्यभिज्ञानस्यातत्त्वमपि देवि ते ।
आस्ते भर्तेति मां दृष्ट्वा भर्तुर्दूतं प्रियं कपिम् ॥ 464 ॥

प्रत्यभिज्ञानस्य प्रत्यभिज्ञानेन । जानातेरवेदनार्थस्य करणे षष्ठी । जानीष्व । अनन्तरकर्तव्येऽभिज्ञानदानादौ प्रवर्तकस्येत्यर्थः । प्रवृत्तिवचनो जानातिरविदर्थ इति काशिका । सुहितार्थे करणे षष्ठीविधायकं प्रमाणं नास्ति । 'पूरणगुण' (सू. 705) इति सूत्रेण करणे षष्ठ्यनुमीयते । 'नाग्निस्तृप्यति काष्ठानां नापगानां महोदधिः' ।

६१३ । अधीगर्थदयेशां कर्मणि । (२. ३. ५२)

एषां कर्मणि शेषे षष्ठी स्यात् । मातुः स्मरणम् । सर्पिषो दयनमीशनं वा ।

अस्मिन्नेव ग्रन्थे श्लो० 267. ते । षष्ठी । स्मरामि ।

चम्पूभारते—I. 80.

मन्दं मन्दमुपेत्य तत्र सदसो मत्पाण्डुपुत्राङ्कुराः
केति प्रेमपुरःप्रसारितकरः कुर्वन्दृढालिङ्गनम् ।
स्पर्शस्पर्शमिमान्निजाङ्कगमितान्भ्रातुः स्मरन्कौरव-
श्च्योतद्भिर्नयनाम्बुभिः स विदधे शोकं नदीमातृकम् ॥ 465 ॥

भ्रातुः । षष्ठी । स्मरन् ।

किरातार्जुनीये—XVIII. 38.

भवतः स्मरतां सदासने जयिनि ब्रह्ममये निषेदुषाम् ।
दहते भवबीजसन्ततिं शिखिनेऽनेकशिखाय ते नमः ॥ 466 ॥

भवतः स्मरतां भवन्तं ध्यायताम् ।

माघे—VI. 56.

इदमयुक्तमहो महदेव य-
द्वरतनोः स्मरयत्यनिलोऽन्यदा ।
स्मृतसयौवनसोष्मपयोधरान्
सतुहिनस्तु हिनस्तु वियोगिनः ॥ 467 ॥

वरतनोः । षष्ठी । स्मरयति ।

माघे—V. 50.

क्षिप्तं पुरो न जगृहे मुहुरिक्षुकाण्डं
नापेक्षते स्म निकटोपगतां करेणुम् ।
सस्मार वारणपतिः परिमीलिताक्ष-
मिच्छाविहारवनवासमहोत्सवानाम् ॥ 468 ॥

महोत्सवानाम् । षष्ठी । सस्मार ।

माघे—VIII. 64.

दिव्यानामपि कृतविस्मयां पुरस्ता-
दम्भस्तः स्फुरदरविन्दचारुहस्ताम् ।
उद्वीक्ष्य श्रियमिव काञ्चिदुत्तरन्ती-
मस्मार्षीज्जलनिधिमन्थनस्य शौरिः ॥ 469 ॥

जलनिधिमन्थनस्यास्मार्षीत् ।

भट्टिकाव्ये—VIII. 123.

अदेवीद्बन्धुभोगानां प्रादेवीदात्मसम्पदम् ।
शतकृत्वस्तवैकस्याः स्मरत्यहो रघूत्तमः ॥ 470 ॥

तव स्मरति ।

भट्टिकाव्ये—VI. 53

आस्ते स्मरन् स **कान्ताया** हृताया वालिना कपिः ।
वृषो यथोपसर्याया गोष्ठे गोदण्डताडितः ॥ 471 ॥

**कान्तायाः स्मरन्** ।

भट्टिकाव्ये—VI. 12.

इहासिष्टाशयिष्टेह सा सखेलमितोऽगमत् ।
अग्लासीत्संस्मरन्नित्थं **मैथिल्या** भरताग्रजः ॥ 472 ॥

**मैथिल्याः** । षष्ठी । **संस्मरन्** ।

अस्मिन्नेव ग्रन्थे श्लो० 247. **गुरूणां** तातपादानामुत्कण्ठमानोऽनर्थशङ्कया सशोकं स्मरन्नित्यर्थः ।

भट्टिकाव्ये—III. 18.

सूतोऽपि गङ्गासलिलैः पवित्वा
सहाश्वमात्मानमनल्पमन्युः ।
ससीतयो **राघवयोरधीयन्**
श्वसन्कदुष्णं पुरमाविवेश ॥ 473 ॥

ससीतयोः सीतासहितयो **राघवयोरधीयन्** । रामलक्ष्मणौ सीतां च संस्मरन्नित्यर्थः । इक् स्मरणे शतृ ।

भट्टिकाव्ये—XVIII. 38.

मूर्धजान्स्म विलुञ्चन्ति क्रोशन्ति सातिविह्वलम् ।
**स्माधीयन्त्युपकाराणां** मुहुर्भर्तुः प्रमन्यु च ॥ 474 ॥

**भर्तुश्चोपकाराणां मुहुरधीयन्ति स्म** ।

भट्टिकाव्ये—XVII. 10.

आर्छन् वामं मृगाः कृष्णाः **शस्त्राणां व्यस्मरन्**भटाः ।
रक्तान्यष्ठीवदक्ष्याम्यदखिद्यद्वाजिकुञ्जरम् ॥ 475 ॥

भटाः **शस्त्राणां व्यस्मरन्** ।

अस्मिन्नेव ग्रन्थे श्लो॰ 216. भवत्याः स्मरता रामेण ।

चम्पूरामायणे—IV. 44.

सुत्रामपुत्रारिशिलीमुखानां स्मृत्वा गणस्तत्र वलीमुखानाम् ।
अपामपारस्य निधेश्च पश्चादवाङ्मुखो वक्तुमवाङ्मुखोऽभूत् ॥ 476 ॥

शिलीमुखानां स्मृत्वा ।

भट्टिकाव्ये—VIII. 120.

रामस्य दयमानोऽसावध्येति तव लक्ष्मणः ।
उपास्कृषातां राजेन्द्रावागमस्येह मा त्रसीः ॥ 477 ॥

रामस्य दयमानोऽसौ लक्ष्मणस्तवाध्येति त्वां स्मारयतीत्यर्थः । उभयत्र षष्ठी ।

भट्टिकाव्ये—II. 33.

आत्मम्भरिस्त्वं पिशितैर्नराणां
फलेग्रहीन्हंसि वनस्पतीनाम् ।
शौवस्तिकत्वं विभवा न येषां
व्रजन्ति तेषां दयसे न कस्मात् ॥ 478 ॥

तेषां कस्मान्न दयसे ।

अस्मिन्नेव ग्रन्थे श्लो॰ 404. तज्जीवितस्य दयमानमनाः ।

चम्पूरामायणे—II. 2.

ग—विदितमेव हि भवतां शिवतातिमेव मतिं दधानास्सुपथा संचरमाणाः प्राणिनां दयमानमानसा मानधना यशःसमार्जनजागरूका जनोपतापसंमार्जनतत्पराः परां निर्वृतिमुपेत्य देवभूयं गताः सर्वे नः पूर्वपुरुषा इति ॥ 479 ॥

प्राणिनां दयमानमानसाः ।

चम्पूरामायणे—IV. 16.

साधारणी क्षितिभृतां मृगयेति पूर्व-
मुक्ता त्वयैव जनसंसदि सत्यवादिन् ।

शाखामृगीं तदिह मारय मां शरेण
को नाम राम मृगयुर्दयते मृगीणाम् ॥ 480 ॥

**मृगीणां दयते** ।

भट्टिकाव्ये—XV. 63.

स चापि रुधिरैर्मत्तः **स्वेषामप्यदयिष्ट** न ।
अग्रहीच्चायुरन्येषामरुद्ध च पराक्रमम् ॥ 481 ॥

भट्टिकाव्ये—IX. 57.

न प्राणिषि दुराचार **मायानामीशिषे** न च ।
नेडिषे यदि काकुत्स्थं तमूचे वानरो वचः ॥ 482 ॥

**मायानां नेशिषे** न प्रभवसि । मयि माया न प्रभवन्तीत्यर्थः ।

*भट्टिकाव्ये—XVIII. 20.

**ईष्टे धनानां** यक्षेन्द्रो यमो दाम्यति राक्षसान् ।
तनोति वरुणः पाशमिन्दुर्नो दीयतेऽधुना ॥ 483 ॥

यक्षेन्द्रो **धनानामीष्टे** । स्वयमेव धनस्येशो भवति ।

भट्टिकाव्ये—XVIII. 15.

त्वमजानन्निदं राजन्नीडिषे स्म स्वविक्रमम् ।
दातुं नेच्छसि सीतां स्म **विषयाणां** च **नेशिषे** ॥ 484 ॥

**विषयाणां** शब्दादीनां **नेशिषे** स्म । विषयान्न जितवानसि ।

नैषधे—III. 79.

अनैषधायैव जुहोति तातः
किं मां कृशानौ न शरीरशेषाम् ।

---

* मुद्रितपुस्तके न दृश्यते ।

ईष्टे तनूजन्मतनोस्स नूनं
मत्प्राणनाथस्तु नलस्तथापि ॥ 485 ॥

तनूजन्मतनोरात्मजशरीरस्येष्टे स्वामी भवतीत्यर्थः ।

शेषत्वस्याविवक्षितत्वाद् द्वितीया । किरातार्जुनीये—V. 14.

ग्रहविमानगणानभितो दिवं
ज्वलयतौषधिजेन कृशानुना ।
मुहुरनुस्मरयन्तमनुक्षपं
त्रिपुरदाहमुमापतिसेविनः ॥ 486 ॥

त्रिपुरदाहं मुहुरनुस्मरयन्तम् ।

माघे—XX. 65.

निखिलामिति कुर्वतश्चिराय
द्रुतचामीकरचारुतामिव द्याम् ।
प्रतिघातसमर्थमस्त्रमग्ने-
रथ मेघकरमस्मरन्मुरारिः ॥ 487 ॥

मुरारिः वारुणमस्त्रमस्मरत् ।

भट्टिकाव्ये—XXII 6.

द्रष्टासि प्रीतिमानारात्सखिभिः सह सेविताम् ।
सपक्षपातं किष्किन्धां पूर्वक्रीडां स्मरन्मुहुः ॥ 488 ॥

## ६१४ । कृञः प्रतियत्ने । (२. ३. ५३)

प्रतियत्नो गुणाधानम् । कृञः कर्मणि शेषे षष्ठी स्याद्गुणाधाने । एधो दकस्योपस्करणम् । 'गन्धन' (सू. 2705) इत्यादिना आत्मनेपदम् । 'उपात्प्रतियत्न' (सू. 2552) इत्यादिना सुडागमः ।

भट्टिकाव्ये—VIII. 19.

कुलभार्यां प्रकुर्वाणमहं द्रष्टुं दशाननम् ।
यामि त्वरावान् शैलेन्द्र मा कस्यचिदुपस्कृथाः ॥ 489 ॥

कस्यचिन्मा उपस्कृथाः । अशनपानादिकमतिशयवन्तं मा कार्षीरित्यर्थः ।

अस्मिन्नेव ग्रन्थे श्लो० 477. रामलक्ष्मणाविहागमस्यागमनस्योपास्कृषातां प्रतियत्नं कृतवन्तौ । आगमनस्य निश्चितत्वात्तस्यैव सुग्रीवसख्येन गुणाधानम् । आगमस्येति षष्ठी ।

६१५ । रुजार्थानां भाववचनानामज्वरेः ( २. ३. ५४ )

भावकर्तृकाणां ज्वरिवर्जितानां रुजार्थानां कर्मणि शेषे षष्ठी स्यात् ।

भट्टिकाव्ये—VIII. 121.

रावणस्येह रोक्ष्यन्ति कपीनां भीरु विक्रमाः ।
नाथस्व धृत्या वैदेहि मन्योरुज्जासयात्मनः ॥ 490 ॥

कपीनां विक्रमाः । क्रमेर्भावे घञ् । कर्तारः । रावणस्य । कर्मणि षष्ठी । रोक्ष्यन्ति भङ्क्ष्यन्ति । रुजो भङ्ग इत्यस्मात् लृट् ।

६१६ । आशिषि नाथः ( २. ३. ५५ )

आशीरर्थस्य नाथतेः शेषे कर्मणि षष्ठी स्यात् ।

अस्मिन्नेव ग्रन्थे श्लो० 490. धृत्याः । कर्मणि षष्ठी । नाथस्व । धैर्यमवलम्बस्वेत्यर्थः । 'आशिषि नाथः' (वा. 910. सू. 2687) इत्यात्मनेपदम् ।

६१७ । जासिनिप्रहणनाटक्राथपिषां हिंसायाम् । ( २. ३. ५६ )

हिंसार्थानामेषां शेषे कर्मणि षष्ठी स्यात् । चौरस्योज्जासनम् । निप्रौ संहतौ विपर्यस्तौ व्यस्तौ वा । चौरस्य निप्रहणनं प्रणिहननं निहननं प्रहणनं वा । 'नट अवस्कन्दने' चुरादिः । चौरस्योन्नाटनम् । चौरस्य क्राथनम् । वृषलस्य पेषणम् ।

अस्मिन्नेव ग्रन्थे श्लो० 490. आत्मनो मन्योः शोकस्य । कर्मणि षष्ठी । उज्जासय मन्युं हिन्धीत्यर्थः । 'जसु हिंसायामिति' चौरादिको धातुः ।

माघे—I. 37.

निजौजसोज्जासयितुं जगद्द्रुहा-
मुपाजिहीथा न महीतलं यदि ।

समाहितैरप्यनिरूपितस्ततः
पदं दृशः स्याः कथमीश मादृशाम् ॥ 491 ॥

जगद्द्रुहां कंसादीनां उज्जासयितुं तान्हन्तुम् ।

अनर्घराघवे—II. 33.

कल्पान्तकर्कशकृतान्तभयङ्करं मे
निघ्नतः क्रतुविघातकृताममीषाम् ।
नीराक्षसां वसुमतीमपि कर्तुमद्य
पुण्याहमङ्गलमिदं धनुरादधातु ॥ 492 ॥

क्रतुविघातकृताममीषां राक्षसानाम् । कर्मणि षष्ठी । निघ्नतो मे ।

भट्टिकाव्ये—VIII. 122.

राक्षसानां मयि गते रामः प्रणिहनिष्यति ।
प्राणानामपणिष्टायं रावणस्त्वामिहानयन् ॥ 493 ॥

रामो राक्षसानां प्रणिहनिष्यति । संघातविगृहीतविपर्ययग्रहणादिह विपर्यासः ।

भट्टिकाव्ये—II. 35.

धर्मोऽस्ति सत्यं तव राक्षसाय-
मन्यो व्यतिस्ते तु ममापि धर्मः ।
ब्रह्मद्विषस्ते प्रणिहन्मि येन
राजन्यवृत्तिर्धृतकार्मुकेषु ॥ 494 ॥

ब्रह्मद्विषस्ते प्रणिहन्मि । ब्रह्मद्विषं त्वां हन्मीत्यर्थः ।

माघे—XIV. 82.

निप्रहन्तुममरेशविद्विषा-
मर्थितः स्वयमथ स्वयंभुवा ।
सम्प्रति श्रयति पुत्रतामयं
कश्यपस्य वसुदेवरूपिणः ॥ 495 ॥

अमरेशविद्विषां निप्रहन्तुम् । चैद्यादीन् हन्तुमित्यर्थः ।

किरातार्जुनीये—XIV. 60.

तपोबलेनैष विधाय भूयसी-
स्तनूरदृश्याः स्विदिषून्निरस्यति ।
अमुष्य मायाविहितं **निहन्ति नः**
प्रतीपमागत्य किमु स्वमायुधम् ॥ 496 ॥

**नोऽस्माकं निहन्ति** किमु । शेषे कर्मणि षष्ठी । नोऽस्मान्निहन्ति किमु ।

माघे—I. 40.

प्रवृत्त एव स्वयमुज्झितश्रमः
क्रमेण **पेष्टुं भुवनद्विषाम**सि ।
तथापि वाचालतया युनक्ति मां
मिथस्त्वदाभाषणलोलुपं मनः ॥ 497 ॥

**भुवनद्विषां पेष्टुम्** । तान्हन्तुमित्यर्थः ।

शेषत्वाविवक्षया द्वितीया वा ।

भट्टिकाव्ये—II. 34.

अघो द्विजान्**देवयजीन्निहन्मः**
कुर्मः पुरं प्रेतनराधिवासम् ।
धर्मो ह्ययं दाशरथे निजो नो
नैवाध्यकारिष्महि वेदवृत्ते ॥ 498 ॥

भट्टिकाव्ये—VI. 102.

प्रियंवदोऽपि नैवाहं ब्रुवे मिथ्या परन्तप ।
सख्या तेन **दशग्रीवं निहन्तासि** द्विषन्तपम् ॥ 499 ॥

**दशग्रीवं निहन्तासि** । पूर्ववद् द्वितीया ।

भट्टिकाव्ये—VIII. 20.

योऽपचक्रे वनात्सीतामधिचक्रे नयं हरिः ।
विकुर्वाणः स्वरानद्य **बलं** तस्य **निहन्म्यहम्** ॥ 500 ॥

**द्वितीया** ।

माघे—XIX. 103.

उद्धतान् द्विषतस्तस्य निघ्नतो द्वितयं पपुः ।
पानार्थे रुधिरं धातौ रक्षार्थे भुवनं शराः ॥ 501 ॥

उद्धतान्द्विषतः निघ्नतः ।

चम्पूरामायणे—VI. 37.

ग—देव कपिबलमखिलकुलाचलनिलयमनिलतनयेनाहूतं पुरुहूत इव पुलोमजापहारिणमनुह्लादं रावणं रणे निहनिष्यसीति ॥ 502 ॥

## ६१८ । व्यवहृपणोः समर्थयोः । ( २. ३. ५७ )

शेषे कर्मणि षष्ठी स्यात् ।

अस्मिन्नेव ग्रन्थे श्लो० 493. रावणः प्राणानामपणिष्ट । प्राणान्विक्रीतवानित्यर्थः । पणेर्व्यवहारार्थाल्लुङि तङ् । अस्तुत्यर्थत्वाद् 'गुपूधूप' ( सू. 2303. ) इत्यादिना नायप्रत्ययः ।

## ६१९ । दिवस्तदर्थस्य । ( २. ३. ५८ )

द्यूतार्थस्य क्रयविक्रयरूपव्यवहारार्थस्य च दिवः कर्मणि षष्ठी स्यात् । शतस्य दीव्यति ।

अस्मिन्नेव ग्रन्थे श्लो० 470. रावणे बन्धुभोगानामदेवीत् । तानपि विक्रीतवानित्यर्थः ।

## ६२० । विभाषोपसर्गे । ( २. ३. ५९ )

पूर्वयोगापवादः । शतस्य शतं वा प्रतिदीव्यति ।

अस्मिन्नेव ग्रन्थे श्लो० 470. आत्मसम्पदं स्वलक्ष्मीं प्रादेवीत् विक्रीतवान् । वैकल्पिकी द्वितीया ।

## ६२२ । कृत्वोऽर्थप्रयोगे कालेऽधिकरणे । ( २. ३. ६४ )

कृत्वोऽर्थानां प्रयोगे कालवाचिन्यधिकरणे शेषे षष्ठी स्यात् । पञ्चकृत्वोऽह्नो भोजनम् । अर्थग्रहणात्सुच्प्रयोगेऽपि द्विरह्नो भोजनम् ।

अस्मिन्नेव ग्रन्थे श्लो० 470. रघूतमः एकस्याह्नः । कालवाचिन्यधिकरणार्थे षष्ठी । **शतकृत्वः** शतवारं तव स्मरति ।

नैषधे—VI. 41.

पुरः स्थितस्य क्वचिदस्य भूषा-
रत्नेषु नार्यः प्रतिबिम्बितानि ।
व्योमन्यदृश्येषु निजान्यपश्यन्
विस्मित्य विस्मित्य **सहस्रकृत्वः** ॥ 503 ॥

नार्योऽदृश्येषु नलस्य भूषारत्नेषु निजप्रतिबिम्बितानि **व्योमनि**, अकालवाचित्वात्सप्तमी, **सहस्रकृत्वो**ऽपश्यन् ।

चम्पूभारते— II. 42.

मा भून्नाशो युगपदिति नो भीरुभिर्जातु पौरैः
पूर्वैर्लब्ध्वावसरमसकृत्प्रार्थनाभिः प्रक्लृप्तम् ।
एकैकस्मिन्नहनि वितरत्येकमेकं पुमांसं
नित्यं तस्मै बलिमिह जनस्तुङ्गमन्नस्य राशिम् ॥ 504 ॥

कृत्वोऽर्थप्रयोगाभावादहनीति सप्तमी । 'संख्याया' (सू. 2085) इति कृत्वसुच् । 'द्वित्रि' (सू. 2086) इति सुच् ।

'कालाध्वनोः' (सू. 558) इति द्वितीया । अस्मिन्नेव ग्रन्थे श्लो० 218. **क्षणमूचे** । उक्तिक्रियया क्षणस्य कालस्य साकल्येन सम्बन्धात् क्षणमिति द्वितीया ।

## ६२३ । कर्तृकर्मणोः कृति । ( २. ३. ६५ )

कृद्योगे कर्तरि कर्मणि च षष्ठी स्यात् । कृष्णस्य कर्तुः कृतिः । जगतः कर्मणः कर्ता कृष्णः । 'कृद्योगा च' (वा. 1317. सू. 703) इति समासः ।

अस्मिन्नेव ग्रन्थे श्लो० 460. **पुंसाम्** । कर्तरि षष्ठी । **अगमम्** ।

भट्टिकाव्ये—VIII. 124.

**तवोपशायिका** यावद्राक्षस्यश्चेतयन्ति न ।
प्रतिसन्दिश्यतां तावद्भर्तुः **शार्ङ्गस्य** मैथिलि ॥ 505 ॥

**तव शार्ङ्गस्येति** यथाक्रमं षष्ठी ।

भट्टिकाव्ये—VII. 69.

ततो जलधिगम्भीरान्वानरान्प्रत्युवाच सा ।
इयं दानवराजस्य पूः **सृष्टिर्विश्वकर्मणः** ॥ 506 ॥

**विश्वकर्मणः** । कर्तरि षष्ठी । सृज्यत इति **सृष्टिः** । कर्मणि स्त्रियां क्तिन् ।

भट्टिकाव्ये—VI. 72.

**सख्यस्य** तव सुग्रीव **कारकः कपिनन्दनः** ।
द्रुतं **द्रष्टासि मैथिल्याः** सैवमुक्त्वा तिरोऽभवत् ॥ 507 ॥

तव **सख्यस्य** । कर्मणि षष्ठी । **कारकः** । कपीनाम् । कर्मणि षष्ठी । **नन्दनः कपिनन्दन** इति समासः । मैथिल्याः । कर्मणि षष्ठी । **द्रष्टा** ।

अस्मिन्नेव ग्रन्थे श्लो० 260. **तस्य** कार्तवीर्यस्य । कर्मणि षष्ठी । **हन्तारम्** ।

अस्मिन्नेव ग्रन्थे श्लो० 32. **दिशामीशिता** । 'अधीगर्थ' (सू. 613) इत्यादिना कर्मणि शेषे वा षष्ठी ।

चम्पूरामायणे—II. 80.

ग—विकर्तनकुलस्य यदनुकूलं गुणगणस्य यदनुगुणं यशोरूपस्य यदनुरूपं समाचारस्य यत्समुचितं प्राचीनभाग्यस्य यद्योग्यं लोकगर्हणाय यदनर्हं श्रुतस्य वा यत्सदृशं तादृशमाशयं प्रकाशयन्ती **भरतोपज्ञं** विज्ञापना ॥ 508 ॥

उपज्ञायत इत्युपज्ञा । 'आतश्चोपसर्गे' (सू. 3283) इति कर्मण्यङ् । भरतस्य । कृल्लक्षणा कर्तरि षष्ठी । **भरतोपज्ञम्** । 'उपज्ञोपक्रम' (सू. 824) इति नपुंसकत्वम् ।

अस्मिन्नेव ग्रन्थे श्लो० 371. **भूतानामनभिद्रुहः** । 'क्रुध' (सू. 576) इति कर्मसंज्ञायां भूतानामिति कर्मणि षष्ठी ।

भट्टिकाव्ये—VI. 79.

धारयैः कुसुमोर्मीणां पारयैर्बाधितुं जनान् ।
शाखिभिर्वा हतो भूयो हृदयानामुदेजयैः ॥ 509 ॥

कुसुमोर्मीणां हृदयानामिति कर्मणि षष्ठी ।

अस्मिन्नेव ग्रन्थे श्लो० 41. चेतसामिति कर्मणि षष्ठी । अनवनी ॥

अस्मिन्नेव ग्रन्थे श्लो० 190. धातुरिति कर्तरि षष्ठी । सृज्यत इति सृष्टिः ।
कर्मणि क्तिन्प्रत्ययः ।

माघे—II. 9.

करदीकृतभूपालो भ्रातृभिर्जित्वरैर्दिशाम् ।
विनाप्यसदलंभूष्णुरिज्यायै तपसः सुतः ॥ 510 ॥

दिशां जित्वरैः ।

अस्मिन्नेव ग्रन्थे श्लो० 63. कृत्रिमपत्त्रिपङ्क्तेः । कर्मणि षष्ठी । चिक्रंसया क्रमितुमिच्छया ।

भट्टिकाव्ये—VI. 78.

ध्वनीनामुद्भमैरेभिर्मधूनामुद्धयैर्भृशम् ।
आजिघ्रैः पुष्पगन्धानां पतङ्गैर्लापिता वयम् ॥ 511 ॥

ध्वनीनां मधूनां पुष्पगन्धानाम् । कर्मणि षष्ठी ।

भट्टिकाव्ये—VI. 77.

पक्षिभिर्वितृदैर्यूनां शाखिभिः कुसुमोत्किरैः ।
अज्ञो यो यस्य वा नास्ति प्रियः प्रग्लो भवेन्न सः ॥ 512 ॥

यूनाम् । कुसुमानाम् । कर्मणि षष्ठी । कुसुमानामुत्किराः कुसुमोत्किरा इति समासः ।

भट्टिकाव्ये—VI. 80.

ददैर्दुःखस्य मादृग्भ्यो धायैरामोदमुत्तमम् ।
लिम्पैरिव तनोर्वातैश्चेतयस्याज्ज्वलो न कः ॥ 513 ॥

**दुःखस्य** । कर्मणि षष्ठी । शेषत्वविवक्षायामेव षष्ठीविधानात् इह तदविवक्षायां आमोदमिति कर्मणि द्वितीया । **तनोः** । कर्मणि षष्ठी ।

### ६२४ । उभयप्राप्तौ कर्मणि । ( २. ३. ६६ )

उभयोः कर्तृकर्मणोः प्राप्तिर्यस्मिन्कृति तत्र कर्मण्येव षष्ठी स्यात् । आश्चर्यो गवां दोहोऽगोपेन । गवामिति कर्मणि षष्ठी । दोहः कृत्प्रत्ययः । अगोपेन । कर्तरि तृतीया ।

भट्टिकाव्ये—VIII. 125.

**पुरः प्रवेशमाश्चर्यं** बुध्वा **शाखामृगेण** सा ।
चूडामणिमभिज्ञानं ददौ रामस्य संमतम् ॥ 514 ॥

**शाखामृगेण** कर्त्रा । **पुरः** । कर्मणि षष्ठी । **प्रवेशम्** । कृत् ।

भट्टिकाव्ये—IX. 127.

**पुंसा** भक्ष्येण **बन्धूनामा**त्मानं रक्षितुं **वधः** ।
क्षमिष्यते दशास्येन कत्येयं तव दुर्मतिः ॥ 515 ॥

**पुंसा** रामेण । कर्तरि तृतीया । **बन्धूनां** खरादीनाम् । कर्मणि षष्ठी । **वधः** । कृत् ।

**वा०** । स्त्रीप्रत्यययोरकाकारयोर्नायं नियमः । ( 1513. )

मेदिका बिभित्सा वा रुद्रस्य जगतः ।

**वा०** । शेषे विभाषा । ( 1513.)

स्त्रीप्रत्यय इत्येके । विचित्रा जगतः कृतिर्हरेर्हरिणा वा । केचिदविशेषेण विभाषामिच्छन्ति । शब्दानामनुशासनमाचार्येणाचार्यस्य वा ।

अनर्घराघवे—II. 50.

**ते**जोमयं तमोमयमन्यतरस्यां तदेव दिक्चक्रम् ।
किमपि विचित्रा **धात्रा सृष्टिरियं भुवनकोशस्य** ॥ 516 ॥

**भुवनकोशस्य** ब्रह्माण्डस्य । कर्मणि षष्ठी । **धात्रा** । वैभाषिकी कर्तरि तृतीया । **सृष्टिः** । स्त्रियां क्तिन् ।

नैषधे—II. 61.

अथवा भवतः प्रवर्तना न कथं पिष्टमियं पिनष्टि नः ।
स्वत एव सतां परार्थता ग्रहणानां हि यथा यथार्थता ॥ 517 ॥

प्रवर्तना प्रेरणा । ण्यासश्रन्थो युच् । कृति स्त्रियाम् आकारान्तः प्रवर्तना-शब्दः । अतो नायं नियमः । नोऽस्माकम् । कर्तरि षष्ठी । भवतः । कर्मणि षष्ठी ।

अनर्घराघवे—I. 10.

तमृषिं मनुष्यलोकप्रवेशविश्रामशाखिनं वाचाम् ।
सुरलोकादवतारप्रान्तरखेदच्छिदं वन्दे ॥ 518 ॥

शब्दानामनुशासनमाचार्येणाचार्यस्य वेतिवत् वाचामिति कर्तरि वैभाषिकी षष्ठयस्तु । मनुष्यलोकस्येति कर्मणि षष्ठी । प्रवेशः । कृत् । अत्र समासः कृतः । 'कर्मणि च' (सू. 708) इति सूत्रे या कर्मणि षष्ठी विहिता तस्याः षष्ठ्याः समासनिषेधात् ।

चम्पूरामायणे—V. 25.

उपन्नवृक्षस्य परोक्षभावादुपेत्य पृथ्वीं सुचिरं लुठन्त्याः ।
नक्तंचरस्त्रीमुखकर्शितायाः सीतालतायास्त्रिजटा जटाभूत् ॥ 519 ॥

सीतालतायास्त्रिजटा जटाभूत् । सीतालतायाः । षष्ठी ।

नैषधे—III. 69.

नृपेण पाणिग्रहणे स्पृहेति
नलं मनः कामयते ममेति ।
आश्लेषि न श्लेषकवेर्भवत्याः
श्लोकद्वयार्थः सुधिया मया किम् ॥ 520 ॥

भवत्यास्तव सम्बन्धि । नृपेण कर्त्रा । पाणिग्रहणं पाणिपीडनम् । उभयप्राप्तौ कर्मणि विवक्षितायाः षष्ठ्याः 'कर्मणि च' (सू.708) इति निषेधेऽपि शेषे षष्ठीसमास इति व्याख्यातम् । समासात्पूर्वं 'उभयप्राप्तौ कर्मणी'ति कर्मणि षष्ठ्यां समासकाले शेषे षष्ठी कथम् । तस्मात् नृपेणेति कर्तरि तृतीया । भवत्याः इति कर्मणि षष्ठी । पाणिग्रहणं विवाहः कृत् इति मन्ये ।

६२५ । क्तस्य च वर्तमाने । ( २. ३. ६७ )

वर्तमानार्थस्य क्तस्य योगे षष्ठी स्यात् । 'न लोक' (सू. 627) इति निषेधस्यापवादः । 'मतिबुद्धि' (सू. 3089) इति वर्तमाने क्तः । 'क्तेन च' (सू. 706) इति क्तेन षष्ठी न समस्यते ।

अस्मिन्नेव ग्रन्थे श्लो॰ 514. **रामस्य संमतं** रामेण संमन्यमानम् ।

माघे—XV. 14.

यदपूपुजस्त्वमिह पार्थ
मुरजितमपूजितं सताम् ।
प्रेम विलसति महत्तदहो
दयितं जनः खलु गुणीति मन्यते ॥ 521 ॥

**सतामपूजितं** सद्भिरपूज्यमानम् ।

माघे—XVI. 15.

विजितक्रुधमीक्षतामसौ
महतां त्वां **महितं महीभृताम्** ।
असकृज्जितसंयतं पुरो
मुदितः सप्रमदं महीपतिः ॥ 522 ॥

**महीभृतां महितं** पूज्यमानम् ।

किरातार्जुनीये—XI. 42.

न ज्ञातं तात यत्नस्य पौर्वापर्यममुष्य **ते** ।
शासितुं येन मां धर्मं मुनिभिस्तुल्यमिच्छसि ॥ 523 ॥

**ते न ज्ञातम्** । त्वया न ज्ञायते ।

किरातार्जुनीये—XII. 31.

किमुपेक्षसे कथय नाथ
न **तव विदितं** न किञ्चन ।

आतुमलमभयदार्हसि न-
स्त्वयि मास्म शासति भवत्पराभवः ॥ 524 ॥

**तव न विदितं** त्वयाज्ञायमानम् ।

रघुवंशे—II. 16.

तां देवतापित्रतिथिक्रियार्था-
मन्वग्ययौ मध्यमलोकपालः ।
बभौ च सा तेन **सतां मतेन**
श्रद्धेव साक्षाद्विधिनोपपन्ना ॥ 525 ॥

**सतां मतेन** सद्भिः संमन्यमानेन ।

अस्मिन्नेव ग्रन्थे श्लो० 479. **भवतां विदितमेव** भवद्भिर्ज्ञायमानमेव ।

माघे—XV. 46.

विहितं मयाद्य सदसीद-
**मपमृषित**मच्युतार्चनम् ।
**यस्य** नमयतु स चापमयं
चरणः कृतः शिरसि सर्वभूभृताम् ॥ 526 ॥

**यस्यापमृषितम**तितिक्षितमसोढमित्यर्थः । मृष तितिक्षायामिति धातोः कर्मणि क्तः । उपसर्गवशाद्विपरीतार्थता । चकाराद्वर्तमानार्थता । षष्ठी ।

## ६२६ । अधिकरणवाचिनश्च । (२. ३. ६७)

क्तस्य योगे षष्ठी स्यात् । इदमेषामासितं शयितं गतं भुक्तं वा । 'क्तोऽधिकरणे च ध्रौव्यगतिप्रत्यवसानार्थेभ्यः' (सू. 3087) इत्यधिकरणे क्तः । 'अधिकरणवाचिना च' (सू. 707) इति क्तेन षष्ठी न समस्यते । नपुंसके भाव उपसंख्यानम् इति षष्ठी शेषत्वविवक्षायाम् ।

भट्टिकाव्ये VII. 105.

निकुञ्जे तस्य वर्तित्वा रम्ये प्रक्ष्वेदिताः परम् ।
मणिरत्नाधिशयितं प्रत्युदैक्षन्त तोयधिम् ॥ 527 ॥

अधिशेरतेऽत्रेत्यधिशयितमधिष्ठानम् इत्युक्तौ मणिरत्नाधिशयितमिति समासश्चिन्त्यः। तस्मात् 'अधिशीङ्स्थासां कर्म' (सू. 542) इति सकर्मकत्वात् अधिशयितः इति कर्मणि क्तः वक्तव्यः, मृगाध्यासितशाड्वलानीतिवत्।

भट्टिकाव्ये—VIII, 126.

**रामस्य शयितं भुक्तं जल्पितं हसितं स्थितम्।**
**प्रक्रान्तं च मुहुः पृष्ट्वा हनूमन्तं व्यसर्जयत्॥** 528 ॥

शेतेऽस्मिन्निति **शयितं** शयनस्थानम्। ध्रौव्येऽधिकरणे क्तः। भुङ्क्तेऽस्मिन्निति **भुक्तं** भोजनस्थानम्। प्रत्यवसानार्थेऽधिकरणे क्तः। तिष्ठत्यस्मिन्निति **स्थितं** निवासस्थानम्। ध्रौव्येऽधिकरणे क्तः। प्रक्रामत्यस्मिन्निति **प्रक्रान्तं** चङ्क्रमणस्थानम्। गत्यामधिकरणे क्तः। एतद्योगे **रामस्येति** षष्ठी। **जल्पितम्। हसितम्।** नपुंसके भावे क्तः। एतद्योगे नपुंसके भाव इति शेषे षष्ठी।

मुकुन्दस्यासितमिदमिदं यातं रमापतेः।
भुक्तमेतदनन्तस्येत्यूचुर्गोप्यो दिदृक्षवः॥

भावे क्तप्रत्ययवत् अधिकरणे क्तप्रत्ययेऽपि नपुंसकम्।

**६२७। न लोकाव्ययनिष्ठाखलर्थतृनाम्। (२. ३. ६९)**

एषां प्रयोगे षष्ठी न स्यात्। लादेशः - कुर्वन् कुर्वाणो वा सृष्टिं हरिः। उः - हरिं दिदृक्षुः, अलङ्करिष्णुर्वा। उक - दैत्यान्घातुको हरिः।

**वा॰। कमेरनिषेधः। (1519.)**

लक्ष्म्याः कामुको हरिः। अव्ययम् - जगत्सृष्ट्वा। सुखं कर्तुम्। निष्ठा - विष्णुना हता दैत्याः, दैत्यान्हतवान्विष्णुः। खलर्थाः - ईषत्करः प्रपञ्चो हरिणा। तृन् इति प्रत्याहारः। शतृशानचाविति तृशब्दादारभ्य तृनो आ नकारात्। शानन् - सोमं पवमानः। चानश् - आत्मानं मण्डयमानः। शतृ - वेदमधीयन्। तृन् - कर्ता लोकान्।

**वा॰। द्विषः शतुर्वा। (1522.)**

मुरस्य मुरं वा द्विषन्। सर्वोऽयं कारकषष्ठ्याः प्रतिषेधः। शेषे षष्ठी तु स्यादेव। ब्राह्मणस्य कुर्वन्। नरकस्य जिष्णुः।

अस्मिन्नेव ग्रन्थे श्लो० 446. असौ हनूमान् दधदभिज्ञानम् । लप्रयोगे प्रतिषेधाद्द्वितीया । ल इति शानन्नादयो गृहीताः । दारुणं कर्म चिकीर्षुः । उकार-प्रश्लेषात्षष्ठ्याः प्रतिषेधः । भर्तुरन्तिकं गामुकोऽपि गमनशीलोऽपि । उकप्रयोगे षष्ठ्याः प्रतिषेधः ।

भट्टिकाव्ये—VIII. 128.

कृत्वा कर्म यथोद्दिष्टं पूर्वकार्याविरोधि यः ।
करोत्यभ्यधिकं कृत्यं तमाहुर्दूतमुत्तमम् ॥ 529 ॥

कृत्वेत्यव्ययप्रयोगे षष्ठ्याः प्रतिषेधः ।

भट्टिकाव्ये—VIII. 129.

वैदेहीं दृष्टवान् कर्म कृत्वान्यैरपि दुष्करम् ।
यशो यास्याम्युपादाता वार्तामाख्यायकः प्रभोः ॥ 530 ॥

अहमद्य वैदेहीं दृष्टवान् । निष्ठाप्रयोगे प्रतिषेधः । अन्यैरपि दुष्करम् । खल्प्रयोगे प्रतिषेधः । यश उपादाता । तृन्नन्तप्रयोगे प्रतिषेधः ।

नैषधे— II. 6.

दधतो बहुशैवलक्ष्मतां
धृतरुद्राक्षमधुव्रतं खगः ।
स नलस्य ययौ करं पुनः
सरसः कोकनदभ्रमादिव ॥ 531 ॥

बहुशैवलक्ष्मतां दधतः । लटः शतृप्रत्ययः । लप्रयोगे प्रतिषेधः ।

अस्मिन्नेव ग्रन्थे श्लो० 327. मध्यं दधाना । लटः शानच् । पूर्ववत्प्रतिषेधः ।

भट्टिकाव्ये—II. 21.

विद्यामथैनं विजयां जयां च
रक्षोगणं क्षिप्नुमविक्षतात्मा ।
अध्यापिपद्गाधिसुतो यथाव-
न्निघातयिष्यन् युधि यातुधानान् ॥ 532 ॥

**यातुधानान् निघातयिष्यन्** । हन्तेर्ण्यन्तात्लृटः शतृप्रत्ययः । **रक्षोगणं क्षिप्नुम्** । क्नुप्रत्ययः । लप्रयोगात् क्नोरुकारान्तत्वात्प्रतिषेधः ।

अस्मिन्नेव ग्रन्थे श्लो० 316. **बाणान्दीव्यमानम्** । 'दिवः कर्म च' (सू. 562) इति करणस्य कर्मत्वम् । **गदा अस्यमानम्** । **शात्रवान् निघ्नानम्** । चानश् । लप्रयोगे प्रतिषेधः ।

भट्टिकाव्ये—VI. 139.

अहं तु शुश्रुवान्भ्रात्रा स्त्रियं भुक्तां कनीयसा ।
उपेयिवाननूचानैर्निन्दितस्त्वं लतामृग ॥ 533 ॥

**स्त्रियमुपेयिवान्** । लिटः क्वसुः । लप्रयोगे प्रतिषेधः ।

अस्मिन्नेव ग्रन्थे श्लो० 50. **मामिच्छुः** । उप्रत्ययः ।

भट्टिकाव्ये—I. 20.

स शुश्रुवांस्तद्वचनं मुमोह
राजासहिष्णुः सुतविप्रयोगम् ।
अहंयुनाथ क्षितिपः शुभंयु-
रूचे वचस्तापसकुञ्जरेण ॥ 534 ॥

**वचनं शुश्रुवान्** । लिटः क्वसुः । लप्रयोगात्प्रतिषेधः । **सुतविप्रयोगमसहिष्णुः** । उकारान्तत्वात्प्रतिषेधः ।

अस्मिन्नेव ग्रन्थे श्लो० 352. **भ्रामरं** धयतीति **धारुम्** । धेटो रुः ।

भट्टिकाव्ये—I. 19.

आख्यन्मुनिस्तस्य शिवं समाधे-
र्विघ्नन्ति रक्षांसि वने क्रतूंश्च ।
तानि द्विषद्वीर्यनिराकरिष्णु-
स्तृणेढु रामः सह लक्ष्मणेन ॥ 535 ॥

द्विषतां वीर्यं निराकरिष्णुः । इष्णुच् । द्वितीया इति योगविभागात्समासः ।

चम्पूभारते—I. 20.

वेशन्तपङ्कविहृतेर्विनिवृत्य सद्यः
प्रत्युद्यतां ध्वनिषु मत्सरिणां हयस्य ।
भूदार एव वनपोत्रवतामतानी-
द्भूदारशब्दमसहिष्णुरिवान्तमेषाम् ॥ 536 ॥

इष्णुच् ।

अस्मिन्नेव ग्रन्थे श्लो० 134. रम्भां तरुं परं जिष्णुः किमु । ग्स्नुः ।

चम्पूभारते—V. 79.

दीनधीः स तपसा हिमशैले
दृक्पथं पुरहराद्गृहयालोः ।
आददे वरमथो विजयौ द्वा-
वन्तरेण युधि पाण्डवरोधम् ॥ 537 ॥

दृग्पथं गृहयालोः । आलुच् ।

अस्मिन्नेव ग्रन्थे श्लो० 77. दन्दशूकान् राक्षसान् । जिघांसा । उप्रत्ययः ।

भट्टिकाव्ये—VII. 24.

कम्राभिरावृतस्त्रीभिराशंसुः क्षेममात्मनः ।
इच्छुः प्रसादं प्रणमन् सुग्रीवः प्रावदन्नृपम् ॥ 538 ॥

क्षेममाशंसुः प्रसादमिच्छुः । उप्रत्ययः ।

भट्टिकाव्ये—II. 37.

जग्मुः प्रसादं मुनिमानसानि
द्यौर्वर्षुका पुष्पचयं बभूव ।
निर्व्याजमिज्या ववृते वचश्च
भूयो बभाषे मुनिना कुमारः ॥ 539 ॥

पुष्पचयं वर्षुका । उकञ् ।

भट्टिकाव्ये—VI. 116.

प्रियंभावुकतां यातस्त्वं क्षिपन्योजनं मृतम् ।
स्वर्गे प्रियंभविष्णुश्च कृत्स्नं शक्तोऽप्यबाधयन् ॥ 540 ॥

मृतं तं क्षिपन् लादेशः । प्रियम्भावुकतां यातः । निष्ठा ।

भट्टिकाव्ये—VI. 115.

आढ्यङ्करणविक्रान्तो महिषस्य सुरद्विषः ।
प्रियङ्करणमिन्द्रस्य दुष्करं कृतवान् वधम् ॥ 541 ॥

वधं कृतवान् । निष्ठा ।

भट्टिकाव्ये—VII. 1.

ततः कर्ता वनाकम्पं ववौ वर्षाप्रभञ्जनः ।
नभः पूरयितारश्च समुन्नेमुः पयोधराः ॥ 542 ॥

वनाकम्पं कर्ता । तत्साधुकारी । तृन् । पयोधरा नभःपुरयितारः । पूर्ववत्तृन् ।

भट्टिकाव्ये— V. 10.

वृतस्त्वं पात्रिसमितैः खट्वारूढः प्रमादवान् ।
पानशौण्डः श्रियं नेता नात्यन्तीनत्वमुन्मनाः ॥ 543 ॥

श्रियमत्यन्तीनत्वं न नेता । तृन् ।

भट्टिकाव्ये—XVIII. 40.

दातुः स्वातुर्द्विषां मूर्ध्नि यष्टुस्तर्पयितुः पितॄन् ।
शुद्धाभग्नविपन्नस्य किं दशास्यस्य शोचसि ॥ 544 ॥

पितॄन् तर्पयिता । तृप तृप्तौ चुरादिः । तृन् ।

भट्टिकाव्ये—X. 15.

घनगिरीन्द्रविलङ्घनशालिना
वनगता वनजद्युतिलोचना ।
जनमता ददृशे जनकात्मजा
तरुमृगेण तरुस्थलशायिनी ॥ 545 ॥

जनेन मता पतिव्रतेयमित्यवबुद्धा। भूते निष्ठायां रूपम्। कर्तरि तृतीया। 'कर्तृकरणे' (सू. 694) इति समासः। वर्तमाने क्तश्चेत् 'क्तस्य च वर्तमाने' (सू. 625) इति षष्ठी स्यात्। 'क्तेन च पूजायाम्' (सू. 706) इति समासप्रतिषेधश्च स्यात्।

माघे—VII. 49.

उपरिजतरुजानि याचमानां
कुशलतया परिरम्भलोलुपोऽन्यः।
प्रथितपृथुपयोधरां गृहाण
स्वयमिति मुग्धवधूमुदास दोर्भ्याम् ॥ 546 ॥

**तरुजानि याचमानाम्**। शानच्।

अस्मिन्नेव ग्रन्थे श्लो० 212. **विजयमिच्छुभिः**। उप्रत्ययः।

माघे—XIV. 46.

निर्गुणोऽपि विमुखो न भूपते-
र्दानशौण्डमनसः पुरोऽभवत्।
**वर्षुकस्य** किमपः कृतोन्नते-
रम्बुदस्य परिहार्यमूषरम् ॥ 547 ॥

**अपो** जलानि **वर्षुकस्य** वर्षणशीलस्य। उकञ्।

माघे—XX. 39.

**प्रकृतिं प्रतिपादुकैश्च** पादैः
चक्लृपे भानुमतः पुनः प्रसत्तुम्।
तमसोऽभिभवादपास्य मूर्च्छा-
मुदजीवत्सहसैव जीवलोकः ॥ 548 ॥

**प्रकृतिं** स्वभावं **प्रतिपादुकैः**। उकञ्।

माघे—XX. 69.

सवितुः **परिभावुकैर्मरीची**-
नचिराभ्यक्तमतङ्गजाङ्गभाभिः।

जलदैरभितः स्फुरद्भिरुच्चै-
विंदधे केतनतेव धूमकेतोः ॥ 549 ॥

सवितुर्मरीचीन् **परिभावुकैः** तिरस्कारकैः । उकञ् ।

अस्मिन्नेव ग्रन्थे श्लो० 140. **कौबेरदिग्भागमपास्य** । अव्ययप्रयोगात्प्रतिषेधः । आगस्त्यं **मार्गमवतीर्णः** । निष्ठाप्रयोगात्प्रतिषेधः ।

माघे—XIV. 76.

**गच्छतापि गगनाग्रमुच्चकै-**
र्यस्य भूधरगरीयसांघ्रिणा ।
क्रान्तकन्धर इवाबलो बलिः
**स्वर्गभर्तु**रगमत्**सुबन्धताम्** ॥ 550 ॥

**गगनाग्रं गच्छता** । शतृ । बलिः वैरोचनिः **स्वर्गभर्तु**रिन्द्रस्य । सुखेन बध्यत इति सुबन्धः तस्य भावस्तत्ता तां अगमत् । खल्प्रत्ययः । कृद्योगलक्षणाया एव षष्ठ्या निषेधात्स्वर्गभर्तुरिति शेषे षष्ठी ।

रघुवंशे—I. 72.

तस्मान्मुच्ये यथा तात संविधातुं तथार्हसि ।
**इक्ष्वाकूणां दुरापे**ऽर्थे त्वदधीना हि सिद्धयः ॥ 551 ॥

**इक्ष्वाकूणां दुरापे** । खल् । **शेषे षष्ठी** ।

रघुवंशे—XVI. 81.

त्रैलोक्यनाथप्रभवं प्रभावा-
त्कुशं द्विषामङ्कुश**मस्त्रविद्वान्** ।
मानोन्नतेनाप्यभिवन्द्य मूर्ध्ना
मूर्धाभिषिक्तं कुमुदो बभाषे ॥ 552 ॥

अस्त्रं विद्वान् **अस्त्रविद्वान्** । षष्ठीनिषेधाद्द्वितीया । 'द्वितीयाश्रित' (सू. 686) इत्यत्र गम्यादीनामुपसंख्यानात्, द्वितीयेति योगविभागाद्वा समासः ।

चम्पूरामायणे—II. 1.

**गच्छता दशरथेन निर्वृतिं**
**भूभुजामसुलभां** भुजाबलात् ।

मातुलस्य नगरे युधाजितः
स्थापितौ भरतलक्ष्मणानुजौ ॥ 553 ॥

**निर्वृतिं गच्छता** । शतृ । **भूभुजामसुलभाम्** । खल् । शेषे षष्ठी ।

भट्टिकाव्ये—VII. 38.

सदोद्गारसुगन्धीनां **फलानामलमाशिताः** ।
उत्कारेषु च धान्यानामनभीष्टपरिग्रहाः ॥ 554 ॥

**फलानामाशिताः** । आशितशब्दस्य सुहितार्थत्वात् 'पूरण' ( सू. 705 ) इत्यादिना षष्ठीसमासप्रतिषेधः । एतस्मादेव ज्ञापकात्करणे षष्ठी इति मल्लिनाथः । फलानामाशितः फलान्याशितः । माषाणामश्नीयादितिवत् शेषे षष्ठी । कृद्योगषष्ठ्याः प्रतिषेधः ।

अस्मिन्नेव ग्रन्थे श्लो॰ 292. **अग्रजस्यानुकुर्वन्तः** । शेषे षष्ठी ।

नैषधे—II. 29.

सदृशी तव शूर सा परं
जलदुर्गस्थमृणालजिद्भुजा ।
अपि मित्रजुषां सरोरुहां
**गृहयालुः** करलीलया **श्रियः** ॥ 555 ॥

सरोरुहां **श्रियः** करलीलया **गृहयालुः** । आलुच् ।

चम्पूभारते—V. 29.

प्रार्थ्यमानपददर्शनं चिरा-
त्पश्यतः पथि भवन्तमग्रजम् ।
विस्मयाम्बुनिधिरेष मेऽधुना
वीरवर्य **भवतापि दुस्तरः** ॥ 556 ॥

खल् । **भवतापि दुस्तरः** । भवतापीति कर्तरि तृतीया ।

किरातार्जुनीये—II. 2.

यदवोचत वीक्ष्य मानिनी
परितः स्नेहमयेन चक्षुषा ।

अपि **वागधिपस्य दुर्वचं**
वचनं तद्विदधीत विस्मयम् ॥ 557 ॥

**वागधिपस्य** बृहस्पतेरपि **दुर्वचं** वक्तुमशक्यम् । शेषे षष्ठी ।

भट्टिकाव्ये—VII. 17.

नावैत्याप्यायितारं किं **कमलानि** रविं कपिः ।
दीपितारं दिनारम्भे निरस्तध्वान्तसंचयम् ॥ 558 ॥

**कमलान्याप्यायितारं** साधु वर्धयन्तम् । तृन् ।

भट्टिकाव्ये—VII. 18.

अतीते वर्षुके काले प्रमत्तः स्थायुको गृहे ।
**गामुको** ध्रुवमध्वानं सुग्रीवो **वालिना गतम्** ॥ 559 ॥

**वालिना गतम्** । निष्ठा । **अध्वानं गामुकः** साधु गन्ता । उकञ् ।

नैषधे—V. 102.

शुद्धवंशजनितोऽपि गुणस्य
स्थानतामनुभवन्नपि शक्रः ।
**क्षिप्नुरेन**मृजुमाशु सपक्षं
सायकं धनुरिवाजनि वक्रः ॥ 560 ॥

शक्रः **एनं** नलं सायकं जनुरिव **क्षिप्नुः** । क्नुप्रत्ययः ।

**वा०** । कमेरनिषेधः (1519.)

लक्ष्म्याः कामुको हरिः ।

नैषधे—I. 108.

पयोनिलीनाभ्र**मुकामुका**वली-
रदाननन्तोरगपुच्छसुच्छवीन् ।
जलाधिरुद्धस्य तटान्तभूमिदो
मृणालजालस्य मिषाद्बभार यः ॥ 561 ॥

**अभ्रमुः कामुक** इति षष्ठीसमासः ।

वा० । द्विषः शतुर्वा । (1522.)

वैकल्पिकः षष्ठीप्रतिषेधः ।

माघे—II. 1.

इयक्षमाणेनाहूतः पार्थेनाथ **द्विषन्मुरम्** ।
अभिचैद्यं प्रतिष्ठासुरासीत्कार्यद्वयाकुलः ॥ 562 ॥

**मुरं द्विषन्** ।

६२८ । अकेनोर्भविष्यदाधमर्ण्ययोः । ( २. ३. ७० )

भविष्यत्यकस्य भविष्यदाधमर्ण्यार्थेनश्च योगे षष्ठी न स्यात् । सतः पालकोऽवतरति । व्रजं गामी । शतं दायी ।

'तुमुन्ण्वुलौ' (सू. 3175) इति भविष्यदर्थे ण्वुल् । 'भविष्यति गम्यादयः' (सू. 3171) इति भविष्यदर्थे इनिः । 'आवश्यकाधमर्ण्ये' (सू. 3311) इति णिनिः ।

अस्मिन्नेव ग्रन्थे श्लो० 530. प्रभोर्वार्तामाख्यायकः । आख्यास्यन् । भविष्यदर्थे ण्वुल् ।

अस्मिन्नेव ग्रन्थे श्लो० 384. **मित्रकार्याणि कारकाः** । करिष्यन्तः । पूर्ववत् ण्वुल् ।

माघे—VI. 7.

रतिपतिप्रहितेव कृतक्रुधः
प्रियतमेषु **वधूरनुनायिका** ।
बकुलपुष्परसासवपेशल-
ध्वनिरगान्निरगान्मधुपावलिः ॥ 563 ॥

कृतक्रुधो **वधूरनुनायिकानुनेष्यन्ती** । पूर्ववत् ण्वुल् ।

चम्पूभारते—V. 84.

**एतानि याचक**मिह द्विजवेषगूढं
मा लब्धकाममभराधिपतिं कृथास्त्वम् ।

आज्ञापथात्स्खलसि चेदणुमात्रमस्मा-
द्वध्यो भविष्यसि सुखेन रणे रिपूणाम् ॥ 564 ॥

**एतानि याचकं** याचिष्यमाणम् । पूर्ववत् ण्वुल् ।

चम्पूभारते—VI. 21.

विमतानपि तैर्जित्वा **विवासमिव दायकः** ।
अक्षेष्वकुरुतावृत्तिमवनीन्द्रेण धर्मभूः ॥ 565 ॥

धर्मभूः **विवासं दायक** इव वितरिष्यमाण इव । पूर्ववत् ण्वुल् । 'ण्वुल्तृचौ' (सू. 2895) इत्यत्र तु न षष्ठीप्रतिषेधः ।

अस्मिन्नेव ग्रन्थे श्लो० 507. सुग्रीवस्तव **सख्यस्य कारकः** । कर्मणि षष्ठी ।

चम्पूभारते—II. 65.

धर्मभूरथ सहोदरैः समं
धौम्यमध्वनि समीक्ष्य विश्रुतम् ।
**प्राणिनामयमहिंसको**ऽपि सन्
पादपीडनममुष्य कृतवान् ॥ 566 ॥

**प्राणिनामयमहिंसको**ऽपि । कर्मणि षष्ठी ।

किरातार्जुनीये—IV. 9.

कपोलसंश्लेषि विलोचनत्विषा
विभूषयन्तीमवतंसकोत्पलम् ।
सुतेन पाण्डोः **कलमस्य गोपिकां**
निरीक्ष्य मेने शरदः कृतार्थता ॥ 567 ॥

**कलमस्य गोपिकाम्** । कर्मणि षष्ठी ।

माघे—II. 98.

ये चान्ये कालयवनसाल्वरुक्मिद्रुमादयः ।
तमस्स्वभावास्तेऽप्येनं प्रदोषम**नुयायिनः** ॥ 568 ॥

कालयवनादय **एनं** चैद्यं **अनुयायिनः** अनुयास्यन्तः । 'भविष्यति गम्यादयः' (सू. 3171) इति णिनिः ।

नैषधे—VI. 99.

साधोरपि स्वः खलु गामिताधो-
गमी न तु स्वर्गमितः प्रयाणे ।
इत्यायती चिन्तयतो हृदि द्वे
द्वयोरुदर्कः किमु शर्करे न ॥ 569 ॥

**स्वर्गं गमी** । स्वर्गं गमिष्यति । पूर्ववण्णिनिः ।

रघुवंशे—XVII. 8.

तद् त्मसम्भवं राज्ये मन्त्रिवृद्धाः समादधुः ।
स्मरन्तः पश्चिमामाज्ञां भर्तुः **संग्रामयायिनः** ॥ 570 ॥

**सङ्ग्रामयायिनः** संग्रामं यास्यतः । आवश्यकार्थे णिनिः ।

नैषधे—V. 92.

दानपात्रमधमर्णमिहैक-
ग्राहि **कोटिगुणितं** दिवि **दायि** ।
साधुरेति सुकृतैर्यदि कर्तुं
पारलौकिककुसीदमसीदत् ॥ 571 ॥

कोटिगुणितं **दायि** । आधमर्ण्ये णिनिः ।

## ६२९ । कृत्यानां कर्तरि वा । (२. ३. ७१)

षष्ठी वा स्यात् । मया मम वा सेव्यो हरिः । कर्तरीति किम् । गेयो माणवकः साम्नाम् । 'भव्यगेय' (सू. 2894) इति कर्तरि यद्विधानात् अनभिहितं कर्म ।

भट्टिकाव्ये—VI. 48.

लभ्या कथं नु वैदेही शक्यो द्रष्टुं कथं हरिः ।
सह्यः कथं वियोगश्च **गद्यमेतत्त्वया मम** ॥ 672 ॥

एतत्सर्वं **त्वया मम गद्यं** वाच्यम् । त्वयेति कर्तरि तृतीया । ममेति शेषत्व-विवक्षायां कर्मणि षष्ठी ।

भट्टिकाव्ये—VI. 51.

ऋश्यमूकेऽनवद्योऽस्ति पम्पभ्रातृवधः कपिः ।
सुग्रीवो नाम **वर्योऽसौ भवता** चारुविक्रमः ॥ 573 ॥

असौ सुग्रीवो **भवता वर्यः** । मित्रत्वेनाप्रतिबन्धं वरणीय इत्यर्थः । स्त्रियामस्य निपातनात्पुंसि प्रयोगः कवेः स्वातन्त्र्यात् । यद्वा वार्य इति ण्यदन्तपाठः प्रत्युदाहरणार्थः ।

भट्टिकाव्ये—VIII. 130.

**राक्षसेन्द्रस्य संरक्ष्यं मया** लव्यमिदं वनम् ।
इति संचिन्त्य सदृशं नन्दनस्याभनक् कपिः ॥ 574 ॥

**राक्षसेन्द्रस्य संरक्ष्यम्** । विकल्पात्कर्तरि षष्ठी । इदं वनं **मया** लव्यं छेद्यम् । विकल्पात्कर्तरि तृतीया ।

भट्टिकाव्ये—VI. 57.

**नाखेयः** सागरोऽप्यन्यस्तस्य सद्भृत्यशालिनः ।
मन्युस्तस्य **त्वया मार्ग्यो मृज्यः** शोकश्च **तेन** ते ॥ 575 ॥

**तस्य** सुग्रीवस्य । कर्तरि षष्ठी । अन्यः सागरोऽपि **नाखेयः** । अपि तु खननीय एव । तस्य मन्युः, **त्वया** कर्तरि तृतीया, **मार्ग्यः** ।

भट्टिकाव्ये—IX. 12.

मायानामीश्वरास्तेऽथ शस्त्रहस्ता रथैः कपिम् ।
प्रत्याववृतिरे हन्तुं **हन्तव्या मारुतेः** पुनः ॥ 576 ॥

शस्त्रहस्ता **मारुतेः**, कर्तरि षष्ठी । **हन्तव्याः** ।

## ६३० । तुल्यार्थैरतुलोपमाभ्यां तृतीयान्यतरस्याम् । (२. ३. ७२)

तुल्यार्थैर्योगे तृतीया वा स्यात्पक्षे षष्ठी । तुल्यः सदृशः समो वा कृष्णस्य कृष्णेन वा । अतुलोपमाभ्यां किम् । तुला उपमा वा ( एतौ सदृशवाचिनौ ) कृष्णस्य नास्ति । न तृतीया । सादृश्ये तु तृतीयैव न षष्ठी ।

**अस्मिन्नेव ग्रन्थे** ग० 508. **श्रुतस्य यत् सदृशम्** ।

चम्पूभारते—XII. 33.

दिगन्तरलुठत्कीर्तिरनन्तकविकुञ्जरः ।
**प्राणैस्तुल्यं** सरस्वत्याः प्राणैषीच्चम्पुभारतम् ॥ 577 ॥

सरस्वत्याः **प्राणैः** । तृतीया । **तुल्यं** सदृशम् ।

अस्मिन्नेव ग्रन्थे श्लो० 555. सा दमयन्ती **तव**, षष्ठी, **सदृशी** ।

नैषधे—IV. 21.

हृदयदत्तपरोरुहया **तया**
क **सदृगस्तु** वियोगनिमग्नया ।
प्रियधनुः परिरभ्य हृदा रतिः
किमनुमर्तुमशेत चितार्चिषि ॥ 578 ॥

**तया** दमयन्त्या । तृतीया । **सदृक्** सदृशी कास्तु ।

अस्मिन्नेव ग्रन्थे श्लो० 574. **नन्दनस्य सदृशं**, तेन तुल्यम् ।

अस्मिन्नेव ग्रन्थे श्लो० 111. **तस्याः** सीतायाः **समा** न ।

रघुवंशे—XI. 53.

तौ समेत्य समये स्थितावुभौ
भूपती **वरुणवासवोपमौ** ।
कन्यकातनयकौतुकक्रियां
**स्वप्रभावसदृशीं** वितेनतुः ॥ 579 ॥

वरुणवासवावुपमा ययोस्तौ । षष्ठी । अतुलोपमाभ्यामिति तृतीयानिषेधः स्वप्रभावस्य स्वप्रभावेन वा सदृशीमिति समासः ।

रघुवंशे—II. 9.

विसृष्टपार्श्वानुचरस्य तस्य
पार्श्वद्रुमाः **पाशभृता समस्य** ।
उदीरयामासुरिवोन्मदाना-
मालोकशब्दं वयसां विरावैः ॥ 580 ॥

**पाशभृता**, तृतीया । **समस्य** ।

कुमारसम्भवे—V. 34.

अपि त्वदावर्जितवारिसंभृतं
प्रवालमासामनुबन्धि वीरुधाम् ।
चिरोज्झितालक्तकपाटलेन ते
**तुलां** यदारोहति **दन्तवाससा** ॥ 581 ॥

**दन्तवाससा** । तृतीया । **तुलां** सादृश्यम् । तुलाशब्दस्य सादृश्यवाचित्वात् तद्योगे अतुलोपमाभ्यामिति न तृतीयाप्रतिषेधः । अत्र सूत्रे सदृशवाचिन एव ग्रहणात् ।

अस्मिन्नेव ग्रन्थे श्लो० 283. **शम्भुना**, तृतीया । **स्फुटोपमं**, स्फुटमुपमा यस्य तम् । सादृश्यवाचित्वात् तृतीया ।

चम्पूभारते—IV. 29.

दिग्धे सन्तमसैः सान्द्रैर्दिशापदिशचत्वरे ।
सर्वाः प्रजास्तदा **राज्ञा** समारुक्षन् दृशा **तुलाम्** ॥ 582 ॥

**राज्ञा तुलां** सादृश्यम् ।

**६३१ । चतुर्थी चाशिष्यायुष्यमद्रभद्रकुशलसुखार्थहितैः । (२. ३. ७३)**

एतदर्थैर्योगे चतुर्थी वा स्यात्, पक्षे षष्ठी आशिषि । आयुष्यं चिरं जीवितं कृष्णाय कृष्णस्य वा भूयात् । एवं मद्रं भद्रं कुशलं निरामयं सुखं शम् अर्थः प्रयोजनं हितं पथ्यं वा भूयात् । आशिषि किम् । देवदत्तस्यायुष्यमस्ति ।

भट्टिकाव्ये—VIII. 131.

**राघवाभ्यां शिवं** दूतस्तयोरहमिति ब्रुवन् ।
**हितो** भनज्मि **रामस्य** कः किं ब्रूतेऽत्र राक्षसः ॥ 583 ॥

**राघवाभ्यां शिवमस्तु** । **रामस्य हितः** । षष्ठीचतुर्थ्यौ ।

माघे—XVI. 41.

कुशलं खलु तुभ्यमेव त-
द्वचनं कृष्ण यदभ्यधामहम् ।

उपदेशपराः परेष्वपि
स्वविनाशाभिमुखेषु साधवः ॥ 584 ॥

**तुभ्यमेव कुशलम्** । वैकल्पिकी चतुर्थी ।

चम्पूरामायणे—V. 26.

ग—तदनन्तरं समन्तात्परिसारितनयना जनकतनया तस्यां शाखायां शाखामृगमुद्वीक्ष्य दुःस्वप्नबुद्ध्या चकितहृदया सलक्ष्मणाय **रामाय** भर्त्रे **भद्रमाशंसमाना** जनमिमं दुरापस्वापं स्वप्नः कथमाप्नुयादिति विचिन्त्य मायया समायातो नैर्ऋत इति बुद्ध्या तस्मान्मारुतपुत्रात्तत्रास ॥ 585.

**रामाय** चतुर्थी । **भद्रम्** ।

**६३२ । आधारोऽधिकरणम् । (१. ४. ४५)**

आधारोऽधिकरणसंज्ञः स्यात् ।

**६३३ । सप्तम्यधिकरणे च । (२. ३. ३६)**

अधिकरणे सप्तमी स्यात् । चकाराद्दूरान्तिकार्थेभ्यः ।

अस्मिन्नेव ग्रन्थे श्लो० 270. मया साकं **सौधे**, सप्तमी, आस्स्व ।

अस्मिन्नेव ग्रन्थे श्लो० 444. समुद्रस्य **नानभ्याशे** । सप्तमी ।

रघुवंशे—II. 54.

कथं नु शक्योऽनुनयो महर्षेर्विश्राणनादन्यपयस्विनीनाम् ।
इमामनूनां सुरभेरवेहि रुद्रौजसा तु प्रहृतं त्वया**स्याम्** ॥ 586 ॥

**अस्यां** सप्तमी ।

भट्टिकाव्ये—V. 42.

चिरकालोषितं जीर्णं कीटनिष्कुषितं धनुः ।
किं चित्रं यदि रामेण भग्नं क्षत्रियका**न्तिके** ॥ 587 ॥

**अन्तिके** इति सप्तमी ।

वा० । क्तस्येन्विषयस्य कर्मण्युपसंख्यानम् । ( 1485. )

अधीती व्याकरणे । अधीतमनेनेति विग्रहे 'इष्टादिभ्यश्च' ( सू. 1888 ) इति कर्तरीनिः ।

भट्टिकाव्ये — XII. 14.

शक्तैः सुहृद्भिः परिदृष्टकार्यै-
रास्नातिभिर्नीतिषु बुद्धिमद्भिः ।
युष्मद्विधैः सार्धमुपायविद्भिः
सिध्यन्ति कार्याणि सुमन्त्रितानि ॥ 588 ॥

**नीतिषु** । कर्मणि सप्तमी । **आम्नातिभिः** कर्तरीनिः ।

भट्टिकाव्ये — III. 52.

**कृती श्रुती वृद्धमतेषु** धीमां-
स्त्वं पैतृकं चेद्वचनं न कुर्याः ।
विच्छिद्यमानेऽपि कुले परस्य
पुंसः कथं स्यादिह पुत्रकाम्या ॥ 589 ॥

**वृद्धमतेषु** ज्ञानवृद्धाचारेषु । कर्मणि सप्तमी । श्रुतमनेन **श्रुती** कृतमनेन **कृती** । तेषां श्रोतानुष्ठाता चेत्यर्थः । इष्टादित्वात्कर्तरि इनिः ।

भट्टिकाव्ये — V. 79.

**अध्वरेष्विष्टिनां** पाता **पूर्ती कर्मसु** सर्वदा ।
पितुर्नियोगाद्राजत्वं हित्वा योऽभ्यगमद्वनम् ॥ 590 ॥

इष्टमेभिरिति **इष्टिनो** यज्वानः । कर्तरीनिः । **अध्वरेषु** । कर्मणि सप्तमी । पूर्तमनेनेति **पूर्ती** । पूर्ववदिनिः । **कर्मसु** । पूर्ववत्सप्तमी ।

वा० । साध्वसाधुप्रयोगे च । ( 1486. )

साधुः कृष्णो मातरि । असाधुर्मातुले ।

वा० । निमित्तात्कर्मयोगे । ( 1490. )

निमित्तमिह फलम् । सीमाण्डकोशः । पुष्कलको गन्धमृगः ।

चर्मणि द्वीपिनं हन्ति दन्तयोर्हन्ति कुञ्जरम् ।
केशेषु चमरीं हन्ति सीम्नि पुष्कलको हतः ॥ ( इति भाष्यम् )

रघुवंश—XIII. 43.

एषोऽक्षमालावलयं मृगाणां
कण्डूयितारं कुशसूचिलावम् ।
**सभाजने मे** भुजमूर्ध्वबाहुः
सव्येतरं प्राध्वमितः प्रयुङ्क्ते ॥ 591 ॥

एष दक्षिणं भुजं मे **सभाजने** संमानननिमित्ते । सप्तमी ।

## ६३४ । यस्य च भावेन भावलक्षणम् । ( २. ३. ३७ )

यस्य क्रियया क्रियान्तरं लक्ष्यते ततः सप्तमी स्यात् । गोषु दुह्यमानासु गतः ।

भट्टिकाव्ये—VIII. 112.

**असंप्राप्ते दशग्रीवे** प्रविष्टोऽहमिदं वनम् ।
**तस्मिन्प्रतिगते** द्रष्टुं त्वामुपाक्रंस्यचेतितः ॥ 592 ॥

**दशग्रीवेऽसंप्राप्ते** सति अहमिदं वनं प्रविष्टः । **तस्मिन्प्रतिगते** सति त्वां द्रष्टुमुपाक्रंसि ।

## ६३५ । षष्ठी चानादरे । ( २. ३. ३८. )

अनादरे षष्ठीसप्तम्यौ स्तः । रुदति रुदतो वा प्राव्राजीत् । रुदन्तं पुत्रादिकमनादृत्य संन्यस्तवानित्यर्थः ।

भट्टिकाव्ये—VIII. 113.

**तस्मिन्वदति** रुष्टोऽपि नाकार्षं देवि विक्रमम् ।
अविनाशाय कार्यस्य विचिन्वानः परापरम् ॥ 593 ॥

**तस्मिन्वदति** रुष्टोऽपि विक्रमं नाकार्षम् । तं तथा वदन्तमनादृत्य विक्रमं नाकार्षमित्यर्थः ।

नैषधे—I. 106.

लतावलालास्यकलागुरुस्तरु-
प्रसूनगन्धोत्करपश्यतोहरः ।
असेवतामुं मधुगन्धवारिणि
प्रणीतलीलाप्लवनो वनानिलः ॥ 594 ॥

**पश्यतोहरः** । पश्यन्तमनादृत्य हरः । प्रसह्यापहर्तेत्यर्थः । अनादरे षष्ठी । 'वाग्दिग्' ( सू. 979 ) इत्यलुक् ।

माघे—XV. 34.

मृगविद्विषामिव यदित्थमजनि **मिषतां** पृथासुतैः ।
अस्य वनशुन इवापचितिः परिभाव एष **भवतां** भुवोऽधिपाः ॥ 595 ॥

**भवतां मिषतां** भवत्सु मिषत्सु । मिषतो युष्माननादृत्येत्यर्थः ।

माघे—XIII. 46.

अतियाति नः **सतृष** एष **चक्षुषो**
हरिरित्यखिद्यत नितम्बिनीजनः ।
न विवेद यः सततमेनमीक्षते
न वितृष्णतां व्रजति खल्वसावपि ॥ 596 ॥

**चक्षुषः सतृषः** । चक्षुषि सतृषि सति । तदनादृत्येत्यर्थः ।

**६३६ । स्वामीश्वराधिपतिदायादसाक्षिप्रतिभूप्रसूतैश्च । ( २. ३. ३९ )**

एतैः सप्तभिर्योगे षष्ठीसप्तम्यौ स्तः । गवां गोषु वा स्वामी । गवां गोषु वा प्रसूतः । गा एवानुभवितुं जात इत्यर्थः ।

भट्टिकाव्ये—VIII. 114.

**वानरेषु** कपिः **स्वामी नरेष्वधिपतेः** सखा ।
जातो रामस्य सुग्रीवस्ततो दूतोऽहमागतः ॥ 597 ॥

**वानरेषु स्वामी** । वानराणामीश्वरः । **नरेष्वधिपतेः** नराणामिन्द्रस्य । विकल्पात्सप्तमी ।

भट्टिकाव्ये — VIII. 115.

ईश्वरस्य **निशाटानां** विलोक्य निखिलां पुरीम् ।
कुशलोऽन्वेषणस्याहमायुक्तो दूतकर्मणि ॥ 598 ॥

**निशाटानामीश्वरस्य** निखिलां पुरीं विलोक्य । निशाटानामिति षष्ठी ।
अस्मिन्नेव ग्रन्थे श्लो० 536. **मायानामीश्वराः** । षष्ठी ।

भट्टिकाव्ये—V. 87.

निर्लज्जो विमदः **स्वामी धनानां** हृतपुष्पकः ।
अध्यास्तेऽन्तर्गिरं यस्मात्कस्तं नावैति कारणम् ॥ 599 ॥

**धनानां स्वामी** । षष्ठी ।

अनर्घराघवे—III. 25.

यद्गोत्रस्य प्रथमपुरुषस्**तेजसामीश्वरो**ऽयं
येषां धर्मप्रवचनगुरुर्ब्रह्मवादी वसिष्ठः ।
ये वर्तन्ते तव च हृदये सुष्ठुसंबन्धयोग्या-
स्ते राजानो मम पुनरसौ दारुणः शुल्कसेतुः ॥ 600 ॥

**तेजसामीश्वरः** । षष्ठी ।

## ६३७ । अयुक्तकुशलाभ्यां चासेवायाम् । (२. ३. ४०)

आभ्यां योगे षष्ठीसप्तम्यौ स्तः तात्पर्येऽर्थे । आयुक्तो व्यापारितः । आयुक्तः कुशलो वा हरिपूजने हरिपूजनस्य वा ।

अस्मिन्नेव ग्रन्थे श्लो० 598. **अन्वेषणस्य कुशलो**ऽन्वेषणे निपुणः । **दूतकर्मण्यायुक्तो** व्यापृतोऽहम् । षष्ठीसप्तम्यौ ।

## ६३८ । यतश्च निर्धारणम् । ( २. ३. ४१ )

यतः जातिगुणक्रियासंज्ञाभिः समुदायादेकदेशस्य पृथक्करणं निर्धारणं ततः षष्ठीसप्तम्यौ स्तः । नृणां नृषु वा ब्राह्मणः श्रेष्ठः । गवां गोषु वा कृष्णा बहुक्षीरा । गच्छतां गच्छत्सु वा धावन् शीघ्रः । छात्राणां छात्रेषु वा मैत्रः पटुः ।

भट्टिकाव्ये—VIII.116.

**दर्शनीयतमाः** पश्यन् **स्त्रीषु** दिव्यास्वपि स्त्रियः ।
प्राप्तो व्यालतमान्पश्यन् भुजङ्गेभ्योऽपि राक्षसान् ॥ 601 ॥

**स्त्रीषु** मध्ये **दर्शनीयतमाः** । दर्शनीयतमत्वगुणेन पृथक्करणान्निर्धारणे सप्तमी ।

अस्मिन्नेव ग्रन्थे श्लो० 28. **सर्वतेजस्सु** सर्वतेजसां मध्ये **ज्योतिष्टमाम्** । सप्तमी ।

रघुवंशे—I. 59

अथाथर्वनिधेस्तस्य विजितारिपुरः पुरः ।
अर्थ्यामर्थपतिर्वाचमादद्दे **वदतां वरः** ॥ 602 ॥

**वदतां** वक्तॄणां **वरः** श्रेष्ठः, निर्धारणे षष्ठी । 'न निर्धारण' (सू. 704) इति षष्ठीसमासप्रतिषेधः । निर्धारणे सप्तमीसामासस्तु स्यादेव ।

## ६३९ । पञ्चमी विभक्ते । ( २. ३. ४२ )

विभागो विभक्तम् । निर्धार्यमाणस्य यत्र भेद एव तत्र पञ्चमी स्यात् । माथुराः पाटलिपुत्रकेभ्य आढ्यतराः ।

अस्मिन्नेव ग्रन्थे श्लो० 601. **भुजङ्गेभ्यो व्यालतमान्** हिंस्रान् । भुजङ्गेभ्यो राक्षसानां विभागात्पञ्चमी ।

अस्मिन्नेव ग्रन्थे श्लो० 586. इमां गां **सुरभेः** कामधेनोर**न्यूना**मवेहि । पञ्चमी ।

भट्टिकाव्ये—IV. 14.

आतिष्ठद्गु जपन्सन्ध्यां प्रक्रान्तामायतीगवम् ।
**प्रातस्तरां पतत्रिभ्यः** प्रबुद्धः प्रणमन्रविम् ॥ 603 ॥

रामः **पतत्रिभ्यः** प्रातस्तरां प्रबुद्धः सन् । पतत्रिभ्य इति पञ्चमी ।

माघे—IV. 45.

या न ययौ प्रियमन्य**वधूभ्य-**
**स्सारतरा**गमना यतमानम् ।
तेन सहेह बिभर्ति रहस्त्री
सा रतरागमनायतमानम् ॥ 604 ॥

**अन्यवधूभ्यः सारतरं** आगमनं यस्याः सा । पञ्चमी ।

रघुवंशे — XVIII. 53.

प्रतिकृतिरचनाभ्यो दूतिसन्दर्शिताभ्यः
समधिकतररूपाः शुद्धसन्तानकामैः ।
अधिविविदुरमात्यैराहृतास्तस्य यूनः
प्रथमपरिगृहीते श्रीभुवौ राजकन्याः ॥ 605 ॥

**प्रतिकृतिरचनाभ्यः समधिकतररूपाः** । पञ्चमी ।

अनर्घराघवे — V. 37.

ग — अये प्रसन्नोज्वलाकृती कावेतौ । नियत**माभ्यामेकेन** दानवनाथकङ्कालो-त्क्षेपनिमित्तेन भवितव्यम् ॥ 606 ॥

**आभ्यामेकेन** ।

**६४० । साधुनिपुणाभ्यामर्चायां सप्तम्यप्रतेः । ( २. ३. ४३ )**

आभ्यां योगे सप्तमी स्यादर्चायाम् । न तु प्रतेः प्रयोगे । मातरि साधुर्निपुणो वा ।

**वा०** । अप्रत्यादिभिरिति वक्तव्यम् । ( 1493. )

साधुर्निपुणो वा मातरं प्रति पर्यनु वा ।

अस्मिन्नेव ग्रन्थे श्लो० 330. **रक्षोविद्वत्सु साधून् । मारयितृषु निपुणान् ।**

**६४१ । प्रसितोत्सुकाभ्यां तृतीया च । ( २. ३. ४४ )**

आभ्यां योगे तृतीया स्याच्चात्सप्तमी । प्रसित उत्सुको हरिणा हरौ वा ।

भट्टिकाव्ये — VIII. 117.

**भवत्यामुत्सुको** रामः **प्रसितः सङ्गमेन** ते ।
मघासु कृतनिर्वापः पितृभ्यो मां व्यसर्जयत् ॥ 607 ॥

**भवत्यामुत्सुकः** त्वयि उत्कण्ठितः । ते **संगमेन प्रसितः**, संगतावासक्तः । तृतीयासप्तम्यौ ।

माघे—IX. 2.

गतया पुरः प्रति गवाक्षमुखं
दधती **रतेन** भृशमुत्सुकताम् ।
मुहुरन्तरालभुवमस्तगिरेः
सवितुश्च योषिदमिमीत दृशा ॥ 608 ॥

**रतेन भृशमुत्सुकतां** दधती । तृतीया ।

भट्टिकाव्ये—VII. 15.

विलोक्य द्योतनं चन्द्रं लक्ष्मणं शोचनोऽवदत् ।
पश्य दन्द्रमणान् हंसानरविन्दसमुत्सुकान् ॥ 609 ॥

**अरविन्देषु समुत्सुकान्** । सप्तमीति योगविभागात्समासः ।

भट्टिकाव्ये—V. 24.

मामुपास्त दिदृक्षावान् याष्टीकव्याहतो हरिः ।
**आज्ञालाभोत्सुको** दूरात्काक्षेणानादरेक्षितः ॥ 610 ॥

**आज्ञालाभे उत्सुक** इति पूर्ववत्समासः ।

भट्टिकाव्ये—V. 92.

अश्नीतपिबतीयन्ती **प्रसिता स्मरकर्मणि** ।
वशीकृत्य दशग्रीवं मोदस्व वरमन्दिरे ॥ 611 ॥

**स्मरकर्मणि प्रसिता** । सप्तमी ।

भट्टिकाव्ये—VI. 3.

न जिह्मयांचकाराथ सीतामभ्यर्थ्य तर्जितः ।
नाप्यूर्जां बिभरामास **वैदेह्यां प्रसितो** भृशम् ॥ 612 ॥

**वैदेह्यां प्रसितः** । सप्तमी ।

## ६४२ । नक्षत्रे च लुपि । (२. ३. ४५)

नक्षत्रे प्रकृत्यर्थे यो लुप्संज्ञया लुप्यमानस्य प्रत्ययस्यार्थस्तत्र वर्तमानात्तृतीयासप्तम्यौ स्तोऽधिकरणे।

मूलेनावाहयेद्देवीं श्रवणेन विसर्जयेत्।

मूले श्रवण इति वा। 'नक्षत्रेण युक्तः कालः' (सू. 204) इत्यण्। लुबविशेषे' (सू. 1205) इति लुप्। 'लुपि युक्तवद्व्यक्तिवचने' (सू. 1294) इति प्रकृतिलिङ्गवचने।

अस्मिन्नेव ग्रन्थे श्लो० 607. मघासु मघयुक्तकाले। लुबन्तान्नक्षत्रवाचकशब्दाद्वैकल्पिकी सप्तमी।

## ६४३। सप्तमीपञ्चम्यौ कारकमध्ये (२. ३. ७)

शक्तिद्वयमध्ये यौ कालाध्वानौ ताभ्यामेते स्तः। अधिकशब्दयोगे सप्तमीपंचम्याविष्येते। 'तदस्मिन्नधिकं' (सू. 1846) इति 'यस्मादधिकं' (सू. 645) इति च सूत्रनिर्देशात्। लोके लोकाद्वाधिको हरिः।

अस्मिन्नेव ग्रन्थे श्लो० 319. पुंसा स्त्रियम् इति कर्तृकर्मकारकमध्यवर्तित्वात् त्र्यहादिति पञ्चमी।

अस्मिन्नेव ग्रन्थे श्लो० 320. त्वं मामिति कर्तृकर्मकारकमध्यगतत्वान्मासे इति सप्तमी।

## ६४४। अधिरीश्वरे। (१. ४. ९७)

स्वस्वामिसम्बन्धोऽधिः कर्मप्रवचनीयसंज्ञः स्यात्।

## ६४५। यस्मादधिकं यस्य चेश्वरवचनं तत्र सप्तमी। (२. ३. ९)

अत्र कर्मप्रवचनीययुक्ते सप्तमी स्यात्।

भट्टिकाव्ये—VIII. 93.

अधि रामे पराक्रान्तमधिकर्ता स ते क्षयम्।<br>
इत्युक्त्वा मैथिली तूष्णीमासांचक्रे दशाननम्॥ 613॥

**अधि रामे** स्वामिनि, पराक्रान्तं पराक्रमः। संवर्तत इति शेषः। रामपराक्रमयोः स्वस्वामिभावसंबन्धे द्योत्ये अधेः कर्मप्रवचनीयत्वे द्वितीयापवादेन सप्तमी।

उपोऽधिके च (सू. 551) अस्मिन्नेव ग्रन्थे श्लो॰ 293. **उप शूरेषु शूरेभ्योऽधिकः।** सप्तमी।

## ६४६। विभाषा कृञि। (१. ४. ९८)

अस्मिन्नेव ग्रन्थे श्लो॰ 613. रामस्ते **क्षयं** नाशं **अधिकर्ता** करिष्यति संज्ञाभावपक्षे कर्मणि द्वितीया।

॥ इति कारकप्रकरणं समाप्तम् ॥

---

## ॥ अथ अव्ययीभावसमासप्रकरणम् ॥

६४८ । प्राक्कडारात्समासः । ( २. १. ३ )

६४९ । सह सुपा । (२. १. ४)

६५० । सुपो धातुप्रातिपदिकयोः । (२. ४. ७१)

पूर्वं भूतो भूतपूर्वः ।

वा० । इवेन समासो विभक्त्यलोपश्च । ( 1236. 1341. )

जीमूतस्येव ।

रघुवंशे—XVI. 4.

अथार्धरात्रे स्तिमितप्रदीपे
शय्यागृहे सुप्तजने प्रबुद्धः ।
कुशः प्रवासस्थकलत्रवेषा-
मदृष्टपूर्वां वनितामपश्यत् ॥ 614 ॥

पूर्वमदृष्टा अदृष्टपूर्वा ।

माघे—III. 3.

मृणालसूत्रामलमन्तरेण
स्थितश्चलच्चामरयोर्द्वयं सः ।
भेजेऽभितः पातुकसिद्धसिन्धो-
रभूतपूर्वां रुचमम्बुराशेः ॥ 615 ॥

पूर्वमभूता अभूतपूर्वा ।

माघे—I. 46.

स संचरिष्णुर्भुवनान्तरेषु यां
यदृच्छयाशिश्रियदाश्रयः श्रियः ।

अकारि तस्यै मकुटोपलस्खल-
त्करैस्त्रिसन्ध्यं त्रिदशैर्दिशे नमः ॥ 616 ॥

अन्येषु भुवनेषु भुवनान्तरेषु ।

अस्मिन्नेव ग्रन्थे श्लो० 23. निकामं भीषणं निकामभीषणम् ।

माघे—I. 50.

समुत्क्षिपन् यः पृथिवीभृतां वरं
वरप्रदानस्य चकार शूलिनः ।
त्रसत्तुषाराद्रिसुतात्तसंभ्रम-
स्वयंग्रहाश्लेषसुखेन निष्क्रयम् ॥ 617 ॥

स्वयंग्रहः ।

अस्मिन्नेव ग्रन्थे श्लो० 204. वागर्थाविवेत्येकं पदम् । इवेन सह नित्यसमासो विभक्त्यलोपश्च ।

६५१ । अव्ययीभावः । ( २. १. ५ )

अधिकारोऽयम् ।

६५२ । अव्ययं विभक्तिसमीपसमृद्धिव्यृद्ध्यर्थाभावात्ययासंप्रतिशब्दप्रादुर्भावपश्चाद्यथानुपूर्व्ययौगपद्यसादृश्यसम्पत्तिसाकल्यान्तवचनेषु । ( २. १. ६ )

माघे—III. 45.

रतौ ह्रिया यत्र निशाम्य दीपान्
जालागताभ्योऽधिगृहं गृहिण्यः ।
बिभ्युर्बिडालेक्षणभीषणाभ्यो
वैडूर्यकुड्येषु शशिद्युतिभ्यः ॥ 618 ॥

गृहेष्वधिगृहम् । विभक्त्यर्थेऽव्ययीभावः । अम्भावो नपुंसकत्वं च ।

माघे—VI. 76.

जातप्रीतिर्या मधुरेणानुवनान्तं
कामे कान्ते सारसिकाकाकुरुतेन ।

तत्संपर्कं प्राप्य पुरा मोहनलीलां
कामेकान्ते सा रसिका का कुरुते न ॥ 619 ॥

वनान्तेऽनुवनान्तम् । विभक्त्यर्थेऽव्ययीभावः ।

अस्मिन्नेव ग्रन्थे श्लो० 109. कर्णेऽधिकर्णम् । विभक्त्यर्थेऽव्ययीभावः ।

अस्मिन्नेव ग्रन्थे श्लो० 146. पादेषु प्रतिपादम् । विभक्त्यर्थेऽव्ययीभावः ।

माघे—III. 71.

लक्ष्मीभृतोऽम्भोधितटाधिवासान्
द्रुमानसौ नीरदनीलभासः ।
लतावधूसंप्रयुजोऽधिवेलं
बहूकृतान् स्वानिव पश्यति स्म ॥ 620 ॥

वेलायामधिवेलम् । विभक्त्यर्थेऽव्ययीभावः ।

माघे—XIII. 11.

गतया निरन्तरनिवासमध्युरः
परिनाभि नूनमवमुच्य वारिजम् ।
कुरुराजनिर्दयनिपीडनाभया-
न्मुखमध्यरोहि मुरविद्विषः श्रिया ॥ 621 ॥

उरसि अध्युरः । नाभ्यां परिनाभि । विभक्त्यर्थेऽव्ययीभावः ।

अस्मिन्नेव ग्रन्थे श्लो० 441. आत्मनि अध्यात्मम् । विभक्त्यर्थेऽव्ययीभावः ।

'अनश्च' (सू. 678..) इति समासान्तष्टच् ।

माघे—XII. 30.

अध्यध्वमारूढवतेव केनचित्
प्रतीक्षमाणेन जनं मुहुर्धृतः ।
दाक्ष्यं हि सद्यः फलदं यदग्रत-
श्चखाद दासेरयुवा वनावलीः ॥ 622 ॥

अध्वनि **अध्यध्वम्** । विभक्त्यर्थेऽव्ययीभावः । 'अनश्च' ( सू. 678 ) इति समासान्तष्टच् । 'नस्तद्धिते' ( सू. 679 ) इति टिलोपः ।

अस्मिन्नेव ग्रन्थे श्लो० 143. **उपसीम** । ग्रामसीमसु । विभक्त्यर्थेऽव्ययीभावः । समासान्तविधेरनित्यत्वात् 'अनश्चे'ति ( सू. 678 ) समासान्तष्टच् न भवति । केचित्तु 'अप्यन्येषां कठिनवपुषां दुर्गमे ग्रामसीम्नि' इत्यादौ नपुंसकप्रयोगदर्शनात्, 'नपुंसकादन्यतरस्याम्' ( सू. 680 ) इति विकल्पात्साधुरित्याहुः ।

माघे—VII. 1.

> **अनुगिरमृ**तुभिर्वितायमाना-
> मथ स विलोकयितुं वनान्तलक्ष्मीम् ।
> निरगमदभिराद्धुमादृतानां
> भवति महत्सु न निष्फलः प्रयासः ॥ 623 ॥

गिरौ **अनुगिरम्** । विभक्त्यर्थेऽव्ययीभावः । 'गिरेश्च सेनकस्य' ( सू. 683) इति समासान्तः ।

अस्मिन्नेव ग्रन्थे श्लो० 599. गिरावन्त**र्गिरम्** । विभक्त्यर्थेऽव्ययीभावः 'गिरेश्च' ( सू. 683 ) इति समासान्तष्टच् ।

माघे—XII. 44.

> लीलाचलत्स्त्रीचरणारुणोत्पल-
> स्खलत्तुलाकोटिनिनादकोमलः ।
> शौरे**रुपानूपम**पाहरन्मनः
> स्वनान्तरादुन्मदसारसारवः ॥ 624 ॥

अनूपा जलप्रायदेशास्तेषां समीपे **उपानूपम्** । समीपार्थेऽव्ययीभावः ।

भट्टिकाव्ये—VI. 106.

> **उपाग्न्य**कुरुतां सख्यमन्योन्यस्य प्रियङ्करौ ।
> क्षेमङ्कराणि कार्याणि पर्यालोचयतां ततः ॥ 625 ॥

अग्नेः समीपे **उपाग्नि** । सामीप्येऽव्ययीभावः ।

भट्टिकाव्ये—II. 50.

विशङ्कटे वक्षसि बाणपाणिः
सम्पन्नतालद्वयसः पुरस्तात् ।
भीष्मो धनुष्मानुपजान्वरत्नि-
रेति स्म रामं पथि जामदग्न्यः ॥ 626 ॥

जानुनोः समीपमुपजानु । समीपार्थेऽव्ययीभावः ।

किरातार्जुनीये—VII. 26.

सम्भोगक्षमगहनामथोपगङ्गं
बिभ्राणां ज्वलितमणीनि सैकतानि ।
अध्यूषुश्च्युतकुसुमाचितां सहाया
वृत्रारेरविरलशाद्वलां धरित्रीम् ॥ 627 ॥

गङ्गायाः समीपे **उपगङ्गम्** । अव्ययीभावस्य नपुंसकत्वाद्ध्रस्वत्वम् ।

नैषधे—III. 1.

आकुञ्चिताभ्यामथ पक्षतिभ्यां
नभोविभागात्तरसावतीर्य ।
निवेशदेशाततधूतपक्षः
पपात भूमावुपभैमि हंसः ॥ 628 ॥

भैम्याः समीपे **उपभैमि** । सामीप्येऽव्ययीभावः ।

माघे—VII. 24.

श्रुतिपथमधुराणि सारसाना-
**मनुनदि** शुश्रुविरे रुतानि ताभिः ।
विदधति जनतामनःशरव्य-
व्यधपटुमन्मथचापनादशङ्काम् ॥ 629 ॥

नद्याः समीपे **अनुनदि** । समीपार्थेऽव्ययीभावः । 'नदीपौर्णमास्या' (सू. 681) इति विकल्पान्न टच् ।

माघे—XIV. 87.

धन्योऽसि यस्य हरिरेष समक्ष एव
दूरादपि क्रतुषु यज्वभिरिज्यते यः ।
दत्वार्घमत्रभवते भुवनेषु याव-
त्संसारमण्डलमवाप्नुहि साधुवादम् ॥ 630 ॥

अक्ष्णोः समीपे समक्षे । समीपार्थेऽव्ययीभावः । 'अव्ययीभावे शरत्' (सू. 677) इत्यादिना समासान्तः । 'तृतीयासप्तम्योर्बहुलम् (सू. 658) इति सप्तम्या अमभावः ।

रघुवंशे—XV. 72.

तात शुद्धा समक्षं नः स्नुषा ते जातवेदसि ।
दौरात्म्याद्रक्षसस्तां तु नात्रत्याः श्रद्दधुः प्रजाः ॥ 631 ॥

अक्ष्णोः समीपे समक्षम् । पूर्ववत् । अत्राम्भावः ।

नैषधे—III. 38.

संग्रामभूमीषु भवत्यरीणा-
मस्त्रैर्नदीमातृकतां गतासु ।
तद्बाणधारापवनाशनानां
राजव्रजीयैरसुभिः सुभिक्षम् ॥ 632 ॥

भिक्षाणां समृद्धिः सुभिक्षम् । समृद्धावव्ययीभावः ।

नैषधे—III. 117.

नलेन भायाः शशिना निशेव
त्वया स भायान्निशया शशीव ।
पुनः पुनस्तद्युगयुग्विधाता
स्वभ्यासमास्ते नु युवां युयुक्षुः ॥ 633 ॥

अभ्यासस्य समृद्धिः स्वभ्यासम् । समृद्धावव्ययीभावः । विगता ऋद्धिः व्यृद्धिः । यवनानां व्यृद्धिर्दुर्यवनम् ।

अस्मिन्नेव ग्रन्थे श्लो० 322. असंशयम् । संशयो नास्तीत्यर्थः । अर्थाभावे अव्ययीभावः ।

माघे—XVI. 57.

प्रतिपक्षजिदप्यसंशयं
युधि चैद्येन विजेष्यते भवान् ।
ग्रसते हि तमोऽपहं मुहु-
र्ननु राहुाह्वमहर्पतिं तमः । ॥ 634 ॥

असंशयम् । संशयो नास्तीत्यर्थः । अर्थाभावेऽव्ययीभावः ।

भट्टिकाव्ये—VII. 64.

द्रुघणोद्भिन्नकल्पाग्रास्तरसा तरुसंहतीः ।
अव्याध्यपृच्छन् कुर्वाणास्तां तेऽयोघनमुष्टयः ॥ 635 ॥

व्याधेरभावोऽव्याधि । अनामयमित्यर्थः । अर्थाभावेऽव्ययीभावः ।

नैषधे— IV. 65.

वदनगर्भगतं न निजेच्छया
शशिनमुज्झति राहुरसंशयम् ।
अशित एव गलत्ययमत्ययं
सखि विना गलनालबिलाध्वना ॥ 636 ॥

असंशयम् । अर्थाभावेऽव्ययीभावः । अत्ययो ध्वंसः । हिमस्यात्ययोऽतिहिमम् । निद्रा संप्रति न युज्यत इत्यतिनिद्रम् । हरिशब्दस्य प्रकाश इतिहरि ।

माघे—IX. 73.

अनुदेहमागतवतः प्रतिमां परिणायकस्य गुरुमुद्वहता ।
मुकुरेण वेपथुभृतोऽतिभरात्कथमप्यपाति न वधूकरतः ॥ 637 ॥

अनुदेहं देहस्य पश्चात् । पश्चादर्थेऽव्ययीभावः । योग्यतावीप्सापदार्थानतिवृत्तिसादृश्यानि यथार्थाः । अनुरूपं रूपस्य योग्यमित्यर्थः ।

माघे— VII. 15.

अविरलपुलकः सह व्रजन्त्याः
प्रतिपदमेकतरस्तनस्तरुण्याः ।

घटितविघटितः प्रियस्य वक्ष-
स्तटभुवि कन्दुकविभ्रमं बभार ॥ 638 ॥

**पदे पदे प्रतिपदम्** । वीप्सायामव्ययीभावः ।

नैषधे—II. 58.

**प्रतिमास**मसौ निशापतिः
खग संगच्छति यद्दिनाधिपम् ।
किमु तीव्रतरैस्ततः करै-
र्मम दाहाय स धैर्यतस्करैः ॥ 639 ॥

मासि मासि **प्रतिमासम्** । वीप्सायामव्ययीभावः ।

माघे—XI. 28.

विलुलितकमलौघः कीर्णवल्लीवितानः
**प्रतिवन**मवधूताशेषशाखिप्रसूनः ।
क्वचिदयमनवस्थः स्थास्नुतामेति वायु-
र्वधुकुसुमविमर्दोद्गन्धिवेश्मान्तरेषु ॥ 640 ॥

**वने वने प्रतिवनम्** । वीप्सायामव्ययीभावः ।

माघे—XI. 34.

नवनखपदमङ्गं गोपयस्यंशुकेन
स्थगयसि पुनरोष्ठं पाणिना दन्तदष्टम् ।
**प्रतिदिश**मपरस्त्रीसंगशंसी विसर्पन्
नवपरिमलगन्धः केन शक्यो वरीतुम् ॥ 641 ॥

दिशि दिशि **प्रतिदिशम्** । वीप्सायामव्ययीभावः । 'अव्ययीभावे शरत्प्रभृतिभ्यः' ( सू. 677 ) इति समासान्तष्टच् ।

माघे—III. 37.

यस्याश्चलद्वारिधिवारिवीचि-
च्छटोच्चलच्छङ्खकुलाकुलेन ।
वप्रेण पर्यन्तचरोडुचक्रः
सुमेरुवप्रोऽन्वहमन्वकारि ॥ 642 ॥

अहन्यहन्यन्वहम् । वीप्सायामव्ययीभावः । 'अनश्च' (सू. 678) इति समासान्तः ।

अस्मिन्नेव ग्रन्थे श्लो० 486. अनुक्षपम् । वीप्सायामव्ययीभावः ।

किरातार्जुनीये—VIII. 4.

घनानि कामं कुसुमानि बिभ्रतः
करप्रचेयान्यपहाय शाखिनः ।
पुरोऽभिसस्रे सुरसुन्दरीजनै-
र्यथोत्तरेच्छा हि गुणेषु कामिनः ॥ 643 ॥

उत्तरमुत्तरं यथोत्तरम् । वीप्सार्थेऽव्ययीभावः ।

किरातार्जुनीये—XIV. 58.

शिवध्वजिन्यः प्रतियोधमग्रतः
स्फुरन्तमुग्रेषुमयूखमालिनम् ।
तमेकदेशस्थमनेकदेशगा
निदध्युरर्कं युगपत्प्रजा इव ॥ 644 ॥

योधस्य योधस्य प्रतियोधम् । वीप्सायामव्ययीभावः ।

नैषधे—II. 85.

प्रतिहट्टपथे घरट्टजात्
पथिकाह्वानदसक्तुसौरभैः ।
कलहान्न घनान्यदुत्थिता-
दधुनाप्युज्झति घर्घरस्वरः ॥ 645 ॥

प्रतिहट्टपथे प्रत्यापणपथे । वीप्सायामव्ययीभावः । 'तृतीयासप्तम्योर्बहुलम्' (सू. 658) इति सप्तम्या नाम्भावः ।

माघे—VI. 1.

अथ रिरंसुममुं युगपद्गिरौ
कृतयथास्वतरुप्रसवश्रिया ।

ऋतुगणेन निषेवितुमादधे
भुवि पदं विपदन्तकृतं सताम् ॥ 646 ॥

स्वतरूननतिक्रम्य यथास्वतरु । पदार्थानतिवृत्त्यामव्ययीभावः । हरेः सादृश्यं सहरि । ज्येष्ठस्यानुपूर्व्येणेत्यनुज्येष्ठम् । चक्रेण युगपदिति सचक्रम् ।

भट्टिकाव्ये—II. 49.

सुपातमासादितसंमर्दं त-
द्वृन्दारुभिः संस्तुतमभ्ययोध्यम् ।
अश्वीयराजन्यकहास्तिकाढ्य-
मगात्सराजं बलमध्वनीनम् ॥ 647 ॥

सह राज्ञा सराजम् । साकल्यवचने यौगपद्ये वाव्ययीभावः । 'अव्ययीभावे चाकाले' (सू. 660) इति सभावः । 'अनश्च' (सू. 678) इति टच् समासान्तः । सदृशः सख्या ससखि । क्षत्राणां सम्पत्तिः सक्षत्रम् । तृणमप्यपरित्यज्य सतृणमत्ति । साकल्येनेत्यर्थः । अन्ते, अग्निग्रन्थपर्यन्तमधीते साग्नि ।

## ६५७ । नाव्ययीभावादतोऽम्त्वपञ्चम्याः । (२. ४. ८३)

अदन्तादव्ययीभावात्सुपो न लुक् । तस्य तु पंचमीं विना अमादेशश्च स्यात् ।

अस्मिन्नेव ग्रन्थे श्लो० 643. **प्रतियोधम्** । लुगभावाम्भावौ ।

भट्टिकाव्ये—III. 50.

चिरं रुदित्वा करुणं सशब्दं
गोत्राभिधायं सरितं समेत्य ।
मध्येजलाद्राघवलक्ष्मणाभ्यां
प्रत्तं जलं द्व्यञ्जलमन्तिकेऽपाम् ॥ 648 ॥

जलस्य मध्यं **मध्येजलम्** । तस्माज्जलमध्यादित्यर्थः । ल्यब्लोपे पञ्चमी । तत्र स्नात्वा निर्गत्येत्यर्थः । 'पारेमध्ये षष्ठ्या वा' (सू. 672) इत्यव्ययीभावः । अपंचम्या इति निषेधान्न लुगम्भावौ ।

## ६५८ । तृतीयासप्तम्योर्बहुलम् । (२. ४. ८४)

अदन्तादव्ययीभावात्तृतीयासप्तम्योर्बहुलमम्भावः स्यात् । अपदिशमपदिशेन । अपदिशं अपदिशे ।

अस्मिन्नेव ग्रन्थे श्लो० 630. अक्षणः समीपे समक्षे । सप्तमी ।

अस्मिन्नेव ग्रन्थे श्लो० 633. स्वभ्यासं, अभ्यासस्य समृद्धौ । निरन्तराभ्यास इत्यर्थः । सप्तम्या वैकल्पिकोऽम्भावः ।

भट्टिकाव्ये—VII. 14.

अथोपशरदेऽपश्यत्क्रौञ्चानां चेष्टनैः कुलैः ।
उत्कण्ठावर्धनैः शुभ्रं स्वनैरम्बरं ततम् ॥ 649 ॥

उपशरदे शरत्समीपे । विकल्पादमभावः ।

अस्मिन्नेव ग्रन्थे श्लो० 645. प्रतिहट्टपथे । सप्तमी ।

चम्पूभारते—III. 66.

प्रतिनिश्वसिते दीर्घे पाणिना नासिकां स्पृशन् ।
भावयामास पार्थोऽयं प्राणायामसमापनम् ॥ 650 ॥

निश्वसिते निश्वसिते प्रतिनिश्वसिते । वैकल्पिकी सप्तमी ।

## ६५९ । अव्ययीभावश्च । ( २. ४. १८ )

अयं नपुंसकं स्यात् ।

अस्मिन्नेव ग्रन्थे श्लो० 629. उपनदि ।

अस्मिन्नेव ग्रन्थे श्लो० 628 उपभैमि ।

अस्मिन्नेव ग्रन्थे श्लो० 599. अन्तर्गिरम् ।

अस्मिन्नेव ग्रन्थे श्लो० 627. उपगङ्गम् ।

## ६६० । अव्ययीभावे चाकाले ( ६. ३. ८१ )

सहस्य सः स्यात् अव्ययीभावे न तु काले । चक्रेण युगपदिति सचक्रम् । हरेः सादृश्यं सहरि ।

अस्मिन्नेव ग्रन्थे श्लो० 647. सह राज्ञा सराजम्। सदृशः सख्या ससखि। क्षत्राणां सम्पत्तिः सक्षत्रम्। तृणमप्यपरित्यज्य सतृणम्। अग्निग्रन्थपर्यन्तमधीते साग्नि।

### ६६२। यावदवधारणे। (२. १. ८)

इत्यव्ययीभावः।

किरातार्जुनीये—XIV. 56.

समुज्झिता यावदराति निर्यती
सहैव चापान्मुनिबाणसंहतिः।
प्रभा हिमांशोरिव पंकजावलिं
निनाय संकोचमुमापतेश्चमूम् ॥ 651 ॥

यावन्तोऽरातयो यावदराति।

नैषधे—V. 9.

अर्चनाभिरुचितोच्चतराभि-
श्चारु तं सदकृतातिथिमिन्द्रः।
यावदर्हकरणं किल साधोः
प्रत्यवायघुतये न गुणाय ॥ 652 ॥

यावदर्हं यावद्युक्तम्। यावदर्हस्य करणमिति षष्ठीतत्पुरुषः।

माघे—II. 13.

यावदर्थपदां वाचमेवमादाय माधवः।
विरराम महीयांसः प्रकृत्या मितभाषिणः ॥ 653 ॥

यावानर्थो यावदर्थम्।

### ६६५। विभाषा। (२. १. ११)

अधिकारोऽयम्।

### ६६६। अपपरिबहिरञ्चवः पञ्चम्या। (२. १. १२)

'अपपरी वर्जने' (सू. 596) एतौ कर्मप्रवचनीयसंज्ञकौ । 'पंचम्यपाङ्परिभिः' (सू. 598) एतद्योगे पञ्चमी । तया पंचम्या वा समासः । अपविष्णु, अपविष्णोः । परिविष्णु, परिविष्णोः । बहिर्वनम्, बहिर्वनात् । प्राग्वनम्, प्राग्वनात् ।

अस्मिन्नेव ग्रन्थे श्लो० 433. अप नगरात् अपनगरम् । नगरं वर्जयित्वा ।

अस्मिन्नेव ग्रन्थे श्लो० 434. उदधेः पञ्चमी । परिपरि । उदधिं वर्जयित्वा 'परेर्वर्जने' (सू. 2141) असमासे वेत्यसमासपक्षे विकल्पाद् द्विर्वचनम् । समासपक्षे तु उदधेः परि पर्युदधि इति समासः स्यात् ।

अस्मिन्नेव ग्रन्थे श्लो० 441. बहिर्विकारेभ्यो बहिर्विकारम् ।

अस्मिन्नेव ग्रन्थे श्लो० 424 तोरणाद्बहिः । विकल्पान्न समासः ।

अस्मिन्नेव ग्रन्थे श्लो० 421. कलहोदयात्प्राक् । विकल्पान्न समासः । समासे प्राक्कलहोदयम् इति स्यात् ।

६६७ । आङ्मर्यादाभिविध्योः । (२. १. १३)

तेन विनेति मर्यादा । तेन सहेत्यभिविधिः । 'आङ्मर्यादावचने' (सू. 597) इति कर्मप्रवचनीयत्वम् । 'पञ्चम्यपाङ्परिभिः' (सू. 598) । एतद्योगे पञ्चमी । एतया पंचम्या वा समस्यते । आमुक्ति आमुक्तेः संसारः, मर्यादायाम् ; अभिविधौ तु आबालमाबालेभ्यो हरिभक्तिः ।

अस्मिन्नेव ग्रन्थे श्लो० 603. तिष्ठद्गुः 'तिष्ठद्गुप्रभृतीनि च' (सू. 671) इत्यव्ययीभावनिपातनात्साधुः । तत्पर्यन्तमातिष्ठद्गु । पुनरव्ययीभावः ।

चम्पूभारते—I. 32.

गात्रं न केवलमशेषबुधोपलाल्यं
गोलं च तत्रभवतः कुमुदैकबन्धोः ;
आपाण्डु वर्तत इति स्फुटमद्य मन्ये
यस्मात्प्रजां न लभसे यदुवीरकन्ये ॥ 654 ॥

आ पाण्डोः आपाण्डु । पाण्डुपर्यन्तम् ।

रघुवंशे—I. 91.

इत्या प्रसादादस्यास्त्वं परिचर्यापरो भव ।
अविघ्नमस्तु ते स्थेयाः पितेव धुरि पुत्रिणाम् ॥ 655 ॥

आ प्रसादात्प्रसादपर्यन्तम् । वैभाषिकत्वान्न समासः ।

माघे—XVIII 17.

आधावन्तः संमुखं धारितानां-
मन्यैरन्ये तीक्ष्णकौक्षेयकाणाम् ।
वक्षःपीठैरा त्सरोरात्मनैव
क्रोधेनान्धाः प्राविशन् पुष्कराणि ॥ 656 ॥

आ त्सरोरामुष्टेः । विकल्पादसमासः ।

अस्मिन्नेव ग्रन्थे श्लो° 434. आ द्युलोकात् । विकल्पादसमासः ।

रघुवंशे—I. 5.

सोऽहमाजन्मशुद्धानामाफलोदयकर्मणाम् ।
आसमुद्रक्षितीशानामानाकरथवर्त्मनाम् ॥ 657 ॥

आ जन्मनः आजन्म । आजन्मं वा । 'नपुंसकादन्यतरस्याम्' (सू. 680) इति वैकल्पिकष्टच् । आ फलोदयात् आफलोदयम् । आ समुद्रादासमुद्रम् । आ नाकादानाकम् ।

## ६६८ । लक्षणेनाभिप्रती आभिमुख्ये । (२. १. १४)

'लक्षणेत्थंभूताख्यान' (सू. 552) 'अभिरभागे' (सू. 553) इत्यत्र प्रतिपर्यनवः अभिः एतेषां मध्ये लक्षणभूतौ अभिप्रती आभिमुख्ये त्येद्ये वा समस्येते । अभ्यग्नि अग्निमभि । प्रत्यग्नि अग्निं प्रति ।

माघे—I. 13.

अथ प्रयत्नोन्नमितानमत्फणै-
र्धृते कथंचित्फणिनां गणैरधः ।

न्यधायिषातामभिदेवकीसुतं
सुतेन धातुश्चरणौ भुवस्तले ॥ 658 ॥

**अभिदेवकीसुतम्** इत्यव्ययीभावः । असमासपक्षे 'कर्मप्रवचनीययुक्ते द्वितीया' (सू. 548) इति द्वितीया । देवकीसुतमभि । इति पदद्वयम् ।

अस्मिन्नेव ग्रन्थे श्लो॰ 562. **अभिचैद्यम्** । अव्ययीभावसमासः । चैद्यमभि इत्यसमासो वा ।

अस्मिन्नेव ग्रन्थे श्लो॰ 60. **अभिनभः** । अव्ययीभावसमासः । नभोऽभि इत्यसमासो वा ।

माघे—VIII. 1.

आयासादलघुतरस्तनैः स्तनद्भिः
श्रान्तानामविकचलोचनारविन्दैः ।
**अभ्यम्भः** कथमपि योषितां समूहै-
स्तैरुर्वीनिहितचलत्पदं प्रचेले ॥ 659 ॥

**अभ्यम्भः** । अव्ययीभावसमासः । अम्भोऽभि इत्यसमासो वा ।

माघे—XIII. 45.

निजसौरभभ्रमितभृंगपक्षति-
व्यजनानिलक्षपितघर्मवारिणा ।
**अभिशौरि** काचिदनिमेषदृष्टिना
पुरदेवतेव वपुषा व्यभाव्यत ॥ 660 ॥

**अभिशौरि** । शौरेरभिमुखम् । अव्ययीभावसमासः ।

माघे—XV. 28.

**अभिशत्रु** संयति कदाचि-
दविहितपराक्रमोऽपि यत् ।
व्योम्नि कथमपि चकर्थ पदं
व्यपदिश्यसे जगति विक्रमीत्यतः ॥ 661 ॥

**अभिशत्रु** शत्रुमभि । अव्ययीभावसमासः ।

अस्मिन्नेव ग्रन्थे श्लो० 202. प्राणेशानभि । असमासः ।

माघे—I. 24.

निदाघधामानमिवातिदीधितिं
मुदा विकासं मुनिमभ्युपेयुषी ।
विलोचने बिभ्रदधिश्रितश्रिणी
स पुण्डरीकाक्ष इति स्फुटोऽभवत् ॥ 662 ॥

**मुनिमभि** । मुनिमभिलक्ष्य । अभेः कर्मप्रवचनीयसंज्ञा । तद्योगे द्वितीया । असमासः । समासे अभिमुनि इति स्यात् ।

माघे—VII. 32.

प्रियमभि कुसुमोद्यतस्य बाहो-
र्नवनखमण्डनचारु मूलमन्या ।
मुहुरितरकराहितेन पीन-
स्तनतटरोधि तिरोदधेंऽशुकेन ॥ 663 ॥

**प्रियमभि** । प्रियस्याभि । अभेर्लक्षणार्थे कर्मप्रवचनीयत्वम् । तद्योगे द्वितीया ।

अस्मिन्नेव ग्रन्थे श्लो० 647. अभ्ययोध्यम् । अयोध्यामभि । अव्ययीभावसमासः ।

अस्मिन्नेव ग्रन्थे श्लो० 232. प्रत्यनिलम् । अनिलाभिमुखम् । प्रत्यनिलमिति अव्ययीभावसमासः । अनिलं प्रतीत्यसमासो वा ।

अस्मिन्नेव ग्रन्थे श्लो० 299. भवन्तमभि । भवन्तं लक्षीकृत्य । अभेः कर्मप्रवचनीयत्वात्तद्योगे द्वितीया ।

माघे—V. 41.

प्रत्यन्यदन्ति निशिताङ्कुशदूरभिन्न-
निर्याणनिर्यदसृजं चलितं निषादी ।
रोद्धुं महेभमपरिभ्रढिमानमागा-
दाक्रान्ततो न वशमेति महान्परस्य ॥ 664 ॥

प्रत्यन्यदन्ति । अन्यदन्तिनं प्रति । प्रतिगजाभिमुखमित्यर्थः । अव्ययीभाव-समासः ।

माघे—VIII 35.

> निघ्नन्ती दृशमपरा निधाय पूर्णं
> मूर्तेन प्रणयरसेन वारिणेव ।
> कन्दर्पप्रवणमनाः सखीसिसिक्षा-
> लक्ष्येण प्रतियुवमञ्जलिं चकार ॥ 665 ॥

प्रतियुवं युवानं प्रति । अव्ययीभावसमासः । 'अनश्च' (सू. 678) इति समासान्तः ।

अस्मिन्नेव ग्रन्थे श्लो० 298. श्रियं प्रति । असमासः ।

माघे—IX. 11.

> अभितिग्मरश्मि चिरमाविरमा-
> दवधानखिन्नमनिमेषतया ।
> विगलन्मधुव्रतकुलाश्रुजलं
> न्यमिमीलदब्जनयनं नलिनी ॥ 666 ॥

अभितिग्मरश्मि । सूर्याभिमुखम् । अव्ययीभावसमासः ।

अस्मिन्नेव ग्रन्थे श्लो० 296. प्रत्यमित्रममित्रं प्रति । अव्ययीभावसमासः । द्वितीया वा ।

## ६६९ । अनुर्यत्समया । (२. १. १५)

लक्ष्मणभूतोऽनुः समस्यते सामीप्ये द्योत्ये । अनुवनमशनिर्गतः । वनस्य समीपं गत इत्यर्थः ।

रघुवंशे—XIII. 35.

> अलानुगोदं मृगयानिवृत्त-
> स्तरङ्गवातेन विनीतखेदः ।

रहस्त्वदुत्सङ्गनिषण्णमूर्धा
स्मरामि वानीरगृहेषु सुप्तः ॥ 667 ॥

गोदा गोदावरी । तस्याः समीपेऽनुगोदम् । अव्ययीभावसमासः ।

रघुवंशे—XIII. 49.

अयं सुजातोऽनुगिरं तमालः
प्रवालमादाय सुगन्धि यस्य ।
यवाङ्कुरापाण्डुकपोलशोभी
मयावतंसः परिकल्पितस्ते ॥ 668 ॥

गिरेः समीपेऽनुगिरम् । अव्ययीभावसमासः । 'गिरेश्च सेनकस्य' (सू. 683) इति समासान्तष्टच् ।

मेघसंदेशे—I. 50.

तस्माद्गच्छेरनुकनखलं शैलराजावतीर्णां
जह्नोः कन्यां सगरतनयस्वर्गसोपानपङ्क्तिम् ।
गौरीवक्त्रभ्रुकुटिरचनां या विहस्येव फेनैः
शम्भोः केशग्रहणमकरोदिन्दुलग्नोर्मिहस्ता ॥ 669 ॥

कनखलस्याद्रेः समीपे । अनुकनखलम् । अव्ययीभावसमासः ।

माघे—V. 13.

बिभ्राणया बहलयावकपङ्कपिङ्ग-
पिच्छावचूडमनुमाधवधाम जग्मुः ।
चञ्च्वग्रदष्टचटुलाहिपताकयान्ये
स्वावासभागमुरगाशनकेतुयष्ट्या ॥ 670 ॥

माधवधाम्नः समीपेऽनुमाधवधाम । 'नपुंसकादन्यतरस्याम्' (सू. 680) इति वैकल्पिकः समासान्तः ।

**६७० । यस्य चायामः । ( २. १. १६ )**

अनुः समस्यते सोऽव्ययीभावः। अनुगङ्गं वाराणसी। गङ्गादैर्घ्यसदृशदैर्घ्योपलक्षितेत्यर्थः। लक्षणे परेर्न समासः। वृक्षं परि लक्षीकृत्य। इत्थंभूताख्यानादौ अभिप्रतिपर्यनूनां सर्वेषां न समासः।

अस्मिन्नेव ग्रन्थे श्लो० 298. सद्वृत्तानंनु साधुम्मति। दुर्वृत्ते दुष्टचरित्रः सन्। अनोरित्थंभूताख्याने कर्मप्रवचनीयत्वम्। अतो न समासः। परि श्रीं श्रीं श्रीं प्रति। परेर्वीप्सायां कर्मप्रवचनीयत्वम्। अतो न समासः। 'अनुगवमायामे' (सू. 951) इति निपातः।

६७१। तिष्ठद्गुप्रभृतीनि च। (२. १. १७)

एतानि निपात्यन्ते। अयमव्ययीभावः। तिष्ठन्ति गावो यस्मिन्काले दोहाय स तिष्ठद्गु दोहनकालः। आयतीगवम्। इह शत्रादेशः पुंवद्भावाभावः समासान्तश्च निपात्यते। तिष्ठद्गुप्रभृतिः—२. १.

अस्मिन्नेव ग्रन्थे श्लो० 603. तिष्ठद्गु। आयतीगवम्। आयत्यो दोहाय गोचरादागच्छन्त्यो गावो यस्मिन् काले स काल आयतीगवम्।

६७२। पारेमध्ये षष्ठ्या वा। (२. १. १८)

पारमध्यशब्दौ षष्ठ्यन्तेन सह वा समस्येते। एदन्तत्वं चानयोर्निपात्यते। पक्षे षष्ठीतत्पुरुषः। पारेगङ्गादानय। गङ्गापारात्। मध्येगङ्गात्। गङ्गामध्यात्।

माघे—III. 70.

पारेजलं नीरनिधेरपश्यन्
मुरारिरानीलपलाशराशीः।
वनावलीरुत्कलिकासहस्र-
प्रतिक्षणोत्कूलितशैवलाभाः॥ 671॥

जलानां पारे परतीरे पारेजलम्। 'तृतीयासप्तम्योर्बहुलम्' (सू. 658) इति विकल्पात्सप्तम्या अभावः।

चम्पूभारते—II. 16.

पारेसिन्धु प्रथितमथितं प्रत्यहं वर्धमानं
सोढुं पार्थाभ्युदयमपटोः स्वात्मजस्यानुरोधात्।

प्रीतो राजाप्यनुजतनुजप्रेममार्गे प्रयातुं
मातुर्दोषादिव बहिरगादन्तरप्यन्वभावम् ॥ 672 ॥

सिन्धोः पारे **पारेसिन्धु** ।

अस्मिन्नेव ग्रन्थे श्लो० 114. मध्ये समुद्रस्य **मध्येसमुद्रम्** । अदन्तात्समुद्रशब्दाद्विकल्पात्सप्तम्या अम्भावः ।

भट्टिकाव्ये—V. 4.

हतबन्धुर्जगामासौ ततः शूर्पणखा वनात् ।
**मध्येसमुद्रं** लङ्कायां वसन्तं रावणं गतिम् ॥ 673 ॥

मध्ये समुद्रस्य **मध्येसमुद्रम्** । अव्ययीभावसमासः । पूर्ववदम् ।

असिन्नेव ग्रन्थे श्लो० 648. मध्ये जलस्य **मध्येजलम्** । तस्मान्मध्येजलात् । अपञ्चम्या इति निषेधादम् न भवति ।

## ६७३ । संख्या वंश्येन । ( २. १. १९ )

वंशो द्विधा विद्यया जन्मना च । तत्र भवो वंश्यः । तद्वाचिना सह संख्या वा समस्यते । द्वौ मुनी वंश्यौ द्विमुनि । व्याकरणस्य त्रिमुनि ।

## ६७४ । नदीभिश्च । ( २. १. २० )

नदीभिः संख्या प्राग्वत् । समाहारे चायमिष्यते । सप्तगङ्गम् । द्वियमुनम् । 'संख्याया नदीगोदावरीभ्यां च' (वा. 5047. सू. 943) इति सर्वसमासान्तोऽच् । पञ्चनदम् । सप्तगोदावरम् ।

अनर्घराघवे—VII. 103.

ग—देव ! प्रणम्यतामयमन्ध्रविषयलक्ष्म्याः **सप्तगोदावरहारकलापैकनायको** भगवान्भीमेश्वरः ॥ 674 ॥

सप्तानां गोदावरीणां समाहारः **सप्तगोदावरम्** । अव्ययीभावो वा ।

## ६७६ । समासान्ताः । ( ५. ४. ६८ )

**इत्यधिकृत्य** ।

६७७ । अव्ययीभावे शरत्प्रभृतिभ्यः । ( ५. ४. १०७ )

शरदादिभ्यष्टच् स्यात्समासान्तोऽव्ययीभावे । शरदः समीपमुपशरदम् । प्रतिविपाशम् । शरदादिः—५. ५६. 'प्रतिपरसमनुभ्योऽक्ष्णः' । ( ग. सू. 147. )

अस्मिन्नेव ग्रन्थे श्लो० 649. उपशरदे शरत्समीपे । समीपार्थेऽव्ययीभावः । समासान्तः । 'तृतीयासप्तम्योर्बहुलम्' ( सू. 658 ) इति विकल्पादमभावः ।

माघे—XV. 96.

> क्वाचित्कीर्णा रजोभिर्दिवमनुविदधे भिन्नवक्त्रेन्दुलक्ष्मी-
> रश्रीकाः काश्चिदन्तर्दिश इव दधिरे दाहमुद्भ्रान्तसत्त्वाः ।
> भ्रेमुर्वात्या इवान्याः प्रतिदिशमपरा भूमिवत्कम्पमापुः
> प्रस्थाने पार्थिवानामशुभमिति पुरो भावि नार्यः शशंसुः ॥ 675 ॥

प्रतिदिशं दिशि दिशि । 'अव्ययं विभक्ति' (सू. 652) इत्यादिना वीप्सायामव्ययीभावः । शरत्प्रभृतित्वात् समासान्तष्टच् । 'लक्षणेत्थंभूताख्यान' ( सू. 552 ) इत्यादिना प्रतेर्वीप्सायां कर्मप्रवचनीयत्वात् तद्योगे द्वितीया स्यात् ।

अस्मिन्नेव ग्रन्थे श्लो० 641. दिशि दिशि प्रतिदिशम् । पूर्ववदव्ययीभावः । समासान्तष्टच् । प्रति दिशं इति पदद्वयं कृत्वा दिशः प्रति दिशिदिशि । प्रतेर्वीप्सायां कर्मप्रवचनीयत्वात्तद्योगे द्वितीया स्यात् । तत्र समासो न स्यात् ।

माघे—IV. 60.

> इह मुहुर्मुदितैः कलभै रवः
> प्रतिदिशं क्रियते कलभैरवः ।
> स्फुरति चानुवनं चमरीचयः
> कनकरत्नभुवां च मरीचयः ॥ 676 ॥

प्रतिदिशं पूर्ववत् । अव्ययीभावष्टच् ।

अस्मिन्नेव ग्रन्थे श्लो० 630. समक्ष एव । अक्ष्णः समीपे एव । समीपार्थे अव्ययीभावः । शरत्प्रभृतित्वात्समासान्तष्टच् । 'तृतीयासप्तम्योर्बहुलम्' ( सू. 658 ) इति सप्तम्या अमभावः ।

अस्मिन्नेव ग्रन्थे श्लो० 631 । अक्ष्णोः समीपं **समक्षम्** । समीपार्थेऽव्ययीभावः । समासान्तष्टच् ।

माघे—III. 82.

तुरगशताकुलस्य परितः परमेकतुरङ्गजन्मनः
प्रमथितभूभृतः **प्रतिपथं** मथितस्य भृशं महीभृता ।
परिचलतो बलानुजबलस्य पुरः सततं धृतश्रिय-
श्चिरविगतश्रियो जलनिधेश्च तदाभवदन्तरं महत् ॥ 677 ॥

पथि पथि **प्रतिपथम्** । वीप्सायामव्ययीभावः । शरत्प्रभृतित्वात्समासान्तष्टच् ।

६७८ । अनश्च । ( ५. ४. १०८ )

अन्नन्तादव्ययीभावाट्टच् स्यात् ।

अस्मिन्नेव ग्रन्थे श्लो० 647. सह राज्ञा **सराजम्** । यौगपद्येऽव्ययीभावः । समासान्तष्टच् । 'नस्तद्धिते' ( सू. 679 ) इति टिलोपः ।

अस्मिन्नेव ग्रन्थे श्लो० 632. अध्वनि **अध्यध्वम्** । विभक्त्यर्थेऽव्ययीभावः । अध्वन्शब्दस्यान्नन्तत्वात्समासान्तष्टच् । पूर्ववट्टिलोपः ।

अस्मिन्नेव ग्रन्थे श्लो० 441. आत्मनि **अध्यात्मम्** । विभक्त्यर्थेऽव्ययीभावः । आत्मन्नित्यन्नन्तात्समासान्तष्टच् । टिलोपः ।

अस्मिन्नेव ग्रन्थे श्लो० 665. **प्रतियुवं** युवानं प्रति । 'लक्षणेत्थंभूताख्यान' ( सू. 552 ) इत्यादिना प्रतेः कर्मप्रवचनीयत्वम् । 'कर्मप्रवचनीययुक्ते द्वितीया' ( सू. 548 ) इति द्वितीया । 'लक्षणेनाभिप्रती आभिमुख्ये' ( सू. 668 ) इत्यव्ययीभावः । युवन्शब्दस्यान्नन्तत्वात्समासान्तष्टच् । 'नस्तद्धिते' (सू. 679) इति टिलोपः ।

अस्मिन्नेव ग्रन्थे श्लो० 672. अहन्यहनि **प्रत्यहम्** । 'अव्ययं विभक्ति' ( सू. 652 ) त्यादिना वीप्सायामव्ययीभावः । 'अनश्च' ( सू. 678 ) इति समासान्तष्टच् । टिलोपः ।

अस्मिन्नेव ग्रन्थे श्लो० 143. उपसीम ग्रामसीमासु । विभक्त्यर्थेऽव्ययीभावः । समासान्तविधेरनित्यत्वात्समासान्तष्टच् न भवति । केचितु 'अप्यन्येषां कठिनवपुषां

दुर्गमे ग्रामसीम्नि ' इत्यादौ नपुंसकप्रयोगदर्शनात् ' नपुंसकादन्यतरस्याम् ' (सू. 680) इति विकल्पाट्टच् नेत्याहुः ।

६७९ । नस्तद्धिते । ( ६. ४. १४४ )

नान्तस्य भस्य टेर्लोपः स्यात् तद्धिते । उपराजम् ।

अस्मिन्नेव ग्रन्थे श्लो० 441. अध्यात्मम् ।

अस्मिन्नेव ग्रन्थे श्लो० 647. सराजम् ।

अस्मिन्नेव ग्रन्थे श्लो० 622. अध्यध्वम् ।

अस्मिन्नेव ग्रन्थे श्लो० 665 प्रतियुवम् ।

अस्मिन्नेव ग्रन्थे श्लो० 672. प्रत्यहम् ।

माघे—V. 30.

आलोलपुष्करमुखोल्लसितैरभीक्ष्ण-
मुक्षांबभूवुरभितो वपुरम्बुवर्षैः ।
खेदायतश्वसितवेगनिरस्तमुग्ध-
मूर्धन्यरत्ननिकरैरिव हास्तिकानि ॥ 678 ॥

मूर्धनि भवा मूर्धन्याः । ' शरीरावयवाच्च ' ( सू. 1430 ) इति यत्प्रत्ययः । ' ये चाभावकर्मणोः ' ( सू. 1154 ) इति प्रकृतिभावात् ' नस्तद्धिते ' ( सू. 679 ) इति टिलोपाभावः ।

रघुवंशे—XVIII. 28.

यशोभिराब्रह्मसभं प्रकाशः
स ब्रह्मभूयं गतिमाजगाम ।
ब्रह्मिष्ठमाधाय निजेऽधिकारे
ब्रह्मिष्ठमेव स्वतनुप्रसूतम् ॥ 679 ॥

अतिशयेन ब्रह्मवन्तं ब्रह्मिष्ठम् । ब्रह्मशब्दान्मतुबन्तादिष्ठन्प्रत्यये ' विन्मतोर्लुक् ' ( सू. 2020 ) इति मतुपो लुक् । ' नस्तद्धिते ' ( सू. 679 ) इति टिलोपः ।

अस्मिन्नेव ग्रन्थे श्लो० 33. हेम्नो विकारो हैमी । ' प्राणीरजतादिभ्योऽञ् ' ( सू. 1532 ) ' नस्तद्धिते ' ( सू. 679 ) इति टिलोपः ।

## ६८० । नपुंसकादन्यतरस्याम् । ( ५. ४. १०९ )

अन्नन्तं यत्क्लीबं तदन्तादव्ययीभावाट्टज्वा स्यात् । उपचर्मं उपचर्म ।

अस्मिन्नेव ग्रन्थे श्लो० 642. अहन्यहनि अन्वहम् । विप्सायामव्ययीभावः । विकल्पाट्टच् ।

अस्मिन्नेव ग्रन्थे श्लो०. 143. उपसीम । ग्रामसीमासु । विभक्त्यर्थेऽव्ययीभावः । विकल्पान्न टच् ।

अस्मिन्नेव ग्रन्थे श्लो० 670. अनुमाधवधाम । 'लक्षणेत्थंभूताख्यान' (सू. 552) इत्यादिना अनोर्लक्षणे कर्मप्रवचनीयत्वम् । 'कर्मप्रवनचनीययुक्ते द्वितीया' ( सू. 548) इति द्वितीया । 'अनुर्यत्समया' ( सू. 669) इति अव्ययीभावसमासः । धामन्शब्दस्यान्नन्तत्वेन नपुंसकत्वात् विकल्पान्न टच् ।

## ६८१ । नदीपौर्णमास्याग्रहायणीभ्यः । ( ५. ४. ११० )

वा टच् स्यात् । उपनदम् उपनदि । उपपौर्णमासं उपपौर्णमासि । उपाग्रहायणं उपाग्रहायणि ।

अस्मिन्नेव ग्रन्थे श्लो० 629. नद्याः समीपे उपनदि । समीपार्थेऽव्ययीभावः । 'अव्ययीभावश्च' ( सू. 659. ) इति नपुंसकत्वे ह्रस्वत्वम् । विकल्पान्न टच् ।

किरातार्जुनीये—VII. 21.

उत्सङ्गे समविषमे समं महाद्रेः
कान्तानां वियदभिपातलाघवेन ।
आमूलादुपनदि सैकतेषु लेभे
सामग्रीखुरपदवी तुरङ्गमाणाम् ॥ 680 ॥

## ६८३ । गिरेश्च सेनकस्य । ( ५. ४. ११२ )

गिर्यन्तादव्ययीभावाट्टज्वा स्यात् । उपगिरं उपगिरि ।

अस्मिन्नेव ग्रन्थे श्लो० 623. गिरौ अनुगिरम् । विभक्त्यर्थेऽव्ययीभावः । विकल्पात्समासान्तः ।

अस्मिन्नेव ग्रन्थे श्लो० 668. 'लक्षणेत्थंभूताख्यान' (सू. 552) इत्यादिना अनोर्लक्षणे कर्मप्रवचनीयत्वम् । 'कर्मप्रवचनीययुक्ते द्वितीया' (सू. 548) इति द्वितीया । 'अनुर्यत्समया' (सू. 669) इत्यव्ययीभावसमासः । अनुगिरम् । समासान्तष्टच् ।

अस्मिन्नेव ग्रन्थे श्लो० 599. गिरावन्तर्गिरम् । विभक्त्यर्थेऽव्ययीभावः । समासान्तष्टच् ।

॥ इत्यव्ययीभावसमासप्रकरणम् ॥

---

## ॥ अथ तत्पुरुषसमासप्रकरणम् ॥

---

६८४ । तत्पुरुषः । ( २. १. २२ )

अधिकारोऽयम् । प्राग्बहुव्रीहेः ।

६८५ । द्विगुश्च । ( २. १. २३ )

द्विगुरपि तत्पुरुषसंज्ञः स्यात् ।

६८६ । द्वितीया श्रितातीतपतितगतात्यस्तप्राप्तापन्नैः । ( २. १. २४ )

द्वितीयान्तं श्रितादिभिः सुबन्तैः सह वा समस्यते । स तत्पुरुषः । कृष्णं श्रितः कृष्णश्रितः । दुःखमतीतो दुःखातीतः ।

वा० । गम्यादीनामुपसंख्यानम् । ( 1247. )

ग्रामं गामी ग्रामगामी । अन्नं बुभुक्षुः अन्नबुभुक्षुः । 'भविष्यति गम्यादयः' ( सू. 3171 ) गम्यादिः—३. १०. बुभुक्षुपिपासुप्रभृतीनां गम्यादिपाठात्समास इति वामनः ।

भट्टिकाव्ये—V. 53.

श्रुत्वा विस्फूर्जथुप्रख्यं निनादं परिदेविनी ।
मत्वा कष्टश्रितं रामं सौमित्रिं गन्तुमैजिहत् ॥ 681 ॥

कष्टं श्रितं **कष्टश्रितम्** । द्वितीयासमासः ।

किरातार्जुनीये—XI. 2.

मुनिरूपोऽनुरूपेण सूनुना ददृशे पुरः ।
द्राघीयसा **वयोऽतीतः** परिक्लान्तः किलाध्वना ॥ 682 ॥

**वयो यौवनादिकमतीतो वृद्धः** । द्वितीयासमासः ।

माघे—II. 75.

विशेषविदुषः शास्त्रं यत्तवोद्ग्राह्यते पुरः ।
हेतुः परिचयस्थैर्ये वक्तुर्गुणनिकैव सा ॥ 683 ॥

विशेषं विद्वान् तस्य विशेषविदुषः । गम्यादिपाठाद् द्वितीयासमासः ।

नैषधे—IV. 100.

इति कियद्वचसैव भृशं प्रिया-
धरपिपासु तदाननमाशु तत् ।
अजनि पांसुलमप्रियवाग्ज्वलन्
मदनशोषणबाणहतेरिव ॥ 684 ॥

प्रियस्य नलस्याधरमोष्ठं पिपासु पातुमिच्छु । द्वितीयासमासः ।
अस्मिन्नेव ग्रन्थे श्लो० 223. पापमनु पापानु । द्वितीयेति योगविभागात्समासः ।

६८८ । खट्वा क्षेपे । ( २. १. २६ )

अस्मिन्नेव ग्रन्थे श्लो० 543. खट्वामारूढः खट्वारूढः । परतल्पगतः । क्षेपे कान्तेन द्वितीयासमासः ।

६८९ । सामि । ( २. १. २७ )

सामिकृतम् ।

रघुवंशे—XIX. 16.

तस्य सावरणदृष्टसन्धयः काम्यवस्तुषु नवेषु सङ्गिनः ।
वल्लभाभिरुपसृत्य चक्रिरे सामिभुक्तविषयास्समागमाः ॥ 685 ॥

माघे—XIII. 31.

अभिवीक्ष्य सामिकृतमण्डनं यतीः कररुद्धनीविगलदंशुकाः स्त्रियः ।
दधिरेऽधिभित्ति पटहप्रतिस्वनैः स्फुटमट्टहासमिव सौधपङ्क्तयः ॥ 686 ॥

६९१ । अत्यन्तसंयोगे च । ( २. १. २९ )

काला इत्येव । 'कालाध्वनोः (सू. 558) इति द्वितीया । मुहूर्तं सुखं मुहूर्तसुखम् ।

अस्मिन्नेव ग्रन्थे श्लो० 406. वर्षं भोग्यम् वर्षभोग्यम् ।

भट्टिकाव्ये—IX. 112.

न सर्वरात्रकल्याण्यः स्त्रियो नो रत्नभूमयः ।
यं विनिर्जित्य लभ्यन्ते कः कुर्यात्तेन विग्रहम् ॥ 687 ॥

सर्वरात्रान् कल्याण्यः सर्वरात्रकल्याण्यः ।

अस्मिन्नेव ग्रन्थे श्लो० 587. चिरकालमुषितं चिरकालोषितम् ।

अस्मिन्नेव ग्रन्थे श्लो० 170. क्षणं लक्ष्यमाणाः क्षणलक्ष्यमाणाः ।

माघे—XX. 46.

शिखिपिच्छकृतध्वजावचूड-
क्षणसाशङ्कविवर्तमानकायाः ।
यमपाशवदाशु बन्धनाय
न्यपतन्वृष्णिगणेषु लेलिहानाः ॥ 688 ॥

क्षणं साशङ्काः क्षणसाशङ्काः ।

चम्पूभारते—I. 9.

शालीनतामविगणय्य सखीसमाजे
पश्चात्कृतस्य कमितुः प्रणयप्रकोपात् ।
मुग्धाः समीक्ष्य मुकुरायितरत्नभित्तौ
छायां क्षणानुतपनं शमयन्ति यस्याम् ॥ 689 ॥

क्षणमनुतपनं क्षणानुतपनम् ।

## ६९३ । पूर्वसदृशसमोनार्थकलहनिपुणमिश्रश्लक्ष्णैः । (२. १. ३१)

तृतीयान्तमेतैः प्राग्वत् । मासेन पूर्वो मासपूर्वः । मातृसदृशः । पितृसमः । तुल्यार्थैरित्यादिना विहिता या तृतीया तदन्तमित्यर्थः । ऊनार्थे, माषोनं कार्षापणम् ।

माषविकलम् । वाचा कलहो वाक्कलहः । आचारनिपुणः । गुडमिश्रः । आचारश्लक्ष्णः । मिश्रग्रहणे सोपसर्गस्यापि ग्रहणम् । गुडसंमिश्रा धानाः ।

वा० । अवरस्योपसङ्ख्यानम् । (1256.)

मासेनावरः मासावरः ।

भट्टिकाव्ये—III. 37.

शीघ्रायमाणैः ककुभोऽश्नुवानै-
र्जनैरपन्थानमुपेत्य सृतैः ।
शोकादभूषैरपि भूष्यकासां-
चकार नागेन्द्ररथाश्वमिश्रैः ॥ 690 ॥

नागेन्द्ररथाश्वेन मिश्रैर्नागेन्द्ररथाश्वमिश्रैः । तृतीयासमासः ।

६९४ । कर्तृकरणे कृता बहुलम् । (२. १. ३२)

कर्तरि करणे च तृतीया कृदन्तेन बहुलं प्राग्वत् । हरिणा त्रातो हरित्रातः । नखैर्भिन्नो नखभिन्नः ।

अस्मिन्नेव ग्रन्थे श्लो० 610. शार्ष्टीकैर्वैरग्राहिभिः कर्तृभिः व्याहृतः, कृदन्तः । शार्ष्टीकव्याहतः ।

अस्मिन्नेव ग्रन्थे श्लो० 545. जनेन मता जनमता ।

माघे—X. 90.

योषितामतितरां नखलूनं
गात्रमुज्ज्वलतया न खलूनम् ।
क्षोभमाशु हृदयं नयदूनां
रागवृद्धिमकरोन्न यदूनाम् ॥ 691 ॥

नखैः करणैर्लूनं नखलूनम् ।

६९५ । कृत्यैरधिकार्थवचने (२. १. ३३)

स्तुतिनिन्दाफलकमर्थवादवचनमधिकार्थवचनम् । तत्र कर्तरि करणे च तृतीया कृत्यैः सह प्राग्वत् । वातच्छेद्यं तृणम् । काकपेया नदी ।

भट्टिकाव्ये—V. 14.

मांसान्योष्ठावलोप्यानि सावनीयानि देवताः ।
अश्नन्ति रामाद्रक्षांसि बिभ्यत्यश्नुवते दिशः ॥ 692 ॥

ओष्ठाभ्यामवलोप्तुमत्तुमर्हाणि **ओष्ठावलोप्यानि** । करणे तृतीयासमासः ।

अस्मिन्नेव ग्रन्थे श्लो० 643. करेण प्रचेयानि **करप्रचेयानि** । करणे तृतीयासमासः ।

## ६९६ । अन्नेन व्यञ्जनम् । ( २. १. ३४ )

दध्ना ओदनः दध्योदनः ।

## ६९७ । भक्ष्येण मिश्रीकरणम् । ( २. १. ३५ )

गुडेन धाना गुडधानाः ।

## ६९८ । चतुर्थी तदर्थार्थबलिहितसुखरक्षितैः । ( २. १. ३६ )

चतुर्थ्यन्तं वा प्राग्वत् । यूपाय दारु यूपदारु ।

**वा०** । अर्थेन नित्यसमासो विशेष्यलिङ्गता चेति वक्तव्यम् । ( 1273-1274 )

द्विजायायं द्विजार्थः सूपः । द्विजार्था यवागूः । द्विजार्थं पयः । भूतबलिः । गोहितम् । गोसुखम् । गोरक्षितम् ।

नैषधे—I. 137.

**मदर्थ**सन्देशमृणालमन्थरः
प्रियः कियद्दूर इति त्वयोदिते ।
विलोकयन्त्या रुदतोऽथ पक्षिणः
प्रिये स कीदृग्भविता तव क्षणः ॥ 693 ॥

मह्यमिमे **मदर्थे** ।

किरातार्जुनीये—V. 7.

दधतमाकरिभिः करिभिः क्षतैः
समवतारसमैरसमैस्तटैः ।

विविधकामहिता महिताम्भसः
स्फुटसरोजवना जवना नदीः ॥ 694 ॥

विविधेभ्यः कामेभ्योऽवगाहाद्युपभोगेभ्यो हिता अनुकूला **विविधकामहिताः** इति समासः । 'गत्यर्थकर्मणि' (सू. 585) इति द्वितीयाचतुर्थ्यौ । चतुर्थीति योगविभागात्समासः ।

अस्मिन्नेव ग्रन्थे श्लो० 397. वनाय प्रयाणम् **वनप्रयाणम्** ।

भट्टिकाव्ये—I. 1.

अभून्नृपो विबुधसखः परन्तपः
श्रुतान्वितो दशरथ इत्युदाहृतः ।
गुणैर्वरं भुवनहितच्छलेन यं
सनातनः पितरमुपागमत्स्वयम् ॥ 695 ॥

भुवनाय हितं **भुवनहितम्** ।

## ६९९ । पंचमी भयेन (२. १. ३७)

भीत्रार्थानां (सू. 588) इति या पञ्चमी सा समस्यते । चोराद्भयं चोरभयम् ।

**वा०** । भयभीतभीतिभीभिरिति वाच्यम् । (1275.)

वृकाद्भीतो वृकभीतः ।

अस्मिन्नेव ग्रन्थे श्लो० 179. अलेर्भयम् **अलिभयम्** ।

अस्मिन्नेव ग्रन्थे श्लो० 182. वारिधरारवेभ्यो भीरवो **वारिधरारवभीरवः** ।

रघुवंशे—XIV. 23.

तेनार्थवान् लोभपराङ्मुखेन
तेन घ्नता **विघ्नभयं** क्रियावान् ।
तेनास लोकः पितृमान्विनेत्रा
तेनैव शोकापनुदेन पुत्री ॥ 696 ॥

विघ्नेभ्यो भयं **विघ्नभयम्** ।

चम्पूभारते—III. 21.

प्रयाणनम्रे तदनु स्वमौलौ
पार्थस्य जज्ञे नियमाभिषेकः ।
प्रागेव तीर्थोपगमात्पवित्रै-
र्बाष्पैर्नरेन्द्रस्य वियोगभीरोः ॥ 697 ॥

वियोगाद्भीरुः वियोगभीरुः । तस्य ।

७०१ । स्तोकान्तिकदूरार्थकृच्छ्राणि क्तेन । (२. १. ३९)

'पंचम्याः स्तोकादिभ्यः' (सू. 959) इत्यलुक् । स्तोकान्मुक्तः । अल्पान्मुक्तः । अन्तिकादागतः । अभ्याशादागतः । दूरादागतः । विप्रकृष्टादागतः । कृच्छ्रादागतः ।

माघे—XVIII. 13.

शुद्धाः सङ्गं न क्वचित्प्राप्नुवन्तो
दूरान्मुक्ताः शीघ्रतां दर्शयन्तः ।
अन्तःसेनं विद्विषामाविशन्तो
युक्तं चक्रुः सायका वाजितायाः ॥ 698 ॥

दूरात् मुक्ताः दूरान्मुक्ताः ।

रघुवंशे—IV. 52.

असह्यविक्रमः सह्यं दूरान्मुक्तमुदन्वता ।
नितम्बमिव मेदिन्याः स्रस्तांशुकमलङ्घयत् ॥ 699 ॥

७०२ । षष्ठी । (२. २. ८)

'षष्ठी शेषे' (सू. 606) इति या षष्ठी सा समस्यते । राज्ञः पुरुषो राजपुरुषः ।

अस्मिन्नेव ग्रन्थे श्लो० 587. क्षत्रियकान्तिके । 'दूरान्तिकार्थैः षष्ठ्यन्यतरस्याम्' (सू. 611) इति षष्ठ्यां 'षष्ठी' (सू. 702) इति समासः ।

## ७०३ । याजकादिभिश्च । (२. २. ९)

एभिः षष्ठ्यन्तं समस्यते । 'तृजकाभ्यां कर्तरि' (सू. 709) इत्यस्य प्रतिप्रसवोऽयम् । याजकादिः—२. १०. ब्राह्मणयाजकः । देवपूजकः ।

वा० । गुणात्तरेण तरलोपश्चेति वक्तव्यम् । (3841.)

तरबन्तं यद्गुणवाचि तेन सह समासः । तरलोपश्च । सर्वेषां श्वेततरः सर्वश्वेतः । सर्वेषां महत्तरः सर्वमहान् ।

वा० । कृद्योगा च षष्ठी समस्यत इति वाच्यम् । (1317.)

इध्मस्य व्रश्चनः इध्मव्रश्चनः ।

अस्मिन्नेव ग्रन्थे श्लो० 550. स्वर्गस्य भर्ता **स्वर्गभर्ता** । तस्य । पत्यर्थभर्तृशब्दस्य याजकादित्वात्समासः ।

किरातार्जुनीये—VII. 1.

श्रीमद्भिः सरथगजैः सुराङ्गनानां
गुप्तानामथ सचिवैस्त्रि**लोकभर्तुः** ।
संमूर्च्छन्नलघुविमानरन्ध्रभिन्नः
प्रस्थाने समभिदधे मृदङ्गनादः ॥ 700 ॥

**त्रिलोकभर्तुः** ।

अस्मिन्नेव ग्रन्थे श्लो० 56. धरन्तीति धराः पचाद्यच् । पयसां धराः **पयोधराः** ।

भट्टिकाव्ये—VII. 110.

विलोक्य सलिलोच्चयानधिसमुद्रमभ्रंलिहान्
भ्रमन्मकरभीषणं समधिगम्य चोच्चैः पयः ।
**गमागमसहं** द्रुतं कपिवृषाः परिप्रैषयन्
गजेन्द्रगुरुविक्रमं तरुमृगोत्तमं मारुतिम् ॥ 701 ॥

सहत इति सहः । पचाद्यच् । गमागमस्य सहः **गमागमसहः** । तम् । भीषणं नन्द्यादित्वात् ल्युः ।

अस्मिन्नेव ग्रन्थे श्लो० 512. कुसुमानां, कृद्योगे कर्मणि षष्ठी, उत्किरन्तीत्युत्किराः। **कुसुमोत्किरास्तैः**।

भट्टिकाव्ये—V. 93.

मा स्म भूर्ग्राहिणी भीरु गन्तुमुत्साहिनी भव।
उद्भासिनी च भूत्वा नो **वक्षःसंमर्दिनी** भव॥ 702॥

**वक्षःसंमर्दिनी**। षष्ठीसमासः। नन्दिग्रहीत्यादेः अनुपपदाधिकारात्।

भट्टिकाव्ये—VII. 82.

**देहव्रश्चन**तुण्डाग्रं तं विलोक्याशुभाकरम्।
पापगोचरमात्मानमशोचन् वानरा मुहुः॥ 703॥

वृश्च्यते भिद्यतेऽनेनेति व्रश्चनम्। करणे ल्युट्। देहस्य व्रश्चनं **देहव्रश्चनम्**।

अस्मिन्नेव ग्रन्थे श्लो० 507. कपीनां नन्दनः **कपिनन्दनः**। नन्द्यादित्वात् ल्युः।

भट्टिकाव्ये—V. 6.

दण्डकामध्यवार्ता यौ वीर रक्षःप्रकाण्डकौ।
नृभ्यां संख्येऽक्षुवार्तां तौ सभृत्यौ **भूमिवर्धनौ**॥ 704॥

वर्धयत इति वर्धनौ। ल्युः। भूमेर्वर्धनौ **भूमिवर्धनौ**।

भट्टिकाव्ये—V. 45.

शीर्षच्छेद्यमतोऽहं त्वां करोमि **क्षितिवर्धनम्**।
कारयिष्यामि वा कृत्यं निजिघृक्षुर्वनौकसौ॥ 705॥

**क्षितिवर्धनमिति** कृद्योगषष्ठीसमासः।

अस्मिन्नेव ग्रन्थे श्लो० 206. **स्त्रीपुंसभीषणे**।

## ७०४। न निर्धारणे। (२. २. १०)

'यतश्च निर्धारणम्' (सू. 638) इति षष्ठी न समस्यते। सप्तमीसमासः साधुः।

भट्टिकाव्ये—V. 108

प्रलुठितमवनौ विलोक्य कृत्तं
दशवदनः खचरोत्तमं प्रहृष्यन् ।
रथवरमधिरुह्य भीमधुर्यं
स्वपुरमगात्परिगृह्य रामकान्ताम् ॥ 706 ॥

खचराणामुत्तम इति षष्ठीसमासस्य प्रतिषेधात् खचरेषूत्तमः खचरोत्तमः, तम् ।

माघे—I. 31.

इति ब्रुवन्तं तमुवाच स व्रती
न वाच्यमित्थं पुरुषोत्तम त्वया ।
त्वमेव साक्षात्करणीय इत्यतः
किमस्ति कार्यं गुरु योगिनामपि ॥ 707 ॥

पुरुषेषूत्तमः पुरुषोत्तमः ।

किरातार्जुनीये—VII. 20.

माहेन्द्रं नगमभितः करेणुवर्याः
पर्यन्तस्थितजलदा दिवः पतन्तः ।
सादृश्यं निलयननिष्प्रकम्पपक्षै-
राजग्मुर्जलनिधिशायिभिर्नगेन्द्रैः ॥ 708 ॥

करेणुषु वर्याः करेणुवर्याः ।

अस्मिन्नेव ग्रन्थे श्लो० 602. वदतां निर्धारणे षष्ठी । वरः श्रेष्ठः । अत्र समासो न ।

अस्मिन्नेव ग्रन्थे श्लो० 28. सर्वतेजःसु । निर्धारणे सप्तमी । ज्योतिष्टमाम् । अत्र समासः स्यात् ।

अस्मिन्नेव ग्रन्थे श्लो० 601. स्त्रीषु मध्ये दर्शनीयतमाः । समासः स्यात् ।

७०५ । पूरणगुणसुहितार्थसदव्ययतव्यसमानाधिकरणेन ( २, २, ११ )

पूरणाद्यर्थैः सदादिभिश्च षष्ठी न समस्यते । पूरणे । सतां षष्ठः । गुणे, काकस्य कार्ष्ण्यम् । अनित्योऽयं गुणेन निषेधः । तेन अर्थगौरवम् बुद्धिमान्द्यम् इत्यादि सिद्धम् । सुहितार्थास्तृप्त्यर्थाः । सुहितार्थे करणे षष्ठीविधायकं प्रमाणं नास्ति । पूरण इत्येतत्सूत्रेण षष्ठीसमासनिषेधात् करणे षष्ठ्यनुमीयते । फलानां सुहितः । करणे तृतीयासमासस्तु स्यादेव । सत्, द्विजस्य कुर्वन्कुर्वाणो वा । अव्यय, ब्राह्मणस्य कृत्वा । कृदव्ययमेव गृह्यते । तेन तदुपरीत्यादि सिद्धम् । तव्य, ब्राह्मणस्य कर्तव्यम् । तव्यता तु भवत्येव । स्वकर्तव्यम् । स्वरे भेदः । समानाधिकरणे, तक्षकस्य सर्पस्य ।

रघुवंशे—V. 7.

निर्वर्त्यते यैर्नियमाभिषेको
येभ्यो निवापाञ्जलयः पितॄणाम् ।
तान्युञ्छषष्ठाङ्कितसैकतानि
शिवानि वस्तीर्थजलानि कच्चित् ॥ 709 ॥

उञ्छानां षष्ठैः षष्ठभागैः उञ्छषष्ठैः । 'षष्ठाष्टमाभ्यां ञ च' (सू. 1996) इति भागार्थे चादन् प्रत्ययः । अत एवापूरणार्थत्वादत्र षष्ठीसमासप्रतिषेधो न ।

भट्टिकाव्ये—I. 6.

निर्माणदक्षस्य समीहितेषु
सीमेव पद्मासनकौशलस्य ।
ऊर्ध्वस्फुरद्रत्नगभस्तिभिर्या
स्थिता विहस्येव पुरं मघोनः ॥ 710 ॥

**पद्मासनकौशलस्ये**त्यत्र षष्ठीसमासप्रतिषेधो न । शुक्लः पटः, पटस्य शुक्ल इति गुणे गुणिनि च दृष्टानां शुक्लादिशब्दानामेव निषेधात् ।

किरातार्जुनीये—II. 27.

स्फुटता न पदैरपाकृता
न च न स्वीकृत**मर्थगौरवम्** ।
रचिता पृथगर्थता गिरां
न च सामर्थ्यमपोहितं क्वचित् ॥ 711 ॥

**अर्थगौरव**मिति समासेऽपि न दोषः ।

किरातार्जुनीये—VIII. 44.

श्रिया हसद्भिः कमलानि सस्मितै-
रलङ्कृताम्बुः प्रतिमागतैर्मुखैः ।
कृतानुकूल्या सुरराजयोषितां
**प्रसादसाफल्यमवाप** जाह्नवी ॥ 712 ॥

प्रसादस्य साफल्यं **प्रसादसाफल्यम्** इति षष्ठीसमासः । अर्थगौरववत् ।

अस्मिन्नेव ग्रन्थे श्लो० 308. **रसस्य,** करणे षष्ठी । **तृप्ता** । अत्र समासो न ।

अस्मिन्नेव ग्रन्थे श्लो० 310. शुद्धान्तसंभोगेन करणे तृतीया । नितान्ततृप्ते **शुद्धान्तसंभोगनितान्ततृप्ते** ।

तृतीयासमासः साधुः । **अपां,** करणे षष्ठी । **तृप्ताय** । अत्र समासो न ।

चम्पूभारते—VI. 9.

पितुः सखायं परिपूज्यमेधै-
र्दिने दिने तृप्तिमिवोपनेतुम् ।
सूदाकृतिः सोऽपि ययौ विराटं
वृकोदरो वृत्तशरावपाणिः ॥ 713 ॥

**एधैस्तृप्तिं** । अत्र समासः स्यात् ।

अस्मिन्नेव ग्रन्थे श्लो० 309. **जतुगृहैः सुहितेन** तृप्तेन । अत्र समासः स्यात् ।

## ७०६ । क्तेन च पूजायाम् । ( २. २. १२ )

मतिबुद्धि ( सू. 3089 ) इति सूत्रेण विहितो यः क्तस्तदन्तेन 'क्तस्य च वर्तमाने' ( सू. 625 ) इति षष्ठी न समस्यते । राज्ञां मतो बुद्धः पूजितो वा । राजपूजित इत्यादौ तु भूते क्तान्तेन सह तृतीयान्तस्य समासः ।

रघुवंशे—VIII. 8.

**अहमेव मतो महीपते-**
रिति सर्वः प्रकृतिष्वचिन्तयत् ।

उदधेरिव निम्नगाशते-
ष्वभवन्नास्य विमानना क्वचित् ॥ 714 ॥

**महीपतेर्मतः** महीपतिना मन्यमानः । अत्र समासो न ।

अस्मिन्नेव ग्रन्थे श्लो० 514. **रामस्य संमतं** रामेण संमन्यमानम् न समासः ।

अस्मिन्नेव ग्रन्थे श्लो० 521. **सतामपूजितं** सद्भिरपूज्यमानम् ।

अस्मिन्नेव ग्रन्थे श्लो० 522. **महीभृतां महितं** पूजितम् ।

अस्मिन्नेव ग्रन्थे श्लो० 545. **जनमता** जनेनावबुद्धा । मनु अवबोधने इत्यस्य भूते निष्ठायां रूपम् । 'न लोक' (सू. 627) इति षष्ठीप्रतिषेधात् कर्तरि तृतीया । 'कर्तृकरण' (सू. 694) इति समासः ।

मेघसंदेशे—I. 6.

जातं वंशे भुवनविदिते पुष्कलावर्तकानां
जानामि त्वां प्रकृतिपुरुषं कामरूपं मघोनः ।
तेनार्थित्वं त्वयि विधिवशाद् दूरबन्धुर्गतोऽहं
याच्ञा मोघा वरमधिगुणे नाधमे लब्धकामा ॥ 715 ॥

**भुवनेषु विदिते भुवनविदिते** । 'निष्ठा' (सू. 3013) इति भूतार्थे क्तप्रत्ययः । वर्तमानार्थत्वे षष्ठ्यन्तत्वनियमः समासनिषेधश्च स्याताम् ।

## ७०७ । अधिकरणवाचिना च । (२. २. १३)

'क्तोऽधिकरणे च ध्रौव्यगतिप्रत्यवसानार्थेभ्यः' (सू. 3087) इति अधिकरणे क्तः । तेन 'अधिकरणवाचिनश्च' (सू. 626) इति या षष्ठी सा न समस्यते ।

अस्मिन्नेव ग्रन्थे श्लो० 528. **रामस्य षष्ठी** । शेतेऽस्मिन्निति **शयितं** शयनस्थानम् । शेतेः ध्रौव्यार्थादकर्मकापराख्यादधिकरणे क्तः । भुङ्क्तेऽस्मिन्निति **भुक्तं** भोजनस्थानम् । प्रत्यवसानार्थादधिकरणे क्तः । तिष्ठत्यस्मिन्निति **स्थितं** निवासस्थानम् । ध्रौव्यार्थादधिकरणे क्तः । प्रक्रामति गच्छत्यस्मिन्निति **प्रक्रान्तं** चङ्क्रमणस्थानम् । गत्यर्थादधिकरणे क्तः । सर्वत्र षष्ठीसमासप्रतिषेधः ।

अस्मिन्नेव ग्रन्थे श्लो० 527. **मणिरत्नाधिशयितम्** । 'अधिशीङ्स्थासां कर्म' (सू. 542) इति सकर्मकत्वान्न ध्रौव्यार्थादधिकरणे क्तः । अधिकरणे क्तश्चेत्षष्ठी स्यात् । सा न समस्येत । किं तु मृगाध्यासितशाड्वलानीतिवत् कर्मणि क्तः । अतस्तृतीयासमासः ।

### ७०८ । कर्मणि च । (२. २. १४)

'उभयप्राप्तौ कर्मणि' (सू. 624) इति या षष्ठी सा न समस्यते । आश्चर्यो गवां दोहोऽगोपेन ।

अस्मिन्नेव ग्रन्थे श्लो० 514. **शाखामृगेण** कर्त्रा । **पुरो** लङ्कानगरस्य । कर्मणि षष्ठी । **प्रवेशम्** । कृत् । समासो न ।

अस्मिन्नेव ग्रन्थे श्लो० 515. **पुंसा** । कर्तरि तृतीया । **बन्धूनाम्** । कर्मणि षष्ठी । **वधः** । कृत् । समासो न ।

### ७०९ । तृजकाभ्यां कर्तरि । (२. २. १५)

'ण्वुल्तृचौ' (सू. 2895) इति कर्त्रर्थतृजकाभ्यां 'कर्तृकर्मणोः कृति' (सू. 623) इति कर्मणि षष्ठ्या न समासः ।

माघे—V. 69.

**धरस्योद्धर्तासि** त्वमिति ननु सर्वत्र जगति
प्रतीतस्तत्किं मामतिभरमधः प्रापिपयिषुः ।
उपालब्धेवोच्चैर्गिरिपतिरिति श्रीपतिमसौ
बलाक्रान्तः क्रीडद्द्विरदमथितोर्वीरुहरवैः ॥ 716 ॥

**धरस्य** । कर्मणि षष्ठी । **उद्धर्ता** । कर्तरि तृच् । समासो न ।

अस्मिन्नेव ग्रन्थे श्लो० 507. **सख्यस्य** । कर्मणि षष्ठी । **कारकः** । कर्तरि ण्वुल् । समासो न । **मैथिल्याः** सीतायाः । कर्मणि षष्ठी । **द्रष्टा** । कर्तरि तृच् । समासो न । 'घटानां निर्मातुस्त्रिभुवनविधातुश्च कलहः' इत्यत्र त्रिभुवनस्येति 'षष्ठी शेषे' (606) इति शेषे षष्ठी । तस्याः समासः ।

अस्मिन्नेव ग्रन्थे श्लो० 32. **निजलिनेत्रावतरत्त्वबोधिकाम्** । शेषे षष्ठीसमासः ।

चम्पूरामायणे—I. 16.

नारायणाय नलिनायतलोचनाय
नामावशेषितमहाबलिवैभवाय ।
नानाचराचरविधायकजन्मदेश-
नाभीपुटाय पुरुषाय नमः परस्मै ॥ 717 ॥

नानाचराचराणां विधायकः इति शेषे षष्ठीसमासः ।

अस्मिन्नेव ग्रन्थे श्लो० 700. त्रिलोकभर्तुः ।

अस्मिन्नेव ग्रन्थे श्लो० 550. स्वर्गभर्तुः । पत्यर्थभर्तृशब्दस्य याजकादित्वात्समासः ।

अस्मिन्नेव ग्रन्थे श्लो० 505. शार्ङ्गस्य भर्तुः । धारणार्थभर्तृशब्दस्य न समासः ।

माघे—XVII. 63.

विषङ्गिणि प्रतिपदमापिबत्यपो
हृता चिरद्युतिनि समीरलक्ष्मणि ।
शनैःशनैरुपचितपङ्कभारिकाः
पयोमुचः प्रययुरपेतवृष्टयः ॥ 718 ॥

पङ्कभारिकाः । पङ्कभरणानि ; कर्तर्यकेन कर्मणि षष्ठीसमासप्रतिषेधः । अत्र तु भावार्थाकेन कर्मणि षष्ठीसमासः ।

## ७१० । कर्तरि च । ( २. २. १६ )

'पर्यायार्हर्णोत्पत्तिषु ण्वुच्' (सू. 3288) 'धात्वर्थनिर्देशे ण्वुल् वक्तव्यः' (वा० 2225. सू. 3285) इति भावार्थाकेन कर्तरि षष्ठ्या न समासः । भावार्थतृचोऽभावात् । तृजनुवृत्तिरिह न ।

अस्मिन्नेव ग्रन्थे श्लो० 505. तव । कर्तरि षष्ठी । उपशायिका पर्यायशयनम् । भावार्थे ण्वुच् । अतो न समासः ।

अस्मिन्नेव ग्रन्थे श्लो० 718. पङ्कानां, कर्मणि षष्ठी । भारिका भरणम् । भावार्थे ण्वुच् । अतः समासः ।

## ७११ । नित्यं क्रीडाजीविकयोः ( २. २. १७ )

एतयोरर्थयोरकेन नित्यं षष्ठी समस्यते । उद्दालकपुष्पभञ्जिका । क्रीडाविशेषस्य संज्ञा । 'संज्ञायाम्' ( सू. 3286 ) इति भावे ण्वुल् ।

भट्टिकाव्ये—VII. 76.

प्रस्कन्दिकामिव प्राप्तो ध्यात्वा ब्रूते स जाम्बवान् ।
धिक् सालभञ्जिकाप्रख्यान् विषयान्कल्पनारुचीन् ॥ 719 ॥

सालभञ्जिका क्रीडाविशेषः ।

## ७१२ । पूर्वापराधरोत्तरमेकदेशिनैकाधिकरणे (२. २. १)

अवयविना सह पूर्वादयः समस्यन्ते एकत्वसंख्याविशिष्टश्चेदवयवी । षष्ठीसमासापवादः । पूर्वः कायस्य पूर्वकायः । अपरकायः । सर्वोऽप्येकदेशोऽह्ना समस्यते । मध्याह्नः । सायाह्नः ।

भट्टिकाव्ये—IX. 95.

उपास्थिषत संप्रीताः पूर्वाह्णे रोषवाहणम् ।
राक्षसाः कपिमादाय पतिं रुधिरपायिणाम् ॥ 720 ॥

पूर्वोऽह्नः पूर्वाह्णः । एकदेशिसमासः । 'राजाहःसखिभ्यष्टच्' ( सू. 788 ) अह्नोऽह्न एतेभ्य' ( सू. 790 ) इत्यह्नादेशः । '' अह्नोऽदन्तात्' ( सू. 791 ) इति णत्वम् ।

माघे—IX. 4.

अपराह्णशीतलतरेण शनै-
रनिलेन लोलितलताङ्गुलये ।
निलयाय शाखिन इवाह्वयते
ददुराकुलाः खगकुलानि गिरः ॥ 721 ॥

अपरोऽह्नः अपराह्णः । पूर्ववत् एकदोशिसमासः, टच्, अह्नादेशः, णत्वम् ।

माघे—XI 6.

क्षणशयितविबुद्धाः कल्पयन्तः प्रयोगा-
नुदधिमहति राज्ये काव्यवद्दुर्विगाहे ।
गहनमपररात्रप्राप्तबुद्धिप्रसादाः
कवय इव महीपाश्चिन्तयन्त्यर्थजातम् ॥ 722 ॥

अपरः रात्रेरपररात्रः । एकदेशिसमासः । 'अहःसर्वैकदेश' (सू. 787) इत्यादिना समासान्तोऽच् । 'रात्राह्नाहाः पुंसि' (सू. 814) इति पुंस्त्वम् ।

अस्मिन्नेव ग्रन्थे श्लो० 99. **पश्चिमरात्रिगोचरात्** पश्चिमश्चासौ रात्रिश्चेति विशेषणसमासः । न तु पश्चिमं रात्रेरित्येकदेशिसमासः । अस्मिन्सूत्रे पश्चिमशब्दाग्रहणात् । अत एव 'अहः सर्वैकदेश' (सू. 787) इत्यादिना न समासान्तोऽचि । तस्यापि पूर्वापरादिसूत्रोक्तसमासविषयत्वात् ।

चम्पूभारते—II. 56.

निशि जातु निकेतवेदिकायां
निकटे सुप्तिसुखं निषेव्य पार्थान् ।
पथिकोऽपररात्रजागरूकः
प्रबभाषे गिरमीदृशीं प्रसङ्गात् ॥ 723 ॥

अपरः रात्रेरपररात्रः ।

माघे—IX. 10.

अनुरागवन्तमपि लोचनयो-
र्दधतं वपुः सुखमतापकरम् ।
निरकासयद्रविमपेतवसुं
वियदालयादपरदिग्गणिका ॥ 724 ॥

अपरा च सा दिक्चेति समासः ।

## ७१३ । अर्धं नपुंसकम् । (२. २. २)

समांशवाच्यर्धशब्दो नित्यं क्लीबे । स प्राग्वत् । अर्धं पिप्पल्या अर्धपिप्पली । क्लीबे किम् । ग्रामार्धः । द्रव्यैक्य एव । अर्धं पिप्पलीनाम् ।

कुमारसम्भवे—VII. 28.

अखण्डितं प्रेम लभस्व पत्यु-
रित्युच्यते ताभिरुमा स्म नम्रा ।
तया तु तस्यार्धशरीरभाजा
पश्चात्कृताः स्निग्धजनाशिषोऽपि ॥ 725 ॥

अर्धं शरीरस्यार्धशरीरम् । एकदेशिसमासः ।

रघुवंशे—VI. 73.

ऐरावतास्फालनविश्लथं यः
सङ्घट्टयन्नङ्गदमङ्गदेन ।
उपेयुषः स्वामपि मूर्तिमग्र्या-
मर्धासनं गोत्रभिदोऽधितष्ठौ ॥ 726 ॥

अर्धमासनस्यार्धासनम् । एकदेशिसमासः ।

रघुवंशे—VI. 75.

यस्मिन्महीं शासति मानिनीनां
निद्रां विहारार्धपथे गतानाम् ।
वातोऽपि नास्रंसयदंशुकानि
को लम्बयेदाहरणाय हस्तम् ॥ 727 ॥

अर्धं चासौ पन्थाश्चेति विग्रहः । समप्रविभागे प्रमाणाभावात् नैकदेशिसमासः ।

अस्मिन्नेव ग्रन्थे श्लो० 614, अर्धं रात्रेरर्धरात्रः । एकदेशिसमासः । 'अहः-सर्व' (सू. 787) इत्यादिना समासान्तोऽच् । 'रात्राह्नाहाः पुंसि' (सू. 814) इति पुंस्त्वम् ।

## ७१४ । द्वितीयतृतीयचतुर्थतुर्याण्यन्यतरस्याम् । (२. २. ३)

एतान्येकदेशिना सह प्राग्वत् । द्वितीयं भिक्षाया द्वितीयभिक्षा । अन्यतरस्यां-ग्रहणसामर्थ्यात् 'पूरणगुण' (सू. 705) इति निषेधं बाधित्वा पक्षे षष्ठीसमासः । भिक्षाद्वितीयम् ।

७१५ । प्राप्तापन्ने च द्वितीयया । ( २. २. ४ )

पक्षे 'द्वितीया श्रित' ( सू. 686 ) इति समासः । प्राप्तो जीविकां प्राप्तजीविकः । जीविकाप्राप्तः । आपन्नजीविकः । जीविकापन्नः ।

७१७ । सप्तमी शौण्डैः । ( २. १. ४० )

सप्तम्यन्तं शौण्डादिभिः प्राग्वद्वा । अक्षेषु शौण्डः अक्षशौण्डः । अधिशब्दोऽत्र पठ्यते । 'अध्युत्तरपदात्' (सू. 2079) इति खः । ईश्वराधीनः । शौण्डादिः २-२.

अनर्घराघवे—IV. 37.

त्रैलोक्यत्राणशौण्डः सरसिजवसतेर्यः प्रसूतो भुजाभ्यां
स क्षत्रं नाम वर्णः कुलिशकठिनयोर्यस्य दोष्णोर्विलीनः ।
ज्वालाजिह्वालकालानलकवलभयभ्रान्तदेवासुराणि
व्यातन्वानो जगन्ति ज्वलति मुनिरयं पार्वतीधर्मपुत्रः ॥ 728 ॥

त्रैलोक्यत्राणे शौण्ड इति समासः ।

अस्मिन्नेव ग्रन्थे श्लो० 543. पाने शौण्डो मत्तः पानशौण्डः इति समासः ।

कुमारसंभवे—IV. 10.

परलोकनवप्रवासिनः प्रतिपत्स्ये पदवीमहं तव ।
विधिना जन एष वञ्चितस्त्वदधीनं खलु देहिनां सुखम् ॥ 729 ॥

त्वयि अधीनं त्वदधीनम् । अधीनशब्दस्य शौण्डादित्वात्समासः ।

अस्मिन्नेव ग्रन्थे श्लो० 701. तरुमृगोत्तममिति सप्तमी इति योगविभागात्समासः ।

अस्मिन्नेव ग्रन्थे श्लो० 610. 'प्रसितोत्सुकाभ्यां तृतीया च' (सू. 641) इति सप्तम्यां आज्ञालाभे उत्सुकः आज्ञालाभोत्सुक इति सप्तमी इति योगविभागात्समासः ।

अस्मिन्नेव ग्रन्थे श्लो० 609. अरविन्देषु समुत्सुकान् अरविन्दसमुत्सुकान् ।
पूर्ववत्सप्तमीसमासः ।

भट्टिकाव्ये—I. 5.

स पुण्यकीर्तिः शतमन्युकल्पो
  महेन्द्रलोकप्रतिमां समृद्ध्या ।
अध्यास्त सर्वर्तुसुखामयोध्या-
  मध्यासितां ब्रह्मभिरिद्धबोधैः ॥ 730 ॥

सर्वर्तुसुखाम् । पूर्ववत् ।

७१८ । सिद्धशुष्कपक्वबन्धैश्च । (२. १. ४१)

एतैः सप्तम्यन्तं प्राग्वत् । सांकाश्यसिद्धः । आतपशुष्कः । स्थालीपक्वः । चक्रबन्धः ।

७२५ । पात्रेसमितादयश्च । (२. १. ४८)

एते निपात्यन्ते क्षेपे । पात्रेसमिताः । भोजनसमय एव संगता न तु कार्ये । गेहेशूरः । गेहेनर्दी । आकृतिगणोऽयम् । पात्रेसमितादिः—२. ३.

अस्मिन्नेव ग्रन्थे श्लो० 543. पात्रेसमितैः भोजनमात्रसंगतैः । क्षेपे समासनिपातः ।

भट्टिकाव्ये—V. 41.

यद्गेहेनर्दिनमसौ शरैर्भीरुमभाययत् ।
कुब्रह्मयज्ञके रामो भवन्तं पौरुषं न तत् ॥ 731 ॥

गेह एव नर्दतीति गेहेनर्दी ।

भट्टिकाव्ये—V. 85.

राक्षसान्वटुयज्ञेषु पिण्डेशूरान्निरस्तवान् ।
यद्यसौ कूश्माण्डकि तवैतावति कः स्मयः ॥ 732 ॥

पिण्डेशूरानन्नशूरान् ।

७२६ । पूर्वकालैकसर्वजरत्पुराणनवकेवलाः समानाधिकरणेन (२. १. ४९)

'विशेषणं विशेष्येण' (सू. 736) इति सिद्धे पूर्वनिपातनियमार्थं सूत्रम्। एकशब्दस्य 'दिक्संख्ये संज्ञायाम्' (सू. 727) इति नियमबाधनार्थं च। पूर्वं स्नातः पश्चादनुलिप्तः स्नातानुलिप्तः। एकनाथः। सर्वयाज्ञिकाः। जरन्नैयायिकाः। पुराणमीमांसकाः। नवपाठकाः। केवलवैयाकरणाः।

अस्मिन्नेव ग्रन्थे श्लो० 522. पूर्वं जितः पश्चात्संयतः बद्धः जितसंयतः। पूर्वकालेति समासः।

अस्मिन्नेव ग्रन्थे श्लो० 722. क्षणं शयिता विबुद्धाः क्षणशयितविबुद्धाः। स्नातानुलिप्तवत्। पूर्वकाल इति समासः।

किरातार्जुनीये—IX. 45.

सव्यलीकमवधीरितखिन्नं
प्रस्थितं सपदि कोपपदेन।
योषितः सुहृदिव स रुणद्धि
प्राणनाथमभिबाष्पनिपातः॥ 733 ॥

अवधीरितखिन्नं 'पूर्वकाल' (सू. 726) इत्यादिना तत्पुरुषः।

अस्मिन्नेव ग्रन्थे श्लो० 241. एकनिश्वासमेकराशीभूतम्। एकशब्दस्य 'पूर्वकाल' (सू. 726) इत्यादिना समासः।

अस्मिन्नेव ग्रन्थे श्लो० 687. सर्वा रात्रयः सर्वरात्राः। 'पूर्वकाले' (सू. 726) इत्यादिना समासः। 'अहः सर्व' (सू. 787) इत्यादिना समासान्तोऽच्। 'रात्राह्नाहाः पुंसि' (सू. 814) इति पुंस्त्वम्।

माघे—XI. 18.

अनिमिषमविरामा रागिणां सर्वरात्रं
नवनिधुवनलीलाः कौतुकेनाभिवीक्ष्य।
इदमुदवसितानामस्फुटालोकसंप-
न्नयनमिव सनिद्रं घूर्णते दैपमर्चिः॥ 734 ॥

सर्वरात्रम्। पूर्ववत्।

भट्टिकाव्ये—V. 101.

धुन्वन् सर्वपथीनं तं वितानं पक्षयोरसौ ।
मांसशोणितसन्दर्शी तुण्डघातमयुध्यत ॥ 735 ॥

सर्वः पन्थाः सर्वपथः 'पूर्वकाल' (सू. 726) इत्यादिना समासः । 'ऋक्-पूरि' (सू. 940) ति समासान्तः । 'तत्सर्वादेः' (सू. 1808) इति खः । सर्वपथीनम् ।

७२७ । दिक्संख्ये संज्ञायाम् (२. १. ५०)

इति समासः ।

रघुवंशे—XVIII. 31.

वंशस्थितिं वंशकरेण तेन
संभाव्य भावी स सखा मघोनः ।
उपस्पृशन्स्पर्शनिवृत्तलौल्य-
स्त्रिपुष्करेषु त्रिदशत्वमाप ॥ 736 ॥

त्रिषु पुष्करेषु त्रिपुष्करेषु ।

माघे—XX. 1.

मुखमुल्लसितत्रिरेखमुच्चै-
र्भिदुरभ्रूयुगभीषणं दधानः ।
समिताविति विक्रमानमृष्यन्
गतभीराहृत चेदिराण्मुरारिम् ॥ 737 ॥

तिस्रो रेखाः त्रिरेखाः ।

७२८ । तद्धितार्थोत्तरपदसमाहारे च । (२. १. ५१)

तत्पुरुषः ।

कुमारसंभवे—II. 17.

पुराणस्य कवेस्तस्य चतुर्मुखसमीरिता ।
प्रवृत्तिरासीच्छब्दानां चरितार्था चतुष्टयी ॥ 738 ॥

चतुर्भिर्मुखैः समीरिता चतुर्मुखसमीरिता । 'तद्धितार्थ' (सू. 728) इत्यादिना उत्तरपदसमासः । समाहारे चतुर्मुखीति स्यात् ।

रघुवंशे—XIII. 20.

असौ महेन्द्रद्विपदानगन्धि-
स्त्रिमार्गगावीचिविमर्दशीतः ।
आकाशवायुर्दिनयौवनोत्थान्
आचामति स्वेदलवान्मुखे ते ॥ 739 ॥

त्रिभिर्मार्गैर्गच्छतीति त्रिमार्गगा गङ्गा । 'तद्धितार्थ' (सू. 728) इत्यादिना उत्तरपदसमासः ।

अस्मिन्नेव ग्रन्थे श्लो० 96. पंचानां वटानां समाहारः पंचवटी । 'तद्धितार्थ' (सू. 728) इति तत्पुरुषः ।

अस्मिन्नेव ग्रन्थे श्लो० 97. सप्तानां सालानां समाहारः सप्तसाली । 'तद्धितार्थ' (सू. 728) इति तत्पुरुषः । 'संख्यापूर्वो द्विगुः' (सू. 730) इति द्विगुसंज्ञायां 'द्विगोः' (सू. 479) इति ङीप् । त्रिषु भुवनेषु प्रथितः त्रिभुवनप्रथितः । 'तद्धितार्थ' (सू. 728) इत्यादिना उत्तरपदसमासः ।

किरातार्जुनीये—X. 15.

तनुमवजितलोकसारधाम्नीं
त्रिभुवनगुप्तिसहां विलोकयन्त्यः ।
अवययुरमरस्त्रियोऽस्य यत्नं
विजयफले विफलं तपोऽधिकारे ॥ 740 ॥

त्रयाणां भुवनानां समाहारस्त्रिभुवनम् । 'तद्धितार्थ' (सू. 728) इत्यादिना समाहारार्थे तत्पुरुषः । पात्रादित्वात्स्त्रीत्वप्रतिषेधः ।

रघुवंशे—XVIII. 39.

तं राजवीथ्यामधिहस्ति यान्त-
माधोरणालम्बितमग्र्यवेशम् ।
षड्वर्षदेशीयमपि प्रभुत्वा-
त्प्रैक्षन्त पौराः पितृगौरवेण ॥ 741 ॥

षड्वर्षाणि भूतः षड्वर्षः । 'तद्धितार्थ' (सू. 728) इति समासः । "तमधीष्ट' (सू. 1744) इत्यधिकारे 'चित्तवति नित्यम्' (1755) इति तद्धितस्य लुक् ।

रघुवंशे—VIII. 73.

अथ तेन दशाहतः परे
गुणशेषामुपदिश्य सुन्दरीम् ।
विदुषा विधयो महर्द्धयः
पुर एवोपवने समापिताः ॥ 742 ॥

दशानामह्नां समाहारो दशाहः । 'तद्धितार्थ' (सू. 728) इत्यादिना समासः । समाहारस्य एकत्वादेकवचनम् । 'राजाह' (सू. 788) इत्यादिना टच् । 'रात्राह्नाहा' (सू. 814) इति पुंस्त्वम् । ततस्तसिल् ।

अस्मिन्नेव ग्रन्थे श्लो० 431. त्रयाणामह्नां समहारः त्र्यहः । पूर्ववत्समासः । एकवचनं, टच्, पुंस्त्वम् ।

वा० । द्वन्द्वतत्पुरुषयोरुत्तरपदे नित्यसमासवचनम् । (1287.)

**७२९ । गोरतद्धितलुकि । (५. ४. ९२)**

गोऽन्तात्तत्पुरुषाट्टच् स्यात् समासान्तः न तद्धितलुकि ।

माघे—XVI. 12.

विकचोत्पलचारुलोचन-
स्तव चैद्येन घटामुपेयुषः ।
यदुपुङ्गवबन्धुसौहृदा-
त्त्वयि पाता ससुरो न वासवः ॥ 743 ॥

पुमान् गौरिव पुङ्गवः । उपमितसमासः । अनेन सूत्रेण टच् ।

माघे—II. 68.

निशम्य ताः शेषगवीरभिधातुमधोक्षजः ।
शिष्याय बृहतां पत्युः प्रस्तावमदिशद्दृशा ॥ 744 ॥

शेषस्य गा वाचः शेषगवीः । टच् । टित्वात्स्त्रियां ङीप् ।

भट्टिकाव्ये—VII. 28.

राघवस्य ततः कार्यं कारुर्वानरपुङ्गवः ।
सर्ववानरसैन्यानामाश्वागमनमादिशत् ॥ 745 ॥

पुमान्गौः पुङ्गवः । वृषभः । समासान्तष्टच् । तेनोपमितसमासे वानरपुंगवः ।

कुमारसंभवे—VII. 77.

रोमोद्गमः प्रादुरभूदुमायाः
स्विन्नाङ्गुलिः पुंगवकेतुरासीत् ।
वृत्तिस्तयोः पाणिसमागमेन
समं विभक्तेव मनोभवस्य ॥ 746 ॥

पुमान्गौः पुङ्गवः । टच् ।

**७३० । संख्यापूर्वो द्विगुः । ( २. १. ५२ )**

'तद्धितार्थ' ( सू. 728 ) इत्यत्रोक्तः संख्यापूर्वो द्विगुः स्यात् ।

माघे— III. 63.

स्निग्धाञ्जनश्यामरुचिः सुवृत्तो
वध्वा इवाध्वंसितवर्णकान्तेः ।
विशेषको वा विशिशेष यस्याः
श्रियं त्रिलोकीतिलकः स एव ॥ 747 ॥

त्रयाणां लोकानां समाहारस्त्रिलोकी । 'तद्धितार्थ' ( सू. 728 ) इत्यादिना समासः । अनेन सूत्रेण द्विगुसंज्ञा ।

**वा० । अकारान्तोत्तरपदो द्विगुः स्त्रियामिष्टः । ( 1556. )**

इति स्त्रीत्वम् । द्विगोरिति ङीप् ।

अस्मिन्नेव ग्रन्थे श्लो० 96. पंचानां वटानां समाहारः पंचवटी । 'तद्धितार्थ' ( सू. 728 ) इत्यादिना तत्पुरुषः । अनेन सूत्रेण द्विगुसंज्ञा । स्त्रीत्वं, ङीप् एकवचनम् ।

७३१ । द्विगुरेकवचनम् । ( २. ४. १ )

एकवत्स्यात् ।

अस्मिन्नेव ग्रन्थे श्लो० 96. पंचवटी । अनेनैवैकवचनम् ।

अस्मिन्नेव ग्रन्थे श्लो० 431. त्रयाणामह्नां समाहारः त्र्यहः । तत्पुरुषः । टच् । पुंस्त्वम् । अनेन सूत्रेण एकवचनम् ।

७३३ । पापाणके कुत्सितैः । ( २. १. ५४ )

पापनापितः । अणककुलालः ।

भट्टिकाव्ये—XIV. 58.

न जिजीवासुखी तातः प्राणता रहितस्त्वया ।
मृतेऽपि त्वयि जीवन्त्यां किं मयाणकभार्यया ॥ 748 ॥

७३४ । उपमानानि सामान्यवचनैः ( २. १. ५५ )

घन इव श्यामो घनश्यामः ।

माघे—IX. 18.

पतिते पतङ्गमृगराजि निज-
प्रतिबिंबरोषित इवाम्बुनिधौ ।
अथ नागयूथमलिनानि जग-
त्परितस्तमांसि परितस्तरिरे ॥ 749 ॥

नागयूथानीव मलिनानि नागयूथमलिनानि ।

अस्मिन्नेव ग्रन्थे श्लो० 37. न्यग्रोधवत्परिमण्डला न्यग्रोधपरिमण्डला ।

७३५ । उपमितं व्याघ्रादिभिः सामान्याप्रयोगे । ( २. १. ५६ )

पुरुषव्याघ्रः । नृसोमः । व्याघ्रादिः २. ४. आकृतिगणः ।

रघुवंशे—I. 12.

तदन्वये शुद्धिमति प्रसूतः शुद्धिमत्तरः ।
दिलीप इति राजेन्दुरिन्दुः क्षीरनिधाविव ॥ 750 ॥

राजा इन्दुरिव राजेन्दुः इति समासः ।

## ७३६ । विशेषणं विशेष्येण बहुलम् । ( २. १. ५७ )

नीलमुत्पलं नीलोत्पलम् ।
अस्मिन्नेव ग्रन्थे श्लो० 747. स्निग्धं च तदञ्जनं च स्निग्धाञ्जनम् ।

## ७३७ । पूर्वापरप्रथमचरमजघन्यसमानमध्यमध्यमवीराश्च । ( २. १. ५८ )

पूर्वनिपातनियमार्थमिदम् । पूर्ववैयाकरणः ।
वा० । अपरस्यार्धे पश्चभावो वक्तव्यः । ( 3253. )
अपरश्चासावर्धश्च पश्चार्धः ।

## ७३८ । श्रेण्यादयः कृतादिभिः । ( २. १. ५९ )

वा० । श्रेण्यादिषु च्व्यर्थवचनं कर्तव्यम् । ( 1296. )
अश्रेणयः श्रेणयः कृताः श्रेणीकृताः । श्रेण्यादिः २. ५. कृतादिः २. ६.

भट्टिकाव्ये—V. 80.

पतत्रिक्रोष्टुजुष्टानि रक्षांसि भयदे वने ।
यस्य बाणनिकृत्तानि श्रेणीभूतानि शेरते ॥ 751 ॥

अश्रेणयः श्रेणयो भूतानि श्रेणीभूतानि । च्व्यर्थानामच्व्यन्तानां अनेन सूत्रेण समासः । च्व्यन्तानां तु ‘ ऊर्यादि ’ ( सू. 762 ) इति गतित्वात् ‘ कुगति ’ ( सू. 761 ) इति समासः ।

भट्टिकाव्ये – III. 4.

प्रास्थापयत्पूगकृतान्स्वपोषं
पुष्टान्प्रयत्नाद्दृढगात्रबन्धान् ।
सहेमकुम्भान्पुरुषान्समन्ता-
त्पत्काषिणस्तीर्थजलार्थमाशु ॥ 752 ॥

अपूगाः पूगाः कृतास्तान् पूगकृतान् । च्व्यर्थसमासः ।

## ७३९ । क्तेन नञ्विशिष्टेनानञ् । ( २. १. ६० )

नञ्विशिष्टेन क्तान्तेनानञ् क्तान्तं समस्यते । कृतं च तदकृतं च कृताकृतम् ।

वा० । शाकपार्थिवादीनां सिद्धये उत्तरपदलोपस्योपसंख्यानम् । (1310.)
शाकप्रियः पार्थिवः शाकपार्थिवः ।

भट्टिकाव्ये—III. 21.

आसिष्ट नैकत्र शुचा व्यरंसीत
कृताकृतेभ्यः क्षितिपालभाग्भ्यः ।
स चन्दनोशीरमृणालदिग्धः
शोकाग्निनागाद्द्युनिवासभूयम् ॥ 753 ॥

कृतानि च तान्यकृतानि च कृताकृतानि ।

अस्मिन्नेव ग्रन्थे श्लो० 451. कुसुमप्रधानास्तरवः कुसुमतरवः ।

अस्मिन्नेव ग्रन्थे श्लो० 406. छायाप्रधानास्तरवः छायातरवः ।

अस्मिन्नेव ग्रन्थे श्लो० 646. यथास्वतरुस्थिता प्रसवश्रीः यथास्वतरुप्रसवश्रीः ।

अस्मिन्नेव ग्रन्थे श्लो० 190. पक्वबिम्बमिवाधरोष्ठो यस्याः सा पक्वबिम्बाधरोष्ठी ।

अस्मिन्नेव ग्रन्थे श्लो० 620. लता इव वध्वो लतावध्वः ।

७४० । सन्महत्परमोत्तमोत्कृष्टाः पूज्यमानैः । (२. १. ६१)

सद्वैद्यः । वक्ष्यमाणेन महत आकारः । महावैयाकरणः ।

रघुवंशे—II. 71.

प्रदक्षिणीकृत्य हुतं हुताश-
मनन्तरं भर्तुररुन्धतीं च ।
धेनुं सवत्सां च नृपः प्रतस्थे
सन्मङ्गलोदग्रतरप्रभावः ॥ 754 ॥

सद्भिर्मङ्गलैरुदग्रतरप्रभावः सन्मङ्गलोदग्रतरप्रभावः ।

कुमारसंभवे—II. 32.

भवल्लब्धवरोदीर्णस्तारकाख्यो महासुरः ।
उपप्लवाय लोकानां धूमकेतुरिवोत्थितः ॥ 755 ॥

महानसुरो महासुरः । तत्पुरुषः । 'आन्महतः' (सू. 307) इत्याकारः ।

चम्पूभारते—I. 27.

ग—ततः कृपामन्दमनाः किन्दमनामधेयः सन्दारिततनुस्यन्दमानरुधिरेण महारुषा कल्पविकल्पमहारुषा तस्मिन्महीभृति संभोगसंभेदकमम्भोजदृशां दम्भोलिमिव सहस्राक्षः शापमुदस्राक्षीत् ॥ 756 ॥

महदरुः महारुः, तेन महारुषा ।

कुमारसंभवे—VII. 71.

तमन्वगिन्द्रप्रमुखाश्च देवाः
सप्तर्षिपूर्वाः परमर्षयश्च ।
गणाश्च गिर्यालयमभ्यगच्छन्
प्रशस्तमारम्भमिवोत्तमार्थाः ॥ 757 ॥

परमर्षयः ।

किरातार्जुनीये—XVII. 55.

ततोऽग्रभूमिं व्यवसायसिद्धेः
सीमानमन्यैरतिदुस्तरं सः ।
तेजःश्रियामाश्रयमुत्तमासिं
साक्षादहंकारमिवाललम्बे ॥ 758 ॥

उत्तमासिम् ।

७४१ । वृन्दारकनागकुञ्जरैः पूज्यमानम् (२. १. ६२)

गोवृन्दारकः ।

अस्मिन्नेव ग्रन्थे श्लो० 534. तापसकुञ्जरेण । पूज्यतापसेन ।

अस्मिन्नेव ग्रन्थे श्लो० 37. वृन्दं गुणवृन्दं अस्या अस्तीति वृन्दारिका मुख्या योषिच्च सा वृन्दारिका च योषिद्वृन्दारिका ।

७४२ । किं क्षेपे । (२. १. ६४)

कुत्सितो राजा किंराजा यो न रक्षति । 'किमः क्षेपे' (सू. 955) इति समासान्तप्रतिषेधः ।

अस्मिन्नेव ग्रन्थे श्लो० 228. कुत्सितः सखा किंसखा । 'राजाहःसखिभ्यः' (सू. 788) इति टच् न । कुत्सितः प्रभुः किंप्रभुः ।

७४४ । पोटायुवतिस्तोककतिपयगृष्टिधेनुवशावेहद्बष्कयणीप्रवक्तृश्रोत्रियाध्यापकधूर्तैर्जातिः । (२. १. ६५)

इभपोटा । इभयुवतिः । कठधूर्त इत्यादि ।

अनर्घराघवे—IV. 22.

यस्मिन्नर्जुनदोःसहस्रनलकप्रोद्गच्छदस्रच्छटा-
जिह्वाले जुहवांबभूविम रुषा राजन्यसत्तामपि ।
सोऽयं प्राक्बलग्रहस्य विघसीभूतेष्वपि क्षत्रिय-
क्षुद्रेषु क्षुधितश्चिरेण परशुस्तेनायमन्विष्यते ॥ 759 ॥

क्षत्रियक्षुद्र इति समासः ।

॥ इति तत्पुरुषसमासप्रकरणम् ॥

---

## ॥ अथ कर्मधारयसमासप्रकरणम् ॥

---

७४५ । तत्पुरुषः समानाधिकरणः कर्मधारयः । (१. २. ४२)

७४६ । पुंवत्कर्मधारयजातीयदेशीयेषु । (६. ३. ४२)

इति पुंवद्भावः ।

रघुवंशे—X. 38.

बभौ सदशनज्योत्स्ना सा विभोर्वदनोद्गता ।
निर्यातशेषा चरणाद्गङ्गेवोर्ध्वप्रवर्तिनी ॥ 760 ॥

निर्याता चासौ शेषा च निर्यातशेषा । 'स्त्रियाः पुंवत्' (सू. 831) इत्यनुवर्त्य अनेन पुंवद्भावः ।

माघे—I. 6.

पिशङ्गमौञ्जीयुजमर्जुनच्छविं
वसानमेणाजिनमञ्जनद्युति ।
सुवर्णसूत्राकलिताधराम्बरां
विडम्बयन्तं शितिवाससस्तनुम् ॥ 761 ॥

पिशङ्गी च सा मौञ्जी च पिशङ्गमौञ्जी ।

अस्मिन्नेव ग्रन्थे श्लो° 140. कौबेरी च सा दिक् च कौबेरदिक् ।

माघे—III. 58.

परस्परस्पर्धिपरार्ध्यरूपाः
पौरस्त्रियो यत्र विधाय वेषाः ।
श्रीनिर्मितिप्रासघुणक्षतैक-
वर्णोपमावाच्यमलं ममार्ज ॥ 762 ॥

पौराश्च ताः स्त्रियश्च पौरस्त्रियः ।

माघे—XVI. 8.

कृतगोपवधूरतेर्घ्नतो वृषमुग्रे नरकेऽपि सम्प्रति ।
प्रतिपत्तिरधःकृतैनसो जनताभिस्तव साधु वर्ण्यते ॥ 763 ॥

गोप्य एव वध्वो गोपवध्वः ।

७४७ । प्रशंसावचनैश्च । ( २. १. ६६ )

एतैः सह जातिः प्राग्वत् । गोमतल्लिका । गोमचर्चिका । गोप्रकाण्डम् । गवोद्धः । गोतल्लजः । प्रशस्ता गौरित्यर्थः । मतल्लिकादयो नियतलिङ्गाः न तु विशेष्यनिघ्नाः ।

माघे—XII. 41.

अभ्याजतोऽभ्यागततूर्णतर्णकां
निधानहस्तस्य पुरो दुधुक्षतः ।
वर्गाद्गवां हुंकृतिचारुनिर्यती-
मरिर्मधोरैक्षत गोमतल्लिकाम् ॥ 764 ॥

अस्मिन्नेव ग्रन्थे श्लो० 704. प्रशस्ते रक्षसी रक्षःप्रकाण्डकौ । स्वार्थे कन् । स्वार्थिकाश्च प्रकृतितो लिङ्गवचनान्यतिवर्तन्त इति नपुंसको न भवति । अन्यथा रूढिशब्दाः प्रशंसावचनाः आदिष्टलिङ्गत्वादन्यलिङ्गेऽपि जातिशब्दे स्वलिङ्गोपादानादेव समानाधिकरणाः स्युः । यथा गोप्रकाण्डम् इति ।

७५० । वर्णो वर्णेन । ( २. १. ६९ )

कुमारसंभवे—IV. 14.

हरितारुणचारुबन्धनः
कलपुंस्कोकिलशब्दसूचितः ।
वद संप्रति कस्य बाणतां
नवचूतप्रसवो गमिष्यति ॥ 765 ॥

हरितं च तदरुणं च हरितारुणम् ।

माघे—III. 27.

श्यामारुणैर्वारणदानतोयै-
राऌोडिताः काञ्चन भूपरागाः ।
आनेमिमग्नैः शितिकण्ठपक्ष-
क्षोदद्युतश्चुक्षुदिरे रथौघैः ॥ 766 ॥

श्यामानि च तानि अरुणानि च श्यामारुणानि ।

कुमारसंभवे—III. 36.

मधु द्विरेफः कुसुमैकपात्रे
पपौ प्रियां स्वामनुवर्तमानः ।
शृङ्गेण च स्पर्शनिमीलिताक्षीं
मृगीमकण्डूयत कृष्णसारः ॥ 767 ॥

कृष्णश्चासौ सारश्च कृष्णसारः ।

कुमारसंभवे—VIII. 45.

रक्तपीतकपिशाः पयोमुचां
कोटयः कुटिलकेशि भान्त्यमूः ।
द्रक्ष्यसि त्वमिति सन्ध्ययानया
वर्तिकाभिरिव साधुमण्डिताः ॥ 768 ॥

रक्ताः पीताः कपिशाश्च रक्तपीतकपिशाः । चार्थे द्वन्द्वः । न तु 'वर्णो वर्णेन' (सू. 750) इति तत्पुरुषः । सामानाधिकरण्याभावात् ।

७५४ । मयूरव्यंसकादयश्च । ( २. १. ७२ )

एते निपात्यन्ते । मयूरो व्यंसकः मयूरव्यंसकः । व्यंसको धूर्तः । उदक् च अवाक् च उच्चावचम् । निश्चितं च प्रचितं च निश्चप्रचम् । नास्ति किंचन यस्य सोऽकिंचनः । नास्ति कुतो भयं यस्य सोऽकुतोभयः । अन्यो राजा राजान्तरम् । चिदेव चिन्मात्रम् ।

(ग. सू. 20) 'आख्यातमाख्यातेन क्रियासातत्ये' ।

अश्नीत पिबत इत्येवं सततं यत्राभिधीयते साश्नीतपिबता । पचतभृज्जता । खादतमोदता । इत्यादि । मयूरव्यंसकादिः २. १.

रघुवंशे—V. 16.

स्थाने भवानेकनराधिपः सन्
अकिंचनत्वं मखजं व्यनक्ति ।
पर्यायपीतस्य सुरैर्हिमांशोः
कलाक्षयः श्लाघ्यतरो हि वृद्धेः ॥ 769 ॥

अकिंचनत्वम् ।

अस्मिन्नेव ग्रन्थे श्लो० 37. अकिंचनम् ।

अस्मिन्नेव ग्रन्थे श्लो० 611. अश्नीत पिबतेति सातत्येन यस्यां क्रियायां साश्नीतपिबता । तामात्मन इच्छन्ती अश्नीतपिबतीयन्ती । क्यचि शतरि ङीप् ।

भट्टिकाव्ये—V. 27.

आहोपुरुषिकां पश्य मम सद्रत्नकान्तिभिः ।
ध्वस्तान्धकारेऽपि पुरे पूर्णेन्दोः सन्निधिः सदा ॥ 770 ॥

अहो पुरुष इति यस्यां क्रियायां सा आहोपुरुषिका इति काशिका । मत्वर्थीयष्ठन्प्रत्ययः ।

भट्टिकाव्ये—IX. 96.

चकाराधस्पदं नासौ चरन्वियति मारुतिः ।
मर्मविद्भिस्तमस्काण्डैर्भिद्यमानोऽप्यनेकधा ॥ 771 ॥

अधस्पदं पृथिव्यां पदम् ।

चम्पूरामायणे—X. 93.

ग—तदानीं तत्र तेषां कौरवकौन्तेयसैन्यानां बाष्पलहरीं निष्पादयितुं मोदविषादयोरहमहमिकया स्पर्धा समवर्तत ॥ 772 ॥

चम्पूभारते—XII. 5.

ज्वालं विषक्तमिव दानविधौ कृशानोः
शोणं दधच्चमरवालमुदस्य चापम् ।
पार्थे निहन्तरि रिपूनथ कान्दिशीका
द्रोणात्मभूकृपमुखाः सहसा बभूवुः ॥ 773 ॥

कान्दिशीका भयद्रुताः ।

चम्पूरामायणे—IV. 10.

ग—तदनु तदनुधावनात्कान्दिशीकस्य मम पर्वतेऽस्मिन्नकुतोभयसंचारकारणमाकर्ण्यताम् ॥ 774 ॥

कान्दिशीकस्य । अकुतोभयसञ्चारकारणम् ।

७५५ । ईषदकृता । ( २. २. ७ )

वा० । ईषद्गुणवचनेनेति वाच्यम् । ( 1316.)

ईषत्पिङ्गलः ईषद्रक्तम् ।

अनर्घराघवे—V. 5.

ग—शनैः शनैरनयोर्विरोधे सन्धुक्षमाणे तुल्यव्यसनस्थो दाशरथिः असहायः सूर्यसूनुना सन्धातुमीषत्करः स्यात् ॥ 775 ॥

'ईषद्दुःसुषु' (सू. 3305) इति ईषदुपपदे खल् । 'उपपदमतिङ्' (सू. 782) इति नित्यसमासः ।

७५६ । नञ् । ( २. २. ६ )

नञ् सुपा सह समस्यते ।

७५७ । नलोपो नञः । ( ६. ३. ७३ )

नञो नस्य लोपः स्यादुत्तरपदे । न ब्राह्मणोऽब्राह्मणः ।

## ७५८ । तस्मान्नुडचि । ( ६, ३, ७४ )

लुप्तनकारान्नञ उत्तरपदस्याजादेर्नुडागमः स्यात् । अनश्वः ।

किरातार्जुनीये—XII. 37.

> विवरेऽपि नैनमनिगूढमभिभवितुमेष पारयन् ।
> पापनिरतिरविशङ्कितया विजयं व्यवस्यति वराहमायया ॥ 776 ॥

न निगूढमनिगूढं नस्य लोपः । न पारयन् । विभाषायां 'नञ्' ( सू. 756) इति न समासः ।

नैषधे—II. 2.

> अधुनीत खगः स नैकधा
> तनुमुत्फुल्लतनूरुहीकृताम् ।
> करयन्त्रणदन्तुरान्तरे
> व्यलिखच्चञ्चुपुटेन पक्षती ॥ 777 ॥

नैकधा अनेकधा । नञर्थस्य नशब्दस्य सुप्सुपेति समासः । नञ्समासे नलोपप्रसङ्गः । अनेकधा इत्यत्र नलोपो नुडागमश्च ।

वा० । नञो नलोपस्तिङि क्षेपे । ( 3984. )

माघे—XV. 33.

> त्वयि पूजनं जगति जाल्म
> कृतमिदमपाकृते गुणैः ।
> हासकरमघटते नितरां
> शिरसीव कङ्कतमपेतमूर्धजे ॥ 778 ॥

अघटते न संगच्छत इत्यर्थः । निन्दायां तिङ्योगेऽपि नलोपः ।

## ७५९ । नभ्राण्नपान्नवेदानासत्यानमुचिनकुलनखनपुंसकनक्षत्रनक्रनाकेषु प्रकृत्या । ( ६, ३, ७५ )

निपातनान्नञो नलोपाभावः । पात् इति शत्रन्तः । वेदा इत्यसुन्नन्तः । न सत्या असत्याः । न असत्या नासत्याः । न मुंचतीति नमुचिः । न कुलमस्य । न

समस्य । न स्त्रीपुमान् । स्त्रीपुंसयोः पुंसकभावो निपातनात् । न क्षरतीति नक्षत्रम् । क्षीयतेः क्षरतेर्वा क्षत्रमिति निपात्यते । न क्रामतीति नक्रः । क्रमेर्डः । न अकमस्तीति नाकः ।

माघे—I. 62.

तिरस्कृतस्तस्य जनाभिभाविना
मुहुर्महिम्नां महसां महीयसाम् ।
बभार बाष्पैर्द्विगुणीकृतं तनु-
स्तनूनपाद्धूमवितानमाधिजैः ॥ 779 ॥

तनूं न पातयति ज्वालारूपेण शरीरं धारयतीति तनूनपादग्निः इति क्षीरस्वामी ।

### ७६० । नगोऽप्राणिष्वन्यतरस्याम् । ( ६. ३. ७७ )

नग इत्यत्र नञ् प्रकृत्या वा । नगा अगाः पर्वताः ।

माघे—VI. 79.

कुर्वन्तमित्यतिभरेण नगानवाचः
पुष्पैर्विराममलिनां च न गानवाचः ।
श्रीमान्समस्तमनुसानु गिराविहर्तुं
बिभ्रत्यचोदि स मयूरगिरा विहर्तुम् ॥ 780 ॥

नगान् वृक्षान् ।

अस्मिन्नेव ग्रन्थे श्लो०. 563. न गच्छतीत्यगो वृक्षः, तस्मादगात् ।

### ७६१ । कुगतिप्रादयः । ( २. २. १८ )

एते नित्यं समस्यन्ते । कुत्सितः पुरुषः कुपुरुषः ।

चम्पूरामायणे—V. 20.

ग—एतद्दर्शनेन वेपमानतनुलता मैथिली कापुरुषविषयपरुषवचनपारम्पर्येण विदीर्यमाणहृदया हृदयदयिताशयप्रत्ययादमुमेव तृणमन्तरतः कृत्वा स्थिता पर्यभाषत ॥ 781 ॥

कुत्सितः पुरुषः **कापुरुषः** । कुशब्दस्य कादेशः ।

अस्मिन्नेव ग्रन्थे श्लो० 610. कुत्सितमक्षं काक्षं तेन **काक्षेण** । कुदृष्ट्या । इन्द्रियवाचिनाक्षशब्देन तद्विशेषचक्षुः लक्ष्यते । 'का पथ्यक्षयोः' (सू. 1030) इति कुशब्दस्य तत्पुरुषे कादेशः । 'गतिश्च' (सू. 23) इत्यनुवर्तमाने ।

## ७६२ । ऊर्यादिच्विडाचश्च । (१. ४. ६१)

एते क्रियायोगे गतिसंज्ञाः स्युः । ऊरीकृत्य । शुक्लीकृत्य । पटपटाकृत्य । ऊर्यादिः—१. ५.

माघे—II. 30.

आत्मोदयः परज्यानिर्द्वयं नीतिरितीयती ।
तदूरीकृत्य कृतिभिर्वाचस्पत्यं प्रतायते ॥ 782 ॥

**ऊरीकृत्याङ्गीकृत्य** । अनेन सूत्रेण विहितायां गतिसंज्ञायां 'कुगति' (सू. 782) इति समासे क्त्वो ल्यबादेशः ।

भट्टिकाव्ये—V. 72.

नोदकण्ठिष्यतात्यर्थं त्वामैक्षिष्यत चेत्स्मरः ।
खेलायन्ननिशं नापि **सजूःकृत्य** रतिं वसेत् ॥ 783 ॥

**सजूःकृत्य** सहचरीकृत्य । ऊर्यादित्वेन गतित्वात्समासे क्त्वो ल्यप् ।

चम्पूरामायणे—I. 29.

उच्चस्थे ग्रहपंचके सुरगुरौ सेन्दौ नवम्यां तिथौ
लग्ने कर्कटके पुनर्वसुयुते मेषं गते पूषणि ।
निर्दग्धुं निखिलाः पलाशसमिधो मेध्यादयोध्यारणे-
**राविर्भूतम**भूतपूर्वमपरं यत्किंचिदेकं महः ॥ 784 ॥

**आविर्भूतं** ऊर्यादित्वेन गतित्वात् 'कुगति' (सू. 761) इति समासः ।

अस्मिन्नेव ग्रन्थे श्लो० 510. **करदीकृताः** । 'कृभ्वस्ति' (सू. 2117) इति च्विः । अनेन गतिसंज्ञा । 'कुगति' (सू. 761) इति समासः ।

चम्पूभारते—V. 75.

ग—ततः क्षणादेव कर्णपूरवनकुसुमसौरभजिघ्रच्छिञ्जिनीकेन धनञ्जयेन सपत्त्राकृतः धृतलास्तया विद्यामिव विनयविपर्ययः कृष्णां विमुच्य कृतपलायनः स दुर्मेधा पुरः प्रधावितेन मागधविरोधिना रुरुधे ॥ 785 ॥

सपत्त्राकृतः । 'सपत्र' (सू. 2132) इति डाच् । अनेन गतिसंज्ञा । 'कुगति' (सू. 761) इति समासः ।

भट्टिकाव्ये—III. 45.

ते भुक्तवन्तः सुसुखं वसित्वा
वासांस्युषित्वा रजनीं प्रभाते ।
द्रुतं समध्वा रथवाजिनागै-
र्मन्दाकिनीं रम्यवनां समीयुः ॥ 786 ॥

संप्राप्ता अध्वानं समध्वाः । अध्वगता इत्यर्थः ।

'अत्यादयः क्रान्ताद्यर्थे द्वितीयया' (वा० 1336. सू. 780) इति प्रादिसमासः । 'कुगति प्रादय' (सू. 761) इति अयं तत्पुरुषः । प्रादिः—१. ४.

चम्पूभारते—VIII. 22.

सरिदात्मजशासितोऽपि सन्
स दुरध्वं न जहाति कौरवः ।
इति चिन्तयतो ममाधुना
हृदि सिद्धिः खलु संशयेशया ॥ 787 ॥

दुरध्वं दुर्मार्गम् । प्रादिसमासस्तत्पुरुषः ।

चम्पूभारते—I. 75.

नृपस्य दूरीकृतपाशसंगमं
यमं विहायैकमुपेयुषो वधूम् ।
अजस्रमूरीकृतपाशसंगमो
यमोऽपरः सन्निदधे लतागृहे ॥ 788 ॥

दूरीकृतः । च्विः । 'ऊर्यादिच्वि' (सू. 762) इत्यादिना गतिसंज्ञा । 'कुगति' (सू. 761) इति समासः । ऊरीकृतः । ऊर्यादिगतिसंज्ञा । पूर्ववत् समासः ।

७६४ । आदरानादरयोः सदसती । (१. ४. ६३)

सत्कृत्य । असत्कृत्य ।

अस्मिन्नेव ग्रन्थे श्लो० 652. सदकृत सत्कृतवान् ।

७६५ । भूषणेऽलम् । (१. ४. ६४)

अलङ्कृत्य ।

७६८ । पुरोऽव्ययम् । (१. ४. ६७)

पुरस्कृत्य ।

चम्पूभारते—II. 76.

ग.— तावत्सरभसमुपेत्य साक्षाादादेष्टुमनाः प्रद्युम्न इव धृष्टद्युम्नः सायकैः साकं सकाशमुपनीतं स्वयंवरदिदृक्षया सपरिवारं प्रत्यासन्नमिव पन्नगपतिं चापं पुरस्कृत्य कन्यावलोकनधन्यान्राजन्यानेवमवादीत् ॥ 789 ॥

पुरस्कृत्य ।

७६९ । अस्तं च । (१. ४. ६४)

अस्तमिति मान्तमव्ययं गतिसंज्ञं स्यात् । अस्तंगत्य ।

७७२ । तिरोऽन्तर्धौ । (१. ४. ७१)

तिरोभूय ।

७७३ । विभाषा कृञि । (१. ४. ७२)

तिरस्कृत्य तिरःकृत्य । तिरः कृत्वा ।

७७५ । साक्षात्प्रभृतीनि च । (१. ४. ७३)

कृञि वा गतिसंज्ञानि स्युः ।

वा० । च्व्यर्थ इति वाच्यम् । (1142.)

साक्षात्कृत्य साक्षात् कृत्वा । लवणंकृत्य लवणं कृत्वा । मान्तत्वं निपातनात् ।

भट्टिकाव्ये—V. 71.

मिथ्यैव श्रीः श्रियंमन्या श्रीमन्मन्यो मृषा हरिः ।

साक्षात्कृत्याभिमन्येऽहं त्वां हरन्तीं श्रियः श्रियम् ॥ 790 ॥

साक्षात्कृत्य प्रत्यक्षीकृत्य । 'विभाषा कृञि' (सू. 773) इत्यनुवर्तमाने 'साक्षात्प्रभृतीनि च' (सू. 775) इति गतिसंज्ञा । गतिसमासे ल्यबादेशः ।

७७६ । अनत्याधान उरसिमनसी । (१. ४. ७५)

उरसिकृत्य उरसि कृत्वा । अभ्युपगम्येत्यर्थः । मनसिकृत्य मनसि कृत्वा । निश्चित्येत्यर्थः ।

नैषधे—V. 80.

दुर्लभं दिगधिपैः किममीभि-
स्तादृशं कथमहो मदधीनम् ।
ईदृशं मनसिकृत्य विरोधं
नैषधेन समशायि चिराय ॥ 791 ॥

मनसिकृत्य ।

अत्याधानमुपश्लेषणं तत्र न । उरसि कृत्वा पाणिं शेते ।

अनर्घराघवे—IV. 15.

ग - ततश्च सापि शबरयोगिनी सुग्रीवगुणानुरोधेन सर्वमोमित्युरसिकृत्य तदैव विदेहाभिमुखी प्रस्थिता इति ॥ 792 ॥

उरसिकृत्य ।

अनर्घराघवे—V. 35.

सन्तो मनसिकृत्यैव प्रवृत्ताः कृत्यवस्तुनि ।
कस्य प्रतिशृणोति स्म कमलेभ्यः श्रियं रविः ॥ 793 ॥

मनसिकृत्य निश्चित्य । गतिसंज्ञायां समासे ल्यप् ।

उत्तररामचरिते—I. 24.

अलसललितमुग्धान्यध्वसंपातखेदा-
दशिथिलपरिरम्भैर्दत्तसंवाहनानि ।
परिमृदितमृणालीदुर्बलान्यङ्गकानि
त्वमुरसि मम कृत्वा यत्र निद्रामवाप्ता ॥ 794 ॥

त्वं ममोरसि अङ्गकानि कृत्वा निद्रामवाप्ता । उरसोऽत्याधानत्वात्समासोऽत्र न । अनत्याधान इति निषेधात् ।

७७७ । मध्येपदेनिवचने च । ( १. ४. ७६ )

एते कृञि वा गतिसंज्ञाः स्युरनत्याधाने । मध्येकृत्य मध्ये कृत्वा । पदेकृत्य पदे कृत्वा । निवचनेकृत्य निवचने कृत्वा । वाचं नियम्येत्यर्थः ।

अनर्घराघवे—I. 37.

मध्येकृत्य घनं धिनोति जलधिः स्वैरम्बुभिर्मेदिनीं
हन्ति स्वैः किरणैस्तमिस्रमरुणं कृत्वान्तराले रविः ।
त्वं रामान्तरितश्च पालय निजैरेव प्रतापैः प्रजा-
मीदृक्कोऽपि परोपकारसुहृदामेष स्वभावो हि वः ॥ 795 ॥

मध्येकृत्य । अनेन गतिसंज्ञायां 'कुगति' (सू. 761) इति समासे क्त्वो ल्यप् ।

७७८ । नित्यं हस्तेपाणावुपयमने । ( १. ४. ७७ )

कृञि । उपयमनं विवाहः । स्वीकारमात्रमित्यन्ये । हस्तेकृत्य । पाणौकृत्य ।

भट्टिकाव्ये—V. 16.

सहायवन्त उद्युक्ता बहवो निपुणाश्च याम् ।
श्रियमाशासते लोलां तां हस्तेकृत्य मा श्वसीः ॥ 796 ॥

हस्तेकृत्य स्वीकृत्य । अनेन गतिसंज्ञायां समासे ल्यबादेशः ।

चम्पूभारते—III. 76.

तस्यामेव वधूमिमां स रजनौ सद्योऽनुकूलां रहः
पाणौकृत्य विलोकितोत्सवभरो द्वाभ्यां हरिभ्यामपि ।
पौरेषूभयथा जनेष्ववलतां पार्थेषु पार्थस्तया
जाग्रत्सारथिविद्यया सह रथारूढः पुरान्निर्ययौ ॥ 797 ॥

पाणौकृत्य परिणीय ।

७८० । जीविकोपनिषदावौपम्ये । ( १. ४. ७९ )

जीविकामिव कृत्वा जीविकाकृत्य । उपनिषदमिव कृत्वा उपनिषत्कृत्य । प्रादिग्रहणमगत्यर्थम् । सुपुरुषः ।

वा० । प्रादयो गताद्यर्थे प्रथमया । ( 1335. )

प्रगत आचार्यः प्राचार्यः ।

वा० । अत्यादयः क्रान्ताद्यर्थे द्वितीयया । ( 1336. )

अतिक्रान्तो मालामतिमालः ।

वा० । अवादयः क्रुष्टाद्यर्थे तृतीयया । ( 1337. )

अवक्रुष्टः कोकिलया अवकोकिलः ।

वा० । पर्यादयः ग्लानाद्यर्थे चतुर्थ्या । ( 1338. )

परिग्लानोऽध्ययनाय पर्यध्ययनः ।

वा० । निरादयः क्रान्ताद्यर्थे पंचम्या । ( 1339. )

निष्क्रान्तः कौशाम्ब्या निष्कौशाम्बिः ।

वा० । कर्मप्रवचनीयानां प्रतिषेधः । ( 1339 )

वृक्षं प्रति ।

अस्मिन्नेव ग्रन्थे श्लो० 787. दुरध्वम् । 'उपसर्गादध्वनः' ( सू० 953 ) इति समासान्तः ।

अस्मिन्नेव ग्रन्थे श्लो० 327. अतिक्रान्तेन सर्वमित्यतिसर्वेण ।

अस्मिन्नेव ग्रन्थे श्लो० 261. अविगतो मूर्धानमभिमूर्धा मूर्धगतः । अत्यादय इति समास इति मल्लिनाथः । अविगतः प्राप्तो मूर्धा येनेति जयमङ्गला ।

माघे—I. 11.

निवर्त्य सोऽनुव्रजतः कृतानती-
नतीन्द्रियज्ञाननिधिर्नभस्सदः ।
समासदत्सादितदैत्यसंपदः
पदं महेन्द्रालयचारु चक्रिणः ॥ 798 ॥

अतीन्द्रियज्ञाननिधिः ।

रघुवंशे—III. 41.

तदङ्गनिष्यन्दजलेन लोचने
प्रमृज्य पुण्येन पुरस्कृतः सताम् ।
अतीन्द्रियेष्वप्युपपन्नदर्शनो
बभूव भावेषु दिलीपनन्दनः ॥ 799 ॥

अतीन्द्रियेषु । अत्यादय इति समासः । 'द्विगुप्राप्तापन्न' (वा. 1545. सू. 812) इत्यादिना परवल्लिङ्गताप्रतिषेधाद्विशेष्यनिघ्नत्वम् ।

मेघसंदेशे—I. 43.

तत्र स्कन्दं नियतवसतिं पुष्पमेघीकृतात्मा
पुष्पासारैः स्नपयतु भवान्व्योमगङ्गाजलार्द्रैः ।
रक्षाहेतोर्नवशशिभृता वासवीनां चमूना-
मत्यादित्यं हुतवहमुखे संभृतं तद्धि तेजः ॥ 800 ॥

अतिक्रान्तमादित्यमत्यादित्यम् ।

नैषधे—III. 34.

संज्ञाप्य नः स्वध्वजभृत्यवर्गान्
दैत्यारिरत्यब्जनलास्यनुत्यै ।
तत्संकुचन्नाभिसरोजपीतात्
धातुर्विलज्जं रमते रमायाम् ॥ 801 ॥

अतिक्रान्तमब्जमत्यब्जम् ।

माघे—III. 52.

क्षितिप्रतिष्ठोऽपि मुखारविन्दै-
र्वधूजनश्चन्द्रमधश्चकार ।
अतीतनक्षत्रपथानि यत्र
प्रासादशृङ्गाणि वृथाध्यरुक्षत् ॥ 802 ॥

अतीतानि नक्षत्रपथमतीतनक्षत्रपथानि । द्वितीयासमासः । 'द्विगुप्राप्तापन्न' (वा. 1545. सू. 812) इत्यादिना परवल्लिङ्गताप्रतिषेधः इति मल्लिनाथः । अतिनक्षत्रपथानीति स्यात् ।

अस्मिन्नेव ग्रन्थे श्लो० 599. निष्क्रान्तो लङ्काया निर्लङ्कः । निरादय इत्यादिना गतिसमासः । 'द्विगु' (वा. 1545. सू. 812) इत्यादिना परवल्लिङ्गताप्रतिषेधाद्विशेष्यलिङ्गता ।

भट्टिकाव्ये—VI. 46.

भुजौ चकृततुस्तस्य निस्त्रिंशाभ्यां रघूत्तमौ ।
स छिन्नबाहुरपतद्विह्वलो ह्वलयन्भुवम् ॥ 803 ॥

त्रिंशतोऽङ्गुलिभ्यो निष्क्रान्तौ निस्त्रिंशौ खड्गौ । डप्रकरणे सङ्ख्यायास्तत्पुरुषस्योपसङ्ख्यानं निस्त्रिंशाद्यर्थम् इति डप्रत्यये टिलोपः ।

मेघसंदेशे—I. 28.

वीचिक्षोभस्तनितविहगश्रेणिकाञ्चीगुणायाः
संसर्पन्त्याः स्खलितसुभगं दर्शितावर्तनाभेः ।
निर्विन्ध्यायाः पथि भव रसाभ्यन्तरः सन्निपत्य
स्त्रीणामाद्यं प्रणयवचनं विभ्रमो हि प्रियेषु ॥ 804 ॥

निष्क्रान्ताया विन्ध्यान्निर्विन्ध्याया नद्याः । निरादय इति समासः ।

'द्विगु' (वा. 1545. सू. 812) इति परवल्लिङ्गताप्रतिषेधः ।

## ७८१ । तत्रोपपदं सप्तमीस्थम् । (३. १. ९२)

कुम्भादिवाचकं पदमुपपदसंज्ञं स्यात् । तस्मिंश्च सत्येव वक्ष्यमाणः प्रत्ययः स्यात् ।

### ७८२। उपपदमतिङ् ( २. २. १९ )

उपपदं सुबन्तं समर्थेन नित्यं समस्यते । कुम्भं करोतीति कुम्भकारः ।

भट्टिकाव्ये— VI. 88.

स **शत्रुलावौ** मन्वानो राघवौ मलयं गिरिम् ।
जगाम सपरीवारो **व्योममाय**मिवोत्थितम् ॥ 805 ॥

शत्रून् लुनीत इति **शत्रुलावौ** । कर्मण्यण् । व्योम आकाशं मिमीत इति **व्योममायः** । तम् ।

भट्टिकाव्ये— VI. 89.

**शर्मदं** मारुतिं दूतं **विषमस्थः** कपि**द्विपम्** ।
**शोकापनुदम**व्यग्रं प्रायुङ्क्त कपिकुञ्जरः ॥ 806 ॥

विषमे तिष्ठतीति **विषमस्थः** । कप्रत्ययः । शर्म ददातीति **शर्मद**स्तम् । कः । शोकमपनुदतीति **शोकापनुद**स्तम् । कः । द्वाभ्यां पिबतीति **द्विपः** तम् । कः ।

भट्टिकाव्ये— VI. 91.

**सुरापैरिव** घूर्णद्भिः शाखिभिः पवनाहतैः ।
ऋश्यमूकमगाद्भृङ्गैः प्रगीतं **सामगैरिव** ॥ 807 ॥

सुरां पिबन्तीति **सुरापाः** । सामानि गायन्तीति **सामगाः** । उभयत्र टक् ।

भट्टिकाव्ये— VI. 92.

तं **मनोहर**मागम्य गिरिं **वर्महरौ** कपिः ।
वीरौ **सुखाहरो**ऽवोचद्भिक्षु**र्भिक्षार्ह**विग्रहः ॥ 808 ॥

भिक्षामर्हतीति **भिक्षार्हः** । अच् । मनो हरतीति **मनोहरः** । अच् । वर्म हरत इति **वर्महरौ** । कवचधारणवयस्कौ । अच् । सुखमाहर्तुं शीलमस्यास्तीति **सुखाहरः** ।

भट्टिकाव्ये— VI. 93.

बलिनावमुमद्रीन्द्रं युवां **स्तम्बेरमा**विव ।
आचक्षाथामिथः कस्माच्छङ्करेणापि दुर्गमम् ॥ 809 ॥

स्तम्बे रमेते इति स्तम्बेरमौ । अच् । 'तत्पुरुषे कृति बहुलम्' (सू. 972) इत्यलुक् । शङ्करेण । संज्ञायां अच् ।

भट्टिकाव्ये—VI. 94.

व्याप्तं गुहाशयैः क्रूरैः क्रव्याद्भिः स निशाचरैः ।
तुङ्गशृङ्गतरुच्छन्नं मानुषाणामगोचरम् ॥ 810 ॥

गुहासु शेरत इति गुहाशयाः तैः गुहाशयैः । अच् । निशासु चरन्तीति निशाचराः । टः । क्रव्यमदन्तीति क्रव्यादः तैः क्रव्याद्भिः । विच् ।

भट्टिकाव्ये—VI. 95.

सत्त्वमेजयसिंहाढ्यांस्तनन्धयसमत्विषौ ।
कथं नाडिन्धमान्मार्गानागतौ विषमोपलान् ॥ 811 ॥

सत्त्वानेजयन्तीति सत्त्वमेजयाः । खश् । नाडीर्धमन्तीति नाडिन्धमान् । खश् । स्तनं धयन्तीति स्तनंधयाः । खश् ।

भट्टिकाव्ये—VI. 96.

उत्तीर्णौ वा कथं भीमाः सरितः कूलमुद्वहाः ।
आसादितौ कथं क्रूरं न गजैः कूलमुद्रुजैः ॥ 812 ॥

कूलान्युद्रुजन्तीति कूलमुद्रुजाः । कूलानि उद्वहन्ती उत्क्रम्य वहन्तीति कूलमुद्वहाः । उभयत्र खश् ।

भट्टिकाव्ये—VI. 97.

रामोऽवोचद्धनूमन्तमावामभ्रंलिहं गिरिम् ।
एव विद्धन्पितुः कामात्पान्तावल्पंपचान्मुनीन् ॥ 813 ॥

अभ्रं लेढीत्यभ्रंलिहम् । खश् । अल्पं पचन्तीत्यल्पंपचान् । खश् ।

भट्टिकाव्ये—VI. 98.

अमितंपचमीशानं सर्वभोगीणमुत्तमम् ।
आवयोः पितरं विद्धि ख्यातं दशरथं भुवि ॥ 814 ॥

मितं पचतीति मितंपचः । खश् ।

भट्टिकाव्ये—VI. 99

छलेन दयितारण्याद्रक्षसारुन्तुदेन नः ।
असूर्यंपश्यया मूर्त्या हृतां तां मृगयावहे ॥ 815 ॥

अरुं तुदतीत्यरुन्तुदस्तेन । खश् । सूर्यं न पश्यन्तीत्यसूर्यंपश्या । तया । खश् ।

भट्टिकाव्ये—VI. 100.

प्रत्यूचे मारुती राममस्ति वालीति वानरः ।
शमयेदपि संग्रामे यो ललाटन्तपं रविम् ॥ 816 ॥

ललाटं तपतीति ललाटन्तपस्तम् । खश् ।

भट्टिकाव्ये—VI. 101.

उग्रंपश्येन सुग्रीवस्तेन भ्रात्रा निराकृतः ।
तस्य मित्रीयतो दूतः संप्राप्तोऽस्मि वशंवदः ॥ 817 ॥

उग्रं पश्यतीत्युग्रंपश्यः । पापदर्शी । खश् । मुम् । वशं वदतीति वशंवदः । खच् ।

अस्मिन्नेव ग्रन्थे श्लो० 499. द्विषतस्तापयतीति द्विषन्तपस्तम् ।

भट्टिकाव्ये—VI. 103.

वाचंयमोऽहमनृते सत्यमेव ब्रवीमि ते ।
एहि सर्वंसहं मित्रं सुग्रीवं कुरु वानरम् ॥ 818 ॥

वाचं यच्छतीति वाचंयमो मौनव्रती । वाचंयम इति निपातनान्मुम् । सर्वं सहत इति सर्वंसहस्तम् । खश्, मुम् ।

भट्टिकाव्ये—VI. 104.

सर्वङ्कषयशःशाखं रामकल्पतरुं कपिः ।
आदायाभ्रङ्कषं प्रायान्मलयं फलशालिनम् ॥ 819 ॥

सर्वं कषन्तीति सर्वंकषाणि । अभ्रं कषतीति अभ्रङ्कषम् । उभयत्रापि खचि मुम् ।

भट्टिकाव्ये—VI 105.

**मेघंकर**मिवायान्तमृतुं रामं क्षमान्वितः ।
दृष्ट्वा मेने न सुग्रीवो वालिभानुं **भयङ्करम्** ॥ 820 ॥

मेघान्करोतीति **मेघंकर**स्तम् । खच् । मुम् । भयं करोतीति **भयंकर**स्तम् । अस्मिन्नेव ग्रन्थे श्लो॰ 625. प्रियं कुरुत इति **प्रियंकरौ** । क्षेमं कुर्वन्तीति **क्षेमंकराणि** । उभयत्र खचि मुम् ।

भट्टिकाव्ये—VI. 107.

**आशितंभव**मुत्कृष्टं वल्गितं शयितं स्थितम् ।
बह्वमन्यत काकुत्स्थः कपीनां स्वेच्छया कृतम् ॥ 821 ॥

आशित इति आङ्पूर्वादश्नातेरविवक्षिते कर्मणि कर्तरि क्तः । आशितस्य भावः **आशितंभवः** । भावे खच् ।

भट्टिकाव्ये—VI. 108.

ततो **बलिन्दम**प्रख्यं कपि**र्विश्वम्भरा**धिपम् ।
सुग्रीवः प्राब्रवीद्रामं वालिनो युधि विक्रमम् ॥ 822 ॥

बलिं दमयतीति **बलिन्दमः** विष्णुः । विश्वं बिभर्तीति **विश्वम्भरा** भूमिः । उभयत्र संज्ञायां खच् ।

भट्टिकाव्ये—VI. 109.

**वसुन्धरायां** कृत्स्नायां नास्ति वालिसमो बली ।
**हृदयङ्गम**मेतत्त्वां ब्रवीमि न पराभवम् ॥ 823 ॥

वसूनि धारयतीति **वसुन्धरा** । संज्ञायां खच् । हृदयं गच्छतीति **हृदयङ्गमम्** । हृद्गतम् । खच् ।

भट्टिकाव्ये—VI. 110.

**दूरगैरन्तगै**र्बाणैर्भवा**नत्यन्तगः** श्रियः ।
अपि संक्रन्दनस्य स्यात् क्रुद्धः किमुत वालिनः ॥ 824 ॥

**दूरगै**र्दूरगामिभिः । **अन्तगैः** । **अत्यन्तगः** । डः ।

भट्टिकाव्ये — VI. 111.

वरेण तु मुनेर्वाली संजातो दस्युहो रणे ।
अवार्यप्रसरः प्रातरुद्यन्निव तमोऽपहः ॥ 325 ॥

दस्युहः दस्यून्वध्यात् । आशीरर्थे हन्तेर्डः । तमांसि अपहन्तीति तमोऽपहः । हन्तेरपपूर्वाड्डः ।

भट्टिकाव्ये — VI. 112.

अतिप्रियत्वान्न हि मे कातरं प्रतिपद्यते ।
चेतो वालिवधं राम क्लेशापहमुपस्थितम् ॥ 326 ॥

क्लेशानपहन्तीति क्लेशापहम् । डः ।

भट्टिकाव्ये — VI. 113.

शीर्षघातिनमायातमरीणां त्वां विलोकयन् ।
पतिघ्नलक्षणोपेतां मन्येऽहं वालिनः स्त्रियम् ॥ 327 ॥

शीर्षाणि हन्तीति शीर्षघातिनम् । णिनिः । पतिं हन्तीति पतिघ्नम् । टक् ।

भट्टिकाव्ये — VI. 114.

शत्रुघ्नान्युधि हस्तिघ्नो गिरीन्क्षिप्यन्नकृत्रिमान् ।
शिल्पिभिः पाणिघैः क्रुद्धस्त्वया जय्यो ह्युपायवान् ॥ 328 ॥

हस्तिनो हन्तुं शीलो हस्तिघ्नः टक् । शत्रून्घ्नन्तीति शत्रुघ्नान् । टक् । पाणीन्घ्नन्तीति पाणिघैः । निपातनाट्टक् । टिलोपः ।

अस्मिन्नेव ग्रन्थे श्लो० 541. अनाढ्यः आढ्यः क्रियतेऽनेनेति आढ्यङ्करणम् । अप्रियं प्रियं क्रियतेऽनेनेति प्रियङ्करणम् । उभयत्र ख्युन् ।

अस्मिन्नेव ग्रन्थे श्लो० 540. अप्रियः प्रियो भवन् प्रियंभावुकः । खुकञ् । अप्रियः प्रियो भवन् प्रियंभविष्णुः । खिष्णुच् ।

भट्टिकाव्ये VI. 117.

जिज्ञासोः शक्तिमस्त्राणां रामोऽन्यूनधियः कपेः ।
अभिनत्प्रतिपत्त्यर्थं सप्त व्योमस्पृशस्तरून् ॥ 829 ॥

व्योमस्पृशः । क्विन् ।

भट्टिकाव्ये—VI. 118.

ततो वालिपशौ वध्ये रामत्विग्विजितसाध्वसः ।
अभ्यभून्निलयं भ्रातुः सुग्रीवो निनदन्दधृक् ॥ 830 ॥

ऋतौ यजति ऋतुं वा यजति ऋतुप्रयुक्तो वा यजतीति ऋत्विक् । ऋतुपूर्वाद्यजेः क्विन् ।

भट्टिकाव्ये—VI. 120.

व्यायच्छमानयोर्मूढो भेदे सदृशयोस्तयोः ।
बाणमुद्यतमायंसीदिक्ष्वाकुकुलनन्दनः ॥ 831 ॥

सदृशयोः समानयोः । समानोपपदाद् दृशेः कञ् । 'दृग्दृश' (सू. 1017) इति समानस्य समावः ।

भट्टिकाव्ये—VI. 121.

ऋश्यमूकमगात्क्लान्तः कपिर्मृगसदृग्द्रुतम् ।
किष्किन्धाद्रिसदात्यर्थं निष्पिष्टः कोष्णमुच्छ्वसन् ॥ 832 ॥

किं किं दधातीति किष्किन्धा । गुहा । 'आतोऽनुपसर्गे कः' (सू. 2915) इति कः । पारस्करादित्वात्सुट् । तस्या अद्रिः । तत्र सीदतीति तत्सदा । क्विप् । सदृक् । समानोपपदाद् दृशेः क्विन् ।

भट्टिकाव्ये—VI. 122.

कृत्वा वालिद्रुहं रामो मालया सविशेषणम् ।
अङ्गदस्वं पुनर्हन्तुं कपिनाह्वाययद्रणे ॥ 833 ॥

वालिने द्रुह्यतीति वालिद्रुहम् । क्विप् । अङ्गदं सूत इति अङ्गदसूः । क्विप् ।

भट्टिकाव्ये—VI. 123.

तयोर्वानरसेनान्योः सम्प्रहारे तनुच्छिदम् ।
वालिनो दूरमाग्रामो बाणं प्राणादमत्यजत् ॥ 834 ॥

**सेनान्योः** । क्विप् । **दूरभाक्** । ण्विः । **तनुच्छिदम्** । क्विप् । प्राणानत्तीति **प्राणादम्** । विट् ।

भट्टिकाव्ये—VI. 124 - 125.

अथ बाणेन जविना तेन विद्धो महाकपिः ।
क्रव्यात्त्रासकरं नादं कुर्वन् कामदुघोऽर्थिनाम् ॥ 835 ॥

अग्रेगावा च शूराणामभिभूः सर्वविद्विषाम् ।
शंस्थरूपस्थिरप्रज्ञः पपात सहसा भुवि ॥ 836 ॥

कामान्दोग्धीति **कामदुघः** । कप् । अग्रे गच्छतीति **अग्रेगावा** । गमेर्वनिप् । शमि सुखे तिष्ठतीति **शंस्थः** । कप्रत्ययः । क्रव्यमदन्तीति **क्रव्यादः** । आममांसभक्षकः । विट् ।

भट्टिकाव्ये—VI. 126.

वालिनं पतितं दृष्ट्वा वानरा रिपुघातिनम् ।
बान्धवक्रोशिनो भेजुरनाथाः ककुभो दश ॥ 837 ॥

रिपून्हन्तीति **रिपुघातिनम्** । ताच्छील्ये णिनिः । बान्धव इव क्रोशन्तीति **बान्धवक्रोशिनः** । 'कर्तर्युपमाने' (सू. 2989) इति णिनिः ।

भट्टिकाव्ये—VI. 127.

धिग्दाशरथिमित्यूचुर्मुनयो वनवर्तिनः ।
उपेयुर्मधुपायिन्यः क्रोशन्त्यस्तं कपिस्त्रियः ॥ 838 ॥

वने वर्तन्ते शास्त्रतो नियमादिति **वनवर्तिनः** । 'व्रते' (सू. 2990) इति णिनिः । मधु पिबन्ति अभीक्ष्णमिति **मधुपायिन्यः** । आभीक्ष्ण्ये णिनिः ।

भट्टिकाव्ये—VI. 128.

राममुच्चैरुपालभ्य शूरमानी कपिप्रभुः ।
व्रणवेदनया ग्लायन् साधुंमन्यमसाधुवत् ॥ 839 ॥

शूरमात्मानं मन्यत इति शूरमानी । मन्यतेर्णिनिः । साधुमात्मानं मन्यत इति साधुंमन्यम् । खश् ।

भट्टिकाव्ये—VI. 129.

मृषासि त्वं हविर्याजी राघव च्छद्मतापसः ।
अन्यव्यासक्तघातित्वाद्ब्रह्मघ्नां पापसंमितः ॥ 840 ॥

हविषा इष्टवान् हविर्याजी । 'करणे यज' (सू. 2996) इति भूते णिनिः । अन्यव्यासक्तं हतवान् अन्यव्यासक्तघाती । 'कर्मणि हनः' (सू. 2997) इति भूते णिनिः । ब्रह्माणं हतवतां ब्रह्मघ्नाम् । क्विप् ।

भट्टिकाव्ये—VI. 130.

पापकृत्सुकृतां मध्ये राज्ञः पुण्यकृतः सुतः ।
मामपापं दुराचार किं निहत्याभिधास्यति ॥ 841 ॥

पुण्यं कृतवान् पुण्यकृत् । तस्य । पापं कृतवान् पापकृत् । सुकृताम् । सर्वत्र भूते क्विप् ।

भट्टिकाव्ये—VI. 131.

अग्निचित्सोमसुद्राजा रथचक्रचिदाविदु ।
अनलेष्विष्टवान्कस्मान्न त्वयापेक्षितः पिता ॥ 842 ॥

अग्निं चितवान् अग्निचित् । क्विप् । सोमं सुतवान् सोमसुत् । क्विप् । रथचक्रमिव चीयत इति रथचक्रचित् । क्विप् ।

भट्टिकाव्ये—VI. 132.

मांसविक्रयिणः कर्म व्याधस्यापि विगर्हितम् ।
मां घ्नता भवताकारि निःशङ्कं पापदृश्वना ॥ 483 ॥

पापं दृष्टवान्पापदृश्वा । क्वनिप् । मांसं विक्रीतवान् मांसविक्रयी । कुत्सायामिनिः ।

भट्टिकाव्ये—VI. 133.

बुद्धिपूर्वं ध्रुवन्न त्वां राजकृत्वा पिता खलम् ।
सहयुध्वानमन्येन योऽहिनो मामनागसम् ॥ 844 ॥

राजानं कृतवान्राजकृत्वा । कनिप् । सहयुध्वानं सहयुद्धवन्तम् । कनिप् ।

भट्टिकाव्ये—VI. 134.

पञ्च पञ्चनखा भक्ष्या ये प्रोक्ताः कृतजैर्द्विजैः ।
कौसल्याज शशादीनां तेषां नैकोऽप्यहं कपिः ॥ 845 ॥

कृते जातैः कृतजैः । 'सप्तम्यां जनेर्डः' (सू. 3007) इति डः । द्विर्जातैर्द्विजैः । 'अन्येष्वपि दृश्यते' (सू. 3011) इति डः । कौसल्याया जात कौसल्याज । 'पंचम्यामजातौ' (सू. 3008) इति डः ।

भट्टिकाव्ये—VI. 135.

कथं दुःस्थः स्वयं धर्मे प्रजास्त्वं पालयिष्यसि ।
आत्मानुजस्य जिह्रेषि सौमित्रेस्त्वं कथं न वा ॥ 846 ॥

प्रजाताः प्रजाः । डः । आत्मानमनुजातः आत्मानुजः । 'अनौ कर्मणि' (सू. 3010) इति डः ।

७८३ । अमैवाव्ययेन । ( २. २. २० )

खादुङ्कारम् ।

भट्टिकाव्ये—V. 39.

तं भीतंकारमाकृश्य रावणः प्रत्यभाषत ।
यातयामं विजितवान् स रामं यदि किं ततः ॥ 847 ॥

भीतं कृत्वा भीतंकारम् । 'कर्मण्याक्रोशे' (सू. 3346) इति खमुञ् ।

अस्मिन्नेव ग्रन्थे श्लो० 735. साकल्येन मांसशोणिते सन्दर्श्य मांसशोणितसन्दर्शम् । णमुल् । तुण्डेन घातो यस्मिन्कर्मणि तत्तुण्डघातम् इति बहुव्रीहिः । 'करणे हनः' (सू. 3358) इति णमुलन्तत्वे पादघातं हन्तीतिवत् 'कषादिषु' (सू. 3367) इति यथाविध्यनुप्रयोगः स्यात् ।

भट्टिकाव्ये—III. 49.

समूलकाषं चकषू रुदन्तो
रामान्तिकं बृंहितमन्युवेगाः ।

आवेदयन्तः क्षितिपालमुच्चैः-
कारं मृतं रामवियोगशोकात् ॥ 348 ॥

समूलं कषित्वा समूलकाषम् चकषुः ।

भट्टिकाव्ये—I. 2.

सोऽध्यैष्ट वेदान् त्रिदशानयष्ट
पितॄनताप्सींत्सममंस्त बन्धून् ।
व्यजेष्ट षड्वर्गमरंस्त नीतौ
समूलघातं न्यवधीदरींश्च ॥ 849 ॥

समूलं हत्वा समूलघातम् ।

७८४ । तृतीयाप्रभृतीन्यन्यतरस्याम् । ( २. २. २१ )

'उपदंशस्तृतीयायाम्' (सू. 3368) इत्यादीन्युपपदान्यमन्तेनाव्ययेन सह वा समस्यन्ते । मूलकेनोपदंशं मूलकोपदंशम् ।

माघे—XVIII. 77.

ग्लानिच्छेदि क्षुत्प्रबोधाय पीत्वा
रक्तारिष्टं शोषिताजीर्णशेषम् ।
स्वादुंकारं कालखण्डोपदंशं
कोष्टा डिम्भं व्यष्वणद्व्यस्वनच्च ॥ 850 ॥

स्वदुंकारं स्वादुंकृत्य । 'स्वादुमि णमुल्' (सू. 3347) कालखण्डेन यकृता उपदंश्य कालखण्डोपदंशम् ।

अस्मिन्नेव ग्रन्थे श्लो० 74. बाहुभ्यामुपपीडय बाहूपपीडम् । 'सप्तम्यां' (सू. 3370) चकारात्तृतीयायां च ।

नैषधे—VI. 78.

सलीलमालिङ्गनयोपपीड-
मनामयं पृच्छति वासवस्त्वाम् ।

शेषस्त्वदाश्लेषकथापनिद्रै-
स्तद्रोमभिः सन्दिदिशे भवत्यै ॥ 851 ॥

विकल्पादसमासः ।

अस्मिन्नेव ग्रन्थे श्लो० 730. महेन्द्रलोकप्रतिमां महेन्द्रलोकेन प्रतिमाम् । अमेति योगविभागात्समासः ।

७८५ । क्त्वा च । ( २. २. २२ )

तृतीयाप्रभृतीन्युपपदानि क्त्वान्तेन सह वा समस्यन्ते ।

भट्टिकाव्ये—V. 95.

त्रस्यन्तीं तां समादाय यातो रात्रिंचरालयम् ।
तूष्णींभूय भयादासांचक्रिरे मृगपक्षिणः ॥ 852 ॥

तूष्णींभूय । 'तूष्णीमि भुवः' ( सू. 3385 ) इति पक्षे क्त्वाप्रत्ययः । क्त्वा चेति पक्षे समासे क्त्वो ल्यबादेशः ।

७८६ । तत्पुरुषस्याङ्गुलेः सङ्ख्याव्ययादेः । ( ५. ४. ८६ )

सङ्ख्याव्ययादेरङ्गुल्यन्तस्य तत्पुरुषस्य समासान्तोऽच् स्यात् । द्वे अङ्गुली प्रमाणमस्य द्व्यङ्गुलं दारु । निर्गतमङ्गुलिभ्यो निरङ्गुलम् ।

७८७ । अहः सर्वैकदेशसङ्ख्यातपुण्याच्च रात्रेः ( ५. ४. ८७ )

एभ्यो रात्रेरच् स्यात् । चात्सङ्ख्याव्ययादेः । अहश्च रात्रिश्च अहोरात्रः । सर्वा रात्रिः सर्वरात्रः । पूर्वं रात्रेः पूर्वरात्रः । सङ्ख्यातरात्रः । पुण्यरात्रः । द्वयोः रात्र्योः समाहारः द्विरात्रम् । सङ्ख्यापूर्वं रात्रं क्लीबम् । अतिक्रान्तो रात्रिमतिरात्रः ।

अस्मिन्नेव ग्रन्थे श्लो० 687. सर्वा रात्रयः सर्वरात्राः । 'पूर्वकाल' ( सू. 726 ) इति समासः । अनेन समासान्तोऽच् । 'रात्राह्नाहाः पुंसि' ( सू. 814 ) इति पुंस्त्वम् ।

अस्मिन्नेव ग्रन्थे श्लो० 734. सर्वस्यां रात्रौ सर्वरात्रः तम् । पूर्ववत् ।

अस्मिन्नेव ग्रन्थे श्लो० 614. अर्धं रात्रेरर्धरात्रः । 'अर्धं नपुंसकं' (सू. 713) इति एकदेशिसमासः । अनेन समासान्तोऽच् । 'रात्राह्नाहाः पुंसि' (सू. 814) इति पुंस्त्वम् ।

अस्मिन्नेव ग्रन्थे श्लो० 722. अपरः रात्रेः अपररात्रः । 'पूर्वापर' (सू. 712) इत्यादिना एकदेशिसमासः । अनेन समासान्तोऽच् । पूर्ववत्पुंस्त्वम् ।

अस्मिन्नेव ग्रन्थे श्लो० 723 **अपररात्रजागरूकः** पूर्ववत् ।

अस्मिन्नेव ग्रन्थे श्लो० 99. पश्चिमा चासौ रात्रिश्च **पश्चिमरात्रिः** । विशेषणसमासः । न तु पश्चिमं रात्रेरित्येकदेशिसमासः । तद्विधायके 'पूर्वापर' (सू. 737) इति सूत्रे पश्चिमशब्दाग्रहणात् ।

## ७८८ । राजाहःसखिभ्यष्टच् । (५. ४. ९१)

एतदन्तात्तत्पुरुषाट्टच् स्यात् । परमराजः । अतिराजी । कृष्णसखः ।

## ७८९ । अह्नष्टखोरेव । (६. ४. १४५)

एतयोरेव परतोऽह्नष्टिलोपः स्यान्नान्यत्र । उत्तमाहः । टचि टिलोपः । द्वे अहनी भृतो द्व्यहीनः क्रतुः । तद्धितार्थे द्विगुः । 'तमधीष्टः' (सू. 1744) इत्यधिकारे 'द्विगोर्वा' (सू. 1750) इत्यनुवृत्तौ 'रात्र्यहःसंवत्सराच्च' (सू. 1751) इति खः । टिलोपः ।

अस्मिन्नेव ग्रन्थे श्लो० 742. दशानामह्नां समाहरो दशाहः । 'तद्धितार्थ' (सू. 728) इत्यादिना समासः । समाहारस्यैकत्वादेकवचनम् । 'राजाहःसखिभ्यः' (सू. 788) इति टचि टिलोपः । 'रात्राह्ना' (सू. 814) इति पुंस्त्वम् । ततस्तसिल् ।

अस्मिन्नेव ग्रन्थे श्लो० 431. त्रयाणामह्नां समाहारः । त्र्यहः । पूर्ववत् ।

अस्मिन्नेव ग्रन्थे श्लो० 14. अनूपानां राजा अनूपराजः । अनेन टच् ।

माघे—XX. 71.

मधुरैरपि भूयसा स मेघ्यैः
प्रथमं प्रत्युत वारिभिर्दिदीपे ।

पवमानसखस्ततः क्रमेण
प्रणयक्रोध इवाशमद्विवादैः ॥ 853 ॥

पवमानस्य सखा पवमानसखः अग्निः । टच् । तत्पुरुषः । 'रोहिताश्वो वायुसखा' इत्यसमासान्तपाठेन बहुव्रीहिमाह स्वामी ।

अनर्घराघवे—III. 33.

उत्पादयन्क्रमपि कौणपकोटिहोमं
तेजोहुताशनसमिन्धनसामिधेनीम् ।
यस्ताटकामकृत बालसखैः पृषत्कै-
रीषज्जयः स्फुटमनेन दशाननोऽपि ॥ ॥854 ॥

बालस्य सखायो बालसखाः। टच् ।

अस्मिन्नेव ग्रन्थे श्लो० 695. विबुधानां सखा विबुधसखः । 'न पूजनात्' (सू. 954.) 'नञस्तत्पुरुषात्' (सू. 956) टच्प्रतिषेधः ।

## ७९० । अह्नोऽह्न एतेभ्यः । (५. ४. ८८.)

'अहःसर्वैकदेश' (सू. 787) इत्यत्रोक्तेभ्यः सर्वादिभ्यः परस्याहन्शब्दस्याह्नादेशः स्यात् समासान्ते परे ।

## ७९१ । अह्नोऽदन्तात् । (८. ४. ७)

रेफात्परस्याह्नादेशस्य नस्य णः स्यात् । सर्वाह्णः । पूर्वाह्णः । संख्याताह्नः ।

अस्मिन्नेव ग्रन्थे श्लो० 720. पूर्वमहः पूर्वाह्णः । तस्मिन् । 'पूर्वापर' (सू. 712) इत्यादिना एकदेशिसमासः । 'राजाहः' (सू. 788) इति टच् । 'अह्नोऽह्न' (सू. 790) इत्यह्नादेशः । 'अह्नोऽदन्तात्' (सू. 791) इति णत्वम् ।

अस्मिन्नेव ग्रन्थे श्लो० 721. अपरोऽपरभागोऽह्नोऽपराह्णः । पूर्ववत् ।

## ७९२ । क्षुभ्नादिषु च । (८. ४. ३९)

एषु णत्वं न स्यात् । क्षुभ्नादिः— ८. ११.

भट्टिकाव्ये—IX. 109.

रोषभीममुखेनैवं क्षुभ्नतोक्तः प्लवंगमः ।
प्रोचे सानुनयं वाक्यं रावणं स्वार्थसिद्धये ॥ 855 ॥

क्षुभ्नता क्षुभ्यता । णत्वप्रतिषेधः ।

माघे—IX. 42.

ककुभां मुखानि सहसोज्ज्वलयन्
दधदाकुलत्वमधिकं रतये ।
अदिदीपदिन्दुरपरो दहनः
कुसुमेषुसत्रिनयनप्रभवः ॥ 856 ॥

कुमारसंभवे—VII. 69.

इत्योषधिप्रस्थविलासिनीनां
शृण्वन्कथाः श्रोत्रसुखास्त्रिनेत्रः ।
केयूरचूर्णीकृतलाजमुष्टिं
हिमालयस्यालयमाससाद ॥ 857 ॥

त्रिनेत्रत्रिनयनशब्दयोः क्षुभ्नादित्वान्न णत्वम् ।

रघुवंशे—XV. 54.

रघुनाथोऽप्यगस्त्येन मार्गसन्दर्शितात्मना ।
महौजसा संयुयुजे शरत्काल इवेन्दुना ॥ 858 ॥

रघुनाथेत्यत्र क्षुभ्नादित्वाण्णत्वाभावः ।

### ७९३ । न सङ्ख्यादेः समाहारे । ( ५. ४. ८९ )

समाहारे वर्तमानस्य संख्यादेरह्नादेशो न स्यात् । द्वयोरह्नोः समाहारः द्व्यहः । त्र्यहः ।

अस्मिन्नेव ग्रन्थे श्लो॰ 742. दशानामह्नां समाहारः दशाहः । 'तद्धितार्थ' (सू. 728) इत्यादिना समासः । समाहारस्यैकत्वादेकवचनम् । 'राजाहः' (सू. 788) इति टच् । 'रात्राह्ना' ( सू. 814 ) इति पुंस्त्वम् । अनेनाह्नादेशाभावः ।

अस्मिन्नेव ग्रन्थे श्लो० 431. त्र्यहात् । पूर्ववत् ।

७९४ । उत्तमैकाभ्यां च (५. ४. ९०)

आभ्यामह्नादेशो न । उत्तमशब्दोऽन्त्यार्थः पुण्यशब्दमाह । पुण्यैकाभ्याम् इत्येव सूत्रयितुमुचितम् । पुण्याहम् । सुदिनाहम् । सुदिनशब्दः प्रशस्तवाची । एकाहः ।

७९५ । अग्राख्यायामुरसः । (५. ४. ९३)

टच् स्यात् । अश्वानामुर इवाश्वोरसम् । मुख्योऽश्व इत्यर्थः ।

७९६ । अनोऽश्मायःसरसां जातिसंज्ञयोः (५. ४. ९४)

टच् स्यात् जातौ संज्ञायां च । उपानसम् । अमृताश्मः । कालायसम् । मण्डूकसरसम् । इति जातिः । महानसम् । पिण्डाश्मः । लोहितायसम् । जलसरसम् । इति संज्ञा ।

चम्पूभारते—VI. 43.

सायं महानसशयं शनकैर्ययौ सा
भीमं रहः पृथुशरावकृतोपधानम् ।
धूमाधिरोहमलिनं वसनं वसानं
नीलाम्बुवाहपरिवीतमिवाचलेन्द्रम् ॥ 859 ॥

७९७ । ग्रामकौटाभ्यां च तक्ष्णः । (५. ४. ९५)

ग्रामस्य तक्षा ग्रामतक्षः । कुट्यां भवः कौटः । कौटश्चासौ तक्षा च कौटतक्षः । 'ग्रामाधीनो ग्रामतक्षः कौटतक्षोऽनधीनकः' II. x. 9. इत्यमरः ।

७९८ । अतेः शुनः । (५. ४. ९६)

अतिक्रान्तः श्वानमतिश्वो वराहः । अतिश्वी सेना । टित्वान् ङीप् । 'अत्यादयः' इति समासः ।

८०१ । नावो द्विगोः । (५. ४. ९९)

नौशब्दान्ताद् द्विगोष्टच् स्यात् ।

८०२ । अर्धाच्च । (५. ४. १००)

अर्धान्नावष्टच् स्यात् । नावोऽर्धमर्धनावम् । 'अर्धं नपुंसकम्' (सू. 713) इत्येकदेशिसमासः ।

८०४ । द्वित्रिभ्यामञ्जलेः । (५. ४. १०२)

टज्वा स्याद् द्विगौ । द्व्यञ्जलं द्व्यञ्जलि ।

अस्मिन्नेव ग्रन्थे श्लो० 643. द्वावञ्जली समाहृतौ द्व्यञ्जलम् । 'तद्धितार्थ' (सू. 728) इत्यादिना समासः । अनेन टच् । तद्धितलुकि न समासान्तः । द्वाभ्यामञ्जलिभ्यां क्रीतः द्व्यञ्जलिः ।

८०५ । ब्रह्मणो जानपदाख्यायाम् । (५. ४. १०४)

ब्रह्मान्तात्तत्पुरुषाट्टच् स्यात् समासेन जानपदत्वमाख्यायते चेत् । सुराष्ट्रे ब्रह्मा सुराष्ट्रब्रह्मः ।

८०६ । कुमहद्भ्यामन्यतरस्याम् । (५. ४. १०५)

आभ्यां ब्रह्मणो वा टच् स्यात् तत्पुरुषे । कुत्सितो ब्रह्मा कुब्रह्मः कुब्रह्मा । 'कुगतिप्रादयः' (सू. 761) इति समासः ।

अस्मिन्नेव ग्रन्थे श्लो० 731. कुत्सितो ब्रह्मा कुब्रह्मः कुब्रह्मा वा । तस्य यज्ञके कुब्रह्मयज्ञके ।

भट्टिकाव्ये—IV. 12.

व्रातीनव्यालदीप्तास्त्रः सुत्वनः परिपूजयन् ।
पर्षद्वलान्महाब्रह्मैराट नैकटिकाश्रमान् ॥ 860 ॥

महान्तो ब्रह्माणो महाब्रह्माः । 'सन्महत्' (सू. 740) इति समासः । समासान्तष्टच् ।

भट्टिकाव्ये—I. 4.

पुण्यो महाब्रह्मसमूहजुष्टः
सन्तर्पणो नाकसदां वरेण्यः ।

जज्वाल लोकस्थितये स राजा
यथाध्वरे वह्निरभिप्रणीतः ॥ 861 ॥

महाब्रह्माः महाब्रह्माणो वा । तेषां समूहः ।

८०७ । आन्महतः समानाधिकरणजातीययोः । ( ६. ३. ४६ )

महत आकारोऽन्तादेशः स्यात्समानाधिकरणे उत्तरपदे जातीये च परे । महाब्रह्मः महाब्रह्मा । महादेवः । महाजातीयः । समानाधिकरणे किम् । महतः सेवा महत्सेवा ।

चम्पूरामायणे—III. 1.

प्रविश्य विपिनं महत्तदनु मैथिलीवल्लभो
महाबलसमन्वितश्चलितनीलशैलच्छविः ।
निशाचरदवानलप्रशमनं विधातुं शरै-
श्चचार सशरासनः सुरपथे तटित्वानिव ॥ 862 ॥

महच्च तद्बलं च महाबलम् ।

वा० । अष्टनः कपाले हविषि । (3951.)

अष्टसु कपालेषु संस्कृतः पुरोडाशः अष्टाकपालः ।

वा० । गवि च युक्ते । ( 3952. )

अष्टागवं शकटम् ।

८०८ । द्व्यष्टनः संख्यायामबहुव्रीह्यशीत्योः । ( ६. ३. ४७ )

आत्स्यात् । द्वौ च दश च द्वादश । द्व्यधिका दशेति वा । द्वाविंशतिः अष्टादश । अष्टाविंशतिः । अबहुव्रीह्यशीत्योः किम् । द्वित्राः । द्व्यशीतिः ।

वा० । प्राक्शतादिति वक्तव्यम् । ( 3953. )

नैषधे—I. 5.

अमुष्य विद्या रसनाग्रनर्तकी
त्रयीव नीताङ्गगुणेन विस्तरम् ।

अगाहताष्टादशतां जिगीषया
नवद्वयद्वीपपृथग्जयश्रियाम् ॥ 863 ॥

अष्टादश ।

भट्टिकाव्ये—XVII. 40—41.

दोषैररमतैभिस्ते पितात्यज्यत यैर्मया ।
ततोऽरुष्यदनर्दच्च द्विविंशतिभिरेव च ॥ 864 ॥

शरैरतायडद्धन्तुं पंचत्रिंशतिभिर्नृपम् ।
रावणिस्तस्य सौमित्रिरमथ्नाच्चतुरो हयान् ॥ 865 ॥

द्वे विंशती येषामिति बहुव्रीहिः । तेन द्व्यष्टन इत्यात्वं न । द्वौ च विंशतिश्चेति द्वन्द्वे द्वाविंशतिरिति स्यात् । पूरणार्थे द्वाविंशतितमः द्वाविंशः ।

८०९ । त्रेस्त्रयः । ( ६. ३. ४८ )

त्रिशब्दस्य त्रयादेशः स्यात् । त्रयोदश । त्रयोविंशतिः ।

अनर्घराघवे—III. 2.

त्रयस्त्रिंशत्कोटित्रिदशमयमूर्तेर्भगवतः
सहस्रांशोर्वंशे जयति जगदीशो दशरथः ।
यदस्त्रैरस्निग्धैरसुरयुवतिश्वासपवन-
प्रकोपे सिद्धे न स्पृशति शतकोटिं शतमखः ॥ 866 ॥

त्रयस्त्रिंशदित्यत्र त्रयादेशः ।

८१० । विभाषा चत्वारिंशत्प्रभृतौ सर्वेषाम् । ( ६. ३. ४९ )

द्व्यष्टनोस्त्रेश्च प्रागुक्तं वा स्यात् चत्वारिंशदादौ परे । द्विचत्वारिंशत् द्वाचत्वारिंशत् । अष्टचत्वारिंशत् अष्टाचत्वारिंशत् । त्रिचत्वारिंशत् त्रयश्चत्वारिंशत् । एवं पंचाशत्षष्टिसप्ततिनवतिषु ।

८११ । परवल्लिङ्गं द्वन्द्वतत्पुरुषयोः । ( २. ४. २६ )

एतयोः परपदस्येव लिङ्गं स्यात् ।

वा० । द्विगुप्राप्तापन्नालंपूर्वगतिसमासेषु प्रतिषेधो वाच्यः । ( 1545. )

अस्मिन्नेव ग्रन्थे श्लो० 799. अतीन्द्रियेषु इन्द्रियाण्यतिक्रान्तेषु । 'अत्यादयः क्रान्ताद्यर्थे' (वा. 1336. सू. 780) इति समासः । अनेन वार्तिकेन परवल्लिङ्गताप्रतिषेधात् विशेष्यनिघ्नत्वम् ।

अस्मिन्नेव ग्रन्थे श्लो० 599. निष्क्रान्तो लङ्कायाः निर्लङ्कः । 'निरादयः क्रान्ताद्यर्थे' (वा. 1339. सू. 780) इति गतिसमासः । पूर्ववत् विशेष्यलिङ्गता ।

८१४ । रात्राह्नाहाः पुंसि । (२.४.२९)

एतदन्तौ द्वन्द्वतत्पुरुषौ पुंस्येव । अहश्च रात्रिश्च अहोरात्रः । पूर्वरात्रः । पूर्वाह्णः । द्व्यहः ।

(लि. सू.) संख्यापूर्वं रात्रं क्लीबम् । (131.)

द्विरात्रम् । त्रिरात्रम् । गणरात्रम् । 'पुण्यसुदिनाभ्यामह्नः क्लीबतेष्टा' (वा. 1556. सू. 821) पुण्याहम् । सुदिनाहम् ।

अस्मिन्नेव ग्रन्थे श्लो० 687. सर्वा रात्रयः सर्वरात्राः । 'पूर्वकालैकसर्व' (सू. 726) इत्यादिना समासः । 'अहःसर्व' (सू. 787) इत्यादिना समासान्तोऽच् । अनेन पुल्लिङ्गता ।

अस्मिन्नेव ग्रन्थे श्लो० 614. अर्धं रात्रेरर्धरात्रः । 'अर्धं नपुंसकं' (सू. 713) इत्येकदेशिसमासः । पूर्ववत् अच् पुंस्त्वम् ।

अस्मिन्नेव ग्रन्थे श्लो० 734. सर्वा रात्रिः सर्वरात्रः । 'पूर्वकाल' (सू.726) इत्यादिना समासः । शे॰ पूर्ववत् ।

अस्मिन्नेव ग्रन्थे श्लो० 723. अपररात्रः । 'पूर्वापर' (सू. 712) इत्यादिना समासः । शेषं पूर्ववत् ।

अस्मिन्नेव ग्रन्थे श्लो० 722. अपररात्रः । पूर्ववत् ।

अस्मिन्नेव ग्रन्थे श्लो० 721. अपरोऽह्नः अपराह्णः । 'पूर्वापर' (सू. 712) इत्यादिना एकदेशिसमासः । 'राजाह' (सू. 788) इति टच् । 'अह्नोऽह्न' (सू. 790) इत्यह्नादेशः । 'अह्नोऽदन्तात्' (सू. 791) इति णत्वम् । अनेन पुंस्त्वम् ।

अस्मिन्नेव ग्रन्थे श्लो० 720. पूर्वाह्णः । पूर्ववत् ।

अस्मिन्नेव ग्रन्थे श्लो० 319. त्रयाणामह्नां समाहारः त्र्यहः । 'तद्धितार्थ' (सू. 728) इति समासः । द्विगुत्वादेकवचनम् । पूर्ववट्टच् । अनेन पुंस्त्वम् ।

अस्मिन्नेव ग्रन्थे श्लो० 431. त्र्यहात् । पूर्ववत् ।

अस्मिन्नेव ग्रन्थे श्लो० 742. दशाहः । पूर्ववत् ।

चम्पूभारते—I. 29.

ग—क्रमादतिपतिते चावरोधवधूजनानुरोधगुणदात्रे **गणरात्रे** ॥ 867 ॥

**गणरात्रं** नपुंसकम् ।

अनर्घराघवे—I. 36.

ग—**कतिपयरात्रम्** आयुधसध्रीचा रामभद्रेण संनिहितवैतानव्रतानामस्माकमाश्रमपदं सनाथीकरिष्यते ॥ 868 ॥

**कतिपयरात्रम्** इति कतिपयरात्र्योर्विशेषणसमासं कृत्वा । 'अहःसर्वैकदेश' (सू. 787) इत्यादिना समासान्तोऽच् । अत्र 'संख्यापूर्वम् (लि. सू. 131. सू. 814) इति नपुंसकत्वम् ।

## ८१५ । अपथं नपुंसकम् । ( २. ४. ३० )

माघे—XII. 28.

वन्येभदानानिलगन्धदुर्धराः
क्षणं तरुच्छेदविनोदितक्रुधः ।
व्यालद्विपा यन्तृभिरुन्मदिष्णवः
कथंचिदारादपथेन निन्यिरे ॥ 869 ॥

**अपथेन** अमार्गेण । 'ऋक् पूः' (सू. 940) इत्यादिना समासान्तः प्राप्तः । 'नञः' (सू. 956) इति प्रतिषिद्धः सन् 'पथो विभाषा' (सू. 957) इति विकल्पितः । अनेन नपुंसकत्वम् ।

अस्मिन्नेव ग्रन्थे श्लो० 19. अपथानि । पूर्ववत् ।

## ८१६ । अर्धर्चाः पुंसि च । ( २. ४. ३१ )

अर्धर्चादयः शब्दाः पुंसि क्लीबे च स्युः । अर्धर्चः अर्धर्चम् । ध्वजः ध्वजम् । अर्धर्चादिः—२. १८.

अस्मिन्नेव ग्रन्थे श्लो० 16. मधुः* । मधुशब्दस्यार्धर्चादित्वात्पुल्लिङ्गत्वम् । मकरन्दस्य मद्यस्य माक्षिकस्यापि वाचकोऽयम् । अर्धर्चादिगणे पाठात् पुंनपुंसकयोर्मधुः ।

रघुवंशे—IX. 37.

ललितविभ्रमबन्धविचक्षणं
सुरभिगन्धपराजितकेसरम् ।
पतिषु निर्विविशुर्मधुमङ्गनाः
स्मरसखं रसखण्डनवर्जितम् ॥ 870 ॥

मधुः ।

८१७ । जात्याख्यायामेकस्मिन् बहुवचनमन्यतरस्याम् । (१. २. ५८)

एकोऽप्यर्थो वा बहुवद्भवति । ब्राह्मणाः पूज्याः । ब्राह्मणः पूज्यः ।

नैषधे—II. 76.

सितदीप्रमणिप्रकल्पिते
यदगारे हसदङ्करोदसि ।
निखिलान्निशि पूर्णिमातिथी-
नुपतस्थे तिथिरेकिका तिथिः ॥ 871 ॥

यदगारे यस्या गृहेष्वित्यर्थः ।

८१८ । अस्मदो द्वयोश्च । (१. २. ५९)

एकत्वे द्वित्वे च विवक्षिते अस्मदो बहुवचनं वा स्यात् । वयं ब्रूमः । पक्षेऽहं ब्रवीमि । आवां ब्रूव इति वा ।

वा० । सविशेषणस्य प्रतिषेधः । (721)

पटुरहं ब्रवीमि ।

---

* मधुः करिष्यतीत्येतस्मिन्पाठ एवेदमुदाहरणम् ।

अनर्घराघवे—IV. 7.

तत्तादृशं कथमुदेति मनुष्यलोके
तेजोऽद्भुतं निरभिसन्धि न तावदेतत् ।
तान्येव चास्य चरितानि दशाननस्य
धिक् चिन्तया रजनिरक्षिषु नः प्रभाति ॥ 872 ॥

नः इत्येकत्वे बहुवचनम् ।

भट्टिकाव्ये—IV. 6.

यूयं समैष्यथेत्यस्मिन्नासिष्महि वयं वने ।
दृष्टाः स्थ स्वस्ति वो यामः स्वपुण्यविजितां गतिम् ॥ 873 ॥

वयमित्येकत्वे बहुत्वम् ।

८१९ । फल्गुनीप्रोष्ठपदानां च नक्षत्रे । ( १. २. ३० )

द्वित्वे बहुत्वप्रयुक्तकार्यं वा स्यात् । पूर्वे फल्गुन्यौ । पूर्वाः फल्गुन्यः । पूर्वे प्रोष्ठपदे । पूर्वाः प्रोष्ठपदाः ।

कुमारसंभवे—VII. 6.

मैत्रे मुहूर्ते शशलाञ्छनेन
योगं गतासूत्तरफल्गुनीषु ।
तस्याः शरीरे प्रतिकर्म चक्रु-
र्बन्धुस्त्रियो याः पतिपुत्रवत्यः ॥ 874 ॥

उत्तरफल्गुनीषु । फल्गुनीनक्षत्रे । एकस्मिन्नपि बहुवचनम् ।

८२१ । स नपुंसकम् । ( २. ४. १७ )

समाहारे द्विगुर्द्वन्द्वश्च नपुंसकं स्यात् । पञ्चगवम् । दन्तोष्ठम् ।

वा० । अकारान्तोत्तरपदो द्विगुः स्त्रियामिष्टः । ( 1556. )

वा० । आबन्तो वा । ( 1557. )

पञ्चखट्वी पञ्चखट्वम् ।

वा० । अनो नलोपश्च वा च द्विगुः स्त्रियाम् । ( 1558. )

पञ्चतक्षी पञ्चतक्षम् ।

वा० । पात्राद्यन्तस्य न । ( 1559. )

पंचपात्रम् । त्रिभुवनम् । चतुर्युगम् ।

वा० । पुण्यसुदिनाभ्यामह्नः क्लीबतेष्टा । ( 1556. )

पुण्याहम् । सुदिनाहम् ।

वा० । पथः सङ्ख्याव्ययादेः । ( 1554. )

संख्याव्ययादेः परः कृतसमासान्तः पथशब्दः क्लीबमित्यर्थः । त्रयाणां पन्थाः त्रिपथम् । विरूपः पन्था विपथम् ।

वा० । सामान्ये नपुंसकम् । ( 5043. )

मृदु पचति । प्रातः कमनीयम् ।

अस्मिन्नेव ग्रन्थे श्लो० 492. पुण्यं च तदहश्च पुण्याहम् । नपुंसकत्वम् ।

नैषधे—VI. 24.

हित्वैव वर्त्मैकमिह भ्रमन्त्याः
स्पर्शः स्त्रियाः सुत्यज इत्यवेत्य ।
चतुष्पथस्याभरणं बभूव
लोकावलोकाय सतां प्रदीपः ॥ 875 ॥

चतुर्णां पथां समाहारः चतुष्पथम् । 'तद्धितार्थ' (सू. 728) इत्यादिना द्विगुः । 'ऋक्पूः' (सू. 940) इति समासान्तः । 'पथः संख्या' इति वार्तिकेन नपुंसकता ।

८२४ । उपज्ञोपक्रमं तदाद्याचिख्यासायाम् ( २. ४. २१ )

उपज्ञान्त उपक्रमान्तश्च तत्पुरुषो नपुंसकं स्यात् । पाणिनेरुपज्ञा पाणिन्युपज्ञं ग्रन्थः । नन्दस्योपक्रमो नन्दोपक्रमं द्रोणः ।

भट्टिकाव्ये—IX. 136.

असद्बन्धुवधोपज्ञं विमुञ्च बलिविग्रहम् ।
सीतामर्पय नन्तव्ये कोशदण्डात्मभूमिभिः ॥ 876 ॥

उपज्ञायत इत्युपज्ञा : 'आतश्चोपसर्गे' ( सू. 3283 ) इति अङ् । असद्बन्धुवधस्य बन्धुवधस्याचेतनस्योपज्ञाने कर्तृत्वासम्भवात् तेन हतबन्धुश्चेतनो लक्ष्यते । तस्योपज्ञा तदुपज्ञम् । तेन त्वयैवादावुपज्ञातमित्यर्थः ।

भट्टिकाव्ये—III. 31.

नृपात्मजौ चिक्लिशतुः ससीतौ
ममार राजा विधवा भवत्यः ।
शोच्या वयं भूरनृपा लघुत्वं
कैकेय्युपज्ञं बत बह्वनर्थम् ॥ 877 ॥

उपज्ञायत इत्युपज्ञा । 'आतश्चोपसर्गे' (सू. 3283) इति कर्मण्यङ् । कैकेय्या उपज्ञा कैकेय्युपज्ञम् । 'कृद्योगा' (वा. 1317. सू. 703) इति षष्ठीसमासः ।

रघुवंशे—XV. 63.

अथ प्राचेतसोपज्ञं रामायणमितस्ततः ।
मैथिलेयौ कुशलवौ जगदुर्गुरुचोदितौ ॥ 878 ॥

प्राचेतसस्योपज्ञा प्राचेतसोपज्ञम् ।

अस्मिन्नेव ग्रन्थे श्लो॰ 508. भरतोपज्ञं विज्ञापना ।

चम्पूरामायणे—I. 44.

मुनिर्भृशाश्वोपज्ञानि ताटकामाथिने ददौ ।
अस्त्राणि जृम्भकादीनि जम्भशासनशासनात् ॥ 879 ॥

भृशाश्वस्योपज्ञा भृशाश्वोपज्ञानि ।

अस्मिन्नेव ग्रन्थे श्लो॰ 48. यदुपज्ञम् ।

रघुवंशे—XII. 42.

प्राप्य चाशु जनस्थानं खरादिभ्यस्तथाविधम् ।
**रामोपक्रमम्**आचख्यौ रक्षःपरिभवं नवम् ॥ 880 ॥

उपक्रम्यत इत्युपक्रमः । कर्मणि घञ् । रामस्य कर्तुरुपक्रमः **रामोपक्रमम्** । रामेणादावुपक्रान्तमित्यर्थः ।

८२५ । छाया बाहुल्ये । ( २. ४. २२ )

छायान्तस्तत्पुरुषो नपुंसकं स्यात् पूर्वपदार्थबाहुल्ये । इक्षूणां छाया इक्षुच्छायम् । 'विभाषा सेना' ( सू. 828 ) इति विकल्पस्यायमपवादः ।

भट्टिकाव्ये—V. 2.

तौ खड्गमुसलप्रासचक्रबाणगदाकरौ ।
अकार्ष्टाम्**आयुधच्छायं** रक्षःसन्तमसे रणे ॥ 881 ॥

आयुधानां छाया **आयुधच्छायम्** ।

रघुवंशे—XII. 50.

सा बाणवर्षिणं रामं योधयित्वा सुरद्विषाम् ।
अप्रबोधाय सुष्वाप **गृध्रच्छाये** वरूथिनी ॥ 882 ॥

गृध्राणां छाया **गृध्रच्छायम्** ।

अस्मिन्नेव ग्रन्थे श्लो॰ 61. इक्षूणां छाया **इक्षुच्छायम्** । नपुंसकत्वम् । तत्र निषण्णा इक्षुच्छायनिषादिन्यः । स्त्रीलिङ्गपाठे इक्षोः छाया इति विग्रहः ।

रघुवंशे—I. 75.

पुरा शक्रमुपस्थाय तवोर्वीं प्रति यास्यतः ।
आसीत्**कल्पतरुच्छायाम्**आश्रिता सुरभिः पथि ॥ 883 ॥

अत्र कल्पतरोः छाया **कल्पतरुच्छाया** ।

कुमारसंभवे—VI. 46.

सन्तानकतरुच्छायासुप्तविद्याधराध्वगम् ।
यस्य चोपवनं बाह्यं गन्धवद्गन्धमादनम् ॥ 884 ॥

इक्षुच्छायानिषादिन्य इतिवत् ।

## ८२६ । सभा राजामनुष्यपूर्वा ( २. ४. २३ )

राजपर्यायपूर्वोऽमनुष्यपूर्वश्च सभान्तस्तत्पुरुषो नपुंसकं स्यात् । इनसभम् । ईश्वरसभम् । पर्यायस्यैवेष्यते । नेह । राजसभा । अमनुष्यशब्दो रूढ्या रक्षःपिशाचादीनाह । रक्षःसभम् । पिशाचसभम् ।

अस्मिन्नेव ग्रन्थे श्लो० 449. राक्षससभम् ।

## ८२७ । अशाला च ( २. ४. २४ )

संघातार्था या सभा तदन्तस्तत्पुरुषः क्लीबं स्यात् । स्त्रीसभं स्त्रीसंघात इत्यर्थः । अशाला किम् । धर्मसभा । धर्मशालेत्यर्थः ।

माघे—XIII. 14.

इतरानपि क्षितिभुजोऽनुजन्मनः
प्रमनाः प्रमोदपरिफुल्लचक्षुषः ।
स यथोचितं जनसभाजनोचितः
प्रसभोद्धृतासुरसभोऽसभाजयत् ॥ 885 ॥

असुरसभा ।

## ८२८ । विभाषा सेनासुराच्छायाशालानिशानाम् । ( २. ४. २५ )

एतदन्तस्तत्पुरुषः क्लीबं वा स्यात् । ब्राह्मणसेनं ब्राह्मणसेना । यवसुरं यवसुरा । कुड्यच्छायं कुड्यच्छाया । गोशालं गोशाला । श्वनिशम् श्वनिशा ।

माघे—X. 23.

दत्तमात्तमदनं दयितेन
व्याप्तमातिशयिकेन रसेन ।

सखदे मुखसुरं प्रमदाभ्यो
नाम रूढमपि च व्युदपादि ॥ 886 ॥

मुखसुरा मुखसुरम् ।

अनर्घराघवे—VII. 122.

कण्ठच्छायनिपीतपन्नगफणारत्नौघमात्रस्थितौ
हारे निर्भयपार्वतीभुजलताबन्धोल्लसत्कन्धरः ।
तत्सर्वाङ्गविरामवामनतमैरेव स्वरैः सामगं
बिभ्रद्ब्रह्मशिरश्शिवाय जगतामेणाङ्कचूडामणिः ॥ 887 ॥

कण्ठस्य छाया कण्ठच्छायम् ।

चम्पूभारते—II. 77.

बाणेन संप्रति नृपा दिवि लक्ष्यमेत-
त्तच्छायवद्भुवि निपातयितुं पटुर्यः ।
मौर्वीमिमामिव स दक्षिण एव पाणौ
कुर्यात्स्वसारमभिदर्श्य मम स्वसारम् ॥ 888 ॥

तस्य छाया तच्छायम् ।

अनर्घराघवे—VII. 85.

तर्कुटङ्कलिखितार्कमण्डल-
प्रोच्चलत्कणकदम्बभासुरम् ।
शिल्पशालमिव विश्वकर्मणः
किं विभाति मृगतृष्णिकामयम् ॥ 889 ॥

शिल्पस्य शाला शिल्पशालम् ।

॥ इति कर्मधारयसमासप्रकरणम् ॥

## ॥ अथ बहुव्रीहिसमासप्रकरणम् ॥

### ८२९ । शेषो बहुव्रीहिः । ( २. २. २३ )

अधिकारोऽयम् ।

### ८३० । अनेकमन्यपदार्थे । ( २. २. २४ )

वा० । प्रादिभ्यो धातुजस्य वाच्यो वा चोत्तरपदलोपः (1360.)

प्रादिः—१. ४. प्रपतितः पर्णः प्रपर्णः ।

वा० । नञोऽस्त्यर्थानां वाच्यो वा चोत्तरपदलोपः । (1361.)

अविद्यमानः पुत्रोऽपुत्रः । अस्तीति विभक्तिप्रतिरूपकमव्ययम् । अस्तिक्षीरा गौः ।

भट्टिकाव्ये—XIX. 1.

अपमन्युस्ततो वाक्यं पौलस्त्यो राममुक्तवान् ।
अशोच्योऽपि व्रजन्नस्तं सनाभिर्दुनुयान्न किम् ॥ 890 ॥

अपगतो मन्युर्यस्य सः अपमन्युः

भट्टिकाव्ये—II. 31.

अधिज्यचापः स्थिरबाहुमुष्टि-
रुदञ्चिताक्षोऽञ्चितदक्षिणोरुः ।
तान् लक्ष्मणः सन्नतवामजङ्घो
जघान शुद्धेषुरमन्दकर्षी ॥ 891 ॥

अध्यारूढा ज्या यस्य तदधिज्यम् ।

अस्मिन्नेव ग्रन्थे श्लो० 624. अनुगता आपः येषु ते अनूपा जलप्रायदेशाः । बहुव्रीहिसमासः ।

अस्मिन्नेव ग्रन्थे श्लो० 877. विगतो धवो यासां ता **विधवाः** । न विद्यते नृपो यस्यां सा **अनृपा** । नञोऽस्तीति समासः ।

**८३१ । स्त्रियाः पुंवद्भाषितपुंस्कादनूङ् समानाधिकरणे स्त्रियामपूरणीप्रियादिषु ।** (६. ३. ३४)

चित्रगुः । रूपवद्भार्यः ।

भट्टिकाव्ये— V. 13.

**युवजानि**र्धनुष्पाणिर्भुविष्ठः खविचारिणः ।
रामो यज्ञद्रुहो हन्ति कालकल्पशिलीमुखः ॥ 892 ॥

युवतिर्जाया यस्य सः **युवजानिः** । स्त्रियाः पुंवद्भावात् स्त्रीप्रत्ययो निवर्तते ।

अस्मिन्नेव ग्रन्थे श्लो० 243. **मान्यभक्ति**रित्यत्र कथं पुंवद्भावः । अप्रियादिष्विति निषेधात् भक्तिशब्दस्य च प्रियादिषु पाठादिति । नैष दोषः । नपुंसकपूर्वपदत्वात् । यथाह ' दृढभक्तिरित्येवमादिषु स्त्रीपूर्वपदस्याविवक्षितत्वात्सिद्धमि ' ति । भोजराजस्तु भज्यत इति भक्तिः । कर्मसाधनस्य प्रियादिपाठो यथा भवानीभक्तिरिति; न तु भजनम् इति भावसाधनस्य । अतोऽत्र स्त्रीपूर्वपदत्वेऽपि न दोष इत्याह ।

माघे—XIII. 42.

मुदितैस्तदेति दितिजन्मनां रिपा-
वविनीय संभ्रम**विकासिभक्तिभिः** ।
उपसेदिवद्भिरुपदेष्टरीव तै-
र्ववृते विनीतमविनीतशासिभिः ॥ 893 ॥

**विकासिभक्तिभिः ।**

रघुवंशे—XII. 19.

**दृढभक्ति**रिति ज्येष्ठे राज्यतृष्णापराङ्मुखः ।
मातुः पापस्य भरतः प्रायश्चित्तमिवाकरोत् ॥ 894 ॥

**दृढभक्तिः ।**

मेघसंदेशे—I. 36.

पश्चादुच्चैर्भुजतरुवनं मण्डलेनाभिलीनः
सान्ध्यं तेजः प्रतिनवजपापुष्परक्तं दधानः ।
नृत्तारम्भे हर पशुपतेरार्द्रनागाजिनेच्छां
शान्तोद्वेगस्तिमितनयनं दृष्टभक्तिर्भवान्या ॥ 895 ॥

## ८३३ । नद्यृतश्च । ( ५. ४. १५३ )

नद्युत्तरपदादृदन्तोत्तरपदाच्च बहुव्रीहेः कप् स्यात् । पुंवद्भावः ।

कुमारसंभवे—VI. 4.

ते प्रभामण्डलैर्व्योम द्योतयन्तस्तपोधनाः ।
सारुन्धतीकाः सपदि प्रादुरासन् पुरः प्रभोः ॥ 896 ॥

अरुन्धत्या सह वर्तन्त इति सारुन्धतीकाः ।

माघे—XII. 4.

शुक्लैः सतारैर्मुकुलीकृतैस्थुलैः
कुमुद्वतीनां कुमुदाकरैरिव ।
व्युष्टं प्रयाणं च वियोगवेदना-
विदूननारीकमभूत्समं तदा ॥ 897 ॥

वियोगवेदनाविदूना नार्यो यस्मिन् तत्तथोक्तम् ।

रघुवंशे—XVI. 68.

स नौ विमानादवतीर्य रेमे
विलोलहारः सह ताभिरप्सु ।
स्कन्धावलग्नोद्धृतपद्मिनीकः
करेणुभिर्वन्य इव द्विपेन्द्रः ॥ 898 ॥

स्कन्धावलग्ना उद्धृतपद्मिनी यस्य स तथोक्तः ।

अस्मिन्नेव ग्रन्थे श्लो० 632. नद्येव माता यासां ता नदीमातृकाः ।

अस्मिन्नेव ग्रन्थे श्लो० 465. नदीमातृकम् । 'वन्दिते भ्रातुः' ( सू. 895 ) इति कप्निषेधः ।

रघुवंशे—XVI. 1.

अथेतरे सप्त रघुप्रवीरा
ज्येष्ठं पुरोजन्मतया गुणैश्च ।
चक्रुः कुशं रत्नविशेषभाजं
सौभ्रात्रमेषां हि कुलानुसारि ॥ 899 ॥

शोभनो भ्राता येषां ते सुभ्रातरः । तेषां भावः सौभ्रात्रम् ।

## ८३६ । तसिलादिष्वा कृत्वसुचः ( ६. ३. ३५ )

तसिलादिषु आ कृत्वसुजन्तेषु परेषु स्त्रियाः पुंवत्स्यात् । त्रतसौ । तरप्तमपौ । चरट्जातीयरौ । कल्पप्देशीयरौ । रूपप्पाशपौ । थाल् । तिल्थ्यनौ । बह्वीषु बहुत्र । बहुतः । दर्शनीयतरा । दर्शनीयतमा । 'घरूप' ( सू. 985 ) इति वक्ष्यमाणो ह्रस्वः परत्वात्पुंवद्भावं बाधते । पट्वितरा । पट्वितमा । पटुचरी । पटुजातीया । दर्शनीयकल्पा । दर्शनीयदेशीया । दर्शनीयरूपा । दर्शनीयपाशा । बहुथा । प्रशस्ता वृकी वृकतिः । अजाभ्यो हिता अजथ्या ।

वा० । शसि बह्वल्पार्थस्य पुंवद्भावो वक्तव्यः । ( 3926. )

बह्वीभ्यो देहि बहुशः । अल्पाभ्यो देहि अल्पशः ।

वा० । त्वतलोर्गुणवचनस्य । ( 3927. )

शुक्लाया भावः शुक्लत्वम् ।

वा० । भस्याढे तद्धिते । ( 3928. )

हस्तिनीनां समूहो हास्तिकम् । अढे किम् । रौहिणेयः । स्त्रीभ्यो ढक् ।

वा० । ठक्छसोश्च । ( 3929. )

भवत्याश्छात्रा भावत्का भवदीयाः । तरप्तमपौ घसंज्ञकौ । रूपप्कल्पपौ । चेलट् ।

माघे—X. 1.

सज्जितानि सुरभीण्यथ यूना-
मुल्लसन्नयनवारिरुहाणि ।
आययुः सुघटितानि सुरायाः
पात्रतां प्रियतमावदनानि ॥ 900 ॥

अतिशयेन प्रिया **प्रियतमा** । प्रियाशब्दस्य पुंवद्भावः ।

अस्मिन्नेव ग्रन्थे श्लो० 48. पूर्वं निरीक्षिता **निरीक्षितचरी** । निरीक्षिता-शब्दस्य पुंवद्भावः ।

अस्मिन्नेव ग्रन्थे श्लो० 36. ईषदसमाप्ता प्रभाता **प्रभातकल्पा** । पुंवद्भावः ।

अस्मिन्नेव ग्रन्थे श्लो० 155. ईषदसमाप्तां पाशीं **पाशीकल्पाम्** । बह्वादित्वा-द्विकल्पादीकारः । अभाषितपुंस्कत्वात् 'घरूप' (सू. 985) इत्यादिना ह्रस्वो न भवति ।

अस्मिन्नेव ग्रन्थे श्लो० 434. भवत्या इदं **भावत्कम्** । 'भवतष्ठक्छसौ' (सू. 1339) इति ठक् । 'ठक्छसोश्च' (वा० 3929. सू. 836) इति पुंवद्भावः ।

अस्मिन्नेव ग्रन्थे श्लो० 567. कृतार्थाया भावः **कृतार्थता** । पुंवद्भावः ।

अस्मिन्नेव ग्रन्थे श्लो० 632. नदीमातृकाणां भावः **नदीमातृकता** ।

चम्पूभारते—VI. 15.

तं पश्यन्नकुलं राजा तन्द्रालुर्दृङ्निमेषणे ।
निजां मत्स्येश्वराभिख्यां निनाय **प्रकटार्थताम्** ॥ 901 ॥

प्रकटार्थाया भावः **प्रकटार्थता** ।

माघे—XVIII. 19.

सङ्क्लिष्टत्वादङ्गसंसङ्गिनीत्वं
नीत्वा कामं गौरवेणावबद्धा ।
नीता हस्तं वञ्चयित्वा परेण
द्रोहं चक्रे कस्यचित्सा कृपाणी ॥ 902 ॥

**अङ्गसंसङ्गिनीत्वं** अगुणत्वविवक्षायां न पुंवद्भावः ।

चम्पूभारते—III. 112.

पवनसखदृशोर्मुदं वितन्वन्
  पटुतरटङ्कृतिकम्पिताटवीकः ।
कुटिलमतनुतार्जुनः कराभ्यां
  गुणमपि दण्डमिवास्य गाण्डिवस्य ॥ 903 ॥

अतिशयेन पट्वी पटुतरा । पुंवद्भावः । 'घरूप' (सू. 985) इति ङीपो ह्रस्वे पट्वितरा इति स्यात् ।

माघे—III. 69.

बलोर्मिभिस्तत्क्षणहीयमान-
  रथ्या भुजाया वलयैरिवास्याः ।
प्रायेण निष्क्रामति चक्रपाणौ
  नेष्टं पुरो द्वारवतीत्वमासीत् ॥ 904 ॥

द्वारवतीशब्दस्य संज्ञात्वात् अन्यत्र अगुणत्वविवक्षया न च पुंवद्भावः ।

सर्वनाम्नो वृत्तिमात्रे पुंवद्भावः ।

नैषधे—III. 105.

त्वं हृद्गता भैमि बहिर्गतापि
  प्राणायिता नासिकयास्यगत्या ।
न चित्रमाक्रामति तत्र चित्र-
  मेतन्मनो यद्भवदेकवृत्ति ॥ 905 ॥

भवती त्वमेव एका वृत्तिर्जीविका यस्य तद्भवदेकवृत्ति । भवच्छब्दस्य सर्वनामत्वाद्वृत्तिमात्रे पुंवद्भावः ।

कुमारसंभवे—VI. 92.

तन्मातरं चाश्रुमुखीं दुहितृस्नेहविक्लवाम् ।
वरस्यानन्यपूर्वस्य विशोकामकरोद्गुणैः ॥ 906 ॥

अन्या पूर्वं यस्यास्ति सोऽन्यपूर्वः । पुंवद्भावः ।

कुमारसंभवे—III. 63.

अनन्यभाजं पतिमाप्नुहीति
सा सत्यमेवाभिहिता भवेन ।
न हीश्वरव्याहृतयः कदाचि-
त्पुष्णन्ति लोके विपरीतमर्थम् ॥ 907 ॥

अन्यां न भजतीत्यनन्यभाक् । पुंवद्भावः ।

किरातार्जुनीये—XVI. 33.

त्विषां पतिः पाटलिताम्बुवाहा
सा सर्वतः पूर्वसरीव सन्ध्या ।
निनाय तेषां द्रुतमुल्लसन्ती
विनिद्रतां लोचनपंकजानि ॥ 908 ॥

पूर्वा सरतीति पूर्वसरी । 'पूर्वे कर्तरि' (सू. 2933) इति टः । पुंवद्भावः ।

वा० । कुक्कुट्यादीनामण्डादिषु । (3934.)

कुक्कुट्या अण्डं कुक्कुटाण्डम् । मृग्याःपदं मृगपदम् । मृगक्षीरम् ।

८३९ । संज्ञापूरण्योश्च । (६. ३. ३८)

अनयोर्न पुंवत् । दत्ताभार्यः । दत्तामानिनी । पंचमीभार्यः । पंचमीपाशा ।

अस्मिन्नेव ग्रन्थे श्लो० 904. द्वारवतीत्वम् । द्वारवतीशब्दस्य संज्ञात्वात् त्वतलोरिति पुंवद्भावो न ।

माघे—IX. 16.

निलयः श्रियः सततमेतदिति
प्रथितं यदेव जलजन्म तया ।
दिवसात्यये तदपि मुक्तमहो
चपलाजनं प्रति न चोद्यमदः ॥ 909 ॥

चपला चापलवती स्त्री कमला च । सैव जनः चपलाजनः । 'जातेश्च' (सू. 842) संज्ञापूरण्योश्चेत्युभयथापि पुंवद्भावप्रतिषेधः ।

नैषधे—II. 77.

सुदतीजनमज्जनार्पितैर्घुसृणैर्यत्र कषायिताशया ।
न निशाखिलयापि वापिका प्रससाद ग्रहिलेव मानिनी ॥ 910 ॥

सुदतीजनाः ।

८४१ । स्वाङ्गाच्चेतः । (६. ३. ४०)

स्वाङ्गाच्च ईकारस्तदन्ता स्त्री न पुंवत् । सुकेशीभार्यः ।

८४२ । जातेश्च । (६. ३. ४१)

न पुंवत् । शूद्राभार्यः । ब्राह्मणीभार्यः ।

अस्मिन्नेव ग्रन्थे श्लो० 909. चपला चापलवती स्त्री । सैव जनः चपलाजनः ।

८४३ । संख्ययाव्ययासन्नादूराधिकसंख्याः संख्येये । (२. २. २५)

संख्येयार्थया संख्यया अव्ययादयः समस्यन्ते स बहुव्रीहिः । दशानां समीपे ये सन्ति ते उपदशाः । नव एकादश वेत्यर्थः । 'बहुव्रीहौ संख्येये' (सू. 851) इति वक्ष्यमाणो डच् ।

रघुवंशे—V. 25.

स त्वं प्रशस्ते महिते मदीये
वसंश्चतुर्थोऽग्निरिवाग्न्यगारे ।
द्वित्राण्यहान्यर्हसि सोढुमर्हन्
यावद्यते साधयितुं त्वदर्थम् ॥ 911 ॥

द्वे वा त्रीणि वा **द्वित्राणि** इति समासः । पूर्ववड्डच् ।

**अस्मिन्नेव ग्रन्थे श्लो० 57. द्वित्राणि । पूर्ववत् ।**

किरातार्जुनीये—XVIII. 6.

**निपतितेऽधिशिरोधरमायते
सममरत्नियुगेऽयुगचक्षुषः ।**

त्रिचतुरेषु पदेषु किरीटिना
लुलितदृष्टि मदादिव चस्खले ॥ 912 ॥

त्रीणि वा चत्वारि वा त्रिचतुराणि । अनेन बहुव्रीहिः । 'त्र्युपाभ्यां चतुरोऽजिष्यते' (वा. 3351. सू. 945) इत्यच् ।

## ८४४ । ति विंशतेर्डिति । (६. ४. १४२)

विंशतेर्भस्य तिशब्दस्य लोपः स्यात् डिति । आसन्नविंशाः विंशतेरासन्ना इत्यर्थः । अदूरत्रिंशाः । अधिकचत्वारिंशाः । द्विरावृत्ताः दश द्विदशाः । विंशतिरित्यर्थः ।

अनर्घराघवे—IV. 51.

त्रैविस्सप्तभिरेव राजविजयैर्वृत्ते भुजस्तम्भयोः
कृत्वा तोरणमालिकां पुनरमुं द्वाविंशमारिप्सते ।
द्रक्ष्यामि त्वयि वर्तमानमधुना तच्चापविद्याद्भुतं
शम्भोस्तस्य हि केवलेन धनुषा कृष्टेन तुष्टिर्न मे ॥ 913 ॥

द्वाविंशतेः पूरणं द्वाविंशम् । 'तस्य पूरणे डट्' (सू. 1849) इति डट् । अनेन टिलोपः ।

अनर्घराघवे—IV. 25.

रे काकुत्स्थाः कथं वः श्रुतिविषयमयं नागमद्भार्गवीयो
दुःसामन्तापचारप्रचितपितृवधामर्षनिस्तारबन्धुः ।
वारानासन्नविंशान्विशसितविषमक्षत्रजातिप्ररोहः
क्रोधादुत्कृत्तगर्भामिषरुधिरवसाविस्रगन्धिः कुठारः ॥ 914 ॥

आसन्ना विंशतिर्येषां ते आसन्नविंशाः । अनेन टिलोपः । 'बहुव्रीहौ' (सू. 851) इति डच् । 'सङ्ख्यया' (सू. 843) इति बहुव्रीहिः ।

## ८४६ । तत्र तेनेदमिति सरूपे । (२. २. २७)

सप्तम्यन्ते ग्रहणविषये सरूपे पदे तृतीयान्ते च प्रहरणविषये इदं युद्धं प्रवृत्तमित्यर्थे समस्येते कर्मव्यतिहारे द्योत्ये स बहुव्रीहिः । 'इच्कर्म' (सू. 866) इति इच् । तिष्ठद्गुप्रभृतिष्विच्प्रत्ययस्य पाठादव्ययीभावत्वमव्ययत्वं च । 'अन्येषामपि दृश्यते'

( सू. 3539 ) इति दीर्घः । केशेषु केशेषु गृहीत्वा इदं युद्धं प्रवृत्तं केशाकेशि । दण्डैश्च दण्डैश्च प्रहृत्येदं युद्धं प्रवृत्तं दण्डादण्डि । मुष्टीमुष्टि ।

वल्लीपरिणये—IV. 18.

दण्डादण्डि चलत्स्फुलिङ्गनिकरं केचित्प्रभग्नायुधाः
मुष्टीमुष्ट्यपरे गदागादि परेऽन्ये तोमरातोमरि ।
बाहूबाहवि बद्धवैरमपरे दुर्वारगर्वोद्धयाः
केशाकेशि च केचिदद्भुततमं योधाः क्रुधा तेनिरे ॥ 915 ॥

दण्डादण्डि । मुष्टीमुष्टि । गदागादि । तोमरातोमरि । बाहूबाहवि । केशाकेशि ।

अनर्घराघवे—IV. 20.

शस्त्राशस्त्रिकथैव का नवभवद्गीर्वाणपाणिन्धमाः
पन्थानो दिवि संकुचन्ति वसुधा वन्ध्या न सूते भटान् ।
लक्ष्मीरप्यरविन्दसौधवलभीनिर्व्यूहपर्यङ्किका-
विश्रान्तैरलिभिर्न कुञ्जरघटागण्डोद्धतैर्मोदते ॥ 916 ॥

शस्त्रैश्च शस्त्रैश्च प्रहृत्येदं युद्धं प्रवृत्तं शस्त्राशस्त्रि । अनेन बहुव्रीहिः । 'इच्कर्मव्यतिहारे' (सू. 866) इति इच् समासान्तः । 'अन्येषामपि' (सू. 3539) इति दीर्घः ।

## ८४७ । ओर्गुणः । ( ६. ४. १४६ )

उवर्णान्तस्य भस्य गुणः स्यात् तद्धिते । अवादेशः ।

अस्मिन्नेव ग्रन्थे श्लो॰ 915. बाहुभ्यां बाहुभ्यां प्रहृत्येदं युद्धं प्रवृत्तं बाहूबाहवि ।

## ८४८ । तेन सहेति तुल्ययोगे । ( २. २. २८ )

तुल्ययोगे वर्तमानं सहेत्येतत् तृतीयान्तेन प्राग्वत् । स बहुव्रीहिः ।

## ८४९ । वोपसर्जनस्य । ( ६. ३. ८२ )

बहुव्रीह्यवयवस्य सहस्य सः स्याद्वा । पुत्रेण सह सपुत्रः सहपुत्रो वा गतः ।

भट्टिकाव्ये—V. 103.

पिशाचमुखधौरेयं सच्छत्रकवचं रथम् ।
युधि कद्रथवद्भीमं बभञ्ज ध्वजशालिनम् ॥ 917 ॥

सह छत्रकवचाभ्यां सच्छत्रकवचम् । 'तेन' (सू. 848) इति बहुव्रीहिः । अनेन विकल्पात्सभावः ।

अस्मिन्नेव ग्रन्थे श्लो० 752. सहेमकुम्भान् । 'तेन सह' (सू. 848) इति बहुव्रीहिः । अनेन सभावः ।

अस्मिन्नेव ग्रन्थे श्लो० 175. सहसीतः सलक्ष्मणः । 'तेन सह'(सू. 848) इति बहुव्रीहिः । अनेन सहशब्दस्य सभावविकल्पात् उभयत्रापि प्रयोगः ।

माघे—XIV. 11.

किं विधेयमनया विधीयतां
त्वत्प्रतापजितयार्थसंपदा ।
शाधि शासक जगत्त्रयस्य मा-
माश्रवोऽस्मि भवतः सहानुजः ॥ 918 ॥

सहानुजेन सहानुजः ।

अस्मिन्नेव ग्रन्थे श्लो० 473. सहाश्रम् ।

किरातार्जुनीये—XVIII. 16.

सहशरधि निजं तथा कार्मुकं
वपुरतनु तथैव संवर्धितम् ।
निहितमपि तथैव पश्यन्नसिं
वृषभगतिरुपाययौ विस्मयम् ॥ 919 ॥

सह शरधिभ्यां वर्तत इति सहशरधि ।

## ८५० । प्रकृत्याशिषि । (६. ३. ८३)

सहशब्दः प्रकृत्या स्यादाशिषि । स्वस्ति राज्ञे सहपुत्राय सहामात्याय ।

वा० । अगोवत्सहलेष्विति वाच्यम् । ( 3990. )

सगवे । सवत्साय । सहलाय ।

अनर्घराघवे—I. 25.

ग—स्वस्ति भवते सहपरिवाराय ॥ 920 ॥

८५१ । बहुव्रीहौ संख्येये डजबहुगणात् । ( ५. ४. ७३. )

संख्येये यो बहुव्रीहिस्तस्माड्डच् स्यात् । उपदशाः ।

वा० । संख्यायास्तत्पुरुषस्य वाच्यः । ( 3343. )

निर्गतानि त्रिंशतो निस्त्रिंशानि । निर्गतस्त्रिंशतोऽङ्गुलिभ्यो निस्त्रिंशः खड्गः ।

अस्मिन्नेव ग्रन्थे श्लो० 911. द्वे त्रीणि वा द्वित्राणि । 'संख्ययाव्ययासन्न' (सू. 843) इति बहुव्रीहिः । अनेन डच् ।

अस्मिन्नेव ग्रन्थे श्लो० 57. द्वित्राणि । पूर्ववत् ।

अस्मिन्नेव ग्रन्थे श्लो० 803. निस्त्रिंशाभ्यां डच् । 'निरादयः' (वा. 3139. सू. 780.) इति समासः । टिलोपः ।

८५२ । बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात्षच् (५. ४. ११३)

स्वाङ्गवाचिसक्थ्यक्ष्यन्ताद्बहुव्रीहेः षच् स्यात् । दीर्घे सक्थिनी यस्य सः दीर्घसक्थः । जलजाक्षी । स्वाङ्गात्किम् । दीर्घसक्थि शकटम् । स्थूलाक्षा वेणुयष्टिः । 'अक्ष्णोऽदर्शनात्' (सू. 944.) इत्यच् ।

अस्मिन्नेव ग्रन्थे श्लो० 75. चकोराक्षि । अनेन षच् । षित्करणात् ङीष् । सम्बोधनम् ।

भट्टिकाव्ये—X. 50.

अथ ददृशुरुदीर्णधूमधूम्रां
 दिशमुदधिव्यवधिं समेतसीताम् ।
सहरघुतनयाः प्लवङ्गसेनाः
 पवनसुताङ्गुलिदर्शितामुदक्षाः ॥ 921 ॥

प्लवङ्गसेना उदक्षाः । षच् । षिल्लक्षणो ङीष् न भवति । तस्य वैकल्पिकत्वात् ।

८५३ । अङ्गुलेर्दारुणि । ( ५. ४. ११४ )

अङ्गुल्यन्ताद्बहुव्रीहेः षच् स्याद्दारुण्यर्थे । पञ्च अङ्गुलयो यस्य तत्पंचाङ्गुलं दारु । अङ्गुलिसदृशावयवं धान्यादिविक्षेपणकाष्ठमुच्यते । बहुव्रीहेः किम् । द्वे अङ्गुली प्रमाणमस्या द्व्यङ्गुला यष्टिः । 'तत्पुरुषस्याङ्गुलेः' ( सू. 786 ) इत्यच् ।

८५४ । द्वित्रिभ्यां ष मूर्ध्नः । ( ५. ४. ११५ )

वा० । नेतुर्नक्षत्रेऽब्वक्तव्यः । ( 3360. )

मृगो नेता यासां ता मृगनेत्रा रात्रयः । पुष्यनेत्राः ।

भट्टिकाव्ये—IX. 129.

आत्रिकूटमकार्षुर्ये त्वत्का निर्जङ्गमं जगत् ।
**दशमूर्धन्** कथं ब्रूषे तानवध्यान्महीपतेः ॥ 922 ॥

दश मूर्धानो यस्य स **दशमूर्धा** । अत्र षो न ।

भट्टिकाव्ये—IV. 41.

अथ संपततो भीमान्विशिखैः रामलक्ष्मणौ ।
**बहुमूर्ध्नो द्विमूर्धांश्च त्रिमूर्धांश्चा**हतां मृधे ॥ 923 ॥

**बहुमूर्ध्नः** । षो न । **द्विमूर्धान्** । **त्रिमूर्धान्** । अनेन षः ।

भट्टिकाव्ये—IV. 44.

मृगयुमिव मृगोऽथ दक्षिणेर्मा
दिशमिव दाववतीं मरावुदन्यन् ।
रघुतनयमुपाययौ **त्रिमूर्धो**
विषभृदिवोग्रमुखं पतत्रिराजम् ॥ 924 ॥

त्रयो मूर्धानोऽस्य **त्रिमूर्धः** ।

८५६ । अच् नासिकायाः संज्ञायां नसं चास्थूलात् । ( ५. ४. ११८ )

नासिकान्ताद्बहुव्रीहेरच् स्यात् नासिकाशब्दश्च नसं प्राप्नोति, न तु स्थूलपूर्वात् ।

भट्टिकाव्ये—IX. 93

बहुधा भिन्नमर्माणो भीमाः खरणसादयः ।
अग्रेवणं वर्तमाने प्रतीच्यां चन्द्रमण्डले ॥ 925 ॥

खरस्येव नासिका यस्येति खरणसः । अनेनाच् । 'पूर्वपदात्' (सू. 857) इति णत्वम् ।

माघे—XIV. 71.

स्कन्धधूननविसारिकेसर-
क्षिप्तसागरमहाप्लवामयम् ।
उद्धृतामिव मुहूर्तमैक्षत
स्थूलनासिकवपुर्वसुन्धराम् ॥ 926 ॥

स्थूला नासिका यस्य तत् स्थूलनासिकं वपुर्यस्य सः । अस्थूलादिति निषेधात् न नसादेशः । नाच् ।

वा० । खुरखराभ्यां वा नस् । ( 3363. )

खुरणाः खरणाः । नस् । खुरणसः खरणसः ।

## ८५७ । पूर्वपदात्संज्ञायामगः । ( ८. ४. ३ )

नस्य णः स्यात् संज्ञायाम् । द्रुरिव नासिका अस्य द्रुणसः । खरणसः । खुरखराभ्यां वा नस् । पक्षे अच् ।

अस्मिन्नेव ग्रन्थे श्लो० 925. खरस्येव नासिका यस्येति खरणसः । अच् । अनेन णत्वम् ।

अस्मिन्नेव ग्रन्थे श्लो०. 197. शूर्पवन्नखानि यस्याः सा शूर्पणखा । अनेन णत्वम् । 'नखमुखात्संज्ञायाम्' ( सू. 514 ) इति न ङीष् ।

माघे—XIII. 29.

तनुभिस्त्रिणेत्रनयनानवेक्षित
स्मरविग्रहद्युतिभिरद्युतन्नराः ।

प्रमदाश्च यत्र खलु राजयक्ष्मणः
परतो निशाकरमनोरमैर्मुखैः ॥ 927 ॥

त्रिणतः । संज्ञायां णत्वम् ।

अस्मिन्नेव ग्रन्थे श्लो० 635. द्रुर्द्रुमो हन्यतेऽनेनेति द्रुघणः कुठारादिः । करणार्थेऽप् । अनेन णत्वम् । अरीहणादिपाठाद्वा ।

अस्मिन्नेव ग्रन्थे श्लो० 878. रामस्यायनं रामायणम् । अनेन णत्वम् ।

माघे—XIX. 61.

स्वगुणैराफलप्राप्तेराकृष्य गणिका इव ।
कामुकानिव नालीकांस्त्रिणताः सहसामुचन् ॥ 928 ॥

त्रिषु स्थानेषु मध्ये कोट्योश्च नतास्त्रिणताः शार्ङ्गाणि । अनेन णत्वम् ।

माघे—XIII. 19.

रथमास्थितस्य च पुराभिवर्तिन-
स्तिसृणां पुरामिव रिपोर्मुरद्विषः ।
अथ धर्ममूर्तिरनुरागभावितः
स्वयमादित प्रवयणं प्रजापतिः ॥ 929 ॥

प्रवीयते प्रेर्यतेऽनेनेति प्रवयणम् । प्राजनम् । प्राजनो दण्ड इति काशिका । अजेः करणे ल्युट् ।

## ८५८ । उपसर्गाच्च । (५. ४. ११९)

प्रादेर्यो नासिकाशब्दस्तदन्ताद्बहुव्रीहेरच्, नासिकाया नसादेशश्च । असंज्ञार्थं वचनम् । उन्नता नासिका यस्य सः उन्नसः ।

विश्वगुणादर्शे—280.

शतमखमणिस्तोमश्यामं शयानमहीश्वरे
शशिसखमुखं राजीवाक्षं समुन्नतनासिकम् ।
महितचरणं धातुः पत्न्या महस्तमसः परं
हृदि लगतु मे बिम्बोष्ठं तद्यथोक्तकराह्वयम् ॥ 930 ॥

समुन्नता नासिका यस्य तत् समुन्नतनासिकम् । नसादेशः । अश्व न ।

८५९ । उपसर्गाद्बहुलम् । (८. ४. २८)

नसो नस्य णः स्याद्बहुलम् । प्रणसः ।

वा० । वेर्ग्रो वक्तव्यः । ( 3365. )

विगता नासिका अस्य विग्रः ।

वा० । ख्यश्च । ( 3366. )

विख्यः । कथं तर्हि 'विनसा हतबान्धवा' इति भट्टिः । विगतया नासिकयोपलक्षिता इति व्याख्येयम् ।

भट्टिकाव्ये — V. 8.

यद्यहं नाथ नायास्यं विनसा हतबान्धवा ।
नाज्ञास्यस्त्वामिदं सर्वं प्रमाद्यन्नक्षरदुर्बलः ॥ 931 ॥

विगता चासौ नासिका च विनासिका । तत इत्थंभूतलक्षणायां तृतीयायां 'पद्दन्नोमास्' ( सू. 228 ) इत्यादिना नसादेशः । विनसा उपलक्षिता ।

८६० । सुप्रातसुश्वसुदिवशारिकुक्षचतुरश्रैणीपदाजपदप्रोष्ठपदाः । (५.४.१२०)

एते बहुव्रीहयोऽच्प्रत्ययान्ता निपात्यन्ते । शोभनं प्रातरस्य सुप्रातः । शोभनं श्वोऽस्य सुश्वः । शोभनं दिवास्य सुदिवः । शारेरिव कुक्षिरस्य शारिकुक्षः । चतस्रोऽश्रयोऽस्य चतुरश्रः । एण्या इव पादावस्य एणीपदः । अजपदः । प्रोष्ठो गौस्तस्येव पादावस्य प्रोष्ठपदः ।

माघे — XI. 67.

कृतसकलजगद्विबोधोऽवधूतान्धकारोदयः
क्षपितकुमुदतारकश्रीर्वियोगं नयन्कामिनः ।
बहुतरगुणदर्शनादभ्युपेताल्पदोषः कृती
तव वरद करोतु सुप्रातमह्नामयं नायकः ॥ 932 ॥

अत्रा नायकः हे वरद तव सुप्रातं करोतु । शोभनं प्रातरस्येति सुप्रातः । शोभनप्रभातत्वमुच्यते । अत्र भावप्रधानो निर्देशः । तव सुप्रातं सुप्रभातत्वं करोत्वित्यर्थः ।

अस्मिन्नेव ग्रन्थे श्लो० 647. शोभनं प्रातः यस्य तत्सुप्रातम् ।

भट्टिकाव्ये—VIII. 2.

अभायत यथार्केण सुप्रातेन शरन्मुखे ।
गम्यमानं न तेनासीदगतं क्रामता पुरः ॥ 933 ॥

**सुप्रातेन ।**

भट्टिकाव्ये—V. 70.

आपीतमधुका भृङ्गैः सुदिवेवारविन्दिनी ।
सत्परिमललक्ष्मीका नापुंस्कासीति मे मतिः ॥ 934 ॥

शोभनं दिवा दिनं यस्याः सा सुदिवा ।

भट्टिकाव्ये—XI. 38.

अथानुकूलान् कुलधर्मसम्पदो
विधाय वेशान् सुदिवः पुरीजनः ।
प्रबोधकाले शतमन्युविद्विषः
प्रचक्रमे राजनिकेतनं प्रति ॥ 935 ॥

**सुदिवः ।**

कुमारसम्भवे—I. 32.

उन्मीलितं तूलिकयेव चित्रं
सूर्यांशुभिर्भिन्नमिवारविन्दम् ।
बभूव तस्याश्चतुरश्रशोभि
वपुर्विभक्तं नवयौवनेन ॥ 936 ॥

चतस्रोऽश्रयो यस्य तत् चतुरश्रम् ।

कुमारसंभवे — VII 88.

कृतोपचारां चतुरश्रवेदीं
तावेत्य पश्चात्कनकासनस्थौ ।
जायापती लौकिकमेषणीय-
मार्द्राक्षतारोपणमन्वभूताम् ॥ 937 ॥

चतस्रोऽश्रयो यस्याः सा चतुरश्रा । चतुरश्रा च सा वेदी च चतुरश्रवेदी ताम् ।

## ८६२ । नित्यमसिच् प्रजामेधयोः । (५. ४. १२२)

नञ्दुःसुभ्य इत्येव । असिच् स्यात् । नास्ति प्रजा यस्य सोऽप्रजाः । अप्रजसौ । दुष्प्रजाः । सुप्रजाः । अमेधाः । दुर्मेधाः । सुमेधाः ।

रघुवंशे —XVIII. 29.

तस्मिन् कुलापीडनिभे विपीडं
सम्यङ् महीं शासति शासनाङ्काम् ।
प्रजाश्चिरं सुप्रजसि प्रजेशे
ननन्दुरानन्दजलाविलाक्ष्यः ॥ 938 ॥

शोभनाः प्रजाः यस्य सः **सुप्रजाः** । तस्मिन् ।

रघुवंशे — VIII. 32.

स कदाचिदवेक्षितप्रजः
सह देव्या विजहार सुप्रजाः ।
नगरोपवने शचीसखो
मरुतां पालयितेव नन्दने ॥ 939 ॥

**अवेक्षितप्रजः** । नञ्दुःसुभ्य एव । नान्येभ्यः । **सुप्रजाः** । अत्रासिच् ।

अस्मिन्नेव ग्रन्थे श्लो० 785. दुष्टा मेधा यस्य सः **दुर्मेधाः** ।

चम्पूभारते—IV. 37.

ग—तत्र स **दुर्मेधाः** बरुवदाकर्षणोद्भिदुराणि स्वेदपृषन्तीव भूषाजालकमुक्ताफलानि धारयन्त्याश्चिकुरभारात्करतलनिष्पीडननिर्गलितां कालिन्धारामिव निर्भरकुरुळय-

गर्भकमाल्यरसद्वारीमश्रुभिस्सह वर्षन्त्यास्तस्याः पातिव्रत्यलक्ष्मीनिवासस्फटिकप्राकारमिव दुकूलमप्यपहर्तुं प्रावर्तत ॥ 940 ॥

**दुर्मेधाः** ।

माघे—II. 27.

षड्गुणाः शक्तयस्तिस्रः सिद्धयश्चोदयास्त्रयः ।
ग्रन्थानधीत्य व्याकर्तुमिति **दुर्मेधसो**ऽप्यलम् ॥ 941 ॥

रघुवंशे—IV. 3.

पुरुहूतध्वजस्येव तस्योन्नयनपंक्तयः ।
नवाभ्युत्थानदर्शिन्यो ननन्दुः **सप्रजाः** प्रजाः ॥ 942 ॥

प्रजया सह वर्तत इति **सप्रजाः** । अत्रासिच् ।

## ८६३ । धर्मादनिच् केवलात् । (५. ४. १२४)

केवलात्पूर्वपदात्परो यो धर्मशब्दस्तदन्ताद्बहुव्रीहेरनिच् स्यात् । कल्याणधर्मा । केवलात्किम् । परमः स्वो धर्मो यस्येति त्रिपदे बहुव्रीहौ मा भूत् ।

रघुवंशे—XVII. 53.

भव्यमुख्याः समारम्भाः प्रत्यवेक्ष्या निरत्ययाः ।
गर्भशालिसधर्माणः तस्य गूढं विपेचिरे ॥ 943 ॥

**सधर्माणः** ।

माघे—I. 55.

विभिन्नशङ्कः कलुषीभवन्मुहुः
मदेन दन्तीव **मनुष्यधर्मणः** ।
निरस्तगाम्भीर्यमपास्तपुष्पकं
प्रकम्पयामास न मानसं न सः ॥ 944 ॥

मनुष्यस्येव धर्मो यस्य सः **मनुष्यधर्मा** तस्य ।

चम्पूरामायणे— V. 28.

त्वया सह प्रस्थितचित्तवृत्ति-
विभावरीकोकसमानधर्मा ।
वचोऽब्रवीन्मैथिलि मन्मुखेन
त्वां कौशलं कोसलराजपुत्रः ॥ 945 ॥

समानो धर्मो यस्य सः समानधर्मा ।

चम्पूभारते—IV. 1.

याते ततो निजपुरीं यदुवंशकेतौ
राज्ञे मयो मणिसभां रचयांबभूव ।
यस्या रुचं समवलोक्य शुचाधुनापि
जीवं गतागतजुषं वहते सुधर्मा ॥ 946 ॥

शोभनो धर्मो यस्याः सा सुधर्मा । नकारान्तम् आकारान्तं वा । समासान्त-
विधेरनित्यत्वात् नानिच् ।

चम्पूभारते—V. 99.

आपृच्छ्य तं तदनु नाकपतिः सुधर्मा-
मासाद्य सिद्धमरुदप्सरसां समाजे ।
प्राशंसदस्य चरितं सविधे सुरम्या
रोमन्थमप्यविगणय्य निशम्यमानम् ॥ 947 ॥

सुधर्माम् । नानिच् ।

किरातार्जुनीये—XVIII. 43.

आस्तिक्यशुद्धमवतः प्रियधर्म धर्म
धर्मात्मजस्य विहितागसि शत्रुवर्गे ।
संप्राप्नुयां विजयमीश यया समृद्ध्या
तां भूतनाथविभुतां वितराहवेषु ॥ 948 ॥

नानिच् ।

## ८६५ । दक्षिणेर्मा लुब्धयोगे । (५. ४. १२६)

दक्षिणे ईर्मं व्रणं यस्य स दक्षिणेर्मा मृगः । व्याधेन कृतव्रण इत्यर्थः । 'दक्षिणारुर्लुब्धयोगाद्दक्षिणेर्मा कुरङ्गकः' II. x. 24. इत्यमरः ।

अस्मिन्नेव ग्रन्थे श्लो० 924. **दक्षिणेर्मा** ।

## ८६६ । इच्कर्मव्यतिहारे । (५. ४. १२७)

कर्मव्यतिहारे यो बहुव्रीहिस्तस्मादिच् स्यात् समासान्तः । केशाकेशि । मुसलामुसलि । 'तत्र तेनेदम्' (सू. 846) इति समासः ।

अस्मिन्नेव ग्रन्थे श्लो० 915. केशेषु केशेषु गृहीत्वेदं युद्धं प्रवृत्तं **केशाकेशि** । दण्डैश्च दण्डैश्च प्रहृत्येदं युद्धं प्रवृत्तं **दण्डादण्डि** । **मुष्टीमुष्टि** । **गदागदि** । **तोमरातोमरि** । **बाहूबाहवि** ।

## ८६७ । द्विदण्ड्यादिभ्यश्च । (५. ४. १२८)

द्वौ दण्डौ यस्मिन् प्रहरणे तत् द्विदण्डि प्रहरणम् । द्विमुसलि । द्विदण्ड्यादिः ५. ७.

## ८६८ । प्रसंभ्यां जानुनोर्ज्ञुः । (५. ४. १२९)

आभ्यां परयोर्जानुशब्दयोः ज्ञुरादेशः स्याद्बहुव्रीहौ । प्रगते जानुनी यस्य स प्रज्ञुः । संज्ञुः । 'प्रज्ञुः प्रगतजानुकः । संज्ञुः संहतजानुके' II. vi. 47. इत्यमरः ।

## ८६९ । ऊर्ध्वाद्विभाषा । (५. ४. १३०)

ऊर्ध्वज्ञुः । ऊर्ध्वजानुः । 'ऊर्ध्वज्ञुरूर्ध्वजानुः स्यात्' II. vi. 47. इत्यमरः ।

माघे—XI. 11.

परिशिथिलितकर्णग्रीवमामीलिताक्षः
क्षणमयमनुभूय स्वप्नमूर्ध्वज्ञुरेव ।
रिरसयिषति भूयः शष्पमग्रे विकीर्णं
पटुतरचलोष्ठः प्रस्फुरत्प्रोथमश्वः ॥ 949 ॥

ऊर्ध्वे जानुनी यस्य स **ऊर्ध्वज्ञुः** ।

८७० । धनुषश्च । (५. ४. १३२)

धनुरन्तस्य बहुव्रीहेरनङादेशः स्यात् ।

रघुवंशे—XVIII. 9.

स क्षेमधन्वानममोघधन्वा
पुत्रं प्रजाक्षेमविधानदक्षम् ।
क्ष्मां लम्भयित्वा क्षमयोपपन्नं
वने तपः क्षान्ततरश्चचार ॥ 950 ॥

अमोघं धनुर्यस्य सोऽमोघधन्वा । अनङादेशः ।

कुमारसंभवे—IV. 23.

ऋजुतां नयतः स्मरामि ते
शरमुत्सङ्गनिषण्णधन्वनः ।
मधुना सह सस्मितां कथां
नयनोपान्तविलोकितं च तत् ॥ 951 ॥

उत्सङ्गनिषण्णमङ्कगतं धनुर्यस्य तस्योत्सङ्गनिषण्णधन्वनः ।

भट्टिकाव्ये—I. 24.

आशीर्भिरभ्यर्च्य ततः क्षितीन्द्रं
प्रीतः प्रतस्थे मुनिराश्रमाय ।
तं पृष्ठतः प्रष्ठमियाय नम्रो
हिंस्रेषु दीप्रास्त्रधनुः कुमारः ॥ 952 ॥

हिंस्रेषु दीप्रास्त्रधनुः । अत्रानङ् न भवति । समासान्तविधिरनित्यः ।

चम्पूभारते—IV. 48.

कान्तारवर्त्मनि मृगाः पुरतो निषण्णाः
शान्ताकृतेः सधनुषोऽपि निषङ्गिणोऽपि ।
उत्थाय तस्य पटुमर्मरचारुचीरं
रोमन्थलोलचुबुकेन मुखेन जिघ्रुः ॥ 953 ॥

धनुषा सह वर्तत इति सधनुः । तस्य सधनुषः पूर्ववत् ।
अस्मिन्नेव ग्रन्थे श्लो० 232. अधिज्यं धनुर्यस्याधिज्यधन्वा । अनङादेशः ;
अनर्घराघवे—II. 63.
ग.—भगवन्कौशिक पश्य पुरस्तादार्ये धृतधनुषि ॥ 954 ॥
अनङ् न ।

८७१ । वा संज्ञायाम् । (५. ४. १३३)

शतधन्वा शतधनुः ।

कुमारसंभवे—II. 64.

अथ स ललितयोषिद्भ्रूलताचारुशृङ्गं
रतिवलयपदाङ्के चापमासज्य कण्ठे ।
सहचरमधुहस्तन्यस्तचूताङ्कुरास्त्रः
शतमखमुपतस्थे प्राञ्जलिः पुष्पधन्वा ॥ 955 ॥

पुष्पं धनुर्यस्य सः पुष्पधन्वा । कामः । 'पुष्पधन्वा रतिपतिः' I. i. 26. इत्यमरः । अनङादेशः ।

माघे—IX. 41.

अवकाशमाशु हृदये सुदृशां
गमिते विकासमुदयाच्छशिनः ।
कुमुदे च पुष्पधनुषो धनुष-
श्च्युतितः शिलीमुखगणोऽलभत ॥ 956 ॥

पुष्पं धनुर्यस्य स पुष्पधनुः । तस्य पुष्पधनुषः । अनङ् न ।
अस्मिन्नेव ग्रन्थे श्लो० 950. क्षेमं धनुर्यस्य तं क्षेमधन्वानम् । तन्नामानं पुत्रम् । अनङादेशः ।

किरातार्जुनीये—XV. 46.

विफलीकृतयत्नस्य क्षतबाणस्य शम्भुना ।
गाण्डीवधन्वनः खेभ्यो निश्चक्राम हुताशनः ॥ 957 ॥

गाण्डीवं धनुर्यस्य तस्य **गाण्डीवधन्वनो**ऽर्जुनस्य । अनङादेशः ।

चम्पूरामायणे—I. 12.

ग—तदनु हविराहरणाय धरण्यां कृतावतरणाः सर्वे गीर्वाणगणाः शतमख-प्रमुखाश्चतुर्मुखाय दशमुखप्रतापग्रीष्मोष्मसंप्लोषणमावेद्य तेन सह शरणमिति **शार्ङ्ग-धन्वानं** मन्वाना नानाविधप्रस्तुतस्तुतयः क्षीराम्बुराशिमासेदुः ॥ 958 ॥

शार्ङ्गं धनुर्यस्य तं **शार्ङ्गधन्वानम्** ।

चम्पूरामायणे—I. 107.

जनकः स्वकनीयांसमाजुहाव कुशध्वजम् ।
हत्वा युधि **सुधन्वानं** सांकाश्ये स्थापितं पुरे ॥ 959 ॥

**सुधन्वा** नाम कश्चित् ।

## ८७२ । जायाया निङ् । (५. ४. १३४)

जायान्तस्य बहुव्रीहेर्निङादेशः स्यात् ।

चम्पूरामायणे—III. 15.

ग—ततस्तेन **जानकीजानि**रिति जानीहि जनमिमं ममानुजमतिमनुजबलम-बालमबलावियुक्तं युक्तमाश्रयितुं तवेति प्रत्याख्याता रामेण सौमित्रिमुपेत्य यथामनीषित-मभाषत ॥ 960 ॥

जानकी जाया यस्य स **जानकीजानिः** ।

चम्पूभारते—IV. 47.

उत्थायाथ क्षितीन्द्रः क्षणमपि धरणौ स्थातुमस्यां न युक्तं
प्रत्यर्थिस्वीकृतायामिति सह सहजैः सत्यसन्धः **सजानिः** ।
पाणौ क्षत्तुर्निधाय प्रभुवमतितरामन्तरुत्तप्यमानां
पद्भ्यां प्रापद्वनानि व्यथितहृदमुचत्पौरलोकस्तु हर्म्याम् ॥ 961 ॥

जायया सह वर्तत इति **सजानिः** ।

अस्मिन्नेव ग्रन्थे श्लो० 892. युवतिर्जाया यस्य स **युवजानिः** । अनेन निङ् । वलिलोपः । ' स्त्रियाः पुंव ' ( सू. 831 ) इति पुंवद्भावः ।

**८७४ । गन्धस्येदुत्पूतिसुसुरभिभ्यः । ( ५. ४. १३५ )**

एभ्यो गन्धस्य इकारोऽन्तादेशः स्यात् । उद्गन्धिः । पूतिगन्धिः । सुगन्धिः । सुरभिगन्धिः ।

**वा० । गन्धस्येत्त्वे तदेकान्तग्रहणम् । ( 3368. )**

एकान्त एकदेश इवाविभागेन लक्ष्यमाण इत्यर्थः । सुगन्धि पुष्पं सलिलं च । सुगन्धिर्वायुः । नेह । शोभना गन्धा गन्धद्रव्याणि यस्य स सुगन्ध आपणिकः ।

अस्मिन्नेव ग्रन्थे श्लो० 640. बधुकुसमविमर्दे**नोद्गन्धिषु** उद्भूतगन्धेषु । इत्त्वम् ।

रघुवंशे—XVI. 47.

> वनेषु सायन्तनमल्लिकानां
> विजृम्भणो**द्गन्धिषु** कुड्मलेषु
> प्रत्येकनिक्षिप्तपदः सशब्दं
> संख्यामिवैषां भ्रमरश्चकार ॥ 962 ॥

विजृम्भणेन विकासेनो**द्गन्धिषु** उत्कटसौरभेषु । समासान्त इकारः ।

अस्मिन्नेव ग्रन्थे श्लो० 668. शोभनो गन्धो यस्य तत् **सुगन्धि** । इकारः समासान्तः ।

अस्मिन्नेव ग्रन्थे श्लो० 870. सुरभिर्मनोहरो गन्धः **सुरभिगन्धः** । न बहुव्रीहिः । अत इत्वं न ।

रघुवंशे—IV. 45.

> स सैन्यपरिभोगेन गजदान**सुगन्धिना** ।
> कावेरीं सरितां पत्युः शङ्कनीयामिवाकरोत् ॥ 963 ॥

गजदान**सुगन्धिना** । इत्त्वम् । नैसर्गिकगन्धविवक्षायामेवेकारादेशः । निरङ्कुशाः कवयः ।

अस्मिन्नेव ग्रन्थे श्लो० 554. सदोद्गारेण सुगन्धीनां हृद्यगन्धानाम् । इत्वम् ।

भट्टिकाव्ये—II. 10.

अदृक्षतांभांसि नवोत्पलानि
रुतानि चाश्रौषत षट्पदानाम् ।
आघ्रायि वान् गन्धवहः सुगन्धः
तेनारविन्दव्यतिषङ्गवांश्च ॥ 964 ॥

अरविन्दानां व्यतिषङ्गः तद्वान् । अत एव सुगन्धः । गन्धस्येत्वे तदेकान्त ग्रहणादिहेत्वाभावः । सुगन्धिरिति पाठोऽपि कविप्रयोगबाहुल्यादिष्यते ।

माघे—V. 46.

कण्डूयतः कटभुवं करिणो मदेन
स्कन्धं सुगन्धिमनुलीनवता नगस्य ।
स्थूलेन्द्रनीलशकलावलिकोमलेन
कण्ठेगुणत्वमलिनां वलयेन भेजे ॥ 965 ॥

करिणो मदेन सुगन्धि शोभनगन्धम् । गन्धस्येत्वे तदेकान्तग्रहणं नाद्रियन्ते कवयः ।

८७५ । अल्पाख्यायाम् । (५. ४. १३६)

सूपस्य गन्धो लेशो यस्मिंस्तत् सूपगन्धि भोजनम् ।

८७६ । उपमानाच्च । (५. ४. १३७)

पद्मस्येव गन्धोऽस्य पद्मगन्धिः ।

अस्मिन्नेव ग्रन्थे श्लो० 131. चूतस्येव गन्धो येषां ते चूतगन्धयः ।

किरातार्जुनीये—I. 16.

अनेकराजन्यरथाश्वसंकुलं
तदीयमास्थाननिकेतनाजिरम् ।

नयत्ययुग्मच्छदगन्धिरार्द्रतां
भृशं नृपोपायनदन्तिनां मदः ॥ 966 ॥

अयुग्मच्छदस्य गन्ध इव गन्धो यस्यासावयुग्मच्छदगन्धिः । 'सप्तम्युपमान' इत्यादिना बहुव्रीहिरुत्तरपदलोपश्च । अनेन इत्वम् ।

८७७ । पादस्य लोपोऽहस्त्यादिभ्यः (५. ४. १३८)

हस्त्यादिवर्जितादुपमानात्परस्य पादशब्दस्य लोपः स्याद्बहुव्रीहौ । व्याघ्रस्येव पादावस्य व्याघ्रपात् । हस्तिपादः कुसूलपादः । अत्र न । हस्त्यादिः—५. ५८.

८७८ । कुम्भपदीषु च । (५. ४. १३९)

कुम्भपद्यादिषु पादस्य लोपो ङीप् च निपात्यते स्त्रियाम् । कुम्भपद्यादि :—
५. ५९.

नैषधे—III. 63.

अवाप्यते वा किमियद्भवत्या
चित्तैकपद्यामपि विद्यते यः ।
यत्रान्धकारः किल चेतसोऽपि
जिह्मेतरैर्ब्रह्म तदप्यवाप्यम् ॥ 967 ॥

एकः पादो यस्यामित्येकपदी । एकपादसंचारयोग्यो मार्गः ।

८७९ । संख्यासुपूर्वस्य । (५. ४. १४०)

पादस्य लोपः स्यात्समासान्तो बहुव्रीहौ । द्विपात् । सुपात् । 'पादोऽन्यतरस्याम्' (सू. 457) इति स्त्रियां विकल्पानीकारः ।

अस्मिन्नेव ग्रन्थे श्लो० 323. सहस्रं पादा रश्मयोऽङ्घ्रयश्च यस्य स सहस्रपात् सूर्यः ।

रघुवंशे—XV. 96.

तस्मिन्नात्मचतुर्भागे प्राङ्नाकमधितस्थुषि ।
राघवः शिथिलं तस्थौ भुवि धर्मस्त्रिपादिव ॥ 968 ॥

त्रयः पादा यस्यासौ त्रिपात् । अकारलोपः समासान्तः ।

अस्मिन्नेव ग्रन्थे श्लो० 20. शोभनौ पादौ यस्याः सा **सुपात्** । समासान्त-लोपः । 'पादोऽन्यतरस्यां' ( सू. 457 ) इति विकल्पादनीकारः ।

भट्टिकाव्ये—IV. 3.

अवाक्छिरसमुत्पादं कृतान्तेनापि दुर्दमम् ।
भक्त्वा भुजौ विराधाख्यं तं तौ भुवि निचख्नतुः ॥ 969 ॥

**उत्पाद**मूर्ध्वचरणम् । संख्यासुपूर्वादन्यत्र न लोपः ।

**८८० । वयसि दन्तस्य दतृ । ( ५. ४. १४१ )**

संख्यासुपूर्वस्य दन्तस्य दतृ इत्यादेशः स्याद्वयसि । द्विदन् । चतुर्दन् । षट् दन्ता अस्य षोडन् । सुदन् सुदती । वयसि किम् ? द्विदन्तः करी । सुदन्तो नटः ।

अस्मिन्नेव ग्रन्थे श्लो० 14. शोभना दन्ता यस्याः सा **सुदती** । दत्रादेशे 'उगितश्च' ( सू. 455 ) इति ङीप् ।

**८८३ । अग्रान्तशुद्धशुभ्रवृषवराहेभ्यश्च । ( ५. ४. १४५ )**

एभ्यो दन्तस्य दतृ वा । कुड्मलाग्रदन् । कुड्मलाग्रदन्तः ।

माघे—II. 7.

द्योतितान्तःसभैः **कुन्दकुड्मलाग्रदतः** स्मितैः ।
स्नपितेवाभवत्तस्य शुद्धवर्णा सरस्वती ॥ 970 ॥

कुन्दकुड्मलाग्राणीव दन्ता यस्य तस्य **कुन्दकुड्मलाग्रदतः** । अग्रान्तपूर्वपद-बहुव्रीहिः । समासान्तो वैभाषिको दत्रादेशः ।

भट्टिकाव्ये—V. 61.

गते तस्मिञ्जलशुचिः **शुद्धदन्**रावणः शिखी ।
जञ्जपूकोऽक्षमालावान् धारयो, मृदलाबुनः ॥ 971 ॥

**शुद्धदन्** शुभ्रदन्तः । दत्रादेशः ।

भट्टिकाव्ये—IV. 18.

उन्नसं दधती वक्त्रं **शुद्धद**ल्लोलकुण्डलम् ।
कुर्वाणा पश्यतः शंयून् स्रग्विणी सुहसानना ॥ 972 ॥

शुद्धा दन्ता यस्य तत् **शुद्धदत्** । दत्रादेशः ।

अस्मिन्नेव ग्रन्थे श्लो० 910. शोभना दन्ता यासां ताः सुदत्यः स्त्रियः । अत्र विधानाभावात् दत्रादेशश्चिन्त्य इति केचित् । अग्रान्तेत्यादिना चकारात्सिद्धिरिति केचित् । सुदत्यादय स्त्रीषु योगरूढाः । 'स्त्रियां संज्ञायां' (सू. 881) इति दत्रादेशात्साधव इत्यपरे । ता एव जनाः सुदतीजनाः । 'संज्ञापूरण्योश्च' (सू. 839) इति न पुंवद्भावः ।

८८४ । **ककुदस्यावस्थायां लोपः** । (५. ४. १४६)

अजातककुत् । पूर्णककुत् ।

८८५ । **त्रिककुत्पर्वते** । (५. ४. १४७)

त्रीणि ककुदान्यस्य त्रिककुत् । संज्ञैषा पर्वतविशेषस्य ।

८८६ । **उद्विभ्यां काकुदस्य** । (५. ४. १४८)

लोपः स्यात् । उत्काकुत् । विकाकुत् । काकुदं तालु ।

८८७ । **पूर्णाद्विभाषा** । (५. ४. १४९)

पूर्णकाकुत् । पूर्णकाकुदः ।

८८८ । **सुहृद्दुर्हृदौ मित्रामित्रयोः** । (५. ४. १५०)

सुदुर्भ्यां हृदयस्य हृद्भावो निपात्यते । सुहृन्मित्रम् । दुर्हृदमित्रः । अन्यत्र सुहृदयः । दुर्हृदयः ।

अस्मिन्नेव ग्रन्थे श्लो० 266. शोभनं हृदयं येषां तान् सुहृदो मित्राणि ।

भट्टिकाव्ये—VIII. 14.

अव्यग्रमुपतिष्ठस्व वीर वायोरहं सुहृत् ।
रविर्वितपतेऽत्यर्थमाश्वस्य मयि गम्यताम् ॥ 973 ॥

सुहृत् ।

माघे—XIX. 75.

निपातितसुहृत्स्वामिपितृव्यभ्रातृमातुलम् ।
पाणिनीयमिवालोकि धीरैस्तत्समराजिरम् ॥ 974 ॥

सुहृदिति निपातः ।

८८९ । उरःप्रभृतिभ्यः कप् । ( ५. ४. १५१ )

नित्यकबाश्रयणम् । एकवचनोत्तरपदम् । उरः प्रभृतिः—५. ६०. पुमान् । अनड्वान् । पयः । नौः । लक्ष्मीः । इत्येकवचनान्तानि पठ्यन्ते । द्विवचनबहुवचनान्तेभ्यस्तु 'शेषाद्विभाषा' ( सू. 891 ) इति विकल्पेन कप् । द्विपुमान् । द्विपुंस्कः ।

(ग. सू. ) अर्थान्नञः । ( 149. )

अनर्थकम् ।

रघुवंशे—I. 13.

व्यूढोरस्को वृषस्कन्धः सालप्रांशुर्महाभुजः ।
आत्मकर्मक्षमं देहं क्षात्रो धर्म इवाश्रितः ॥ 975 ॥

व्यूढं विपुलमुरो यस्य स व्यूढोरस्कः ।

भट्टिकाव्ये—V. 49

तेनादुदूषयद्रामं मृगेण मृगलोचना ।
मैथिली विपुलोरस्कं माबुवूर्षुर्मृगाजिनम् ॥ 976 ॥

विपुलमुरो यस्य सः विपुलोरस्कः । तम् ।

अस्मिन्नेव ग्रन्थे श्लो० 72. मुदितयुवमनस्काः ।

अस्मिन्नेव ग्रन्थे श्लो० 934. सती परिमललक्ष्मीः यस्याः सा सत्परिमललक्ष्मीका । अपुंस्का । एकवचनान्तयोर्लक्ष्मीशब्दपुंशब्दयोः उरः प्रभृतिषु पाठात् कप् । आपीतमधुका । 'शेषाद्विभाषा' ( सू. 891 ) इति कप् इति व्याख्यायां वर्तते । उरःप्रभृतिषु मधुशब्दः पठितः ।

अस्मिन्नेव ग्रन्थे श्लो० 152. मध्यस्थायिशीतांशुलेखानुकरणपट्व्यः लक्ष्म्यः यस्याः सा तां मध्यस्थायिशीतांशुलेखानुकरणपटुलक्ष्मीम् । शेषादिति वैकल्पिकः कप् अत्र न ।

अस्मिन्नेव ग्रन्थे श्लो० 675. भिन्नाः वक्त्रेन्दुलक्ष्म्यः यस्याः सा **भिन्नवक्त्रेन्दु-लक्ष्मीः** ; बहुवचनान्तावयवो बहुव्रीहिः । एकवचनान्तस्यैव लक्ष्मीशब्दस्य उरःप्रभृतिषु पाठान्न कप् । शैषिको वैभाषिक इत्यविरोधः ।

किरातार्जुनीये—VII. 16.

यातस्य ग्रथिततरङ्गसैकताभे
विच्छेदं **विपयसि** वारिवाहजाले ।
आतेनुस्त्रिदशवधूजनाङ्कभाजां
सन्धानं सुरधनुषः प्रभामणीनाम् ॥ 977 ॥

विगतानि पयांसि यस्मात्तस्मिन् **विपयसि** । 'शेषाद्विभाषा' (सू. 891) इति विकल्पान्न समासान्तः । उरःप्रभृतिपाठस्तु पयःशब्दस्यैकवचनान्तस्यैवेति न कश्चिद्विरोधः ।

किरातार्जुनीये—V. 52.

तमनतिशयनीयं सर्वतः सारयोगा-
दविरहितमनेकेनाङ्कभाजा फलेन ।
**अकृशमकृशलक्ष्मी**श्चेतसाशंसितं स
स्वमिव पुरुषकारं शैलमभ्याससाद ॥ 978 ॥

अकृशा लक्ष्म्यो यस्य सः **अकृशलक्ष्मीः** इति बहुवचनाश्रितो बहुव्रीहिः । एवं च 'उरःप्रभृतिभ्यः' (सू. 889) इति कप्प्रत्ययानवकाशः । तत्र लक्ष्मीशब्दस्य एकवचनान्तस्यैव पाठात् ; नापि 'नद्यृतश्च' (सू. 833) इत्यस्यावकाशः । उरः प्रभृतिपाठसामर्थ्यादेव । शैषिकस्तु वैभषिक इत्यविरोधः ।

किरातार्जुनीये—XI. 7.

जरतीमपि बिभ्राणस्तनुमप्राकृताकृतिम् ।
चकाराक्रान्तलक्ष्मीकः ससाध्वसमिदाश्रमम् ॥ 979 ॥

आक्रान्ता लक्ष्मीर्येन सः आक्रान्तलक्ष्मीकः । अत्र अनेन नित्यकबाश्रयणं एकवचनोत्तरपदस्यैव लक्ष्मीशब्दस्य । तस्यैवोरःप्रभृतिषु पाठात् । शेषादिति विकल्पाश्रयणे तु बहुवचनोत्तरपद इति विवेकः ।

भट्टिकाव्ये—V. 88.

भिन्ननौक इव ध्यायन् मत्तो विध्यद्यमः स्वयम् ।
कृष्णिमानं दधानेन मुखेनास्ते निरुद्यतिः ॥ 980 ॥

भिन्ननौकः । कप् ।

किरातार्जुनीये—X. 26.

सरजसमपहाय केतकीनां
प्रसवमुपान्तिकनीपरेणुकीर्णम् ।
प्रियमधुरसनानि षट्पदाली
मलिनयति स्म विनीलबन्धनानि ॥ 981 ॥

प्रियमधुरिष्टमकरन्दा । नात्र कप् समासान्तः । पुलिङ्गोत्तरपदो बहुव्रीहिरिति केचित् । नपुंसकलिङ्गस्यैव मधुशब्दस्योरःप्रभृतिषु पाठात् । 'मकरन्दस्य मद्यस्य माक्षिकस्यापि वाचकः । अर्धर्चादिगणे पाठात्पुंनपुंसकयोर्मधुः' ॥ इत्यभिधानात् ।

किरातार्जुनीये—X. 57.

सविनयमपराभिसृत्य साचि-
स्मितसुभगैकलसत्कपोललक्ष्मीः ।
श्रवणनियमितेन तं निदध्यौ
सकलमिवासकलेन लोचनेन ॥ 982 ॥

लसत्यः कपोललक्ष्म्यः यस्याः सा ।

८९० । इनः स्त्रियाम् । (५. ४. १५२)

बहुदण्डिका नगरी । स्त्रियां किम् । बहुदण्डी बहुदण्डिकः ग्रामः ।

अस्मिन्नेव ग्रन्थे श्लो० 94. परिणता दिकरिणो यासु ताः परिणतदिक्करिकाः । समासान्तः कप् ।

माघे—XIX. 40.

बन्धौ विपन्नेऽनेकेन नरेणेह तदन्तिके ।
अशोचि सैन्ये घण्टाभिर्न रेणे हतदन्तिके ॥ ९८३ ॥

‘ शेषात् ’ (सू. 891) इति विकल्पात्कप् ।

८९१ । शेषाद्विभाषा (५ ४. १५४)

कबाश्रयणं वैकल्पिकम् ।

माघे—I. 14.

तमर्घ्यमर्घ्यादिकयादिपूरुषः
सपर्यया साधु स पर्यपूपुजत् ।
गृहानुपैतुं प्रणयादभीप्सवो
भवन्ति नापुण्यकृतां मनीषिणः ॥ 984 ॥

माघे—I. 64.

परस्य मर्माविधमुज्झतां निजं
द्विजिह्वतादोषमजिह्मगामिभिः ।
तमिद्धमाराधयितुं सकर्णकैः
कुलैर्न भेजे फणिनां भुजङ्गता ॥ 985 ॥

कर्णाभ्यां सह वर्तन्त इति सकर्णकास्तैः । कप् ।

माघे—I. 63.

तदीयमातङ्गघटाविघट्टितैः
कटस्थलप्रोषितदानवारिभिः ।
गृहीतदिक्कैरपुनर्निवर्तिभि-
श्चिराय याथार्थ्यमलम्भि दिग्गजैः ॥ 986 ॥

गृहीता दिशः यैस्तैर्गृहीतदिक्कैः । कप् ।

माघे—III. 79.

उत्सङ्गिताम्भःकणको नभस्वा-
नुदन्वतः स्वेदलवान्ममार्ज ।
तस्यानुवेलं व्रजतोऽधिवेल-
मेलावनास्फालनलब्धगन्धः ॥ 987 ॥

उत्सङ्गिता अम्भःकणा येन सः । कप् ।

माघे—XI. 65.

श्लथनतुहिनधाम्नि प्रोष्य भूयः पुरस्ता-
दुपगतवति पाणिग्राहवद्दिग्वधूनाम् ।
द्रुततरमुपयाति स्रंसमानांशुकोऽसा-
वुपपतिरिव नीचैः पश्चिमान्तेन चन्द्रः ॥ 988 ॥

स्रंसमानांशुकः गलद्रश्मिकः । कप् ।

अस्मिन्नेव ग्रन्थे श्लो० 675. भिन्नवक्त्रेन्दुलक्ष्मीः । बहुवचनान्तावयवो बहुव्रीहिः । विकल्पान्न कप् ।

८९२ । आपोऽन्यतरस्याम् । (७. ४. १५)

कप्यावन्तस्य ह्रस्वो वा स्यात् । बहुमालाकः बहुमालकः । कबभावे बहुमालः ।

नैषधे—IV. 62.

विरहिवर्गवधव्यसनाकुलं
कलय पापमशेषकलं विधुम् ।
सुरनिपीतसुधाकमपापकं
ग्रहविदो विपरीतकथाः कथम् ॥ 989 ॥

निपीता सुधा यस्य तं निपीतसुधाकम् । 'शेषात्' (सू. 891) इति कप् । अनेन विकल्पाद्ध्रस्वाभावः ।

चम्पूभारते—IV. 25.

त्वं ततस्तु सुखमात्मसंयुतैः
सोदरैः सदृशसङ्ख्यकाः समाः ।

नीलशाद्वलशिहारिनीलमेखलां
निःसपत्नमनुभुङ्क्ष्व मेदिनीम् ॥ 990 ॥

सदृशी संख्या यासां ताः सदृशसंख्यकाः । पूर्ववत् कप् । अनेन कल्पान्द्भूस्वः ।

चम्पूभारते—VI. 71.

अक्ष्वेलिताराममवीरवाद-
मवीक्षकश्लाघनचाटुगुम्फम् ।
अनुच्चनिःश्वासमहुंक्रियाक-
मभूतपूर्वं तदभूद्वियुद्धम् ॥ 991 ॥

न विद्यते हुंक्रिया यस्मिंस्तदहुंक्रियाकम् । ह्रस्वाभावः ।

नैषधे—III. 28.

शृण्वन् सदारस्तदुदारभावं
हृष्यन्मुहुर्लोम पुलोमजायाः ।
पुण्येन नालोकत नाकपालः
प्रमोदबाष्पावृतनेत्रमालः ॥ 992 ॥

कबभावपक्षः ।

माघे—IV. 4.

सहस्रसंख्यैर्गगनं शिरोभिः
पादैर्भुवं व्याप्य वितिष्ठमानम् ।
विलोचनस्थानगतोष्णरश्मि-
निशाकरं साधुहिरण्यगर्भम् ॥ 993 ॥

सहस्रं संख्या येषां ते सहस्रसंख्याः । कबभावपक्षः ।

## ८९३ । न संज्ञायाम् । (५. ४. १५५)

'शेषात्' (सू. 891) इति प्राप्तः कप् न स्यात् संज्ञायाम् ।

## ८९४ । ईयसश्च । (५. ४. १५६)

माघे—III. 79.

उत्सङ्गिताम्भःकणको नभस्वा-
नुदन्वतः स्वेदलवान्ममार्ज ।
तस्यानुवेलं व्रजतोऽधिवेल-
मेलावनास्फालनलब्धगन्धः ॥ 937 ॥

उत्सङ्गिता अम्भःकणा येन सः । कप् ।

माघे—XI. 65.

क्षननतुहिनवान्ति प्रोष्य भुवः पुरस्ता-
दुपगतवति पाणिग्राहवद्दिग्वधूनाम् ।
द्रुततरमुपयाति स्रंसमानांशुकोऽसा-
वुपपतिरिव नीचैः पश्चिमान्तेन चन्द्रः ॥ 988 ॥

स्रंसमानांशुकः गलद्रश्मिकः । कप् ।

अस्मिन्नेव ग्रन्थे श्लो० 675. भिन्नवक्त्रेन्दुलक्ष्मीः । बहुवचनान्तावयवो बहुव्रीहिः । विकल्पान्न कप् ।

८९२ । आपोऽन्यतरस्याम् । (७. ४. १५)

कप्याबन्तस्य ह्रस्वो वा स्यात् । बहुमालाकः बहुमालकः । कबभावे बहुमालः ।

नैषधे—IV. 62.

विरहिवर्गवधव्यसनाकुलं
कलय पापमशेषकलं विधुम् ।
सुरनिपीतसुधाकमपापकं
ग्रहविदो विपरीतकथाः कथम् ॥ 989 ॥

निपीता सुधा यस्य तं निपीतसुधाकम् । 'शेषात्' (सू. 891) इति कप् । अनेन विकल्पाद्ध्रस्वाभावः ।

चम्पूभारते—IV. 25.

त्वं ततस्तु सुखमात्मसंयुतैः
सोदरैः सदृशसङ्ख्यकाः समाः ।

नीलशिहरिनीलमेखलां
निःसपत्नमनुभुङ्क्ष्व मेदिनीम् ॥ 990 ॥

सदृशी संख्या यासां ताः सदृशसंख्यकाः । पूर्ववत् कप् । अनेन विकल्पाद्भूस्वः ।

चम्पूभारते—VI. 71.

अक्ष्वेलितारावमवीरवाद-
मवीक्षकश्लाघनचाटुगुम्फम् ।
अनुच्चनिःश्वासमहुंक्रियाक-
मभूतपूर्वं तदमून्नियुद्धम् ॥ 991 ॥

न विद्यते हुंक्रिया यस्मिंस्तदहुंक्रियाकम् । ह्रस्वाभावः ।

नैषधे—III. 28.

शृण्वन् सदारस्तदुदारभावं
हृष्यन्मुहुर्लोम पुलोमजायाः ।
पुण्येन नालोकत नाकपालः
प्रमोदबाष्पावृतनेत्रमालः ॥ 992 ॥

कबभावपक्षः ।

माघे—IV. 4.

सहस्रसंख्यैर्गगनं शिरोभिः
पादैर्भुवं व्याप्य वितिष्ठमानम् ।
विलोचनस्थानगतोष्णरश्मि-
निशाकरं साधुहिरण्यगर्भम् ॥ 993 ॥

सहस्रं संख्या येषां ते सहस्रसंख्याः । कबभावपक्षः ।

## ८९३ । न संज्ञायाम् । (५. ४. १५५)

'शेषात्' (सू. 891) इति प्राप्तः कप् न स्यात् संज्ञायाम् ।

## ८९४ । ईयसश्च । (५. ४. १५६)

ईयसन्तोत्तरपदान्न कप् । बहवः श्रेयांसोऽस्य बहुश्रेयान् । 'गोस्त्रियोः' (सू. 650) इति ह्रस्वे प्राप्ते—

वा० । ईयसो बहुव्रीहेर्नेति वाच्यम् । (696.)

बह्व्यः श्रेयस्योऽस्या बहुश्रेयसी । बहुव्रीहेः किम् । अतिश्रेयसिः ।

माघे—X. 44.

> संजहार सहसा परिरब्ध-
> प्रेयसीषु विरहय्य विरोधम् ।
> संहितं रतिपतिस्सितभिन्न-
> क्रोधमाशु तरुणेषु महेषुम् ॥ 994 ॥

परिरब्धाः प्रेयस्यो यैस्तेषु परिरब्धप्रेयसीषु । अनेन निषेधात्कबभावः । वार्तिकेन ह्रस्वनिषेधः ।

८९५ । वन्दिते भ्रातुः । (५. ४. १५७)

पूजितेऽर्थे यो भ्रातृशब्दस्तदन्तान्न कप् स्यात् । प्रशस्तो भ्राता यस्य सः प्रशस्तभ्राता सुभ्राता । वन्दिते किम् । मूर्खभ्रातृकः ।

रघुवंशे—X. 82.

> समानेऽपि हि सौभ्रात्रे यथोभौ रामलक्ष्मणौ ।
> तथा भरतशत्रुघ्नौ प्रीत्या द्वन्द्वं बभूवतुः ॥ 995 ॥

शोभनाः स्निग्धा भ्रातरो येषां ते सुभ्रातरः । 'नद्यृतश्च' (सू. 333) इति कप् न भवति अनेन निषेधात् । तेषां भावः सौभ्रात्रम् ।

अस्मिन्नेव ग्रन्थे श्लो० 399. सौभ्रात्रम् । पूर्ववत् ।

चम्पूभारते—III. 14.

> तत्सौभ्रात्रशरव्यस्य द्वैधीकरणकेलये ।
> भवतां मास्त्वापेषु भवतां मा वचःकृते ॥ 996 ॥

सौभ्रात्रम् । पूर्ववत् ।

८९८ । सप्तमीविशेषणे बहुव्रीहौ । ( २. २. ३५ )

सप्तम्यन्तं विशेषणं बहुव्रीहौ पूर्वं प्रयोज्यम् । कण्ठेकालः । अत एव ज्ञापकाद्व्यधिकरणपदो बहुव्रीहिः ।

वा० । संख्याया अल्पीयस्याः । ( 1417. )

द्वित्राः । द्वन्द्वेऽपि । द्वादश ।

वा० । वा प्रियस्य । ( 1420. )

गुडप्रियः । प्रियगुडः ।

वा० । गड्वादेः परा सप्तमी । ( 1421. )

मेघसंदेशे—I. 45.

आराध्यैनं शरवणभवं देवमुल्लङ्घिताध्वा
सिद्धद्वन्द्वैर्जलकणभयाद्वीणिभिर्मुक्तमार्गः ।
व्यालम्बेथाः सुरभितनयालम्भजां मानयिष्यन्
स्रोतोमूर्त्या भुवि परिणतां रन्तिदेवस्य कीर्तिम् ॥ 997 ॥

शरा बाणतृणानि तेषां वनं शरवणम् । तत्र भवो जन्म यस्य तं शरवणभवम् ।

रघुवंशे—III. 29.

अथोपनीतं विधिवद्विपश्चितो
विनिन्युरेनं गुरवो गुरुप्रियम् ।
अवन्ध्ययत्नाश्च बभूवुरत्र ते
क्रिया हि वस्तूपहिता प्रसीदति ॥ 998 ॥

गुरुप्रियम् । प्रियगुरुम् ।

किरातार्जुनीये—XI. 53.

सोढवान्नो दशामन्त्यां ज्यायानेव गुणप्रियः ।
सुलभो हि द्विषां भङ्गो दुर्लभा सत्त्ववाच्यता ॥ 999 ॥

गुणाः प्रिया यस्य सः गुणप्रियः । प्रियगुणः । परनिपातः ।

नैषधे—VI. ६६.

मैमीमुपावीणयदेत्य यत्र
कलिप्रियस्य प्रियशिष्यवर्गः ।
गन्धर्ववध्वः सुरसद्मवीणं
तत्काण्डनालैकधुरीणवीणः ॥ 1000 ॥

कलिप्रियस्य प्रियकलहस्य नारदस्य । बहुव्रीहौ प्रियशब्दस्य परनिपातः ।

कुमारसंभवे—IV. ३८.

परलोकविधौ च माधव
स्मरमुद्दिश्य विलोलपल्लवाः ।
निवपेः सहकारमञ्जरीः
प्रियचूतप्रसवो हि ते सखा ॥ 1001 ॥

प्रियश्चूतप्रसवो यस्य सः प्रियचूतप्रसवः ।

अस्मिन्नेव ग्रन्थे श्लो० 948. प्रियधर्म ।

८९९ । निष्ठा । ( २. २. ३६ )

निष्ठान्तं बहुव्रीहौ पूर्वं स्यात् । कृतकृत्यः ।

वा० । जातिकालसुखादिभ्यः परा निष्ठा वाच्या । (1422.)

सारङ्गजग्धी । मासजाता । सुखजाता । प्रायिकं चेदम् । कृतकटः । पीतोदकः ।

भट्टिकाव्ये—V. ३९.

सुखजातस्सुरापीतो नृजग्धौ माल्यधारयः ।
अधिरङ्कं स्त्रियो दीव्यमारब्धा बलिविग्रहम् ॥ 1002 ॥

सुखजातः ।

९०० । वाहिताग्न्यादिषु । ( २. २. ३७ )

आहिताग्निः अग्न्याहितः । आहिताग्न्यादिः—२. १२.

वा० । प्रहरणार्थेभ्यः परे निष्ठासप्तम्यौ ( 1425. )

अभ्युद्यतः । दण्डपाणिः । कश्चित्र । विवृतासिः ।

भट्टिकाव्ये—IX. 111.

अगन्त्याहितजनप्रह्वे विजिगीषापराङ्मुखे ।
कस्माद्वा नीतिनिष्णस्य संरम्भस्तव तापसे ॥ 1003 ॥

अग्न्याहिताः । आहिताग्नयः ।

माघे—XI. 41.

प्रतिशरणमशीर्णज्योतिरग्न्याहितानां
विधिविहितविरिब्धैः सामिधेनीरधीत्य ।
कृतगुरुदुरितौघध्वंसमध्वर्युवर्यै-
र्हुतमयमुपलीढे साधु सान्नाय्यमग्निः ॥ 1004 ॥

अग्न्याहिताः । आहिताग्नयः ।

भट्टिकाव्ये—VI. 49.

अहं राम श्रियः पुत्रो मद्यपीत इव भ्रमन् ।
पापचर्यो मुनेः शापाज्जात इत्यवदत्स तम् ॥ 1005 ॥

मद्यपीतः । पीतमद्यः ।

अस्मिन्नेव ग्रन्थे श्लो० 1002. सुरापीतः । पीतसुरः । नरो जग्धा येन सः नृजग्धः । जग्धनृकः । वैकल्पिको निष्ठायाः परनिपातः ।

अस्मिन्नेव ग्रन्थे श्लो० 349. भार्योढम् । ऊढभार्यम् । परनिपात. ।

कुमारसंभवे—V 30.

अथाजिनाषाढधरः प्रगल्भवाक्
ज्वलन्निव ब्रह्ममयेन तेजसा ।
विवेश कश्चिज्जटिलस्तपोवनं
शरीरबद्धः प्रथमाश्रमो यथा ॥ 1006 ॥

शरीरबद्धः । बद्धशरीरः ।

अस्मिन्नेव ग्रन्थे श्लो० 78. धैर्यकलिता । कलितधैर्या ।

भट्टिकाव्ये—IX. 61.

स्वामिनो निष्क्रयं गन्तुमाविष्कृतबलः कपिः ।
रराज समरे शत्रून् घ्नन्दुष्कृतबहिष्कृतः ॥ 1007 ॥

दुष्कृतबहिष्कृतः । परनिपातः ।

किरातार्जुनीये—XII. 43.

अनुकूलमस्य च विचिन्त्य
गणपतिभिरात्तविग्रहैः ।
शूलपरशुशरचापभृतै-
र्महती वनेचरचमूर्विनिर्ममे ॥ 1008 ॥

शूलानि परशवः शराः चापानि च तानि भृतानि यैस्तैः । 'प्रहरणार्थेभ्यः' (वा. 1426. सू. 900.) इति निष्ठायाः परनिपातः ।

किरातार्जुनीये—VI. 24.

धृतहेतिरप्यधृतजिह्ममति-
श्चरितैर्मुनीनधरयन् शुचिभिः ।
रजयांचकार विरजाः स मृगान्
कमिवेशते रमयितुं न गुणाः ॥ 1009 ॥

धृतहेतिः । न परनिपातः ।

भट्टिकाव्ये—XVII. 22.

पीडाकरममित्राणां कर्तव्यमिति शक्रजित् ।
अब्रवीत्खड्गकृष्टश्च तस्या मूर्धानमच्छिनत् ॥ 1010 ॥

कृष्टः खड्गो येन सः खड्गकृष्टः । निष्ठायाः परनिपातः ।

अस्मिन्नेव ग्रन्थे श्लो० 954. धृतं धनुर्येन सः धृतधनुः । समासान्तविधेरनित्यत्वादिह 'धनुषश्च' (सू. 870) इत्यनङ् न भवति । परनिपातो न ।

उत्तररामचरिते—V. 4.

अतिशयितसुरासुरप्रभावं
　　शिशुमवलोक्य तवैव तुल्यरूपम् ।
कुशिकसुतमखद्विषां प्रमाथे
　　धृतधनुषं रघुनन्दनं स्मरामि ॥ 1011 ॥

धृतधनुषं पूर्ववत् ।

अस्मिन्नेव ग्रन्थे श्लो० 881. खड्गमुसलप्रासचक्रबाणगदाकरौ । खड्गादीनां बाणान्तानां द्वन्द्वैकवद्भावं कृत्वा पश्चात्तेन सहिता गदेति शाकपार्थिवत्वात्समासः । अन्यथा समुदायस्य 'जातिरप्राणिनाम्' (सू. 910) इत्येकवद्भावेन नपुंसकलिङ्गता स्यात् । सा करे ययोस्तौ । करशब्दस्य परनिपातः ।

अस्मिन्नेव ग्रन्थे श्लो० 892. धनुः पाणौ यस्य सः धनुष्पाणिः । पूर्वस्परनिपातः ।

अस्मिन्नेव ग्रन्थे श्लो० 626. बाणः पाणौ यस्य सः बाणपाणिः । पूर्ववत् ।

भट्टिकाव्ये—I. 17.

ततोऽभ्यगाद्गाधिसुतः क्षितीन्द्रं
　　रक्षोभिरभ्याहतकर्मवृत्तिः ।
रामं वरीतुं परिरक्षणार्थं
　　राजार्जिहत्तं मधुपर्कपाणिः ॥ 1012 ॥

मधुपर्के स्थितः पाणिर्यस्येति विग्रहः । उत्तरपदलोपिसमासः ।

॥ इति बहुव्रीहिसमासप्रकरणम् ॥

## ॥ अथ द्वन्द्वसमासप्रकरणम् ॥

---

९०१ । चार्थे द्वन्द्वः । (२. २. २९.)

चम्पूरामायणे—I. 32.

भरतस्तेषु कैकेय्यां तनयो विनयोज्ज्वलः ।
अन्यौ लक्ष्मणशत्रुघ्नौ सुमित्रायां कृतोदयौ ॥ 1013 ॥

लक्ष्मणश्च शत्रुघ्नश्च लक्ष्मणशत्रुघ्नौ।

९०२ । राजदन्तादिषु परम् । (२. २. ३१.)

एषु पूर्वप्रयोगार्हं परं स्यात् । दन्तानां राजा राजदन्तः ।

वा० । धर्मादिष्वनियमः । (1413.)

अर्थधर्मौ धर्मार्थौ । दम्पती । जम्पती । जायापती । जायाशब्दस्य जंभावो दम्भावश्च निपात्यते । राजदन्तादिः—२. १. ।

रघुवंशे—I. 35.

अथाभ्यर्च्य विधातारं प्रयतौ पुत्रकाम्यया ।
तौ दम्पती वसिष्ठस्य गुरोर्जग्मतुराश्रमम् ॥ 1014 ॥

जाया च पतिश्च दम्पती ।

भट्टिकाव्ये—III. 47.

दृष्ट्वोर्णुवानान् ककुभो बलौघान्
वितत्य शार्ङ्गं कवचं पिनह्य ।
तस्थौ सिसंग्रामयिषुः शितेषुः
सौमित्रिरक्षिभ्रुवमुज्जिहानः ॥ 1015 ॥

अक्षिणी च भ्रुवौ च अक्षिभ्रुवम्। 'अचतुर' (सू. 945) इत्यादिनिपातनात्साधुः।

भट्टिकाव्ये—IV. 27.

जेता यज्ञद्रुहां संख्ये धर्मसन्तानसूर्वने।
प्राप्य दारगवाणां यं मुनीनामभयं सदा ॥ 1016 ॥

दाराश्च गावश्च दारगवं 'अचतुर' (सू. 945) इत्यादिना निपातः।

माघे—XIX. 81.

कृत्तैः कीर्णा मही रेजे दन्तैर्गात्रैश्च दन्तिनाम्।
क्षुण्णलोकासुभिर्मृत्योर्मुसलोलूखलैरिव ॥ 1017 ॥

उलूखलमुसलमिति राजदन्तादिपाठेऽपि 'समुद्राभ्राद्घः' (सू. 3464) इत्यादिसौत्रादेव व्यभिचाराज्ज्ञापकात् अत्र परनिपातव्यत्ययः। उलूखलमुसले दधिपयआदित्वान्नैकवत्।

अस्मिन्नेव ग्रन्थे श्लो० 925. अग्रे वनस्याग्रेवणम्। परनिपातः। 'वनं पुरगा' (सू. 1039) इति णत्वम्।

भट्टिकाव्ये—V. 84.

कृते कानिष्ठिनेयस्य ज्यैष्ठिनेयं विवासितम्।
को नग्नमुषितप्रख्यं बहुमन्येत राघवम् ॥ 1018 ॥

नग्नमुषितप्रख्यम्। मुषितः हृतवस्त्रः। अत एव नग्नः। 'पूर्वकाल' (सू. 726) इत्यादिना समासः। अनेन पूर्वकालस्य परनिपातः।

माघे—XII. 50.

आलोकयामास हरिर्महीधरा-
नधिश्रयन्तीर्गजताः परःशताः।
उत्पातवातप्रतिकूलपातिनी-
रुपत्यकाभ्यो बृहतीः शिला इव ॥ 1019 ॥

परश्शताः। पञ्चमी इति योगविभागात्समासः। अनेनोपसर्जनस्यापि शतशब्दस्य परनिपातः।

किरातार्जुनीये—XIII. 26.

> महास्त्रपरिग्रहोरुतेजः
> स्फुरदुल्काकृति विक्षिपन्वनेषु।
> स जवेन पतन् परश्शतानां
> पततां व्रात इवारवं वितेने॥ 1020॥

शतात्परे परश्शताः। तेषाम्। पूर्ववत्।

भट्टिकाव्ये—XI. 41.

> गुरूरुचञ्चत्करकर्णजिह्वै-
> रवज्ञयाग्रांगुलिसंगृहीतैः।
> रक्षांस्यनायासहृतैरुपास्थः
> कपोललीनालिकुलैर्गजेन्द्रैः॥ 1021॥

अङ्गुलेरग्रमग्राङ्गुलिः। पूर्वनिपातः।

रघुवंशे—XIV. 21.

> पितुर्नियोगाद्वनवासमेवं
> निस्तीर्य रामः प्रतिपन्नराज्यः।
> धर्मार्थकामेषु समां प्रपेदे
> यथा तथैवावरजेषु वृत्तिम्॥ 1022॥

धर्मार्थकामेषु।

## ९०३। द्वन्द्वे घि। (२, २, ३२)

द्वन्द्वे घिसंज्ञं पूर्वं स्यात्। हरिश्च हरश्च हरिहरौ।

वा०। अनेकप्राप्तावेकत्र नियमः। अनियमः शेषे। (1410.)

हरिगुरुहराः। हरिहरगुरवः।

९०४ । अजाद्यदन्तम् । ( २. २. ३३ )

इदं द्वन्द्वे पूर्वं स्यात् । ईशकृष्णौ ।

वा० । बहुष्वनियमः ।

अश्वरथेन्द्राः इन्द्राश्वरथाः ।

अस्मिन्नेव ग्रन्थे श्लो० 690. नागेन्द्ररथाश्वम् ।

भट्टिकाव्ये—VII. 27.

एष शोकच्छिदो वीरान् प्रभो संप्रति वानरान् ।
धराशैलसमुद्राणामन्तगान्प्रहिणोम्यहम् ॥ 1023 ॥

धराशैलसमुद्राणाम् । धरासमुद्रशैलानाम् इति पाठान्तरम् । नियमो न ।

९०५ । अल्पाच्तरम् । ( २. २. ३४ )

शिवकेशवौ ।

वा० । ऋतुनक्षत्राणां समाक्षराणामानुपूर्व्येण । ( 1421. )

हेमन्तशिशिरवसन्ताः । कृत्तिकारोहिण्यौ । समाक्षराणां किम् । ग्रीष्मवसन्तौ ।

वा० । लघ्वक्षरं पूर्वम् । ( 1413. )

कुशकाशम् ।

वा० । अभ्यर्हितं च । ( 1412. )

तापसपर्वतौ ।

भट्टिकाव्ये—III. 28.

चक्रन्दुरुच्चैर्नृपतिं समेत्य
तं भ्रातरोऽभ्यर्णमुपागतास्ताः ।
पुरोहितामात्यमुखाश्च योधा
विवृद्धमन्युप्रतिपूर्णमन्याः ॥ 1024 ॥

पुरोहितामात्यौ । पुरोहितस्याभ्यर्हितत्वात्पूर्वनिपातः ।

वा० । वर्णानामानुपूर्व्येण । ( 1415. )

ब्राह्मणक्षत्रियविट्शूद्राः ।

वा० । भ्रातुर्ज्यायसः । ( 1426. )

युधिष्ठिरार्जुनौ ।

किरातार्जुनीये—I. 3.

द्विषां विघाताय विधातुमिच्छतो
रहस्यनुज्ञामधिगम्य भूभृतः ।
स सौष्ठवौदार्यविशेषशालिनीं
विनिश्चितार्थामिति वाचमाददे ॥ 1025 ॥

सुष्ठु भावः सौष्ठवम् । उदारस्य भावः औदार्यम् । तयोर्द्वन्द्वः । सौष्ठवौदार्ये । अत्रौदार्यशब्दस्याजाद्यदन्तत्वेऽपि 'लक्षणहेत्वोः क्रियायाः' ( सू. 3103 ) इत्यत्राल्पस्वरस्यापि हेतुशब्दस्य पूर्वनिपातमकुर्वता सूत्रकृतैव पूर्वनिपातस्यानित्यत्वसूचनान्न पूर्वनिपातः ।

अस्मिन्नेव ग्रन्थे श्लो०. 20. **मृदुपाणितलाङ्गुलिः** । तलश्च अङ्गुलिश्चेति द्वन्द्वः । तत्र घ्यन्ताल्पाच्तरयोरल्पाच्तरस्य पूर्वनिपातः । पाण्योस्तलाङ्गुलि पाणितलाङ्गुलि । मृदु पाणितलाङ्गुलि यस्याः सा इति जयमङ्गलः । पाणितले चाङ्गुलयश्च पाणितलाङ्गुलयः । तलशब्दस्याप्राण्यङ्गवाचित्वान्न द्वन्द्वैकवद्भावः । अङ्गुलिशब्दस्याल्पाच्तरत्वेऽपि पूर्वनिपातव्यभिचारः । 'समुद्राभ्राद्घः' ( सू. 3464 ) इति सौत्रव्यभिचारलिङ्गात् । मृदवः पणितलाङ्गुलयो यस्याः सा तथोक्ता । नपुंसकैकशेषपूर्वपदो बहुव्रीहिः इति मल्लिनाथः ।

मेघसंदेशे—I. 37.

गच्छन्तीनां रमणवसतिं योषितां तत्र नक्तं
रुद्धालोके नरपतिपथे सूचिभेद्यैस्तमोभिः ।
सौदामिन्या कनकनिकषस्निग्धया दर्शयोर्वीं
तोयोत्सर्गस्तनितमुखरो मा स्म भूर्विक्लवास्ताः ॥ 1026 ॥

तोयोत्सर्गश्च स्तनितं च तोयोत्सर्गस्तनिते । ताभ्यां मुखरः । अल्पाच्तरम् इति पूर्वनिपातो न । 'लक्षणहेत्वोः ।' (सू. 3103) इत्यत्र सूत्रे विपरीतनिर्देशेन पूर्वनिपातशास्त्रस्यानित्यत्वज्ञापनात् ।

अस्मिन्नेव ग्रन्थे श्लो० 690. **नागेन्द्ररथाश्वेन** मिश्रैः । बहुष्वनियमाद्धस्तिनां प्राधान्याच्च बह्वचोऽपि नागेन्द्रस्य पूर्वनिपातः ।

अस्मिन्नेव ग्रन्थे श्लो० 1024. **धराशैलसमुद्राणाम्** ।

अस्मिन्नेव ग्रन्थे श्लो० 60. **गुरुकाव्यौ** । 'लघ्वक्षरं पूर्वम्' (वा. 1413. सू. 905) इति पूर्वनिपातः ।

भट्टिकाव्ये—XV. 115.

> अङ्गदेनाहसातां तौ युध्यकम्पनकम्पनौ ।
> अभ्यार्दीद्वालिनः पुत्रं प्रजङ्घोऽपि समत्सरः ॥ 1027 ॥

अकम्पनश्च कम्पनश्च **अकम्पनकम्पनौ** । ज्येष्ठत्वात्पूर्वनिपातः ।

अस्मिन्नेव ग्रन्थे श्लो० 1013. लक्ष्मणश्च शत्रुघ्नश्च **लक्ष्मणशत्रुघ्नौ** । पूर्ववत् ।

चम्पूभारते— I. 55.

> क्षुत्पीडया स्तनरसे कलहं शिशूनां
> कुन्ती तदा शमयितुं कुचकुम्भयुग्मे ।
> एकं **धनञ्जययुधिष्ठिरयोश्च** भाग-
> मेकं समीरणसुतस्य च संविभेजे ॥ 1028 ॥

**धनञ्जययुधिष्ठिरयो**रिति ज्येष्ठस्य पूर्वनिपातो न ।

## ९०६ । द्वन्द्वश्च प्राणितूर्यसेनाङ्गानाम् । ( २. ४. २ )

एषां द्वन्द्व एकवत्स्यात् । पाणिपादम् । मार्दङ्गिकपाणविकम् । रथिकाश्वारोहम् ।

अस्मिन्नेव ग्रन्थे श्लो० 327. **वाक्त्वचेन** । वाक्च त्वक्चेति प्राण्यङ्गत्वादेकवत् । 'द्वन्द्वात्' ( सू. 930 ) इति टच् ।

नैषधे—IV. 25.

हृदि विदर्भसुवोऽश्रुभृति स्फुटं
विनमदास्यतया प्रतिबिम्बितम् ।
मुखदृगोष्ठमरोपि मनोभुवा
तदुपमाकुसुमान्यखिलाः शराः ॥ 1029 ॥

मुखं च दृशौ च ओष्ठं च मुखदृगोष्ठम् । प्राण्यङ्गत्वादेकवद्भावः ।

भट्टिकाव्ये—XV. 57.

अभैषुः कपयोऽन्वारत् कुम्भकर्णं मरुत्सुतः ।
शनैरबोधि सुग्रीवः सोऽलुञ्चीत्कर्णनासिकम् ॥ 1030 ॥

कर्णनासिकम् । प्राण्यङ्गत्वादेकवत् ।

भट्टिकाव्ये—III. 35.

श्रोत्राक्षिनासावदनं सरुक्मं
कृत्वाजिने प्राक्शिरसं विधाय ।
संचिन्त्य पात्राणि यथाविधान-
मृत्विग्जुहाव ज्वलितं चिताग्निम् ॥ 1031 ॥

श्रोत्रे अक्षिणी नासा वदनं च तथोक्तम् । प्राण्यङ्गत्वादेकवद्भावः ।

भट्टिकाव्ये—III. 34.

उदक्षिपन् पट्टदुकूलकेतू-
नवादयन्वेणुमृदङ्गकांस्यम् ।
कंबूंश्च तारानधमन्समन्तात
तथासयन् कुङ्कुमचन्दनानि ॥ 1032 ॥

वेणुमृदङ्गकांस्यं वंशमुरजकांस्यतालम् । 'जातिरप्राणिनाम्' (सू. 910) इत्येकवद्भावः । न पुनस्तूर्याङ्गत्वात् । तत्र हि प्राणिनां तूर्याङ्गानां द्वन्द्वैकवद्भावः यथा-मार्दङ्गिकपाणविकमिति ।

अस्मिन्नेव ग्रन्थे श्लो० 647. अश्वीयं च राजन्यकं च हास्तिकं च अश्वीय-राजन्यकहास्तिकम् । सेनाङ्गत्वाद् द्वन्द्वैकवद्भावः ।

भट्टिकाव्ये—III. 55.

ऊर्जस्वलं हस्तितुरङ्गमेत-
दमूनि रत्नानि च राजभाञ्जि ।
राजन्यकं चैतदहं क्षितीन्द्र-
स्त्वयि स्थिते स्यामिति शान्तमेतत् ॥ 1033 ॥

हस्तिनश्च तुरङ्गाश्च **हस्तितुरङ्गम्** । सेनाङ्गत्वादेकवद्भावः ।

भट्टिकाव्ये—IV. 40.

तौ चतुर्दशसाहस्रबलौ निर्ययतुस्ततः ।
**पारश्वधिकधानुष्कशाक्तीकप्रासिका**न्वितौ ॥ 1034 ॥

**पारश्वधिकधानुष्कशाक्तीकप्रासिकम्** । सेनाङ्गत्वादेकवद्भावः ।

अस्मिन्नेव ग्रन्थे श्लो० 690. **नागेन्द्ररथाश्वम्** । सेनाङ्गत्वादेकवद्भावः ।

अस्मिन्नेव ग्रन्थे श्लो० 786. **रथवाजीति** द्वन्द्वैकवद्भावः । तेन सहिता नागा इति शाकपार्थिवादित्वात्समासः । अन्यथा एकवद्भावः स्यात् ।

९१० । **जातिरप्राणिनाम्** । ( २. ४. ६. )

प्राणिवर्जजातिवाचिनां द्वन्द्व एकवत्स्यात् । धानाशष्कुलि । प्राणिनां तु विट्शूद्राः । द्रव्यविशेषविवक्षायां तु बदरामलकानि ।

भट्टिकाव्ये—VIII. 30.

* तां विप्रवदमानैरैरैत्संयुक्तां ब्रह्मराक्षसैः ।
तथावगिरमाणैश्च पिशाचैर्**मांसशोणितम्** ॥ 1035 ॥

मांसानि शोणितानि च **मांसशोणितम्** । द्वन्द्वैकवद्भावः । गवाश्वादित्वात्साधुः ।

अस्मिन्नेव ग्रन्थे श्लो० 333. पुष्पाणि च फलानि च **पुष्पफलम्** । एकवद्भावः ।

* " ऐद्विप्रवदमानैस्तां संयुक्तां ब्रह्मराक्षसैः " इति पाठान्तरम् ।

भट्टिकाव्ये—II. 2३.

तं यायजूकाः सह भिक्षुमुख्यै-
स्तपःकृशाः शान्त्युदकुम्भहस्ताः ।
यायावराः पुष्पफलेन चान्ये
प्रागर्चुरर्च्यं जगदर्चनीयम् ॥ 1036 ॥

पुष्पैश्च फलैश्च पुष्पफलेन । बहुप्रकृतिकद्वन्द्वैकवद्भावः अप्राणिनाम् इति प्रतिषेधे श्रूयमाणं बहुत्वं विधावपि बहुत्वं गमयतीति न्यासकारवचनात् ।

भट्टिकाव्ये—III. 38.

उच्चिक्यिरे पुष्पफलं वनानि
सस्नुः पितॄन् पिप्रियुरापगासु ।
आरेमुरित्वा पुलिनान्यशङ्कं
छायां समाश्रित्य विशश्रमुश्च ॥ 1037 ॥

पूर्ववत् ।

अस्मिन्नेव ग्रन्थे श्लो० 1032. वेणुमृदङ्गकांस्यम् । तूर्याङ्गत्वे मार्दङ्गिकपाणविकम् इति स्यात् ।

अस्मिन्नेव ग्रन्थे श्लो० 971. मृच्च अलाबु च मृदलाबु ।

अस्मिन्नेव ग्रन्थे श्लो० 331. खड्गमुसलप्रासचक्रबाणगदाः । खड्गादीनां जातिवचनत्वेऽपि जातिप्राधान्यत्यकारेण नियतद्रव्यविवक्षया निर्देशात् बदरामलकानीत्यादिवत् जातिरप्राणिनाम् इत्येकवद्भावो न कृतः । कृते वा नपुंसकलिङ्गप्रसङ्गात् स्त्रीलिङ्गनिर्देशो न स्यात् । अथवा खड्गादीनां बाणान्तानां द्वन्द्वैकवद्भावं कृत्वा पश्चात्तेन सहिता गदेति शाकपार्थिवादित्वात्समासः ।

भट्टिकाव्ये—XIV. 23.

निरासू राक्षसा बाणान् प्रजहुः शूलपट्टिशान् ।
असींश्च वाहयांचक्रुः पाशैश्चाचक्रुषुस्ततैः ॥ 1038 ॥

शूलपट्टिशान् शूलसहितान्पट्टिशान् । शाकपार्थिवादित्वात्तत्पुरुषः । द्वन्द्वे त्वनेन एकवद्भावः स्यात् ।

भट्टिकाव्ये—XV. 42.

ते व्यरासिषुराहन्त राक्षसं चाप्यविप्लवन् ।
अवभासन्स्वकां शक्तिं द्रुमशैलं व्यकारिषुः ॥ 1039 ॥

## ९११ । विशिष्टलिङ्गो नदीदेशोऽग्रामाः । (२. ४. ७)

ग्रामवर्जनदीदेशवाचिनां भिन्नलिङ्गानां समाहारे द्वन्द्व एकवत्स्यात् । उद्ध्यश्चेरावती च उद्ध्येरावति । गङ्गा च शोणश्च गङ्गाशोणम् । कुरवश्च कुरुक्षेत्रं च कुरुकुरुक्षेत्रम् । भिन्नलिङ्गानां किम् । गङ्गायमुने । मद्रकेकयाः । अग्रामाः किम् । जाम्बवं नगरम् शाल्किनी ग्रामः जाम्बवशाल्किन्यौ ।

## ९१३ । येषां च विरोधः शाश्वतिकः । (२. ४. ९)

एषां प्राग्वत् । अहिनकुलम् । गोव्याघ्रम् । काकोलूकम् ।

अस्मिन्नेव ग्रन्थे श्लो० 230. देवाश्चासुराश्च देवासुरास्तैर्देवासुरैः । नैकवद्भावः । एषां यतः कार्यत एव विरोधो, न गोव्याघ्रादिवत् शाश्वतिकः ।

## ९१५ । गवाश्वप्रभृतीनि च । (२. ४. ११)

यथोच्चरितानि साधूनि स्युः । गवाश्वम् दासीदासम् इत्यादि ।
गवाश्वादिः—२. १६.

अस्मिन्नेव ग्रन्थे श्लो० 735. **मांसशोणितम् ।**

अस्मिन्नेव ग्रन्थे श्लो० 1035. **मांसशोणितम् ।**

## ९१६ । विभाषा वृक्षमृगतृणधान्यव्यञ्जनपशुशकुन्यश्ववडवपूर्वापराधरोत्तराणाम् । (२. ४. १२)

वृक्षादीनां सप्तानां द्वन्द्वः अश्ववडवेत्यादि द्वन्द्वत्रय च प्राग्वद्वा । प्लक्षन्यग्रोधम् प्लक्षन्यग्रोधाः । रुरुपृषतम् रुरुपृषताः । कुशकाशं कुशकाशाः । व्रीहियवम् व्रीहि-

यवाः । दधिघृतम् दधिघृते । गोमहिषम् गोमहिषाः । शुकबकम् शुकबकाः । अश्ववडवम् अश्ववडवौ । पूर्वापरम् पूर्वापरे । अधरोत्तरम् अधरोत्तरे ।

वा० । फलसेनावनस्पतिमृगशकुनिक्षुद्रजन्तुधान्यतृणानां बहुप्रकृतिरेव द्वन्द्वः एकवत् इति वाच्यम् । ( 1540. )

बदराणि चामलकानि च बदरामलकम् 'जातिरप्राणिनाम्' (सू. 910) इत्येकवद्भावः । नेह, बदरामलके रथिकाश्वारोहौ प्लक्षन्यग्रोधौ इत्यादि । अत्र सूत्रे येऽप्राणिनः तेषां ग्रहणं 'जातिरप्राणिनाम् ।' (सू. 910) इति नित्ये प्राप्ते विकल्पार्थम् । पशुग्रहणं हस्त्यादिषु सेनाङ्गत्वान्नित्ये प्राप्ते 'मृगाणां मृगैरेव शकुनीनां तैरेवोभयत्र द्वन्द्वः, अन्यैस्तु सहेतरेतरयोग एव' इति नियमार्थं मृगशकुनिग्रहणम् । एवं पूर्वापरमधरोत्तरमित्यपि । अश्ववडवग्रहणं तु पक्षे नपुंसकत्वार्थम्। अन्यथा परत्वात् 'पूर्ववदश्ववडवौ' ( सू. 813 ) इति स्यात् ।

किरातार्जुनीये—XV. 50.

घनं विदार्यार्जुनबाणपूगं
ससारबाणोऽयुगलोचनस्य ।
घनं विदार्यार्जुनबाणपूगं
ससार बाणोऽयुगलोचनस्य ॥ 1040 ॥

विदार्यार्जुनबाणपूगम् । द्वन्द्वैकवद्भावः ।

भट्टिकाव्ये— III. 26.

बन्धूनशङ्किष्ट समाकुलत्वा-
दासेदुषः स्नेहवशादपायम् ।
गोमायुसारङ्गगणाश्च संयक्
नायासिषुर्भीममरासिषुश्च ॥ 1041 ॥

गोमायुश्च सारङ्गाश्च गोमायुसारङ्गम् गोमायुसारङ्गा वा । विभाषैकवद्भावः ।

भट्टिकाव्ये— V. 12.

आमिक्षीयं **दधिक्षीरं** पुरोडाश्यं तथौषवम् ।
हविर्हैयङ्गवीनं च नाप्युपघ्नन्ति राक्षसाः ॥ 1042 ॥

दधि च क्षीरं च **दधिक्षीरम्** । वैभाषिको व्यञ्जनद्वन्द्वः ।

भट्टिकाव्ये —XIV. 89.

चक्राणाशङ्कितो योद्धुमुत्सेहे च महारथः ।
नियेमिरे च योद्धारश्चक्रुपे **चाश्वकुञ्जरम्** ॥ 1043 ॥

**अश्वकुञ्जरम्** । पशुद्वन्द्वैकवद्भावः ।

भट्टिकाव्ये—XVII. 8.

अस्तुवन्बन्दिनः शब्दानन्योन्यं चोदभावयन् ।
अनदन् सिंहनादांश्च प्राद्रेकत **हयद्विपम्** ॥ 1044 ॥

**हयद्विपम्** । पशुद्वन्द्वस्य विभाषैकवद्भावः ।

अस्मिन्नेव ग्रन्थे श्लो० 475. **वाजिकुञ्जरम्** । पूर्ववत् ।

भट्टिकाव्ये—VI. 76.

सर्वत्र दयिताधीनं सुव्यक्तं रामणीयकम् ।
येन जातं प्रियापाये कद्वदं **हंसकोकिलम्** ॥ 1045 ॥

हंसाश्च कोकिलाश्च **हंसकोकिलम्** । शकुनिद्वन्द्वः ।

**९१७ । विप्रतिषिद्धं चानधिकरणवाचि । ( २. ४. १३ )**

विरुद्धार्थानामद्रव्यवाचिनां द्वन्द्व एकद्वा स्यात् । शीतोष्णम् शीतोष्णे ।

भट्टिकाव्ये—VII. 10.

कुर्याद्योगिनमप्येष स्फूर्जावान्परिमोहिणम् ।
त्यागिनं **सुखदुःखस्य** परिक्षेप्यम्भसामृतुः ॥ 1046 ॥

**सुखदुःखस्य** सुखदुःखयोः । विकल्पादेकवद्भावः ।

39

अस्मिन्नेव ग्रन्थे श्लो० 219. हिताहितम् हिताहिते । द्वन्द्वैकवद्भावः ।

माघे—XVI. 44.

अनपेक्ष्य गुणागुणं जनः
स्वरुचिं निश्चयतोऽनुधावति ।
अपहाय महीशमार्चिच-
त्सदसि त्वां ननु भीमपूर्वजः ॥ 1047 ॥

गुणागुणम् । पूर्ववत् ।

माघे—VI. 44.

समय एव करोति बलाबलं
प्रणिगदन्त इतीव शरीरिणाम् ।
शरदि हंसरवाः परुषीकृत-
स्वरमयूरमयू रमणीयताम् ॥ 1048 ॥

बलाबलम् । पूर्ववत् ।

## ९१८ । न दधिपयआदीनि । ( २. ४. १४ )

एतानि नैकवत्स्युः । दधिपयआदिः —२. १७. दधि च पयश्च दधिपयसी । व्यञ्जनद्वन्द्वैकवद्भावो न । इध्माबर्हिषी । निपातनाद्दीर्घः । ऋक्सामे । वाङ्मनसे । ‘अचतुर’ ( सू. 945 ) इत्यादिना समासान्तोऽच् ।

रघुवंशे—X. 15.

प्रणिपत्य सुरास्तस्मै शमयित्रे सुरद्विषाम् ।
अथैनं तुष्टुवुः स्तुत्यमवाङ्मनसगोचरम् ॥ 1049 ॥

वाक्च मनश्च वाङ्मनसे । ‘अचतुर’ (सू. 945) इत्यादिनाच् । अनेन नैकवत् ।

## ९२१ । आनङ् ऋतो द्वन्द्वे । ( ६. ३. २५ )

विद्यायोनिसंबन्धवाचिनामृदन्तानां द्वन्द्वे आनङ् स्यात् । होतापोतारौ । मातापितरौ । ‘पुत्रेऽन्यतरस्याम्’ ( सू. 980 ) इत्यतो मण्डूकप्लुत्या पुत्र इत्यनुवृत्तेः पितापुत्रौ ।

अनर्घराघवे—VI. 9.

वत्स, साधु समर्थयसे। किं पुनः स्वयमङ्गदो गर्भरूपोऽभिनवोज्ज्वलयौवराज्य-सुखोपलालितो दुरपवाह एव। ये चास्य मातापितृबन्धवस्ते सुग्रीवस्यापि संबन्धिनः कथमेनमुत्तिष्ठमानमनुजानीयुः ॥ 1050 ॥

माता च पिता च मातापितरौ।

९२२। देवताद्वन्द्वे च। (६. ३. २६)

इहोत्तरपदे परे आनङ्। मित्रावरुणौ।

वा०। वायुशब्दप्रयोगे प्रतिषेधः। (3907.)

अग्निवायू। वाय्वग्नी। 'देवताद्वन्द्वे च' (सू. 1239) इति उभयपदवृद्धिः। आग्निमारुतम्। ऐन्द्राबार्हस्पत्यम्।

चम्पूभारते—XI. 14.

रिक्ते पुष्पैः सिद्धगन्धर्ववर्गे
मुक्त्वा मुक्त्वा मूर्ध्नि वीरस्य तस्य।
द्वावेवाभ्रे चोसदां गोष्ठिमध्ये
पूषाचन्द्रौ पुष्पवन्तावभूताम् ॥ 1051 ॥

पूषा च चन्द्रश्च पूषाचन्द्रौ। आनङ्।

भट्टिकाव्ये—II. 41.

इतः स मित्रावरुणौ किमेतौ
किमश्विनौ सोमरसं पिपासू।
जनं समस्तं जनकाश्रमस्थं
रूपेण तावौजिहतां नृसिंहौ ॥ 1052 ॥

मित्रश्च वरुणश्च मित्रावरुणौ। आनङ्।

चम्पूरामायणे—V. 40.

नेतुं शोकरसं निशाचरपतेर्हन्तुं चमूं रक्षसां
तस्यान्तःपुरयोषितां रचयितुं मानं विना रोदनम्।

सूर्याचन्द्रमसोः प्रवेशविकलां लङ्कापुरीमग्निना
शुद्धां कर्तुममुष्य वासवजितो जातो रणस्तोरणे ॥ 1053 ॥

सूर्याचन्द्रमसोः ।

अनर्घराघवे—VII. 133.

ईदृशाः प्रागजायन्त राजानो यदिहान्वये ।
तद्वसिष्ठचरोरैन्द्राबार्हस्पत्यस्य वैभवम् ॥ 1054 ॥

इन्द्रश्च बृहस्पतिश्च इन्द्राबृहस्पती । आनङ् । इन्द्राबृहस्पती देवते यस्य ऐन्द्राबार्हस्पत्यम् । उभयपदवृद्धिः ।

## ९२३ । ईदग्नेः सोमवरुणयोः । ( ६. ३. २७ )

देवताद्वन्द्व इत्येव । इतीत्वम् । अग्निश्च सोमश्च अग्नीषोमौ । अग्नीवरुणौ । सोमवरुणयोः किम् ।

उत्तररामचरिते—V. 45.

देवस्त्वां सविता धिनोतु समरे गोत्रस्य यस्ते पिता
त्वां मैत्रावरुणोऽभिनन्दतु गुरुर्यस्ते गुरूणामपि ।
ऐन्द्रं वैष्णवमाग्निमारुतमथो सौपर्णमोजस्तु ते
देयादेव च रामलक्ष्मणतनुर्ज्याघोषमन्त्रो जयम् ॥ 1055 ॥

अग्निश्च मरुच्च अग्नामरुतौ । अत्र ईत्वं न । आनङ् । तयोरिदमाग्निमारुतम् । उभयपदवृद्धिः । 'इद्वृद्धौ' ( सू. 925 ) इति इत् ।

## ९२४ । अग्नेस्तुत्स्तोमसोमाः । ( ७. ३. ७२ )

अग्नेः परेषामेषां सस्य षः स्यात्समासे । अग्निष्टुत् । अग्निष्टोमः । अग्नीषोमौ ।

भट्टिकाव्ये—IX. 79.

अग्निष्टोमादिसंस्थेषु ज्योतिष्टोमादिषु द्विजान् ।
योऽरक्षीत्तस्य दूतोऽयं मानुषस्येति चावदत् ॥ 1056 ॥

षत्वम् ।

## ९२५ । इद्वृद्धौ । ( ६. ३. २८ )

वृद्धिमत्युत्तरपदे अग्नेरिदादेशः स्याद्देवताद्वन्द्वे । अग्निमरुतौ देवते अस्य आग्निमारुतं कर्म । अग्नीवरुणौ देवते अस्य आग्निवारुणम् । 'देवताद्वन्द्वे च' ( सू. 1239 ) इत्युभयपदवृद्धिः ।

अस्मिन्नेव ग्रन्थे श्लो० 1055. आग्निमारुतम् ।

## ९२६ । दिवो द्यावा । ( ६. ३. २९ )

देवताद्वन्द्वे उत्तरपदे । द्यावाभूमी । द्यावाक्षामे ।

चम्पूभारते—II. 71.

**द्यावाभूमी** निरुन्धन् यदुबलरजसां श्रेणिभिः सीरपाणि-
वेगादागात्स वीरः स्वविनयगुरुणा शौरिणान्वीयमानः ।
आहारश्चायुधं च द्विषदवमतये येन संसेव्यमाने
ते द्वे हालाहलत्वं रणभुवि वहतो नामतः कृत्यतश्च ॥ 1057 ॥

## ९२७ । दिवसश्च पृथिव्याम् । ( ६. ३. ३० )

दिव इत्येव । चाद्द्यावा । द्यौश्च पृथिवी च दिवस्पृथिव्यौ । द्यावापृथिव्यौ ।

अनर्घराघवे—I. 40.

ग—अलं च ते रामभद्रेऽपि बालोऽयमित्यलीकसंभावनया । **दिवस्पृथिव्यो-स्तिमिरतिरस्करिणीं** तरणिरणुतरोऽपि तेजसा तिरस्करोति ॥ 1058 ॥

**दिवस्पृथिव्यौ ।**

रघुवंशे—X. 55.

स तेजो वैष्णवं पत्न्योर्विभेजे चरुसंज्ञितम् ।
**द्यावापृथिव्योः** प्रत्यग्रमहर्पतिरिवातपम् ॥ 1059 ॥

द्यौश्च पृथिवी च **द्यावापृथिव्यौ** । चकाराद्दिव्शब्दस्य द्यावादेशः ।

## ९२८ । उषासोषसः । ( ६. ३. ३१ )

उषस्शब्दस्योषासादेशो देवताद्वन्द्वे। उषासासूर्यम्।

९२९। मातरपितरावुदीचाम्। (६. ३. ३२)

मातरपितरौ। उदीचां किम्। मातापितरौ।

९३०। द्वन्द्वाच्चुदषहान्तात्समाहारे। (५. ४. १०६)

चवर्गान्ताद्दषहान्ताच्च द्वन्द्वाट्टच् स्यात्समाहारे। वाक्च त्वक्च वाक्त्वचम्। त्वक्स्रजम्। शमीदृषदम्। वाक्त्विषम्। छत्रोपानहम्।

अस्मिन्नेव ग्रन्थे श्लो० 327. वाक्त्वचम्।

भट्टिकाव्ये—IV. 9.

ऋग्यजुषमधीयानान्सामान्यांश्च समर्चयन्।
बुभुजे देवसात्कृत्वा शूल्यमुख्यं च होमवान्॥ 1060॥

ऋक्च यजुश्च ऋग्यजुषम्। 'अचतुर' (सू. 945) इत्यादिना निपातितम्। अनेन टच्।

वा०। सर्वो द्वन्द्वो विभाषैकवद्भवति।

अस्मिन्नेव ग्रन्थे श्लो० 396. सौमित्रिश्च सीता च सौमित्रिसीतम्। अन्यथानुचरशब्दस्य पचादिषु चरडिति टित्करणात्स्त्रियां ङीपि 'नद्यृतश्च' (सू. 833) इति कप्प्रसङ्गात्। समासान्तानित्यत्वेऽपि पुंवद्भावानुपपत्तेरिति मल्लिनाथः। सौमित्रिसीतानुचरस्य। सौमित्रिश्च सीता च सौमित्रिसीते। अनुचरतीत्यनुचरः। स्त्रियामनुचरी। 'भिक्षासेना' (सू. 2931) इत्यादिना टः। अनुचरश्चानुचरी चानुचरौ। 'पुमान्स्त्रिया' (सू. 933) इत्येकशेषः। सौमित्रिसीते अनुचरौ यस्य तथोक्तस्येति जयमङ्गलः।

॥ इति द्वन्द्वसमासप्रकरणम्॥

## ॥ अथैकशेषप्रकरणम् ॥

---

'सरूपाणामेकशेष एकविभक्तौ' (सू. 188) रामौ रामाः।
अस्मिन्नेव ग्रन्थे श्लो० 473. राघवौ। तयोः।

वा०। विरूपाणामपि समानार्थकानाम्। (747.)

वक्रदण्डश्च कुटिलदण्डश्च वक्रदण्डौ कुटिलदण्डौ।

१३३। पुमान्स्त्रिया। (१. २. ६७)

स्त्रिया सहोक्तौ पुमान् शिष्यते। हंसी च हंसश्च हंसौ।

भट्टिकाव्ये—VIII. 48.

स्वं कर्म कारयन्नास्ते निश्चिन्तो यज्ञषध्वजः।
स्वार्थं कारयमाणाभिर्यूनो मदविमोहितान् ॥ 1061 ॥

युवतयो युवानश्च युवानः तान्। एकशेषः।

चम्पूभारते—I. 6.

दीप्रैरगारमणिभिर्दिवसायमानां
निश्चिन्वते मनसि यत्र निशां युवानः।
कार्तान्तिकैरखिलकालनिवेदनाय
घण्टामणेरभिहतस्य घनारवेण ॥ 1062 ॥

युवानः। पूर्ववत्।

अनर्घराघवे—IV. 24.

भस्माङ्कुरेति खुरलीकलहे कुमार-
मप्याक्षिपन् परुषरोषरसान्धचेताः।

दृष्टोऽस्मि यः कृतमिथोहमितं शिवाभ्यां
तच्चापभङ्गमपि हा स्वकृतः शृणोमि ॥ 1063 ॥

शिवश्च शिवा च शिवौ । एकशेषः ।

९३४ । भ्रातृपुत्रौ स्वसृदुहितृभ्याम् । (१. २. ६८)

भ्राता च स्वसा च भ्रातरौ । पुत्रश्च दुहिता च पुत्रौ ।

कुमारसंभवे-- I. 27.

महीभृतः पुत्रवतोऽपि दृष्टि-
स्तस्मिन्नपत्ये न जगाम तृप्तिम् ।
अनन्तपुष्पस्य मधोर्हि चूते
द्विरेफमाला सविशेषसङ्गा ॥ 1064 ॥

पुत्राश्च दुहितरश्च पुत्राः । एकशेषः ।

कुमारसंभवे—VII. 4.

एकैव सत्यामपि पुत्रपङ्क्तौ
चिरस्य दृष्टेव मृतोत्थितेव ।
आसन्नपाणिग्रहणेति पित्रो-
रुमा विशेषोच्छ्वसितं बभूव ॥ 1065 ॥

पूर्ववत् ।

चम्पूभारते—II. 13.

ग—इति व्याजस्तुतिवचनेन पौरवान्ते भार्गवान्तेवसता प्रधर्षितः पार्षदः तेन सार्धमर्धराज्यपरिवर्तनमात्रमङ्गीकृत्य कृत्यविदां ककुदस्तौ जम्भरिपुकुम्भसंभवावुभावप्युपयमं प्रवर्तयितुं कृतनिवर्तनः सोमकान्तिकोपास्यौ पुत्रौ भागीरथीवनावसथस्य याजस्य मुनिराजस्य याजनानुग्रहेण परिजग्राह ॥ 1066 ॥

पुत्रश्च दुहिता च पुत्रौ ।

९३५ । नपुंसकमनपुंसकेनैकवच्चास्यान्यतरस्याम् । (१. २. ६९)

अक्लीबेन सहोक्तौ क्लीबं शिष्यते तच्च वा एकवत्स्यात् तल्लक्षण एव विशेषश्चेत् । शुक्लः पटः शुक्ला शाटी शुक्लं वस्त्रम् तदिदं शुक्लं, तानीमानि शुक्लानि ;

भट्टिकाव्ये—II. 1.

वनस्पतीनां सरसां नदीनां
तेजस्विनां कान्तिभृतां दिशां च ।
निर्याय तस्याः स पुरः समन्ता-
च्छ्रियं दधानां शरदं ददर्श ॥ 1067 ॥

वनस्पतीनां पुल्लिङ्गानां, सरसां नपुंसकलिङ्गानां, नदीनां स्त्रीलिङ्गानां, दिशां स्त्रीलिङ्गानां च **तेजस्विनां कान्तिभृतां** इति च विशेषणे । नपुंसकैकशेषः ।

अस्मिन्नेव ग्रन्थे श्लो० 20. **मृदुपाणितलाङ्गुलिः** । मृदुनी पाणितले अङ्गुल्यश्च यस्याः सा तथोक्ता । नपुंसकैकशेषपूर्वपदो बहुव्रीहिः ।

किरातार्जुनीये—XVI. 8.

रथाङ्गसंक्रीडितमश्वहेषा
बृहन्ति मत्तद्विपबृंहितानि ।
संघर्षयोगादिव **मूर्च्छितानि**
ह्रादं निगृह्णन्ति न दुन्दुभीनाम् ॥ 1068 ॥

रथाङ्गसंक्रीडितं नपुंसकलिङ्गम् । अश्वहेषा स्त्रीलिङ्गम् । बृंहितानि नपुंसकलिङ्गम् । **मूर्च्छितानि** सन्ति । नपुंसकैकशेषः ।

अस्मिन्नेव ग्रन्थे श्लो० 1057. आहारः पुल्लिङ्गः । आयुधम् नपुंसकलिङ्गम् । **संसेव्यमाने ते द्वे** इति नपुंसकैकशेषः ।

## ९३६ । पिता मात्रा । (१. २. ७०)

मात्रा सहोक्तौ पिता वा शिष्यते । माता च पिता च पितरौ । मातापितरौ वा ।

अनर्घराघवे—IV. 30.

नाराचैः कृतवीर्यनन्दनवधूबाष्पप्रियंभावुकै-
रुत्पाद्य क्षतजोदमर्णवमथ न्युप्तं **पितृभ्यां** पयः ।

सेनान्यस्य समस्तबाहुजभुजः क्रोधस्य निर्वास्यतः
भुन्दानो धनुरिन्दुशेखरमहो जातो भवानिन्धनम् ॥ 1069 ॥

माता च पिता च पितरौ ताभ्याम् ।

अस्मिन्नेव ग्रन्थे श्लो० 1065. पित्रोः । पूर्ववत् ।

कुमारसंभवे—II. 7.

स्त्रीपुंसावात्मभागौ ते भिन्नमूर्तेः सिसृक्षया ।
प्रसूतिभाजः सर्गस्य तावेव पितरौ स्मृतौ ॥ 1070 ॥

अस्मिन्नेव ग्रन्थे श्लो० 204. पितरौ ।

९३७ । श्वशुरः श्वश्र्वा । ( १. २. ७१ )

श्वशुरो वा शिष्यते । श्वश्रूश्च श्वशुरश्च श्वशुरौ श्वश्रूश्वशुरौ ।

९३८ । त्यदादीनि सर्वैर्नित्यम् । ( १. २. ७२ )

सर्वैः सहोक्तौ त्यदादीनि नित्यं शिष्यन्ते । स च देवदत्तश्च तौ ।

वा० । त्यदादीनां मिथः सहोक्तौ यत्परं तच्छिष्यते । ( 801. )

स च यश्च यौ । पूर्वशेषोऽपि दृश्यत इति भाष्यम् । स च यश्च तौ ।

अस्मिन्नेव ग्रन्थे श्लो० 633. युवां त्वां नक्तं चेत्यर्थः । त्यादादीनि सर्वैर्नित्यम् इत्येकशेषः ।

नैषधे—III. 102.

तुल्यावयोर्मूर्तिरभून्मदीया
दग्धा परं सास्य न ताप्यतेऽपि ।
इत्यभ्यसूयन्निव देवतापं
तस्यातनुस्त्वद्विरहाद्विधत्ते ॥ 1071 ॥

आवयोः नलस्य मम चेत्यर्थः । त्यदादेरेकशेषः ।

अस्मिन्नेव ग्रन्थे श्लो० 877. भवती च भवाश्च भवत्यः । पूर्वशेषोऽपि दृश्यत इति भाष्यम् । अतः पूर्वशेषः ।

९३९ । ग्राम्यपशुसंघेष्वतरुणेषु स्त्री । ( १. २. ७३ )

एषु सहविवक्षायां स्त्री शिष्यते । 'पुमान् स्त्रिया' ( सू. 933 ) इत्यस्यापवादः । गाव इमाः । ग्राम्य इति किम् । रुरव इमे । पशुग्रहणं किम् । ब्राह्मणा इमे । संघेषु किम् । एतौ गावौ । अतरुणेषु किम् । वत्सा इमे ।

॥ इत्येकशेषसमासप्रकरणम् ॥

---

## ॥ अथ सर्वसमासान्तप्रकरणम् ॥

---

### ९४० । ऋक्पूरब्धूःपथामानक्षे । ( ५. ४. ७४ )

अ अनक्षे इति च्छेदः । ऋगाद्यन्तस्य समासस्य अप्रत्ययोऽन्तावयवः स्यात् । अक्षे या धूस्तदन्तस्य तु न । अर्धर्चः । विष्णोः पूः विष्णुपुरम् । विमलापं सरः । राजधुरा । अक्षे तु अक्षधूः । दृढधूरक्षः । सखिपथौ । रम्यपथो देशः ।

भट्टिकाव्ये—II. 42.

अजिग्रहत्तं जनको धनुस्तत्
येनार्दिदद्दैत्यपुरः पिनाकी ।
जिज्ञासमानो बलमस्य बाह्वो-
र्हसन्नभाङ्क्षीद्रघुनन्दनस्तत् ॥ 1072 ॥

दैत्यानां पुरो दैत्यपुरः । समासान्तविधेरनित्यत्वात् नाकारप्रत्ययः ।

नैषधे—II. 89.

यदगारघटाट्टकुट्टिम-
स्रवदिन्दूपलतुन्दिलापया ।
मुमुचे न पतिव्रतौचिती
प्रतिचन्द्रोदयमभ्रगङ्गया ॥ 1073 ॥

**तुन्दिलापया** बहुव्रीहिः ।

चम्पूरामायणे—I. 13.

सन्तापघ्नं सकलजगतां शार्ङ्गचापाभिरामं
लक्ष्मीविद्युल्लसितमतसीगुच्छसच्छायकायम् ।
वैकुण्ठाख्यं मुनिजनमनश्चातकानां शरण्यं
कारुण्यापं त्रिदशपरिषत्कालमेघं ददर्श ॥ 1074 ॥

**कारुण्यापम्** । बहुव्रीहिः ।

माघे—III. 81.

लवङ्गमालाकलितावतंसा-
स्ते नालिकेरान्तरपः पिबन्तः ।
आस्वादितार्द्रक्रमुकाः समुद्रा-
दभ्यागतस्य प्रतिपत्तिमापुः ॥ 1075 ॥

नालिकेरान्तरित्यव्ययम् । नालिकेरफलाभ्यन्तर इत्यर्थः । अप इति पृथक्पदम् । समासे तु समासान्तप्रसङ्गात् ।

अस्मिन्नेव ग्रन्थे श्लो० 156. विगता धूरग्रं यस्याः सा **विधुरा** । समासान्त अकारप्रत्ययः ।

माघे—XVIII. 7.

संक्रीडन्ती तेजिताश्वस्य रागा-
दुद्यम्यारादग्रकायोत्थितस्य ।
रंहोभाजामक्षधूः स्यन्दनानां
हाहाकारं प्राजितुः प्रत्यनन्दत् ॥ 1076 ॥

अक्षस्य धूरक्षधूः । अनक्ष इति निषेधान्न समासान्तः ।

चम्पूभारते—II. 36.

ग—ततस्ते वन्याशनैर्धन्या धारितवसुधासुधाशनाकृतयः प्राचुपमिव मकवला-क्रान्तां पातालभुवमिव प्रत्यहं वर्धमानबलिशोकामङ्गराज्यसीमामिव सूर्यतनयानु-कूलप्रतिष्ठां **रविरथाक्षधुरमिवैकचक्रां** पुरीं क्रमादाक्रम्य कस्यचिद्गृहमेधिनो गृहमध्य-मेत्य सुखमध्यवात्सुः ॥ 1077 ॥

**रविरथाक्षस्य धूः रविरथाक्षधूः** ताम् ।

अस्मिन्नेव ग्रन्थे श्लो० 629. श्रुत्योः पन्थाः **श्रुतिपथः** । अकारप्रत्ययः । तत्पुरुषः ।

रघुवंशे—IV. 38.

स तीर्त्वा कपिशां सैन्यैर्बद्धद्विरदसेतुभिः ।
**उत्कलादर्शितपथः** कलिङ्गाभिमुखो ययौ ॥ 1078 ॥

उत्कलै राजभिरादर्शितः पन्था यस्य सः **उत्कलादर्शितपथः** । बहुव्रीहिः ।

नैषधे—II. 73.

अथ भीमभुजेन पालिता
नगरी मञ्जुरसौ पराजिता ।
पतगस्य जगाम दृक्पथं
हिमशैलोचितसौधराजिता ॥ 1079 ॥

दृशोः पन्थाः दृक्पथः तम् । तत्पुरुषः । समासान्तः ।

अस्मिन्नेव ग्रन्थे श्लो० 735. सर्वः पन्था इति सर्वपथः । 'पूर्वकाल' (सू. 726) इत्यादिना समासः । अनेन समासान्तोऽकारः । सर्वपथान् व्याप्नोतीति सर्वपथीनम् । 'तत्सर्वादेः' (सू. 1808) इति खः ।

अनर्घराघवे—IV. 66.

ग—सखे सीरध्वज, रघुराजधर्माधिकारसर्वधुरीणः शिशुरपि वत्सोऽयम् । तस्मिन् जरसा दुर्वहं वर्णाश्रमभरमारोप्य वयमपि क्वापि तपोवने दिलीपकुलोचितेन विधिना शेषमायुरुपभुञ्जामहे ॥ 1080 ॥

सर्वधुरीणः सर्वभारवाही । सर्वा धूः सर्वधुरम् । 'पूर्वकाल' (सू. 726) इति समासः । अनेन समासान्तः । सर्वधुरं वहन्तीति सर्वधुरीणः । 'खः सर्वधुरात्' (सू. 1630) इति खः ।

माघे—XII. 24.

त्रस्तौ समासन्नकरेणुसूत्कृता-
न्नियन्तरि व्याकुलमुक्तरज्जुके ।
क्षिप्तावरोधाङ्गनमुत्पथेन मां
विलङ्घ्य लघ्वीं करभौ बभञ्जतुः ॥ 1081 ॥

उत्पथेनापथेन । समासान्तः ।

अस्मिन्नेव ग्रन्थे श्लो० 869. अपथेन । 'पथो विभाषा' (सू. 957) इति निषेधविकल्पात् अनेन समासान्तः । 'अपथं नपुंसकम्' (सू. 815) इति नपुंसकत्वम् ।

अस्मिन्नेव ग्रन्थे श्लो० 9. अपथानि । पूर्ववत् । सर्वपथान् व्याप्नोतीति सर्वपथीना ।

### ९४१ । द्व्यन्तरुपसर्गेभ्योऽप ईत् । ( ६. ३. ९७)

अप इति कृतसमासान्तस्यानुकरणम् । एभ्योऽपस्य ईत्स्यात् । द्विगता आपोऽस्मिन्निति द्वीपम् । अन्तरीपम् । प्रतीपम् । समीपम् ।

अस्मिन्नेव ग्रन्थे श्लो० 9. प्रतिगता उत्तानगा आपो यासां ताः प्रतीपाः । 'ऋक्पू' ( सू. 940 ) इति समासान्तः । अनेन ईत् ।

### ९४२ । ऊदनोर्देशे । ( ६. ३. ९८ )

अनोः परस्यापस्य ऊत्स्याद्देशे । अनूपो देशः ।

अस्मिन्नेव ग्रन्थे श्लो० 624. अनुगता आपो येषु ते अनूपा जलप्रायदेशाः । 'प्रादिभ्य' ( वा. 1360. सू. 830 ) इति समासः । 'ऋक्पू' ( सू. 940 ) इति समासान्तः । अनेन ऊकारः ।

अस्मिन्नेव ग्रन्थे श्लो० 14. अनुगता आपो येषु ते अनूपा नाम देशाः । पूर्ववत् ।

### ९४३ । अच्प्रत्यन्ववपूर्वात्सामलोम्नः ( ५. ४. ७५ )

एतत्पूर्वात्सामलोमान्तात्समासादच् स्यात् । प्रतिसामम् । अनुसामम् । अवसामम् । प्रतिलोमम् । अनुलोमम् ।

वा० । कृष्णोदक्पाण्डुसंख्यापूर्वाया भूमेरजिष्यते । ( 5046. )

कृष्णभूमः उदग्भूमः पाण्डुभूमः द्विभूमः प्रासादः ।

वा० । संख्याया नदीगोदावरीभ्यां च । ( 5047. )

पञ्चनदम् । सप्तगोदावरम् । अच् इति योगविभागादन्यत्रापि । पद्मनाभः ।

अस्मिन्नेव ग्रन्थे श्लो० 674. सप्तानां गोदावरीणां समाहारः सप्तगोदावरम् । अच् समासान्तः । पञ्चनदवत् ।

भट्टिकाव्ये—IX. 21.

तेषां विहन्यमानानां संवुष्टैः कर्णभेदिभिः ।
अभूत्स्यमितत्रासमास्वान्तककुभं जगत् ॥ 1082 ॥

आस्वान्ताः ककुभो यस्य तत् आस्वान्तककुभम् । अत्राजिति योगविभागात्पद्मनाभादिवत्समासान्तः ।

रघुवंशे—XVIII. 20.

उन्नाभ इत्युद्गतनामधेय-
स्तस्यायथार्थं नतनाभिरन्ध्रः ।
सुतोऽभवत्पङ्कजनाभकल्पः
कृत्स्नस्य नाभिर्नृपमण्डलस्य ॥ 1083 ॥

योगविभागादुन्नाभपङ्कजनाभादयः ।

१४४ । अक्ष्णोऽदर्शनात् । (५. ४. ७६)

अचक्षुःपर्यायादक्ष्णः अच् समासान्तः स्यात् । गवामक्षीव गवाक्षः । गवामक्षीवाक्षि यस्य सः गवाक्षः ।

रघुवंशे—XI. 93.

अथ पथि गमयित्वा क्लृप्तरम्योपकार्ये
कतिचिदवनिपालः शर्वरीः शर्वकल्पः ।
पुरमविशदयोध्यां मैथिलीदर्शनीनां
कुवलयितगवाक्षां लोचनैरङ्गनानाम् ॥ 1084 ॥

कुवलयितगवाक्षम् ।

१४५ । अचतुरविचतुरसुचतुरस्त्रीपुंसधेन्वनुडुहर्क्सामवाङ्मनसाक्षिभ्रुवदारगवोर्वष्ठीवपदष्ठीवनक्तंदिवरात्रिंदिवाहर्दिवसरजसनिःश्रेयसपुरुषायुषद्व्यायुषत्र्यायुषर्ग्यजुषजातोक्षमहोक्षवृद्धोक्षोपशुनगोष्ठश्वाः । (५. ४. ७७)

एते पंचविंशतिरजन्ता निपात्यन्ते । आद्यास्त्रयो बहुव्रीहयः । अविद्यमानानि चत्वारि यस्य सः अचतुरः । विचतुरः सुचतुरः ।

वा० । त्र्युपाभ्यां चतुरोऽजिष्यते । (3351.)

त्रिचतुरः । चतुर्णां समीपे उपचतुराः । एकादश द्वन्द्वाः । स्त्रीपुंसौ । धेन्वनुडुहौ । ऋक्सामे । वाङ्मनसे । अक्षिणी च भ्रुवौ च अक्षिभ्रुवम् । दाराश्च गावश्च दारगवम् । ऊरू चाष्ठीवन्तौ चोर्वष्ठीवम् । निपातनाट्टिलोपः । पदष्ठीवम् । निपातनात्पादशब्दस्य पद्भावः । नक्तं च दिवा च नक्तंदिवम् । रात्रौ च दिवा च रात्रिंदिवम् । रात्रेर्मान्तत्वं निपात्यते । अहनि च दिवा च अहर्दिवम् । वीप्सायां द्वन्द्वो निपात्यते । अहन्यहनीत्यर्थः । सरजसमिति साकल्येऽव्ययीभावः । बहुव्रीहौ तु सरजः पङ्कजम् । निश्चितं श्रेयो निःश्रेयसम् । पुरुषस्यायुः पुरुषायुषम् । ततो द्विगुः । द्व्यायुषम् । त्र्यायुषम् । ततो द्वन्द्वः । ऋग्यजुषम् । ततस्त्रयः कर्मधारयाः । जातोक्षः । महोक्षः । वृद्धोक्षः । शुनः समीपमुपशुनम् । टिलोपाभावः संप्रसारणं च निपात्यते । गोष्ठे श्वा गोष्ठश्वः ।

अस्मिन्नेव ग्रन्थे श्लो० 206. स्त्री च पुमांश्च स्त्रीपुंसौ । अच् ।

चम्पूभारते—VI. 61.

स्त्रीपुंसयोर्भावनटौ मिथो यौ
पूर्वस्तयोर्व्रीडतिरःपटेन ।
चिरायते स्पष्टयितुं स्वरूपं
परस्तु तन्नोत्सहतेऽनुमन्तुम् ॥ 1035 ॥

स्त्रीपुंसयोः ।

अस्मिन्नेव ग्रन्थे श्लो० 1070. स्त्री च पुमांश्च स्त्रीपुंसौ । स्त्रीपुरुषौ । अच् ।

अस्मिन्नेव ग्रन्थे श्लो० 1049. वाक्च मनश्च वाङ्मनसे । ऋक्सामे । दधिपयआदित्वान्नैकवद्भावः ।

अस्मिन्नेव ग्रन्थे श्लो० 1015. अक्षिणी च भ्रुवौ चाक्षिभ्रुवम् । अजन्तनिपातः । राजदन्तादित्वादक्षिभ्रुवं दारगवं इत्यादौ पूर्वप्रयोगार्हं परम् ।

अस्मिन्नेव ग्रन्थे श्लो० 1016. दारगवम् ।

भट्टिकाव्ये—IV. 39.

अकिंनोऽनपराधेऽपि नराञ्जक्तंदिवं वयम् ।
कृतमस्यै भीत यतेभ्यो दुष्टबुद्धयोऽपि क्षमामहे ॥ 1086 ॥

नक्तं च दिवा च नक्तंदिवम् । सप्तम्यर्थवृत्त्योरव्यययोर्द्वन्द्वसमासान्तनिपातः ।

अस्मिन्नेव ग्रन्थे श्लो० 168. नक्तन्दिवम् । अहोरात्रयोरित्यर्थः ।

भट्टिकाव्ये—XX. 31.

जगन्ति धत्स्व धत्स्वेति दधती त्वं वसुन्धरे ।
अवेहि मम चारित्रं नक्तन्दिवमविच्युतम् ॥ 1087 ॥

रघुवंशे—XVII. 49.

रात्रिन्दिवविभागेषु यदादिष्टं महीक्षिताम् ।
तत्सिषेवे नियोगेन सविकल्पपराङ्मुखः ॥ 1088 ॥

रात्रौ च दिवा च रात्रिन्दिवम् । अधिकरणार्थे द्वन्द्वोऽच्प्रत्ययान्तो निपातितः । अव्ययान्तत्वादव्ययत्वम् ।

कुमारसंभवे—II. 8.

स्वकालपरिमाणेन व्यस्तरात्रिन्दिवस्य ते ।
यौ तु स्वप्नावबोधौ तौ भूतानां प्रलयोदयौ ॥ 1089 ॥

व्यस्तं रात्रिन्दिवं राज्यहानि यस्य तस्य ।

यद्यपि अनेन सूत्रेण रात्रौ च दिवा च रात्रिन्दिवम् इति सप्तम्यर्थे द्वन्द्व इत्युक्तम् । तथापि दोषामन्यमहः दिवामन्या रात्रिरित्यादौ कर्मार्थवदत्रापि प्रातिपदिकार्थवृत्तित्वं कथंचित्प्रयोगबलादाश्रयणीयम् ।

माघे—I. 51.

पुरीमवस्कन्द लुनीहि नन्दनं
मुषाण रत्नानि हरामराङ्गनाः ।

विगृह्य चक्रे नमुचिद्विषा बली
य इत्थमस्वास्थ्यमहर्दिवं दिवः ॥ 1090 ॥

अहनि च दिवा चाहर्दिवम् ।

माघे—VI. 47.

कनकभङ्गपिशङ्गदलैर्दधे
सरजसारुणकेसरचारुभिः ।
प्रियविमानितमानवती रुषां
निरसनैरसनैरवृथार्थता ॥ 1091 ॥

सह रजसा सरजसम् । साकल्यार्थेऽव्ययीभावः समासान्तनिपातः । बहुव्रीह्यर्थ-लक्षणया तु सरजस्का इत्यर्थः । अत एव 'सरजसमिति नाव्ययीभाव' इति वामनः । अथवा महाकविप्रयोगप्राचुर्यादव्ययीभावदर्शनं प्रायिकम् इति पक्षाश्रयणात् बहुव्रीह्यर्थोऽपि साधुरेव । सरजसं सरजसा वा ये अरुणकेसरास्तैश्चारुभिः ।

माघे—VII. 42.

सरजसमकरन्दनिर्भरासु
प्रसवविभूतिषु भूरुहां विरक्तः ।
ध्रुवममृतपनामवाञ्छयासौ-
वधरममुं मधुपस्तवाजिहीते ॥ 1092 ॥

पूर्ववत् ।

अस्मिन्नेव ग्रन्थे श्लो० 981. सह रजसा सरजसम् ।

अस्मिन्नेव ग्रन्थे श्लो० 53. निश्चितं श्रेयो निःश्रेयसम् । मुक्तिः । समासान्तस्य निपातः ।

अस्मिन्नेव ग्रन्थे श्लो० 50. पुरुषस्यायुः पुरुषायुषम् । निपातः । अत्यन्त-संयोगे द्वितीया ।

रघुवंशे—I. 63.

पुरुषायुषजीविन्यो निरातङ्का निरीतयः ।
यन्मदीयाः प्रजास्तस्य हेतुस्त्वद्ब्रह्मवर्चसम् ॥ 1093 ॥

पुरुषस्यायुः पुरुषायुषम् । अत्यन्तसंयोगे द्वितीया । वर्षशतमित्यर्थः । पुरुषायुषं जीवन्तीति पुरुषायुषजीविन्यः । ‘अत्यन्तसंयोगे च’ (सू. 691) इति समासः ।

अस्मिन्नेव ग्रन्थे श्लो० 1060. ऋचश्च यजूंषि च ऋग्यजुषम् ।

माघे—XIV. 21.

सप्तभेदकरकल्पितस्वरं
साम सामविदसङ्गमुज्जगौ ।
तत्र सूनृतगिरश्च सूरयः
पुण्यमृग्यजुषमध्यगीषत ॥ 1094 ॥

समासान्तः द्वन्द्वैकवद्भावः ।

माघे—V. 63.

मृत्पिण्डशेखरितकोटिभिरर्धचन्द्रं
शृङ्गैः शिखाग्रगतलक्ष्ममलं हसद्भिः ।
उच्छृङ्गितान्यवृषभाः सरितां नदन्तो
रोधांसि धीरमपचस्करिरे महोक्षाः ॥ 1095 ॥

महान्त उक्षाणो महोक्षाः ।

रघुवंशे—VI. 72.

महेन्द्रमास्थाय महोक्षरूपं
यः संयति प्राप्तपिनाकिलीलः ।
चकार बाणैरसुराङ्गनानां
गण्डस्थलीः प्रोषितपत्रलेखाः ॥ 1096 ॥

महोक्षः ।

रघुवंशे—IV. 22.

मदोदग्राः ककुद्मन्तः सरितां कूलमुद्रुजाः ।
लीलाखेलमनुप्रापुर्महोक्षास्तस्य विक्रमम् ॥ 1097 ॥

महोक्षाः ।

रघुवंशे—III. 32.

महोक्षतां वत्सतरः स्पृशन्निव
द्विपेन्द्रभावं कलभः श्रयन्निव ।
रघुः क्रमाद्यौवनभिन्नशैशवः
पुपोष गाम्भीर्यमनोहरं वपुः ॥ 1098 ॥

महोक्षः ।

भट्टिकाव्ये—IV. 30.

लक्ष्मणं सा वृषस्यन्ती महोक्षं गौरिवाभवत् ।
मन्मथायुधसम्पातव्यथमानमतिः पुनः ॥ 1099 ॥

महोक्षः ।

कुमारसंभवे—V. 70.

इयं च तेऽन्या पुरतो विडम्बना
यदूढया वारणराजहार्यया ।
विलोक्य वृद्धोक्षमधिष्ठितं त्वया
महाजनः स्मेरमुखो भविष्यति ॥ 1100 ॥

वृद्धमुक्षाणं वृद्धोक्षम् ।

९४६ । ब्रह्महस्तिभ्यां वर्चसः । ( ५. ४. ७८ )

अच् स्यात् । ब्रह्मवर्चसम् । हस्तिवर्चसम् ।

वा० । पल्यराजभ्यां चेति वक्तव्यम् । ( 3352. )

पल्यवर्चसम् । राजवर्चसम् ।

अस्मिन्नेव ग्रन्थे श्लो० 1093. ब्रह्मणो वर्चो ब्रह्मवर्चसम् ।

९४७ । अवसमन्धेभ्यस्तमसः । ( ५. ४. ७९ )

अवतमसम् । सन्तमसम् । अन्धयतीत्यन्धं पचाद्यच् । अन्धं तमोऽन्धतमसम् ।

अस्मिन्नेव ग्रन्थे श्लो० 881. सन्तमसम् विषूचीनां तमः । 'विष्वक्सन्तमसम्' I. vii. 4. इत्यमरः ।

माघे—XX. 40.

गतसन्तमसैर्जवेन भूयो
यदुयोधैर्युधि रेधिरे द्विषन्तः ।
ननु वारिधरोपरोधमुक्तः
सुतरामुत्तपते पतिः प्रभाणाम् ॥ 1101 ॥

सन्तमसं विष्वक्तमः ।

अस्मिन्नेव ग्रन्थे श्लो० 582. सन्तमसैः ।

अनर्घराघवे—VII. 61.

स श्रीकण्ठकिरीटकुट्टिमपरिष्कारप्रदीपाङ्कुरो
देवः कैरवबन्धुरन्धतमसप्राग्भारकुक्षिंभरिः ।
संस्कर्ता निजकान्तिमौक्तिकमणिश्रेणीभिरेणीदृशां
गीर्वाणाधिपतेः सुधारसवतीपौरोगवः प्रोदगात् ॥ 1102 ॥

अन्धतमसम् ।

रघुवंशे—XI. 24.

तत्र दीक्षितमृषिं ररक्षतु-
र्विघ्नतो दशरथात्मजौ शरैः ।
लोकमन्धतमसात्क्रमोदितौ
रश्मिभिः शशिदिवाकराविव ॥ 1103 ॥

अन्धतमसात् ।

९४८ । श्वसो वसीयःश्रेयसः । (५. ४. ८०)

वसुशब्दः प्रशस्तवाची । तत ईयसुनि वसीयः । श्वस्शब्दः उत्तरपदार्थप्रशंसामाशीर्विषयमाह । मयूरव्यंसकादित्वात्समासः । श्वोवसीयसं श्वःश्रेयसं ते भूयात् ।

भट्टिकाव्ये—IV. 38.

श्वःश्रेयसमवाप्तासि भ्रातृभ्यां प्रत्यभाषि सा ।
प्राणिवस्तव मानार्थं व्रजाश्वसिहि मा रुदः ॥ 1104 ॥

शोभनं श्रेयः श्वःश्रेयसम् । अच् ।

९४९ । अन्ववतप्ताद्रहसः । (५. ४. ८१)

अनुरहसम् । अवरहसम् । तप्तरहसम् ।

माघे—VII. 50.

इदमिदमिति भूरुहां प्रसूनै-
र्मुहुरभिलोभयता पुरः पुरोऽन्या ।
अनुरहसमनायि नायकेन
त्वरयति रन्तुमहो जनं मनोभूः ॥ 1105 ॥

रहस्यनुरहसम् । विभक्त्यर्थेऽव्ययीभावः । अनेन समासान्तः ।

भट्टिकाव्ये—IV. 24.

राघवं पर्णशालायामिच्छानुरहसं पतिम् ।
यः स्वामी मम कान्तावानौपकर्णिकलोचनः ॥ 1106 ॥

अनुरहसं रहसि । अव्ययीभावः । अनेनाच् । अनुरहसं विवेकप्राप्तम् । अनुगतो रह इति विगृह्य अनेनाजिति जयमङ्गलः ।

अनर्घराघवे—IV. 6.

प्रभाते पृच्छन्तीरनुरहसवृत्तं सहचरी-
र्नवोढा न व्रीडामुकुलितमुखीयं सुखयति ।
लिखन्तीनां पत्राङ्कुरमनिशमस्यास्तु कुचयो-
श्चमत्कारो गूढं करजपदमासां कथयति ॥ 1107 ॥

९५० । प्रतेरुरसः सप्तमीस्थात् । (५. ४. ८२)

उरसि प्रत्युरसम् । विभक्त्यर्थेऽव्ययीभावः । अनेनाच् ।

माघे—XX. 48.

कृतमण्डलबन्धमुल्लसद्भिः
शिरसि प्रत्युरसं विलम्बमानैः ।
व्यरुचज्जनता भुजङ्गभोगै-
र्दलितेन्दीवरमालभारिणीव ॥ 1108 ॥

प्रत्युरसम् ।

किरातार्जुनीये—XVI. 9.

अस्मिन्यशःपौरुषलोलुपाना-
मरातिभिः प्रत्युरसं क्षतानाम् ।
मूर्च्छान्तरायं मुहुरुच्छिनत्ति
नासारशीतं करिशीकराम्भः ॥ 1109 ॥

प्रत्युरसम् । उरसि अध्युरः । अच् न ।

## ९५१ । अनुगवमायामे । ( ५. ४. ८३ )

एतन्निपात्यते दीर्घत्वे । अनुगवं यानम् । 'यस्य चायामः' (सू. 670) इति समासः ।

## ९५२ । उपसर्गादध्वनः । ( ५. ४. ८५ )

प्रगतोऽध्वानं प्राध्वो रथः ।

अस्मिन्नेव ग्रन्थे श्लो० 786. संप्राप्ता अध्वानं समध्वाः । अध्वगता इत्यर्थः । प्रादिसमासः ।

चम्पूभारते—IV. 25.

ग—इत्थङ्कारं रहसि कल्पिते कैतवदुरध्वे तावुभावप्यनुभावितुं दिव्यचक्षुषा तेनान्धेन वसुन्धराधिपतिना नवमणिमण्टपिकाप्रवेशोत्सवव्याजादाहूतः सानुजो धर्मजः

कुरुपत्तनमुपेत्य बन्धुतया प्रत्युद्गम्यमानो दुस्तरं भ्राविदनवासवर्षैरेकैकमेकैकेन प्रणिपात-पुण्येन सुप्रतरं करिष्यन्निव पितृव्यं द्वादशकृत्वः पादयोः प्राणंसीत् ॥ 1110 ॥

दुरध्वे ।

अस्मिन्नेव ग्रन्थे श्लो० 737. दुरध्वः ।

## ९५४ । न पूजनात् ( ५. ४. ६९ )

पूजनार्थात् परेभ्यः समासान्ता न स्युः । सुराजा अतिराजा । स्वतिभ्यामेव ।

माघे—XIV. 14.

तत्सुराज्ञि भवति स्थिते पुरः
  कः क्रतुं यजतु राजलक्षणम् ।
उद्धृतौ भवति कस्य वा भुवः
  श्रीवराहमपहाय योग्यता ॥ 1111 ॥

**सुराज्ञि** शुद्धक्षत्रिये । समासान्तप्रतिषेधः । 'सुराज्ञि देशे राजन्वान्' II. i. 14. इत्यमरे बहुव्रीहिः ।

माघे—XIV. 52.

एक एव सुसखैष पुन्वतां
  शौरिरित्यभिनयादिवे चकैः ।
यूपरूपकमनीनमद्भुजं
  भूष्वपालतुलिताङ्गुलीयकम् ॥ 1112 ॥

**सुसखा** सत्सहायः । समासान्तप्रतिषेधः ।

अस्मिन्नेव ग्रन्थे श्लो० 479. सुपथा । समासान्तो न ।

## ९५५ । किमः क्षेपे । ( ५. ४. ७० )

क्षेपे यः किंशब्दस्ततः परं यत्तदन्तात्समासान्ता न स्युः । कुत्सितो राजा किंराजा । किंसखा । किंगौः । क्षेपे किम् । किंराजः । किंसखः । किंगवः । 'किं क्षेपे' ( सू. 743 ) इति समासः ।

अस्मिन्नेव ग्रन्थे श्लो० 226. कुत्सितः सखा किंसखा ।

## ९५६ । नञस्तत्पुरुषात् । ( ५. ४. ७१ )

समासान्तो न । अराजा असखा । तत्पुरुषात्किम् । अधुरम् शकटम् ।

अस्मिन्नेव ग्रन्थे श्लो० 337. अराज्ञि । समासान्तप्रतिषेधः ।

अस्मिन्नेव ग्रन्थे श्लो० 690. अपन्थानम् ।

अस्मिन्नेव ग्रन्थे श्लो० 869. अपथेनामार्गेण । 'ऋक्पूः' ( सू. 940 ) इत्यादिना समासान्तः प्राप्तः अनेन प्रतिषिद्धः सन् 'पथो विभाषा' ( सू. 957 ) इति विकल्पितः ।

अनर्घराघवे—I. 4.

यान्ति न्यायप्रवृत्तस्य तिर्यञ्चोऽपि सहायताम् ।
अपन्थानं तु गच्छन्तं सोदरोऽपि विमुञ्चति ॥ 1113 ॥

पूर्ववत् ।

## ९५७ । पथो विभाषा । ( ५. ४. ७२ )

नञ्पूर्वात्पथो वा समासान्तः । अपथं अपन्थाः । तत्पुरुषादित्येव । अपथो देशः । अपथं वर्तते । 'अपथं नपुंसकम्' ( सू. 815 ) इति नपुंसकत्वम् ।

अस्मिन्नेव ग्रन्थे श्लो० 9. अपथानि । पूर्ववत् ।

अस्मिन्नेव ग्रन्थे श्लो० 690. अपन्थानम् । पाक्षिकः समासान्ताभावः ।

अस्मिन्नेव ग्रन्थे श्लो० 1113. अपन्थानम् । पूर्ववत् ।

॥ इति सर्वसमासान्तप्रकरणम् ॥

---

## ॥ अथालुक्समासप्रकरणम् ॥

९५९ । पञ्चम्याः स्तोकादिभ्यः । (६. ३. २)

एभ्यः पञ्चम्या अलुक् स्यात् उत्तरपदे । स्तोकान्मुक्तः । एवमन्तिकार्थदूरार्थकृच्छ्रेभ्यः । 'स्तोकान्तिक' (सू. 701) इति समासः ।

अस्मिन्नेव ग्रन्थे श्लो० 698. दूरान्मुक्ताः ।

अस्मिन्नेव ग्रन्थे श्लो० 699. दूरान्मुक्तम् ।

९६० । ओजःसहोऽम्भस्तमसस्तृतीयायाः । (६. ३. ३)

ओजसाकृतमित्यादि ।

वा० । अञ्जस उपसंख्यानम् । (3380.)

अञ्जसाकृतम् ।

वा० । पुंसानुजो जनुषान्ध इति च । (3381.)

यस्याग्रजः पुमान् स पुंसानुजः । जनुषान्धो जात्यन्धः ।

माघे—XIV. 23.

नाञ्जसानिगदितं विभक्तिभि-
र्व्यक्तिभिश्च निखिलाभिरागमे ।
तत्र कर्मणि विपर्ययेणीनमन्
मन्त्रमूहकुशलाः प्रयोगिणः ॥ 1114 ॥

अञ्जसानिगदितः । अलुक् ।

९६२ । आज्ञायिनि च । (६. ३. ५)

मनस इत्येव । मनसा आज्ञातुं शीलमस्य मनसाज्ञायी ।

९६३ । आत्मनश्च । ( ६. ३. ६ )

आत्मनस्तृतीयाया अलुक् स्यात् ।

वा० । पूरण इति वक्तव्यम् ( 3882. )

पूरणप्रत्ययान्ते उत्तरपदे इत्यर्थः । आत्मनापञ्चमः । पूरणे किम् । आत्मकृतम् ।

अनर्घराघवे—VII. 32.

स्मरपरिभवनिःसहायदीर्घै-
रथ सुभगंकरणैरियं तपोभिः ।
तदकृत यदसौ निजेऽपि देहे
जयति जगत्पतिरात्मनाद्वितीयः ॥ 1115 ॥

आत्मनाद्वितीयः । तृतीयाया अलुक् ।

९६४ । वैयाकरणाख्यायां चतुर्थ्याः । ( ६. ३. ७ )

आत्मन इत्येव । आत्मनेपदम् । आत्मनेभाषा । तादर्थ्ये चतुर्थी । चतुर्थीति योगविभागात्समासः ।

९६५ । परस्य च । ( ६. ३. ८ )

परस्मैपदम् । परस्मैभाषा ।

९६६ । हलदन्तात्सप्तम्याः संज्ञायाम् । ( ६. ३. ९ )

हलन्ताददन्ताच्च सप्तम्या अलुक् संज्ञायाम् । त्वचिसारः ।

अस्मिन्नेव ग्रन्थे श्लो० 154. मनसि शेत इति मनसिशयः । 'अधिकरण' ( सू. 2929 ) इत्यच् । अनेनालुक् । 'शयवासवासिषु' ( सू. 976 ) इति असंज्ञायां विभाषयालुक् ।

रघुवंशे—XVI. 14.

वृक्षेशया यष्टिनिवासभंगा-
न्मृदङ्गशब्दापगमादलास्याः ।

स्नाता दवोल्काहतशेषबर्हाः
क्रीडामयूरा वनबर्हिणत्वम् ॥ 1116 ॥

वृक्षे शेरत इति **वृक्षेशयाः** । 'अधिकरण' (सू. 2929) इत्यच् । 'शयवास' (सू. 976) इत्यलुक् ।

भट्टिकाव्ये—VIII. 60.

तां प्राविशत्कपिव्याघ्रस्तरूनचलयन् शनैः ।
अत्रासयन् **वनशयान्** सुप्तान् शाखासु पक्षिणः ॥ 1117 ॥

**वनशयान्** । पूर्ववदच् । 'शयवास' (सू. 976) इति नालुक् ।

नैषधे—IV. 28.

विनिहितं परितापिनि चन्दनं
हृदि तया भृतबुद्बुदमाबभौ ।
उपनमन् सुहृदं **हृदयेशयं**
विधुरिवाङ्कगतोडुपरिग्रहः ॥ 1118 ॥

**हृदयेशयम्** ।

**९६७ । गवियुधिभ्यां स्थिरः । (८. ३. ९५)**

आभ्यां स्थिरस्य सस्य षः स्यात् । गविष्ठिरः । अत्र गवीति वचनादेवालुक् । युधिष्ठिरः । अत्र 'संज्ञायां' (सू. 721) इति सप्तमीसमासः ।

वा० । हृद्द्युभ्यां च । (3885.)

हृदिस्पृक्, दिविस्पृक् ।

भट्टिकाव्ये—IX. 84.

सर्वनारीगुणैः प्रष्टां विष्टरस्थां **गविष्ठिराम्** ।
शयानां कुष्ठले तारां **दिविष्ठामिव** निर्मलाम् ॥ 1119 ॥

गवि वाचि स्थिरां **गविष्ठिरां** सत्यवाचमित्यर्थः । अनेन षत्वम् । एतस्मादेव निपातनादलुक् ।

**अस्मिन्नेव ग्रन्थे श्लो० 44. युधिष्ठिरः** ।

९६९ । मध्याद्गुरौ । (६. ३. ११)

मध्येगुरुः

वा० । अन्ताच्च । (3394.)

अन्तेगुरुः

९७० । अमूर्धमस्तकात्स्वाङ्गादकामे (६. ३. १२)

कण्ठेकालः । उरसिलोमा । अमूर्धमस्तकात्किम् । मूर्धशिखः । मस्तकशिखः । अकामे किम् । मुखे कामोऽस्य मुखकामः ।

अस्मिन्नेव ग्रन्थे श्लो० 965. कण्ठेगुणत्वम् कण्ठभूषणत्वम् ।

किरातार्जुनीये—X. 52.

सललितचलितत्रिकाभिरामाः
शिरसिजसंयमनाकुलैकपाणिः ।
सुरपतितनयेऽपरा निरासे
मनसिजजैत्रशरं विलोचनार्धम् ॥ 1120 ॥

शिरसि जाताः शिरसिजाः । 'सप्तम्यां जनेर्डः' (सू. 3007) इति डः अनेनालुक् ।

माघे—VIII. 68.

प्रत्यंसं विलुलितमूर्धजा चिराय
स्नानार्द्रं वपुरुदवापयत्किलैका ।
नाजानादभिमतमन्तिकेऽभिवीक्ष्य
स्वेदाम्बुद्रवमभवत्तरां पुरस्तात् ॥ 1121 ॥

मूर्धजाः । निषेधान्नालुक् ।

चम्पूभारते—III. 107.

ग—अथ मुदा कथितात्मयथातथाभावो भगवान् बृहद्भानुः दन्तपटीयवनिकान्तर्नटत्स्मितयोर्देवकीपृथासुतयोर्धुरि गिरिदरीवसतिधुरीणविभावरीचरसरीसृपदिविषदरीशमेदुरी-

कृतदुरीहिततान्डवस्य खाण्डवस्य जगत्कण्टेगडुत्वं तत्परिरक्षणदक्षस्य नमुक्षस्यानक्षके पक्षपातं च विनिवेद्य गुर्वोः कटाक्षबलेन क्षणाद्भिक्षामीति स्वमंजलितविशेषमाचचक्षे ॥ 1122 ॥

कण्ठेगडुत्वम् ।

९७१ । बन्धे च विभाषा । ( ६. ३. १३ )

हलदन्तात्सप्तम्या अलुक् । हस्तेबन्धः हस्तबन्धः । हलदन्त इति किम् । गुप्तिबन्धः ।

९७२ । तत्पुरुषे कृति बहुलम् । ( ६. ३. १४ )

स्तम्बेरमः स्तम्बरमः । कर्णेजपः कर्णजपः । क्वचिन्न । कुरुचरः ।

भट्टिकाव्ये—VI. 74.

परिभावीणि ताराणां पश्य मन्थीनि चेतसाम् ।
उद्भासीनि जलेजानि दुन्वन्त्यदयितं जनम् ॥ 1123 ॥

जले जातानि जलेजानि । 'सप्तम्यां जनेर्डः' (सू. 3007) । अनेनालुक् ।

भट्टिकाव्ये—V. 97.

द्विषन्वनेचराग्र्याणां त्वमाद्यायचरो वने ।
अग्रेसरो जघन्यानां मा भूः पूर्वसरो मम ॥ 1124 ॥

वने चरन्तीति वनेचरास्तापसाः । 'चरेष्टः' (सू. 2950) इति टः ।

अस्मिन्नेव ग्रन्थे श्लो° 862. निशाचराः । विकल्पान्नालुक् ।

चम्पूरामायणे— II. 84.

ग—दाशरथिरपि शमवनजनकथितनिशिचरगणरचितकदनपरिहरणाय गहनजठरमवजगाहे ॥ 1125 ॥

निशिचराः । अलुक् ।

अस्मिन्नेव ग्रन्थे श्लो° 706. खे चरन्तीति खचराः । नालुक् ।

अस्मिन्नेव ग्रन्थे श्लो° 809. स्तम्बे रमेते इति स्तम्बेरमौ हस्तिनौ । हस्तिन्यच् । अनेनालुक् ।

किरातार्जुनीये—XIII. 23.

अपथन्वनुष: शिवान्तिकस्थै-
   र्विवरेसद्भिरभिख्यया जिहानः ।
युगपद्ददृशे विशन्वराहं
   तदुपोढैश्च नभश्चरैः पृषत्कैः ॥ 1126 ॥

विवरे सीदन्तीति विवरेसदः । 'सत्सू' (सू. 2975) इति क्विप् । अनेनालुक् ।

९७३ । प्रावृट्शरत्कालदिवां जे । (६. ३. १५)

प्रावृषिजः । शरदिजः । कालेजः । दिविजः ।

भट्टिकाव्ये—V. 54.

एष प्रावृषिजाम्भोदनादी भ्राता विरौति ते ।
ज्ञातेयं कुरु सौमित्रे भयात्त्रायस्व राघवम् ॥ 1127 ॥

प्रावृषि जातः प्रावृषिजः । सप्तम्या अलुक् ।

माघे—XVI. 75.

इति पूर इवोदकस्य यः
   सरितां प्रावृषिजस्तटद्रुमैः ।
क्वचनापि महानखण्डित-
   प्रसरः क्रीडति भूभृतां गणैः ॥ 1128 ॥

प्रावृषिजः । पूर्ववत् ।

९७५ । घकालतनेषु कालनाम्नः । (६. ३. १७)

सप्तम्या विभाषयालुक् स्यात् । घे । पूर्वाह्णेतरे पूर्वाह्णतरे । पूर्वाह्णेतमे पूर्वाह्णतमे । काले । पूर्वाह्णेकाले पूर्वाह्णकाले । तने । पूर्वाह्णेतने पूर्वाह्णतने ।

९७६ । शयवासवासिष्वकालात् । (६. ३. १८)

विभाषयालुक् । खेशयः खशयः । ग्रामेवासः ग्रामवासः । ग्रामेवासी ग्रामवासी । हलदन्तादित्येव । भूमिशयः ।

वा० । अपो योनियन्मतुषु । ( 3876. )

अप्सु योनिरुत्पत्तिर्यस्य सोऽप्सुयोनिः । अप्सु भवोऽप्सव्यः । अप्सुमन्तावाज्यभागौ ।

अस्मिन्नेव ग्रन्थे श्लो० 1118. हृदये शेत इति **हृदयेशयं** मन्मथम् । ‘ अधिकरणे ’ ( सू. 2929 ) इत्यच् । अनेनालुक् ।

अस्मिन्नेव ग्रन्थे श्लो० 240. **हृदयेशयम्** । पूर्ववत् ।

नैषधे—IV. 35.

> पिकरुतश्रुतिकम्पिनि शैवलं
> हृदि तया निहितं विचलद्बभौ ।
> सततत‍द्गतहृच्छयकेतुना
> हतमिव स्वतनूघनघर्षिणा ॥ 1129 ॥

**हृच्छयो** मन्मथः ।

चम्पूभारते—V. 33.

> अलकेशयोषिदलकेशयैः सुमैः
> सुरभिं प्रमोदसुरभिं नभःसदाम् ।
> शिखरे स तस्य महतीमुदग्दिशो
> मणिदर्पणीमिव ददर्श वापिकाम् ॥ 1130 ॥

अलके शेरत इति **अलकेशयास्तैः** ।

अस्मिन्नेव ग्रन्थे श्लो० 1116. वृक्षे शेरत इति **वृक्षेशयाः** । ‘ अधिकरणे ’ ( सू. 2929 ) इत्यच् । अनेनालुक् ।

अस्मिन्नेव ग्रन्थे श्लो० 1117. वने शेरत इति **वनशयास्तान्** । पूर्ववदच् । अनेन विकल्पान्नालुक् ।

कुमारसंभवे—V. 25.

> **शिलाशयां** तामनिकेतवासिनीं
> निरन्तरास्वन्तरवातवृष्टिषु ।

व्यलोकयन्मुनिपितैस्तदिन्द्रियै-
र्महातपःसाक्ष्य इव स्थिताः क्षमाः ॥ 1131 ॥

शिलायां शेत इति शिलाशया ताम् ।

चम्पूभारते—I. 25.

गहनमस्तशरास्तमृगव्रजं
कृतवताप्यमुना जविवाजिना ।
ममृगिरे हरयो मदशालिनो
मनुजपेन गिरीशदरीशयाः ॥ 1132 ॥

हलदन्तादेवालुक् नान्यत्र ।

रघुवंशे—IV. 72.

शशंस तुल्यसत्त्वानां सैन्यघोषेऽप्यसंभ्रमम् ।
**गुहाशयानां** सिंहानां परिवृत्यावलोकितम् ॥ 1133 ॥

**गुहाशयानाम्** ।

भट्टिकाव्ये—III. 16.

ज्ञात्वेङ्गितैर्गत्वरतां जनाना-
मेकां शयित्वा रजनीं सपौरः ।
रक्षन्**वनेवास**कृताद् भयात्तान्
प्रातश्छलेनापजगाम रामः ॥ 1134 ॥

वने वासो **वनेवासः** । अलुक् ।

माघे—XVIII. 62.

**स्वर्गेवासं** कारयन्त्या चिराय
प्रत्यग्रत्वं प्रत्यहं धारयन्त्या ।
कश्चिद्वीजे दिव्यनार्या परस्मिन्
लोके लोकं प्रीणयन्त्येह कीर्त्या ॥ 1135 ॥

**स्वर्गेवासम्** । विकल्पादलुक् ।

भट्टिकाव्ये—II. 26.

अपूपुजन्विष्टरपाद्यमाल्यै-
रातिथ्यनिष्णा वनवासिमुख्याः ।
प्रत्यग्रहीष्टां मधुपर्कमिश्रं
तावासनादि क्षितिपालपुत्रौ ॥ 1136 ॥

वनवासिमुख्याः । 'वैखानसो वनेवासी' इति यादवः । विकल्पान्नालुक् ।

९७७ । नेन्सिद्धबध्नातिषु च । ( ६. ३. १९ )

इन्नन्तादिषु सप्तम्या अलुम । स्थण्डिलशायी । सांकाश्यसिद्धः । चक्रबन्धः ।

चम्पूरामायणे—II. 80.

ग— तत्क्षणं क्षणप्रभाभङ्गुरलक्ष्मीसमावेशलक्ष्मणि क्षोणीपतिशतधृतोज्झिते मुकुटे विघटिताशं सादरं प्रणिपत्य मां पादुकाभ्यां परिष्कुरुतं युवामिति रघुवरचरणौ स्वयमेव प्रार्थ्य प्रतिश्रयितुं स्थण्डिलशायिचरणमिव बभार भरतस्योत्तमाङ्गम् ॥ 1137 ॥

९७९ । षष्ठ्या आक्रोशे । ( ६. ३. २१ )

चौरस्यकुलम् । आक्रोशे किम् । ब्राह्मणकुलम् ।

वा० । वाग्दिक्पश्यद्भ्यो युक्तिदण्डहरेषु । ( 3897. )

वाचोयुक्तिः । दिशोदण्डः । पश्यतोहरः ।

वा० । देवानांप्रिय इति च मूर्खे । ( 3900. )

अन्यत्र देवप्रियः ।

वा० । शेफपुच्छलाङ्गूलेषु शुनः । ( 3901. )

शुनश्शेफः । शुनःपुच्छः । शुनोलाङ्गूलः ।

वा० । दिवश्च दासे । (3902. )

दिवोदासः ।

अस्मिन्नेव ग्रन्थे श्लो० 594. पश्यतोहरः । पश्यन्तमनादृत्य हरः । पचाद्यच् । 'षष्ठी चानादरे' (सू. 635) इति षष्ठी । वाग्दिगिति अलुक् ।

चम्पूभारते—III. 53.

चक्राक्रीमदपश्यतोहरचलच्छम्पासमुन्मेषणैः
पुष्पत्केतकगन्धसिन्धुविलुठत्पुष्पन्धयान्धीकृतैः ।
मेदस्वीकृतकेकिनीकलकलैर्मेघङ्कराशामुखैः
पान्थानामपमृत्युभिः कतिपयैः प्रादुर्बभूवे दिनैः ॥ 1138 ॥

पश्यतोहरः । पूर्ववत् ।

अनर्घराघवे—V. 6.

ग—भो वाचोयुक्तिश सर्वेषां विद्रावणः खल्वहमिति समस्य व्याहृतमन्यथाभिसन्धाय वाक्छलेन प्रत्यवतिष्ठमानो निगृहीतोऽसि । तन्मुञ्च मां भिक्षायै ॥ 1139 ॥

वाचोयुक्तिः । उक्तिप्रत्युक्त्यादिः । अलुक् ।

चम्पूरामायणे—I. 97.

ग—ततो गीर्वाणगणप्रार्थनया परित्यक्तभुवनान्तरनिर्माणकर्माणं तत्र तपःप्रत्यूहः प्रत्युद्भूत इति पश्चिमायां दिशि पुष्करे पुष्कलं तपश्चरन्तममुं अम्बरीषयज्ञपशुविनाशप्रायश्चित्तार्थं बह्वीभिर्गोभिः क्रीत्वा नरपशुतां नीयमानस्तावदृचीकस्य मध्यमपुत्रः शुनःशेफः शरणमयाचत ॥ 1140 ॥

## ९८० । पुत्रेऽन्यतरस्याम् । (६. ३. २२)

षष्ठ्याः पुत्रे परे अलुग्वा निन्दायाम् । दास्याःपुत्रो दासीपुत्रः । निन्दायां किम् । ब्राह्मणीपुत्रः ।

अस्मिन्नेव ग्रन्थे ग० 177. क्षत्रियायाःपुत्रः । । अलुक् ।

## ९८१ । ऋतो विद्यायोनिसंबन्धेभ्यः । (६. ३. २३)

विद्यासंबन्धयोनिसंबन्धवाचिनः ऋदन्तात् षष्ठ्या अलुक् । होतुरन्तेवासी । होतुःपुत्रः । पितुरन्तेवासी । पितुःपुत्रः ।

अनर्घराघवे — III. 17.

ग — सखे सीरध्वज संह्रियतामञ्जलिः । अमी तूष्णींभूताः स्मः । कात्यायनीकामुककार्मुकारोपणरणरणकप्रवीणेन दुहितुःपतिना संवत्सरपर्युषितमतिज्ञो भूयाः ॥ 1141 ॥

दुहितुःपतिना । अलुक् ।

९८२ । विभाषा स्वसृपत्योः । ( ६. ३. २४ )

ऋदन्तात्षष्ठ्या अलुग्वा स्वसृपत्योः परयोः ।

अनर्घराघवे VI. 54.

ग — भगवतो दिवस्पतेरिव रथो दाशरथिमुपतिष्ठते ॥ 1142 ॥

दिवस्पतेरिन्द्रस्य । * अलुक् ।

९८३ । मातुःपितुर्भ्यामन्यतरस्याम् । ( ८. ३. ८५ )

आभ्यां स्वसुः सस्य षो वा स्यात् समासे । अलुक्पक्षे, मातुःष्वसा मातुःस्वसा । पितुःष्वसा पितुःस्वसा ।

भट्टिकाव्ये — IX. 80.

नासां मातृष्वसेय्याश्च रावणस्य लुलाव यः ।
मातुःस्वसुश्च तनयान् खरादीन् विजघान यः ॥ 1143 ॥

मातुःस्वसुः । षत्वाभावपक्षः । 'विभाषा स्वसृपत्योः' ( सू. 982 ) इत्यलुक् ।

९८४ । मातृपितृभ्यां स्वसा । ( ८. ३. ८४ )

---

* ऋत इत्यनुवृत्तौ अनेनालुक् चिन्त्यः ।

आभ्यां परस्य स्वसुः सस्य षः स्यात्समासे । मातृष्वसा । पितृष्वसा । असमासे तु मातुः स्वसा । पितुः स्वसा ।

अस्मिन्नेव ग्रन्थे श्लो० 1143. मातुःस्वसा भगिनी या सा मातृष्वसा । षत्वम् । तस्या अपत्यं स्त्री मातृष्वस्रेयी । 'मातृष्वसुश्च' (सू. 1140) इति इगन्तलोपौ ।

॥ इत्यलुक्समासप्रकरणम् ॥

---

## ॥ अथ समासाश्रयविधिप्रकरणम् ॥

---

९८५ । घरूपकल्पचेलड्ब्रुवगोत्रमतहतेषु ङ्योऽनेकाचो ह्रस्वः ।
(६. ३. ४३)

भाषितपुंस्काद्यो ङी तदन्तस्यानेकाचो ह्रस्वः स्यात् घरूपकल्पप्प्रत्ययेषु परेषु, चेलडादिषु चोत्तरपदेषु । तरप्तमपौ घसंज्ञकौ । ब्राह्मणितरा ब्राह्मणितमा । ब्राह्मणिरूपा । ब्राह्मणिकल्पा । ब्राह्मणिचेली । ब्राह्मणिब्रुवा । ब्राह्मणिगोत्रा इत्यादि । भाषितपुंस्कात्किम् । आमलकीतरा । कुवलीतरा ।

अस्मिन्नेव ग्रन्थे श्लो० 155. ईषदसमाप्तां पाशीं **पाशीकल्पाम्** पाशबन्धनसदृशीम् । 'बह्वादिभ्यश्च' (सू. 503) इति विकल्पादीकारः । अभाषितपुंस्कत्वात् अनेन ह्रस्वो न भवति ।

माघे—VII. 68.

मुहुरिति वनविभ्रमाभिषङ्गा-
दतमि तदा नितरां नितम्बिनीभिः ।
मृदुतरतनवोऽलसाः प्रकृत्या
चिरमपि ताः किमुत प्रयासभाजः ॥ 1144 ॥

अतिशयेन मृदुः **मृदुतरा** । 'वोतो गुणवचनात्' (सू. 502) इति ङीषि अतिशयेन मृद्वी मृद्वितरा इति स्यात् । 'तसिल्' (सू. 836) इति स्त्रियाः पुंवद्भावः । प्रभातकल्पा । प्रियतमा इत्यादि ।

९८७ । उगितश्च । (६. ३. ४५)

उगितः परा या नदी तदन्तस्य घादिषु ह्रस्वो वा स्यात् । विदुषितरा । ह्रस्वाभावपक्षे तु 'तसिलादिषु' (सू. 836) इति पुंवत् । विद्वत्तरा ।

९८८ । हृदयस्य हृल्लेखयदण्लासेषु । (६. ३. ५०)

हृदयं लिखतीति हृल्लेखः । हृदयस्य प्रियं हृद्यम् । हृदयस्येदं हार्दम् । हृल्लासः ।

भट्टिकाव्ये—XX, 22.

रावणाङ्कपरिक्लिष्टा त्वं हृल्लेखकरी मम ।
मतिं बधान सुग्रीवे राक्षसेन्द्रं गृहाण वा ॥ 1145 ॥

हृल्लेखकरी चेतःपीडनशीला । ताच्छील्ये टः । अनेन हृदादेशः ।

किरातार्जुनीये—IX. 57.

ओष्ठपल्लवविदंशरुचीनां
हृद्यतामुपययौ रमणानाम् ।
फुल्ललोचनविनीलसरोजै-
रङ्गनास्यचषकैर्मधुवारः ॥ 1146 ॥

हृद्यतां हृदयस्य प्रियताम् । 'हृदयस्य प्रियः' (सू. 1647) इति यत् । अनेन हृद्भावः ।

युवादिषु सुहृदयस्य भावः सौहृदमिति । अनेन हृद्भावः । सौहृददौहृदशब्दावपि हृद्भावादिति वामनवचनान्नोभयपदवृद्धिः । सुहृदोऽपत्यं सौहार्दः । सुहृदो भावः सौहार्दम् । 'हृद्भग'(सू. 1133) इत्युभयपदवृद्धिः । अस्मिन्नेव ग्रन्थे श्लो० 743. सुहृदयस्य भावः सौहृदमिति विग्रहः ।

रघुवंशे—XIV. 15.

वेश्मानि रामः परिबर्हवन्ति
विश्राण्य सौहार्दनिधिः सुहृद्भ्यः ।
बाष्पायमाणो बलिमन्निकेत-
मालेख्यशेषस्य पितुर्विवेश ॥ 1147 ॥

सुहृदो भावः सौहार्दम् । सौजन्यम् ।

## ९८९ । वा शोकष्यञ्रोगेषु । (६. ३. ५१)

हृच्छोकः हृदयशोकः । सौहार्द्यम् सौहृदय्यम् । हृद्रोगः हृदयरोगः ।

९९० । पादस्य पदाज्यातिगोपहतेषु । ( ६. ३. ५२ )

एषूत्तरपदेषु पादस्य पद इत्यदन्त आदेशः स्यात् । पादाभ्यामजतीति पदाजिः । पदातिः । 'अज्यतिभ्यां च' ( उ. सू. 570 ) इति इण्प्रत्ययः । आजिः संग्रामः । आतिः पक्षी । 'पादे च' ( उ. सू. 571 ) इति इण्प्रत्ययः । पदातिः । पदगः । पदोपहतः ।

रघुवंशे—VII. 37.

पतिः पदातिं रथिनं रथेशः
तुरङ्गसादी तुरगाधिरूढम् ।
यन्ता गजस्याभ्यपतद्गजस्थं
तुल्यप्रतिद्वन्द्वि बभूव युद्धम् ॥ 1148 ॥

पादाभ्यामततीति पदातिः । अनेन पदादेशः ।

चम्पूभारते—II. 110.

द्विरदं द्विरदस्तुरगं तुरगो
रथिकं रथिकः पदगं पदगः ।
इतरेतरमेत्य रणं विदधे
दिवि नारदविस्मयनाकतरुम् ॥ 1149 ॥

पादस्य पदादेशः ।

भट्टिकाव्ये—III. 41.

वाचंयमान् स्थण्डिलशायिनश्च
युयुक्षमाणाननिशं मुमुक्षून् ।
अध्यापयन्तं विनयात् प्रणेमुः
पद्गा भरद्वाजमुनिं सशिष्यम् ॥ 1150 ॥

पादाभ्यां गच्छन्तीति पद्गाः । 'अन्येष्वपि दृश्यते' ( सू. 3011 ) इति डः । 'हिमकाषिहतिषु च' ( सू. 992 ) इति चकारात् पदित्यादेशः । पदिति योगविभागाद्वा पद् इत्यादेशे पद्ग इति ।

## ९९१ । पद्यत्यतदर्थे । ( ६. ३. ५३ )

पादस्य पत् स्यादतदर्थे यति परे । पादौ विध्यन्ति पद्याः शर्कराः । अतदर्थे किम् । 'पादार्घाभ्यां च' (सू. 2093) इति यत् । पादार्थमुदकं पाद्यम् । निषेधात्पदादेशो न ।

माघे—VIII. 14.

उत्क्षिप्तस्फुटितसरोरुहार्घ्यमुच्चैः
सस्नेहं विहगरुतैरिवालपन्ती ।
नारीणामथ सरसी सफेनहासा
प्रीत्येव व्यतनुत पाद्यमूर्मिहस्तैः ॥ 1151 ॥

पादार्थमुदकं **पाद्यम्** । 'पादार्घाभ्यां च' (सू. 2093) इति यत् । अतदर्थ इति निषेधान्न पदादेशः ।

अस्मिन्नेव ग्रन्थे श्लो॰ 1150. पादाभ्यां गच्छन्तीति **पद्गाः** । 'अन्येष्वपि दृश्यते' (सू. 3011) इति डः । पदिति योगविभागाद्गमोत्तरपदे पदादेशः ।

वा॰ । इके चरतावुपसंख्यानम् । (3958.)

पादाभ्यां चरति पदिकः । पर्पादित्वात् ष्ठन् ।

## ९९२ । हिमकाषिहतिषु च । ( ६. ३. ५४ )

पद्धिमम् । पत्काषी । पद्धतिः ।

अस्मिन्नेव ग्रन्थे श्लो॰ 752. पादौ कषन्तीति **पत्काषिणः** । 'सुप्यजातौ' (सू. 2988) इति ताच्छील्ये णिनिः । अनेन पदादेशः ।

भट्टिकाव्ये—XVI. 28.

मानुषो नाम **पत्काषी**
राजानं पुरुषाशिनाम् ।
योधयिष्यति संग्रामे
दिव्यास्त्ररथदुर्जयम् ॥ 1152 ॥

**पत्काषी** । पादाभ्यां गमनशीलः । पादस्य पदादेशः ।

अस्मिन्नेव ग्रन्थे श्लो० 1150. पादाभ्यां गच्छन्तीति पद्गाः । ' अन्येष्वपि दृश्यते ' ( सू. 3011 ) इति डः । हिमकाषीति चकारस्यानुक्तसमुच्चयार्थत्वाद्गमोत्तरपदे पदादेशः ।

९९४ । वा घोषमिश्रशब्देषु । ( ६. ३. ५६ )

पादस्य पत् । पद्घोषः पादघोषः । पन्मिश्रः पादमिश्रः । पच्छब्दः पादशब्दः ।

वा० । निष्के चेति वक्तव्यम् । ( 3959. )

पन्निष्कादि ।

९९५ । उदकस्योदः संज्ञायाम् ( ६. ३. ५७ )

उदमेघः ।

वा० । उत्तरपदस्य चेति वक्तव्यम् । ( 3961. )

क्षीरोदः ।

चम्पूरामयणे—II. 6.

देवे स्थितेऽपि तनयं तव रामभद्रं
लोकः स्वयं भजतु नाम किमत्र चित्रम् ।
चन्द्रं विना तदुपलम्भनहेतुभूतं
क्षीरोदमाश्रयति किं तृषितश्चकोरः ॥ 1153 ॥

क्षीरमुदकं यस्य स **क्षीरोदः** । क्षीरसमुद्रः । उदादेशः ।

कुमारसंभवे—VII. 26.

क्षीरोदवेलेव सफेनपुंजा
पर्याप्तचन्द्रेव शरत्त्रियामा ।
नवं नवक्षौमनिवासिनी सा
भूयो बभौ दर्पणमादधाना ॥ 1154 ॥

**क्षीरोदः** पूर्ववत् ।

नैषधे—VI. 80.

नैनं त्यज क्षीरधिमन्थनाद्यै-
रस्यानुजायोद्गमितामरैः श्रीः ।
अस्मै विमथ्येक्षुरसोदमन्यां
श्राम्यन्तु नोत्थापयितुं श्रियं ते ॥ 1155 ॥

इक्षुरस एवोदकं यस्य तम् इक्षुरसोदं नामाब्धिम् । संज्ञायामुदकस्योदादेशः ।

चम्पूरामायणे—VI. 15.

पश्येदानीमुदधिपरिखापालिता कुत्र लङ्का
वाचातीतः क नु वनचरादागतो दुर्विपाकः ।
कर्तुं नक्तञ्चरपरिभवं कापि मायेति शङ्के
जाता सीता धरणितनया जानकी मैथिलीति ॥ 1156 ॥

उदकानि धीयन्तेऽस्मिन्नित्युदधिः समुद्रः । 'कर्मण्यधिकरणे च' (सू. 3271) इति किः ।

## ९९६ । पेषंवासवाहनधिषु च । (६. ३. ५८)

उदपेषं पिनष्टि । उदवासः उदवाहनः उदधिः घटः । समुद्रे तु पूर्वेण सिद्धम् ।

कुमारसंभवे—V. 26.

निनाय सात्यन्तहिमोत्किरानिलाः
सहस्यरात्रीरुदवासतत्परा ।
परस्पराक्रन्दिनि चक्रवाकयोः
पुरो वियुक्ते मिथुने कृपावती ॥ 1157 ॥

उदके वासः उदवासः । उदादेशः ।

किरातार्जुनीये—XIV. 36.

अनादरोपात्तधृतैकसायकं
जयेऽनुकूले सुहृदीव सस्पृहम् ।

शनैरपूर्णप्रतिकारपेलवे
निवेशयन्तं नयने बलोदधौ ॥ 1158 ॥

बलमुदधिरिवेत्युपमितसमासः। उदकस्योदादेशः।

९९७। एकहलादौ पूरयितव्येऽन्यतरस्याम्। (६. ३. ५९)

उदकुम्भः। उदककुम्भः।

अस्मिन्नेव ग्रन्थे श्लो० 1036. उदकुम्भः।

९९८। मन्थौदनसक्तुबिन्दुवज्रभारहारवीवधगाहेषु च। (६. ३. ६०)

उदमन्थः। उदकमन्थः। उदौदनः। उदकौदनः।

माघे—VII. 73.

हिमलवसदृशः श्रमोदबिन्दू-
नपनयता किल नूतनोढवध्वाः।
कुचकलशकिशोरकौ कथंचित्
तरलतया तरुणेन पस्पृशाते ॥ 1159 ॥

श्रमोदबिन्दून्। उदादेशः।

माघे—I. 58.

स्पृशन् सशङ्कः समये शुचावपि
स्थितः कराग्रैरसमग्रपातिभिः।
अधर्मघर्मोदकबिन्दुमौक्तिकै-
रलंचकारास्य वधूरहस्करः ॥ 1160 ॥

उदकबिन्दवः।

कुमारसंभवे—V. 24.

स्थिताः क्षणं पक्ष्मसु ताडिताधराः
पयोधरोत्सेधनिपातचूर्णिताः।

वलीषु तस्याः स्खलिताः प्रपेदिरे
चिरेण नाभिं प्रथमोदबिन्दवः ॥ 1161 ॥

माघे—VIII. 39.

रागान्धीकृतनयनेन नामधेय-
व्यत्यासादभिमुखमीरितः प्रियेण ।
मानिन्या वपुषि पतन् निसर्गमन्दो
भिन्दानो हृदयमसाहि नोदवज्रः ॥ 1162 ॥

उदकमेव वज्रः उदवज्रः । उदादेशः ।

माघे—III. 11.

स इन्द्रनीलस्थलनीलमूर्ती
रराज कर्चूरपिशङ्गवासाः ।
विसृत्वरैरम्बुरुहां रजोभि-
र्यमस्वसुश्चित्र इवोदभारः ॥ 1163 ॥

उदकस्य भारः पूर उदभारः । उदादेशः ।

माघे—VIII. 45.

आबद्धप्रचुरपरार्ध्यकिंकिणीको
रामाणामनवरतोदगाहभाजाम् ।
नारावं व्यतनुत मेखलाकलापः
कस्मिन् वा सजलगुणे गिरां पटुत्वम् ॥ 1164 ॥

उदकस्य गाहोऽवगाहनमुदगाहः । उदादेशः ।

## ९९९ । इको ह्रस्वोऽङ्यो गालवस्य । ( ६. ३. ६१ )

इगन्तस्याङ्यन्तस्य ह्रस्वो वा स्यात् उत्तरपदे । ग्रामणिपुत्रः ग्रामणीपुत्रः । इकः किम् । रमापतिः । अङ्य इति किम् । गौरीपतिः । गालवग्रहणं पूजार्थम् । अन्यतरस्यामित्यनुवृत्तेः ।

**वा० ।** इयङुवङ्भाविनामव्ययानां च नेति वाच्यम् । ( 3963. )

श्रीमदः । भ्रभङ्गः । शुक्लीभावः ।

**वा० ।** अभ्रूकुंसादीनामिति वक्तव्यम् ।( 3964. )

भ्रुकुंसः । भ्रूकुंसः । भ्रुकुटिः । भ्रूकुटिः । भ्रुवा कुंसो भाषणं शोभा वा यस्य सः स्त्रीवेषधारी नर्तकः । भ्रुव कुटिः कौटिल्यम् ।

किरातार्जुनीये—X. 22.

व्यथितमपि भृशं मनो हरन्ती
परिणतजम्बुफलोपभोगहृष्टा ।
परभृतयुवतिः स्वनं वितेने
नवनवयोजितकण्ठरागरम्यम् ॥ 1165 ॥

जम्ब्वाः फलं **जम्बुफलम्** । ह्रस्वः ।

१००१ । ङ्यापोः संज्ञाच्छन्दसोर्बहुलम् । (६. ३. ६३)

इति ह्रस्वो वैकल्पिकः । रेवतिपुत्रः । अजक्षीरम् ।

कुमारसंभवे—IV. 16.

प्रतिपद्य मनोहरं वपुः
पुनरप्यादिश तावदुत्थितः ।
**रतिदूतिपदेषु** कोकिलां
मधुरालापनिसर्गपण्डिताम् ॥ 1166 ॥

**रतिदूतिपदेषु** । दूतीशब्दस्य ह्रस्वः ।

रघुवंशे—XIV. 33.

कलत्रनिन्दागुरुणा किलैव-
मभ्याहतं कीर्तिविपर्ययेण ।

अयोघनेनाय इवाभितप्तं
वैदेहिबन्धोर्हृदयं विदद्रे ॥ 1167 ॥

वैदेह्या बन्धुः वैदेहिबन्धुः इति ह्रस्वः ।

भट्टिकाव्ये—XII. 86.

इति वचनमसौ रजनिचरपतिं
बहुगुणमसकृत्प्रसभमभिदधत् ।
निरगमदभयः पुरुषरिपुपुरात्
नरपतिचरणौ नवितुमरिनुतौ ॥ 1168 ॥

**रजनिचर** इति ङ्यापोरिति संज्ञायां ह्रस्वत्वमिति जयमङ्गलः । 'अर्तिसृ' (उ. सू. 259.) इत्यनिप्रत्यये रजनिः इकारान्त एव ।

चम्पूरामायणे—VI. 12.

रहस्तदानीं **रजनीचरेन्द्रः**
प्रहस्तमुख्यानिदमाबभाषे ।
इदं तु मे वाञ्छितमीक्षितं वो
वदन्तु यद्वैरिजनोचितं नः ॥ 1169 ॥

'**कृदिकारादक्तिनः**' (ग. सू. 50) इति कृदन्तस्य इकारान्तस्त्रीलिङ्गस्य च रजनिशब्दस्य रजनी इति ईकारः ।

रघुवंशव्याख्यायां सञ्जीविन्याम् उपोद्घाते—6.

कालिदासगिरां सारं
कालिदासः सरस्वती ।
चतुर्मुखोऽथवा साक्षा-
द्विदुर्नान्ये तु मादृशाः ॥ 1170 ॥

काल्या दासः **कालिदासः** । कालीशब्दस्य ह्रस्वः ।

## १००२ । त्वे च । (६. ३. ६४)

त्वप्रत्यये ङ्यापोर्वा ह्रस्वः । अजत्वम् अजात्वम् । रोहिणित्वम् रोहिणीत्वम् ।

१००६ । इष्टकेषीकामालानां चिततूलभारिषु । ( ६. ३. ६५ )

इष्टकादीनां तदन्तानां च पूर्वपदानां चितादिषु क्रमादुत्तरपदेषु ह्रस्वः स्यात् । इष्टकचितम् । पक्वेष्टकचितम् । इषीकतूलम् । मुञ्जेषीकतूलम् । मालभारी । उत्पलमालभारी ।

माघे—XIII. 63.

नवहाटकेष्टकचितं ददर्श सः
क्षितिपस्य पस्त्यमथ तत्र संसदि ।
गगनस्पृशां मणिरुचां चयेन यत्
सदनान्युदहसयत नाकिनामपि ॥ 1171 ॥

नवहाटकेष्टकाभिश्चितं रचितं नवहाटकेष्टकचितम् । इष्टकाशब्दस्य ह्रस्वः ।

चम्पूभारते—XII. 13, 19.

तत्रागतेषु युधि तेषु तपोधनोऽय-
मेकोऽपि धीरतरधीरिषुवर्षुकेषु ।
निष्पाण्डवास्तु वसुधेति निजव्रतेन
साकं व्यमुञ्चदभिमन्त्र्य जवादिषीकाम् ॥ 1172 ॥

अथ ब्रह्मशिरोऽस्त्रस्य महितस्य किरीटिना ।
योगात्तूलपदस्येव ह्रस्वभावं जगाम सा ॥ 1173 ॥

अश्वत्थामा पाण्डवेषु इषीकां नामास्त्रं व्यमुञ्चत् । सा इषीका किरीटिमहितब्रह्मशिरोऽस्त्रस्य योगात् तूलपदस्य योगादिव ह्रस्वभावं जगाम । इषीकायास्तूलमिषीकतूलमिति ह्रस्वः ।

चम्पूभारते— XI. 57.

ततस्स्वकीयस्य तनूभवस्य
वधाज्ज्वलत्तातुनना इव द्राक् ।
मन्दायमानद्युतिमालभारी
मरीचिमाली च ममज्ज सिन्धौ ॥ 1174 ॥

मन्दायमानद्युतीनां माला तां बिभर्तीति मन्दायमानद्युतिमालभारी ।

चम्पूरामायणे—V. 7.

उज्जृंभितस्य तरसा सुरसां विजेतुं
पादौ पयोधिकलितौ पवमानसूनोः ।
तस्योत्तमाङ्गमभवद्गगनस्रवन्ती-
वीचीचयस्खलितशीकरमालभारि ॥ 1175 ॥

गगनस्रवन्ती मन्दाकिनी तस्या वीचीचयस्खलितशीकरमाला तां बिभर्तीति तथा । मालभारि । ह्रस्वः ।

१००७ । कारे सत्यागदस्य । ( ६. ३. ७०. )

मुं स्यात् । सत्यंकारः । अगदंकारः ।

वा० । अस्तोश्चेति वक्तव्यम् । ( 3973. )

अस्तुंकारः ।

वा० । धेनोर्भव्यायाम् । ( 3975. )

धेनुंभव्या ।

वा० । लोकस्य पृणे । ( 3976. )

लोकंपृणः

वा० । इत्येऽनभ्याशस्य । ( 3977. )

अनभ्याशमित्यः । दूरतः परिहर्तव्य इत्यर्थः ।

वा० । भ्राष्ट्राग्न्योरिन्धे । ( 3978. )

भ्राष्ट्रमिन्धः । अग्निमिन्धः ।

वा० । गिलेऽगिलस्य । ( 3979. )

तिमिङ्गिलः

वा० । उष्णभद्रयोः करणे । ( 3981. )

उष्णंकरणम् । भद्रंकरणम् ।

किरातार्जुनीये—XI. 50.

उपाधत्त सपत्नेषु कृष्णाया गुरुसंनिधौ ।
भावमानयने सत्याः सत्यंकारमिवान्तकः ॥ 1176 ॥

क्रियतेऽनेनेति कारः । करणे घञ् । सत्यस्य कारः सत्यंकारः । चिकीर्षितस्य कार्यस्यावश्यं क्रियास्थापनार्थं परहस्ते यद्दीयते स सत्यंकारः । क्रियादौ सत्यदार्ढ्याय प्रदीयमानो मूल्यैकदेशश्च । 'क्लीबे सत्यापनं सत्यंकारः सत्याकृतिस्त्रियाम्' II. ix. 82. इत्यमरः । मुमागमः ।

नैषधे—IV. 116.

कन्यान्तःपुरबोधनाय यदधीकारान्न दोषा नृपं
द्वौ मन्त्रिप्रवरश्च तुल्यमगदङ्कारश्च तावूचतुः ।
देवाकर्णय सुश्रुतेन चरकस्योक्तेन जानेऽखिलं
स्यादस्या नलदं विना न दलने तापस्य कोऽपि क्षमः ॥ 1177 ॥

अगदमपरोगं करोतीत्यगदङ्कारो वैद्यः । 'रोगहार्यगदङ्कारो भिषग्वैद्यश्चिकित्सकः' II. vi. 57. इत्यमरः । कर्मण्यण् । मुमागमः ।

अनर्घराघवे—VII. 1.

तमिस्रामूर्छालत्रिजगदगदङ्कारकिरणे
रघूणां गोत्रस्य प्रसवितरि देवे सवितरि ।
पुरःस्थे दिक्पालैस्सह परगृहावासवचनात्
प्रविष्टा वैदेही दहनमथ शुद्धा च निरगात् ॥ 1178 ॥

अगदङ्कारः । कर्मण्यण् । अनेन मुम् ।

१००८ । रात्रेः कृति विभाषा । (६. ३. ७२.)

मुम् वा स्यात् । रात्रिञ्चरः रात्रिचरः । रात्रिमटः रात्र्यटः । अखिदर्थमिदं सूत्रम् । खिति तु 'अरुर्द्विषत्' (सू. 2942) इति नित्यमेव वक्ष्यते । रात्रिम्मन्यः ।

अस्मिन्नेव ग्रन्थे श्लो० 852. रात्रौ चरन्तीति रात्रिञ्चरा राक्षसाः । चरेष्टः । अनेन पक्षे मुमागमः ।

अस्मिन्नेव ग्रन्थे श्लो० 51. रात्रौ चरतीति रात्रिचरी राक्षसी । चरेष्टः टित्वान्ङीप् । न मुमागमः ।

अस्मिन्नेव ग्रन्थे श्लो० 24. रात्रिञ्चराः । पूर्ववन्मुम् ।

१०१२ । समानस्य छन्दस्यमूर्धप्रभृत्युदर्केषु । ( ६. ३. ८४ )

अत्र समानस्येति योगविभागाल्लोकेऽपि क्वचित्सादेशः । सपक्षः, साधर्म्यम्, सजातीयमित्यादि सिद्धमिति काशिका ।

नैषधे—V. 2.

> नात्र चित्रमनु तं प्रययौ यत्पर्वतस्स खलु तस्य सपक्षः ।
> पारदस्तु जगतो गुरुरुच्चैर्विस्मयाय गगनं विललङ्घे ॥ 1179 ॥

समानः पक्षो यस्य स सपक्षः सखा ।

अस्मिन्नेव ग्रन्थे श्लो० 943. सधर्माणः ।

अस्मिन्नेव ग्रन्थे श्लो० 24. सुधासधर्माणम् ।

अस्मिन्नेव ग्रन्थे श्लो० 135. साधर्म्यम् ।

चम्पूभारते—I. 18.

> कुरङ्गयूनां कुरुते स्म भीतिं
> गुरोः कुलस्यामृतदीधितेर्नः ।
> सजातिरेषां तनुते कलङ्क-
> मितीव रोषादिषुभिस्स पाण्डुः ॥ 1180 ॥

समाना अभिन्ना जातिर्यस्य स सजातिः । समानशब्दस्य सभावः ।

१०१३ । ज्योतिर्जनपदरात्रिनाभिनामगोत्ररूपस्थानवर्णवयोवचनबन्धुषु । ( ६. ३. ८५. )

एषु द्वादशसूत्तरपदेषु समानस्य सः स्यात् । सज्योतिः, सजनपद इत्यादि ।

अनर्घराघवे—IV. 45.

त्वं वेदवानसि वसिष्ठगुरोस्सनाभिः
स्वायम्भुवस्य भगवान्प्रभवो गुरुस्ते ।
तेनातिमात्रमनृणं हृदयं मदीय-
मद्यापि न तुदति शाम्यतु ते कुदृष्टिः ॥ 1181 ॥

सनाभिः सपिण्डः । एकगोत्र इति यावत् ।

अनर्घराघवे—V. 27.

ग—सुग्रीवस्सनाभिरयमस्माकमस्य हि प्रभवो भगवानैक्ष्वाकस्य राजर्षिवंशस्य प्रसविता सहस्रदीधितिः ॥ 1182 ॥

सनाभिः ।

भट्टिकाव्ये—XVIII. 12.

शिवाः कुष्णन्ति मांसानि भूमिः पिबति शोणितम् ।
दशग्रीवसनाभीनां समदन्त्यामिषं खगाः ॥ 1183 ॥

दशग्रीवसनाभीनां दशग्रीवेण तुल्यगोत्राणाम् । समानस्य सभावः ।

माघे—III. 42.

यदङ्गनारूपसरूपतायाः
कञ्चिद्गुणं भेदकमिच्छतीभिः ।
आराधितोऽद्धा मनुरप्सरोभि-
श्चक्रे प्रजाः स्वास्सनिमेषचिह्नाः ॥ 1184 ॥

सरूपतायास्सारूप्यात् ।

चम्पूभारते—I. 40.

तपस्विनस्तस्य तपःकृशस्य
सरूपतामाप्तुमिवाश्रयद्भिः ।

दिने दिने मे दयनीयरूपै-
रङ्गैरशेषैरतिकार्श्यमापे ॥ 1185 ॥

सरूपताम् ।

चम्पूभारते—I. 23.

ग—अहो नरपतितापसयोः समानरूपं फलमिदमाचरितम् ॥ 1186 ॥

समानरूपम् । समासो न ।

माघे—IV 23.

उच्चैर्महारजतराजिविराजितासौ
दुर्वर्णभित्तिरिह सान्द्रसुधासवर्णा ।
अभ्येति भस्मपरिपाण्डुरितस्मरारे-
रुद्वह्निलोचनललामललाटलीलाम् ॥ 1187 ॥

सवर्णा समानवर्णा । समासः ।

माघे—XII. 69.

व्यक्तं बलीयान्यदि हेतुरागमा-
दपूरयत्सा जलधिं न जाह्नवी ।
गाङ्गौघनिर्भर्त्सितशम्भुकन्धरा-
सवर्णमर्णः कथमन्यथास्य तत् ॥ 1188 ॥

सवर्णम् ।

रघुवंशे—V. 65.

तं कर्णभूषणनिपीडितपीवरांसं
शय्योत्तरच्छदविमर्दकृशाङ्गरागम् ।
सूतात्मजास्सवयसः प्रथितप्रबोधं
प्राबोधयन्नुषसि वाग्भिरुदारवाचः ॥ 1189 ॥

समाने वयः येषां ते सवयसः ।

## १०१४ । चरणे ब्रह्मचारिणि । ( ६. ३. ८६ )

ब्रह्मचारिण्युत्तरपदे समानस्य सः स्यात् । चरणः शाखा । ब्रह्म वेदः । तदध्ययनार्थं व्रतमपि ब्रह्म । तच्चरतीति ब्रह्मचारी । समानस्य सः । सब्रह्मचारी ।

## १०१५ । तीर्थे ये ( ६. ३. ८७ )

तीर्थे उत्तरपदे यादौ प्रत्यये विवक्षिते समानस्य सः स्यात् । सतीर्थ्यः एकगुरुकः । 'समानतीर्थे वासी' ( सू. 1658 ) इति यत्प्रत्ययः ।

## १०१६ । विभाषोदरे । ( ६. ३. ८८ )

यादौ प्रत्यये विवक्षित इत्येव । सोदर्यः समानोदर्यः । 'सोदराद्यः' ( सू. 1660) इति, 'समानोदरे शयितः' ( सू. 1659 ) इति च यत् ।

भट्टिकाव्ये—VII. 88.

आत्मनः परिदेवध्वे कुर्वन्तो रामसंकथाः ।
**समानोदर्य**मस्माकं जटायुं च स्तुथादरात् ॥ 1190 ॥

समानोदरे शयितं **समानोदर्यम्** । एकोदरभ्रातरम् । यत्प्रत्ययः । अनेन समानस्य विकल्पेन सभावाभावः ।

चम्पूभारते—I. 12.

स—थे किल पराशरसुतो निखिलावनीदेशावनाय निजजननीनिदेशावनम्रमना मनागितराध्ययेतदश्रयलक्ष्मीणः **समानोदर्यस्य** विचित्रवीर्यस्य कुटुम्बिन्यामम्बालिकायां जनयामास ॥ 1191 ॥

**समानोदर्यस्य** । पूर्ववत् ॥

रघुवंशे—XV 26.

स हत्वा लवणं वीरस्तदा मेने महौजसः ।
भ्रातुस्सोदर्यमात्मानमिन्द्रजिद्वधशोभिनः ॥ 1192 ॥

समानोदरे शयितं **सोदर्यम्** । एकोदरम् । अनेन समानस्य सभावः ।

भट्टिकाव्ये—VI. 6.

> आशङ्कमानो वैदेहीं त्वरितं निहतां मृताम् ।
> स शत्रुघ्नस्य सोदर्यमारादायान्तमैक्षत ॥ 1193 ॥

सोदर्यस्तु पूर्ववत् ।

१०१७ । दृग्दृशवतुषु । ( ६. ३. ८९ )

सदृक् सदृशः ।

वा० । दृक्षे चेति वक्तव्यम् । ( 3992. )

सदृक्षः । वतुरुत्तरार्थः । 'समानान्ययोः' ( वा. 2029. सू. 2974 ) इति कञ्, किन् च । 'त्यदादिषु' ( सू. 429 ) इति कञ्, किन् च ।

अस्मिन्नेव ग्रन्थे श्लो० 81. सदृशी । कञ् । अनेन सभावः । 'टिड्ढा' ( सू. 470 ) इति ङीप् ।

भट्टिकाव्ये—II. 45.

> वृन्दिष्ठमार्चीद्रसुधाधिपानां
> 　तं प्रेष्ठमेतं गुरुवद्गरिष्ठम् ।
> सदृङ् महान्तं सुकृताधिवासं
> 　बंहिष्ठकीर्तिर्यशसा वरिष्ठम् ॥ 1194 ॥

सदृक् समानः । 'समानान्ययोश्च' ( वा. 2029. सू. 2974 ) इत्युपसंख्यानात् समानशब्दोपपदात् दृशेः क्विन्प्रत्ययः । अनेन समानशब्दस्य सभावः ।

१०१८ । इदंकिमोरीश्की । ( ६. ३. ९० )

दृग्दृशवतुषु इदम ईश्, किमः की स्यात् । ईदृक् ईदृशः । कीदृक् कीदृशः । वतूदाहरणं वक्ष्यते ।

वा० । दृक्षे चेति वक्तव्यम् । ( 3992. )

ईदृक्षः । कीदृक्षः । 'आ सर्वनाम्नः' ( सू. 430 ) । दृक्षे च । तादृक् तादृशः तावान् तादृक्षः । दीर्घः । मत्वोत्वे । अमूदृशः अमूदृक् अमूदृक्षः ।

चम्पूभारते—V. 24.

ग—अमूदृशं तु तव मतं पुनरपि मम मतं निदेशवशोऽव्यथमस्यो निर्मिमीते ॥ 1195 ॥

अमूदृशं तव मतम् ।

अस्मिन्नेव ग्रन्थे श्लो० 81. ईदृशम् आज्ञाम् । 'त्यदादिषु' (सू. 429) इति क्विन् । अनेन इदम ईश् ।

अस्मिन्नेव ग्रन्थे श्लो० 130. कीदृशं ककुदम् । 'त्यदादिषु' (सू. 429) इति कञ् । अनेन किमः की ।

चम्पूभारते—II. 33.

तस्मिन् रक्षसि नेदिष्ठे तादृक्षपरुषाक्षरे ।
अपमृत्युरिवोदस्थादनिलस्यात्मसम्भवः ॥ 1196 ॥

तादृक्षाणि । 'दृक्षे च' (वा. 3992. सू. 1018) इति आकारोऽन्तादेशः ।

चम्पूरामायणे—II. 2.

ग—तस्मादस्माभिरपि तेषां मनीषामनुसरमाणैरेतावन्तं कालं परिपालिताः किल सकलाः प्रजाः ॥ 1197 ॥

एतावन्तम् ।

अनर्घराघवे—IV. 35.

भूमात्रं कियदेतदर्णवमयं तत्साधितं हार्यते
यद्वीरेण भवादृशेन वदति त्रिस्सप्तकृत्वो जयः ।
डिम्भोऽयं नवबाहुरीदृशमिदं घोरं च वीरव्रतं
तत्कोपाद्विरम प्रसीद भगवन् जात्यैव पूज्योऽसि नः ॥ 1198 ॥

भवादृशेन । 'आ सर्वनाम्नः' (सू. 430) इत्याकारः । कियत् । ईदृशः । किमः किः । इदम ईश् ।

१०१९ । समासेऽङ्गुलेस्सङ्गः । (८. ३. ८०.)

अङ्गुलिशब्दात्सङ्गस्य सस्य मूर्धन्यः स्यात् समासे । अङ्गुलिषङ्गः । समासे किम् । अङ्गुलेस्सङ्गः ।

भट्टिकाव्ये—IX. 78.

गतमङ्गुलिषङ्गत्वं भीरुष्ठानादिहागतम् ।
खादिष्याम इति प्रोचुर्नयन्तो मारुतिं द्विषः ॥ 1199 ॥

अङ्गुलिषु सङ्गो यस्य सोऽङ्गुलिषङ्गः । अनेन षत्वम् ।

१०२० । भीरोः स्थानम् । ( ८. ३. ८१. )

भीरुशब्दात्स्थानस्य सस्य मूर्धन्यः स्यात्समासे । भीरुष्ठानम् । असमासे तु भीरोः स्थानम् ।

अस्मिन्नेव ग्रन्थे श्लो० 1199. भीरूणां स्थानं भीरुष्ठानम् । षत्वम् ।

१०२१ । ज्योतिरायुषः स्तोमः । ( ८. ३. ८३. )

आभ्यां सोमस्य सस्य मूर्धन्यस्समासे । ज्योतिष्टोमः । आयुष्टोमः ।
अस्मिन्नेव ग्रन्थे श्लो० 1056. ज्योतिष्टोमादिषु क्रतुषु । षत्वम् ।

अनर्घराघवे—VII. 62.

प्राणायामोपदेष्टा सरसिरुहवने यौवनोन्मादलीला-
गोष्ठीनां पीठमर्दस्त्रिभुवनवनितानेत्रयोः प्रातराशः ।
कामायुष्टोमयज्वा शमितकुमुदिनीमौनमुद्रानुरागः
शृङ्गाराद्वैतवादी विभवति भगवानेष पीयूषभानुः ॥ 1200 ॥

कामस्यायुष्टोमः आयुर्वर्धको यागः । तस्य यज्वा कर्ता ।

१०२२ । सुषामादिषु च । ( ८. ३. ९८. )

सस्य मूर्धन्यः । सुषामादिः— ८. ७. शोभनं साम यस्य सः सुषामा । सुषन्धिः ।

अस्मिन्नेव ग्रन्थे श्लो० 28. शोभनं साम सान्त्वं यस्यास्तां सुषाम्नीम् । ‘ अन उपधालोपिनोऽन्यतरस्याम् ’ ( सू. 462 ) इति ङीप् ।

१०२५ । अषष्ठ्यतृतीयास्थस्यान्यस्य दुगाशीराशास्थास्थितोत्सुकोतिकारक-रागच्छेषु । ( ६.३. ९९. )

अन्यशब्दस्य दुगागमः स्यादाशीरादिषु परेषु । अन्यदाशीः । अन्यदाशा । अन्यदास्था । अन्यदास्थितः । अन्यदुत्सुकः । अन्यदूतिः । अन्यद्रागः । अन्यदीयः । अषष्ठी इत्यादि किम् । अन्यस्यान्येन वा आशीरन्याशीः ।

वा० । कारके छे च नार्थे निषेधः । ( 5048. )

अन्यस्य कारकोऽन्यत्कारकः । अन्यस्यायमन्यदीयः । गहादेराकृतिगणत्वाच्छः ।

१०२६ । अर्थे विभाषा । ( ६. ३. १००. )

अन्यदर्थः अन्यार्थः ।

१०२७ । कोः कत्तत्पुरुषेऽचि । ( ६. ३. १०१. )

अजादावुत्तरपदे । कुत्सितोऽश्वः कदश्वः कदन्नम् । तत्पुरुषे किम् । कूष्ट्रो राजा ।

वा० । त्रौ च । ( 3998. )

कुत्सितास्त्रयः कत्त्रयः ।

अस्मिन्नेव ग्रन्थे श्लो० 473. कदुष्णमीषदुष्णम् । 'कवं चोष्णे' ( सू. 1033 ) इति चकारात् कोः कदिति कदादेशः ।

१०२८ । रथवदयोश्च । ( ६. ३. १०२. )

कुत्सितो रथः कद्रथः । वदतीति वदः । पचाद्यच् । कुत्सितस्य वदः कद्वदः ।

अस्मिन्नेव ग्रन्थे श्लो० 917. कुत्सितो रथः कद्रथः ।

अस्मिन्नेव ग्रन्थे श्लो० 1045. कद्वदम् । वदेः पचाद्यच् । अनेन कोः कदादेशः ।

अस्मिन्नेव ग्रन्थे श्लो० 227. वदतीति वदः । पचाद्यच् । कुत्सितस्य वदः कद्वदः । 'गर्ह्यवादी तु कद्वदः' III. i. 37. इत्यमरः । अनेन कोः कदादेशः । कः न भवतीति अकद्वदः ।

१०२९। तृणे च जातौ। (६. ३. १०३.)

कुत्सितं तृणं कत्तृणम् ।

१०३०। का पथ्यक्षयोः (६. ३. १०४.)

कापथम् । काक्षः । अक्षशब्देन तत्पुरुषः । अक्षिशब्देन बहुव्रीहिर्वा ।

अस्मिन्नेव ग्रन्थे श्लो० 610. काक्षेण कुदृष्ट्या । इन्द्रियवाचिनाक्षशब्देन तद्विशेषश्चक्षुर्लक्ष्यते । केचित्तु न्यासकारेण तत्पुरुषाधिकारभङ्गेन बहुव्रीहिसमासान्तत्वेनापि व्याख्यानात् इहापि कुत्सितमक्षि यस्य तेन काक्षेण मयेति च व्याचक्षते ।

१०३१ । ईषदर्थे । (६. ३. १०५)

ईषज्जलं काजलम् ।

किरातार्जुनीये—XV. 25.

देवाकानिनि कावादे वाहिकास्वकाहि वा ।
काकारेभभरे काका निस्वभव्यव्यभस्वनि ॥ 1201 ॥

कावादः ईषद्वादः । वाक्लहः । अनेन कुशब्दस्य कादेशः । तद्वति कावादे । अर्शआदिभ्योऽच् ।

१०३२ । विभाषा पुरुषे । (६. ३. १०६)

कापुरुषः कुपुरुषः ।

अस्मिन्नेव ग्रन्थे श्लो० 781. कुत्सितः पुरुषः कापुरुषः । कुशब्दस्य कादेशः । 'कुगति' (सू. 761) इति समासः ।

१०३३ । कवं चोष्णे । (६. ३. १०७)

उष्णशब्दे उत्तरपदे कवं का च वा स्यात् । कवोष्णम् कोष्णम् कदुष्णम् ।

अस्मिन्नेव ग्रन्थे श्लो० 427. कवोष्णमीषदुष्णम् । कुशब्दस्य कवादेशः ।

भट्टिकाव्ये—III. 17.

अबाक्षरकं करुणं रुवन्तो
मुहुर्मुहुर्न्यश्वसिषुः कवोष्णम् ।
हा राम हा कष्टमिति ब्रुवन्तः
पराङ्मुखैस्ते न्यवृतन्मनोभिः ॥ 1202 ॥

कोः कवादेशः ।

अस्मिन्नेव ग्रन्थे श्लो० 832. कोष्णम् ईषदुष्णम् । कोः कादेशः ।

रघुवंशे—I. 84.

भुवं कोष्णेन कुण्डोध्नी मेध्येनावभृथादपि ।
प्रस्रवेणाभिवर्षन्ती वत्सालोकप्रवर्तिना ॥ 1203 ॥

कोष्णेन । किञ्चिदुष्णेन ।

नैषधे—III. 94.

विज्ञापनीया न गिरो मदर्थाः
क्रुधा कदुष्णे हृदि नैषधस्य ।
पित्तेन दूने रसने सितापि
तिक्तायते हंसकुलावतंस ॥ 1204 ॥

कदुष्णे ईषदुष्णे । चकारात्कोः कदादेशः ।

## १०३४ । पृषोदरादीनि यथोपदिष्टम् । ( ६. ३. १०९. )

पृषोदरप्रकाराणि शिष्टैर्यथोच्चारितानि तथैव साधूनि स्युः । पृषदुदरं पृषोदरम् । तलोपः । वारिवाहको बलाहकः । पूर्वपदस्य बः, उत्तरपदादेश्च लत्वम् । पृषोदरादिः ६. ३०.

माघे—XII. 19.

तूर्णं प्रणेत्रा कृतनादमुच्चैः
प्रणोदितं वेसरमुत्पथमध्वनि
आनीयनेमिक्षतसान्द्रमेदिनी-
रजश्चयाक्रान्तिभयादिवाद्रवत् ॥ 1205 ॥

वेगेन सरन्तीति वेसराः गर्दभेनाश्वायामुत्पन्ना अश्वतराख्या भारवहाः पशुविशेषाः । पृषोदरादित्वात्साधुः ।

चम्पूरामायणे—I. 104.

रामाकर्षणभग्नकार्मुकभुवा ध्वानेन रोदोरुधा
दृप्तक्षत्रयशस्सितच्छदकुले जीमूतनादायितम् ।
वीरश्रीप्रथमप्रवेशसमये पुण्याहघोषायितं
सीतायाः किल मानसे परिणये माङ्गल्यतूर्यायितम् ॥ 1206 ॥

जीवस्योदकस्य मूतः पुटबन्धो येषां ते जीमूताः । तेषां नादः स इवाचरितं जीमूतनादायितम् । जीमूतशब्दोऽनेन साधुः । भावे क्तः ।

कुमारसंभवे—I. 28.

प्रभामहत्या शिखयेव दीप-
स्त्रिमार्गयेव त्रिदिवस्य मार्गः ।
संस्कारवत्येव गिरा मनीषी
तया स पूतश्च विभूषितश्च 1207 ॥

मनस ईषी मनीषी विद्वान् ।

अस्मिन्नेव ग्रन्थे श्लो॰ 738. पुराणस्य पुरातनस्य । अनेन साधुः ।

रघुवंशे—III. 19.

सुखश्रवा मङ्गलतूर्यनिस्स्वनाः
प्रमोदनृत्तैस्सह वारयोषिताम् ।

न केवलं सद्मनि मागधीपतेः
पथि व्यजृम्भन्त दिवौकसामपि ॥ 1208 ॥

द्यौरोको येषां ते दिवौकसो देवाः । अनेन साधुः ।

रघुवंशे—III. 59.

ततः प्रकोष्ठे हरिचन्दनाङ्किते
प्रमथ्यमानार्णवधीरनादिनीम् ।
रघुः शशाङ्कार्धमुखेन पत्रिणा
शरासनज्यामलुनाद्बिडौजसः ॥ 1209 ॥

वेवेष्टि व्याप्नोतीति विट् व्यापकमोजो यस्य स विडौजाः । तस्य इन्द्रस्य ।

रघुवंशे—III. 57.

तयोरुपान्तस्थितसिद्धसैनिकं
गरुत्मदाशीविषभीमदर्शनैः ।
बभूव युद्धं तुमुलं जयैषिणो-
रधोमुखैरूर्ध्वमुखैश्च पत्रिभिः ॥ 1210 ॥

आशिषि दंष्ट्रायां विषं येषां ते आशीविषास्सर्पाः । अनेन साधुः ।

वा० । दिक्शब्देभ्यस्तीरस्य तारभावो वा । (३९९९.)

दक्षिणतारम् दक्षिणतीरम् । उत्तरतारम् उत्तरतीरम् ।

**१०३६ । कर्णे लक्षणस्याविष्टाष्टपञ्चमणिभिन्नच्छिन्नच्छिद्रस्रुवस्वस्तिकस्य ।**
**(६. ३. ११५.)**

कर्णशब्दे परे लक्षणवाचकस्य दीर्घः । द्विगुणाकर्णः । लक्षणस्य किम् । शोभनकर्णः । अविष्टादीनां किम् । विष्टकर्णः । अष्टकर्णः । पञ्चकर्णः । मणिकर्णः । भिन्नकर्णः । छिन्नकर्णः । छिद्रकर्णः । स्रुवकर्णः । स्वस्तिककर्णः ।

**१०३७ । नहिवृतिवृषिव्यधिरुचिसहितनिषु क्वौ । (६. ३. ११६.)**

क्विबन्तेषु परेषु पूर्वपदस्य दीर्घः। उपानत्। नीवृत्। प्रावृट्। मर्मावित्। नीरुक्। अभीरुक्। ऋतीषट्। परीतत्। क्वौ इति किम्। परिणहनम्।

नैषधे—I. 123.

कृतावरोहस्य हयादुपानहौ
ततः पदे रेजतुरस्य बिभ्रती।
तयोः प्रवालैर्वनयोस्तथाम्बुजै-
र्नियोद्धुकामे किमु बद्धवर्मणी॥ 1211॥

उपानहौ चार्मणी पादत्राणे। 'पादत्राणे उपानहौ' इति कोशः।

अस्मिन्नेव ग्रन्थे श्लो० 136. नितरां वर्तन्ते जना येष्विति **नीवृतः** जनपदाः।

भट्टिकाव्ये—II. 7.

दत्तावधानं मधुलेहिगीतौ
प्रशान्तचेष्टं हरिणं जिघांसुः।
आकर्णयन्नुत्सुकहंसनादान्
लक्ष्ये समाधिं न दधे **मृगावित्**॥ 1212॥

मृगान्विध्यतीति **मृगावित्** व्याधः। 'व्यध ताडने' क्विप्। अनेन दीर्घः।

भट्टिकाव्ये—V. 82.

भ्रातरि न्यस्य यातो मां मृगाविन्मृगयामसौ।
एषितुं प्रेषितो यातो मया तस्यानुजो वनम्॥ 1213॥

**मृगावित्**। पूर्ववत्।

भट्टिकाव्ये—V. 52.

चिरं क्लिशित्वा **मर्मावित्** रामो विलुभितप्लवम्।
शब्दायमानमव्यात्सीद्भयदं क्षणदाचरम्॥ 1214॥

मर्म विध्यतीति **मर्मावित्** मर्मभेदी। पूर्वपदस्य दीर्घः।
अस्मिन्नेव ग्रन्थे श्लो० 771. **मर्माविद्भिः**। पूर्ववत्।

भट्टिकाव्ये—VI. 74.

भृङ्गालिकोकिलकुङ्भिर्वाशनैः पश्य लक्ष्मण ।
रोचनैर्भूषितां पम्पामस्माकं हृदयाविधम् ॥ 1215 ॥

हृदयं विध्यतीति हृदयावित् । क्विप् । पूर्ववत्पूर्वस्य दीर्घः ।

१०३८ । वनगिर्योस्संज्ञायां कोटरकिंशुलकादीनाम् । ( ६. ३. ११७. )

कोटरादीनां वने परे किंशुलकादीनां गिरौ परे च दीर्घस्स्यात्संज्ञायाम् ।

कोटरादिः— ६. ३१. किंशुलकादिः— ६. ३२.

१०३९ । वनं पुरगामिश्रकासिध्रकाशारिकाकोटराग्रेभ्यः । ( ८. ४. ४. )

वनशब्दस्योत्तरपदस्य एभ्य एव णत्वं नान्येभ्यः । इह कोटरान्ताः पञ्च दीर्घविधौ कोटरादयो बोध्याः । तेषां कृतदीर्घाणां णत्वविधौ निर्देशो नियमार्थः । अग्रेशब्दस्य तु विध्यर्थः । पुरगावणम् । मिश्रकावणम् । सिध्रकावणम् । शारिकावणम् । कोटरावणम् । एभ्य एवेति किम् ? असिपत्रवनम् । वनस्याग्रे अग्रेवणम् । राजदन्तादिषु निपातनात्सप्तम्या अलुक् । किंशुलकागिरिः ।

अस्मिन्नेव ग्रन्थे श्लो० 925. अग्रे वनस्याग्रेवणम् । वनाग्रे । राजदन्तादित्वात्परनिपातः । अनेन णत्वम् । एतत्सूत्रनिर्देशादलुक् ।

चम्पूरामायणे—III. 29.

हा नाथ क चिरायसीति बहुशो व्याकुश्य बाष्पाविलं
चक्षुर्दिक्षु विमुञ्चतीं दशरथस्याद्यामवेक्ष्य स्नुषाम् ।
रे रे राक्षस मा वधूं प्ररुदतीं मुञ्चेति गृध्राधिपो
रुध्वाध्वानमनल्पकोपमकरोदग्रेवणं रावणम् ॥ 1216 ॥

**अग्रेवणम्** । पूर्ववत् ।

अनर्घराघवे—VII. 29.

ग— आं देवि, आम् । इयमुत्तरेण देवदारुवनलेखा विषमशरदुरन्तसाक्षिणी ॥ 1217 ॥

देवदारुवनम्। 'द्व्यच्त्र्यज्भ्यामेव' (वा. 4984. सू. 1051) इति नियमात् चतुरक्षरात् णत्वं न।

१०४०। वले। (६. ३. ११८.)

वलप्रत्यये परे दीर्घः स्यात्संज्ञायाम्। 'दन्तशिखात्संज्ञायां' (सू. 1920) इति वलचि दन्तावलः। शिखावलः। कृषीवलः।

भट्टिकाव्ये—VII. 48.

> अवग्राहे यथा वृष्टिं प्रार्थयन्ते कृषीवलाः।
> प्रार्थयध्वं तथा सीतां यात सुग्रीवशासनात्॥ 1218॥

कृषीवलाः कर्षकाः। 'रजःकृषि'ति (सू. 1919) इति वलच्। अनेन पूर्वस्य दीर्घः।

अनर्घराघवे—VI. 26.

> दिग्दन्तावलदन्तमौक्तिकमयद्वास्तोरणस्रग्विणो
> गीर्वाणाधिपतिप्रतीष्टनिगडोन्मृष्टान्यबन्दीशुचः।
> वीरश्रीसहपांसुकेलिसुहृदो मन्दोदरीबन्धुता-
> शौटीरासुरसुन्दरीसुरभयः क्षुभ्यन्ति रक्षोगृहाः॥ 1219॥

दन्तावलो हस्ती। वलच्। अनेन दीर्घः।

१०४१। मतौ बह्वचोऽनजिरादीनाम्। (६. ३. ११९)

अमरावती। अनजिरादीनां किम्। अजिरवती। बह्वचः किम्। व्रीहिमती। संज्ञायामित्येव। अजिरादिः—६. २३.

माघे—III. 62.

> निषेव्यमाणेन शिवैर्मरुद्भि-
> रध्यास्यमाना हरिणा चिराय।
> उदग्रिमरत्नाङ्कुरधाम्नि सिन्धा-
> वाह्वास्त मेरावमरावतीं या॥ 1220॥

अमरा अस्यां सन्तीत्यमरावती। दीर्घः।

अस्मिन्नेव ग्रन्थे श्लो० 904. द्राग्वतीति संज्ञा ।

१०४२ । शरादीनाञ्च । ( ६. ३. १२० )

शरावती । शरादिः—६. ३३.

रघुवंशे—XV. 97.

स निवेश्य कुशावत्यां रिपुनागाङ्कुशं कुशम् ।
शरावत्यां सतां सूक्तैर्जनिताश्रुलवं लवम् ॥ 1221 ॥

अनेन शरकुशयोर्दीर्घः ।

रघुवंशे—XIII. 64.

विरक्तसन्ध्याकपिशं पुरस्ता-
द्यतो रजः पार्थिवमुज्जिहीते ।
शङ्के हनूमत्कथितप्रवृत्तिः
प्रत्युद्गतो मां भरतस्ससैन्यः ॥ 1222 ॥

हनुरस्यास्तीति हनूमान् । अनेन दीर्घः ।

अस्मिन्नेव ग्रन्थे श्लो० 813. हनूमन्तम् ।

१०४४ । उपसर्गस्य घञ्यमनुष्ये बहुलम् । ( ६. ३. १२२ )

उपसर्गस्य बहुलं दीर्घः स्यात् घञन्ते परे न तु मनुष्ये । परीपाकः । परिपाकः । अमनुष्ये किम् । निषादः ।

अस्मिन्नेव ग्रन्थे श्लो० 607. नीवापः ।

चम्पूरामायणे—IV. 40.

ग—ततस्तैः प्रस्तावितप्रवृत्तिस्सम्पातिः प्रोषितायुषे जटायुषे निवापाञ्जलिं निर्वर्त्य पुरा कदाचिदामिषान्वेषणाय प्रेषितेन सुपार्श्वनाम्ना निजसुतेन समाम्नातं महेन्द्रमहीध्ररन्ध्रनिर्गतदशवदननीयमानजानकीपरिदेवनं जानन्नम्सूक्ष्मचक्षुः पुनरेवमवोचत ॥ 1223 ॥

निवापः ।

रघुवंशे—IV. ६४.

अपनीतशिरस्त्राणाः शेषास्तं शरणं ययुः ।
प्रणिपातप्रतीकारः संरम्भो हि महात्मनाम् ॥ 1224 ॥

प्रतीकारः ।

अस्मिन्नेव ग्रन्थे श्लो० 379. प्रतिकारः ।

माघे—XIII. 62.

तदलक्ष्यरत्नमयकुड्यमादरा-
दभिघातरीत इव इत्यथो नृपे ।
धवलाश्मरश्मिपटलाविभावित-
प्रतिहारमाविशदसौ सदश्शनैः ॥ 1225 ॥

प्रतिहारः । 'स्त्री द्वार्द्वारं प्रतीहारः' II. ii. 16. इत्यमरः ।

अस्मिन्नेव ग्रन्थे श्लो० 92. प्रतिहारः ।

भट्टिकाव्ये—IV. 37.

असंस्कृत्रिमसंव्यानावनुप्त्रिमफलाशिनौ ।
अकृत्रिमपरीवारौ पर्यभूतां तथापि माम् ॥ 1226 ॥

परिव्रियतेऽनेनेति परीवारः । घञ् । दीर्घः । मृगाणाममनुष्यत्वात् ।

अस्मिन्नेव ग्रन्थे श्लो० 805. स सुग्रीवः, सपरीवारः हनुमदादिसहितः । कपीनाममनुष्यत्वाद्दीर्घः ।

रघुवंशे—XV. 16.

धूमधूम्रो वसागन्धी ज्वालाबभ्रुशिरोरुहः ।
क्रव्याद्गणपरीवारश्चिताग्निरिव जङ्गमः ॥ 1227 ॥

क्रव्याद्गणः गृध्रादीनां गणः । स एव परिवारो यस्य सः । गृध्रादीनाममनुष्यत्वाद्दीर्घः ।

अस्मिन्नेव ग्रन्थे श्लो० 920. परिवारः । अमनुष्य इति निषेधान्न दीर्घः ।

भट्टिकाव्ये—VII. 46.

नीवारफलमूलाशानृषीनप्यतिशेरते ।
यस्या गुणा निरुद्धावास्तां द्रुतं यात पश्यत ॥ 1228 ॥

नीवारः अकृष्टपच्यधान्यम् । 'नौवृ धान्ये' (सू. 3228) इति घञ् । अनेन दीर्घः ।

भट्टिकाव्ये—VII. 53.

ययुर्विन्ध्यं शरन्मेघैः प्रावारैः प्रवरैरिव ।
प्रच्छन्नं मारुतिप्रष्ठाः सीतां द्रष्टुं प्लवङ्गमाः ॥ 1229 ॥

प्रावारैरुत्तरासङ्गैः । 'द्वौ प्रावारोत्तरासङ्गौ' II. vi. 117. इत्यमरः । 'वृणोतेराच्छादने' (सू. 3229) इति घञ् । अनेन दीर्घः ।

अस्मिन्नेव ग्रन्थे श्लो० 338. अधीकारान् । दीर्घः ।

अनर्घराघवे—I. 7.

अपि कथमसौ रक्षोराजस्ततापं जगत्त्रयी-
मपि कथमभूदिक्ष्वाकूणां कुले गरुडध्वजः ।
अपि कथमृषौ दैव्यो वाचः स्वतः प्रचकाशिरे
सुचरितपरीपाकस्सर्वः प्रबन्धकृतामयम् ॥ 1230 ॥

परीपाकः । दीर्घः ।

माघे—IV. 48.

मधुकरविटपानमितास्तरुपङ्क्ती-
र्बिभ्रतोऽस्य विटपानमिताः ।
परिपाकपिशङ्गलतारजसा
रोधश्चकास्ति कपिशं गलता ॥ 1231 ॥

परिपाकः । न दीर्घः ।

अस्मिन्नेव ग्रन्थे श्लो० 406. अधिकारः । न दीर्घः ।

रघुवंशे—XIV. 36.

तमेकभार्यं परिवादभीरोः
साध्वीमपि त्यक्तवतो नृपस्य ।
वक्षस्यसङ्घट्टसुखं वसन्ती
रेजे सपत्नीरहितेव लक्ष्मीः ॥ 1232 ॥

परिवादः । न दीर्घः ।

रघुवंशे—XIII. 59.

पुरं निषादाधिपतेरिदं तत्
यस्मिन्मया मौलिमणिं विहाय ।
जटासु बद्धास्वरुदत्सुमन्त्रः
कैकेयि कामाः फलितास्तवेति ॥ 1233 ॥

निषादः । अमनुष्य इति निषेधान्न दीर्घः ।

चम्पूरामायणे—II. 54.

देव त्वत्तनयस्य कुन्तलभरं क्षीरैः स्वधेनूद्भवैः
सेक्तुं नालमरुन्धतीपतिरभूत्स्याभिषेकोत्सवे ।
सिक्तो हन्त स एव मैथिलसुताबाष्पोदकोत्पादकै-
र्न्यग्रोधक्षरितैर्जटां रचयितुं क्षीरैर्निषादाहृतैः ॥ 1234 ॥

निषादाः । पूर्ववत् ।

१०४५ । इकः काशे । (६. ३. १२२)

इगन्तस्योपसर्गस्य दीर्घः स्यात्काशे । वीकाशः । नीकाशः । इकः किम् । प्रकाशः ।

किरातार्जुनीये—XI. 5.

आसक्तभरनीकाशैरङ्गैः परिकृशैरपि ।
आद्यूनः सद्गृहिण्येव प्रायो यष्ट्यावलम्बितः ॥ 1235 ॥

आसक्तभरनीकाशैः भाराक्रान्तसदृशैः । दीर्घः । "निभसङ्काशनीकाशप्रतीकाशोपमादयः" II. x. 38. इत्यमरः ।

१०४६ । अष्टनः संज्ञायाम् । ( ६. ३. १२५ )

दीर्घः स्यात् । अष्टापदम् । संज्ञायां किम् । अष्टपुत्रः ।

माघे—III. 28.

न लङ्घयामास महाजनानां
शिरांसि नैवोद्धतिमाजगाम ।
अचेष्टताष्टापदभूमिरेणुः
पादाहतो यत्सदृशं परिम्णः ॥ 1236 ॥

अष्टसु लोहेषु पदं प्रतिष्ठा अस्येत्यष्टापदं सुवर्णम् ।

कुमारसंभवे—VII. 10.

विन्यस्तवैडूर्यशिलातलेऽस्मि-
न्नाबद्धमुक्ताफलभक्तिचित्रे ।
आवर्जिताष्टापदकुम्भतोयैः
सतूर्यमेनां स्नपयांबभूवुः ॥ 1237 ॥

अष्टापदम् । पूर्ववत् । 'अष्टनः कपाले हविषि' ( वा. 3951. सू. 807 ) इत्यात्वम् । अष्टाकपालः ।

१०४९ । मित्रे चर्षौ । ( ६. ३. १३० )

विश्वामित्रः । ऋषौ किम् । विश्वमित्रो माणवकः ।

वा० । शुनो दन्तदंष्ट्राकर्णकुन्दवराहपुच्छपदेषु दीर्घो वाच्यः । ( 5049. )

श्वादन्त इत्यादि ।

चम्पूभारते—V. 109.

मय्यप्यसूनिह विमुञ्चति याज्ञसेनी
सा श्वापदामिषमबुद्धगतिर्भवेन्नः ।

हा मातर्दि कुन्ति सुयोधनभूमिनेत्र
पुत्रस्मृतिविरहे: पदनं प्रभेद ॥ 1238 ॥

शुन इव पदमस्य श्वापदः । मांसादजन्तुविशेषः । दीर्घः ।

अनर्घराघवे—I. 25.

अत्र विश्वामित्र ।

कच्चित्कान्तारभाजां भवति परिभवः कोऽपि शौवापदो वा
प्रत्यूहेन क्रतूनां न खलु मखभुजो भुञ्जते वा हवींषि ।
कर्तुं वा कच्चिदन्तर्वसति वसुमती दक्षिणस्सप्ततन्तु-
र्यत्संप्राप्तोऽसि किं वा रघुकुलतपसामीदृशोऽयं विवर्तः ॥ 1239 ॥

विश्वामित्रेत्यत्र दीर्घः । शुन इव पदमस्येति श्वापदः व्याघ्रः । अनेन दीर्घः । 'तस्येदम्' (सू. 1500) इत्यण् । 'द्वारादीनां च' (सू. 1386) इत्यैचि शौवापदमिति रूपम् । 'पदान्तस्य' (सू. 1561) इति विकल्पे श्वापदम् ।

चम्पूरामायणे—I. 36.

तत्र सत्रं परित्रातुं विश्वामित्रो महामुनिः ।
सौमित्रिसहितं रामं नयन्नयमवोचत ॥ 1240 ॥

विश्वामित्रः । पूर्ववत् ।

१०५० । प्रनिरन्तःशरेक्षुप्लक्षाम्रकार्ष्यखदिरपीयूक्षाभ्योऽसंज्ञायामपि ।
(८. ४. ५)

एभ्यो वनस्य णत्वं स्यात् । प्रवणम् । कार्ष्यवणम् । इह षात्परत्वाण्णत्वम् ।

भट्टिकाव्ये—IX. 94.

निर्वाणं कृतमुद्यानमनेनाम्रवणादिभिः ।
देवदारुवनामिश्रैरित्यूचुर्वानरं द्विषः ॥ 1241 ॥

निर्वणमिति पाठस्साधीयान् । उद्यानं निर्वणं वृक्षरहितमनेन कपिना कृतम् । आम्रवणादिभिरुपलक्षितम् । उभयत्रापि वननकारस्य णत्वम् ।

माघे—VI. 6.

स्मरहुताशनमुर्मुरचूर्णतां
दधुरिवाम्रवणस्य रजःकणाः ।
निपतिताः परितः पथिकव्रजान्
उपरि ते परितेपुरतो भृशम् ॥ 1242 ॥

**आम्रवणस्य** । अनेन णत्वम् ।

अस्मिन्नेव ग्रन्थे श्लो० 997. शरा बाणतृणानि । तेषां वनं **शरवणम्** । अनेन णत्वम् ॥

## १०५१ । विभाषौषधिवनस्पतिभ्यः । (८. ४. ६)

एभ्यो वनस्य णत्वं वा स्यात् । दूर्वावणम् दूर्वावनम् । शिरीषवणम् शिरीषवनम् ।

**वा०** । द्व्यच्त्र्यच्भ्यामेव । (4984.)

नेह । देवदारुवनम् ।

**वा०** । इरिकादिभ्यः प्रतिषेधो वक्तव्यः । (4985.)

इरिकादिः—८. ९. इरिकावनम् । मिरिकावनम् ।

अस्मिन्नेव ग्रन्थे श्लो० 1241. देवदारूणां वनं **देवदारुवनम्** । द्व्यच् इति नियमादिह चतुरक्षराद्वननकारस्य णत्वाभावः ।

## १०५२ । वाहनमाहितात् । (८. ४. ८)

आरोप्यं यदुह्यते तद्वाचिस्थान्निमित्तात्परस्य वाहननकारस्य णत्वं स्यात् । इक्षुवाहणम् । आहितात्किम् । इन्द्रवाहनम् । इन्द्रस्वामिकं वाहनमित्यर्थः । वहतेर्ण्युटि वृद्धिरिहैव सूत्रे निपातनात् ।

**अस्मिन्नेव ग्रन्थे श्लो०** 720. रोषस्य वाहनं **रोषवाहणम्** । रोषाश्रयमतिरुष्टमित्यर्थः । णत्वम् ।

माघे—XII. 34.

**आगच्छतोऽनूचि गजस्य घण्टयोः**
**स्वनं समाकर्ण्य समाकुलाङ्गनाः ।**

दूरादपावर्तितभारवाहणाः
पथोऽपसस्रुस्त्वरितं चमूचराः ॥ 1243 ॥

भारस्यान्नादेर्वाहना भारवाहणाः ।

माघे—I. 8.

निरीक्षितचित्रोज्ज्वलसूक्ष्मपक्ष्मणा
स्फुरद्विसच्छेदसिताङ्गसङ्गिना ।
चकासतं चारुचमूरुचर्मणा
कुथेन नागेन्द्रमिवेन्द्रवाहनम् ॥ 1244 ॥

इन्द्रवाहनमिति स्वस्वामिभावमात्रस्य विवक्षितत्वान्न णत्वम् । यथाह वामनः 'नेन्द्रवाहनशब्दे णत्वम् आहितत्वस्याविवक्षितत्वात्' इति ।

चम्पूभारते—I. 23.

कुरुतेति ततस्सहैव वासं
कुल्कूटस्थकृतान्तवाहनेन ।
मदधूतविषाणमण्डलाग्रे
महिषौघे निचखान मण्डलाग्रम् ॥ 1245 ॥

कृतान्तवाहनेन । पूर्ववत् ।

१०५३ । पानं देशे । (८. ४. ९.)

पूर्वपदस्थान्निमित्तात्परस्य पानस्य नस्य णत्वं स्यात् देशे गम्ये । क्षीरं पानं येषां ते क्षीरपाणा उशीनराः । सुरापाणाः प्राच्याः । पीयत इति पानम् । कर्मणि ल्युट् ।

अस्मिन्नेव ग्रन्थे श्लो० 720. रुधिरपायिणां राक्षसानाम् । अनेन णत्वमिति जयमङ्गलः । तन्न । पिबतेस्ताच्छील्ये णिनिः 'प्रातिपदिकान्त' (सू. 1055) इति णत्वम् ॥

१०५४ । वा भावकरणयोः । (८. ४. १०.)

पानस्येत्येव । क्षीरपानम् क्षीरपाणम् ।

वा० । गिरिनद्यादीनां वा । ( 4939. )

गिरिनद्यादिः— ८. १०. गिरिनदी गिरिणदी । चक्रनितम्बा चक्रणितम्बा ।

भट्टिकाव्ये—IX. 96.

> सुरापाणपरिक्षीबं रिपुदर्पहरोद्यम् ।
> परस्त्रीवाहिणं प्रापुस्ताविष्कारं सुराविणः ॥ 1246 ॥

सुरापाणमिति भावे ल्युट् । अनेन पक्षे णत्वम् ।

चम्पूरामायणे—I. 43.

> ततो भाविनि सङ्ग्रामे बद्धश्रद्धस्य ताटका ।
> स्वप्राणान्रामबाणस्य वीरपाणमकल्पयत् ॥ 1247 ॥

वीरपाणम् । पूर्ववत् ।

१०५५ । प्रातिपदिकान्तनुम्विभक्तिषु च । ( ८. ४. ११. )

इति णत्वं वा स्यात् । प्रातिपदिकान्ते, माषवापिणौ । नुमि, व्रीहिवापाणि । विभक्तौ, माषवापेण । पक्षे माषवापिनावित्यादि ।

अस्मिन्नेव ग्रन्थे श्लो० 720. रुधिरपायिणां रक्तपायिनां राक्षसानाम् ।

अस्मिन्नेव ग्रन्थे श्लो० 1246. परस्त्रियो वहति प्राप्नोतीति परस्त्रीवाहिणम् ।

१०५६ । कुमति च । ( ८. ४. १३. )

कवर्गवत्युत्तरपदे प्राग्वत् । हरिकामिणौ । हरिकामाणि । हरिकामेण ।

भट्टिकाव्ये—IX. 97.

> सङ्घर्षयोगिणः पादौ प्रणेमुस्त्रिदशद्विषः ।
> प्रहिण्वन्तो हनूमन्तं प्रमीणन्तं द्विषन्मतीः ॥ 1248 ॥

सङ्घर्षयोगिणः स्पर्धायोगिनो नित्यमत्सरिण इत्यर्थः । णत्वम् ।

अस्मिन्नेव ग्रन्थे श्लो० 1016. दाराश्च गावश्च दारगवम् । अचतुरादिना निपातः । दारगवाणामिति णत्वम् ।

अस्मिन्नेव ग्रन्थे श्लो० 406. वर्षभोग्येणेति णत्वम् ।

१०५८ । कुस्तुम्बुरूणि जातिः । (६. १. १४३.)

अत्र सुण्निपात्यते । कुस्तुम्बुरुर्धान्याकम् । क्लीबत्वमतन्त्रम् ।

१०५९ । अपरस्पराः क्रियासातत्ये । (६. १. १४४.)

सुण्निपात्यते । अपरस्परास्सार्थ गच्छन्ति । सततमविच्छेदेन गच्छन्तीत्यर्थः ।

१०६० । गोष्पदं सेवितासेवितप्रमाणेषु । (६. १. १४५.)

सुट् सस्य षत्वञ्च निपात्यते । गावः पद्यन्तेऽस्मिन्देशे स गोभिस्सेवितो गोष्पदः । असेविते, अगोष्पदान्यरण्यानि । प्रमाणे, गोष्पदमात्रं क्षेत्रम् ।

नैषधे— I. 72.

द्विषद्भिरेवास्य विलङ्घिता दिशो
यशोभिरेवाब्धिरकारि **गोष्पदम्** ।
इतीव धारामवधीर्य मण्डली-
क्रियाश्रियामण्डि तुरङ्गमैः स्थली ॥ 1249 ॥

अस्य यशोभिरेवाब्धिः गोः पदं **गोष्पदम**कारि गोष्पदमात्रः कृतः । सुडागमषत्वयोर्निपातः ।

चम्पूरामायणे— IV. 46.

हे वीरा यूथनाथाः परिणतिपरुषः कार्य आसीद्विषादः
कस्मादस्माकमेतज्जलनिधितरणे शक्तिरेतावतीति ।
स्मृत्वा राज्ञः प्रतिज्ञामयमनिलसुतो लङ्कनायोन्मुखश्चे-
द्भेदः प्रादुर्भवेत्किं कथयतु पयसामास्पदे **गोष्पदे** वा ॥ 1250 ॥

१०६१ । आस्पदं प्रतिष्ठायाम् । (६. १. १४६.)

इति सुण्निपात्यते ।

अस्मिन्नेव ग्रन्थे श्लो० 1250. पयसामास्पदे ।

१०६२। आश्चर्यमनित्ये। (६. १. १४७.)

अद्भुते सुट्।

१०६३। वर्चस्केऽवस्करः। (६. १. १४८.)

कुत्सितं वर्चो वर्चस्कमन्नमलं, तस्मिन् सुट्। अवकीर्यत इत्यवस्करः। वर्चस्के किम्। अवकरः।

१०६४। अपस्करो रथाङ्गम्। (६. १. १४९.)

अपकरोऽन्यः।

१०६५। विष्किरः शकुनौ वा। (६. १. १५०.)

पक्षे विकिरः।

उत्तररामचरिते—II. 22.

> कण्डूलद्विपगण्डपिण्डकषणोत्कम्पेन सम्पातिभि-
> र्घर्मस्रंसितबन्धनैः स्वकुसुमैरर्चन्ति गोदावरीम्।
> छायावस्क्रियमाणविष्किरमुखव्याकृष्टकीटत्वचः
> कूजत्क्लान्तकपोतकुक्कुटकुलाः कूले कुलायद्रुमाः॥ 1251॥

**विष्किराणां** पक्षिणाम्।

१०६६। प्रतिष्कशश्च कशेः (६. १. १५२.)

कश गतिशासनयोः इत्यस्य प्रतिपूर्वस्य पचाद्यचि सुण्निपात्यते षत्वञ्च। सहायः पुरोयायी वा प्रतिष्कश इत्युच्यते। कशेः किम्। प्रतिगतः कशां प्रतिकशोऽश्वः।

१०६७। प्रस्कण्वहरिश्चन्द्रावृषी। (६. १. १५३.)

ऋषौ इति किम्। प्रकण्वो देशः। हरिचन्द्रो माणवकः।

१०६८। मस्करमस्करिणौ वेणुपरिव्राजकयोः। (६. १. १५४.)

मकरशब्दोऽव्युत्पन्नः। तस्य सुडिनिश्च निपात्यते। वेणुरिति किम्। मकरो ग्राहः। मकरी समुद्रः।

भट्टिकाव्ये—V. 63.

अधीयन्नात्मविद्यां धारयन्मस्करिव्रतम् ।
वदन्बह्वङ्गुलिस्फोटं भ्रूविक्षेपं विलोकयन् ॥ 1252 ॥

मस्करिव्रतं परिव्राजकनियमम् । निपातनात्सुट् ।

चम्पूभारते—III. 63.

ग—तदनन्तरमहस्करसदृतरकरमहा महान्मस्करी रैवतकगिरिमुपस्कुरुते तस्य नमस्करणमस्माकं श्रेयस्करणमिति पुरोधोजनबोधनात् कुतूहलिना हलिना नगरमानीयमानं बहिरपि ज्वलता विरहानलज्वालेनेव काषायवाससावगुण्ठितवपुषं सव्यसाचिशब्दमत्सरेण सरवीरेण प्रवासरम्भमन्वीक्ष्य पन्नगपाण्ड्ययदुकुमारीणां कृते पृथगीरितां त्रिशरकाण्डीमिव त्रिदण्डीं बिभ्राणं निजपल्लवकोमलिमनिर्जयशोकादिव शुष्केण पटीरदारुणा पादुकीभूय परिचर्यमाणपादयुगलं तं कुहनाभिक्षुं सम्भ्रमेण वन्दमानेषु यदुबृन्देषु मुकुन्दोऽपि सविनयमुपागतश्चेतःपूरणावशिष्टैः स्वसोदरीप्रेमरसैरिव तीर्थजलैः पिचण्डिलं कमण्डलुं तदीयपाणेरादाय भगवन्नित इत एहीति राजभवनमुपनीय कन्यकान्तःपुरे निवेशयामास ॥ 1253 ॥

भस्करी सुट् ।

१०६९ । कास्तीराजस्तुन्दे नगरे । (६. १. १५५)

ईषत्तीरमस्यास्तीति कास्तीरं नाम नगरम् । अजस्येव तुन्दमस्येति अजस्तुन्दं नाम नगरम् । नगरे किम् । कातीरम् । अजतुन्दम् ।

१०७० । कारस्करो वृक्षः । ( ६. १. १५६ )

कारं करोतीति कारस्करो वृक्षः । अन्यत्र कारकरः । केचित्तु कस्कादिष्विदं पठन्ति, न सूत्रेषु । कस्कादिः—८. ६.

१०७१ । पारस्करप्रभृतीनि च संज्ञायाम् । ( ६. १. १५७ )

एतानि ससुट्कानि निपात्यन्ते नाम्नि । पारस्करः । किष्किन्धा ।

वा० । तद्बृहतोः करपत्योश्चोरदेवतयोस्सुट् तलोपश्च । ( 3713. )

सुट् तल्लोपश्च । तस्करः । बृहस्पतिः ।

वा० । प्रायस्य चित्तिचित्तयोः । (3714.)

प्रायश्चित्तिः प्रायश्चित्तम् । वनस्पतिरित्यादि । आकृतिगणोऽयम् । पारस्करादिः
—६. १.

अस्मिन्नेव ग्रन्थे श्लो० 1019. परश्शता असंख्या इत्यर्थः । पञ्चमीति योगविभागात्समासः । राजदन्तादित्वात् उपसर्जनस्यापि शतशब्दस्य परनिपातः । पारस्करादित्वात्सुडागमः ।

अस्मिन्नेव ग्रन्थे श्लो० 1067. वनस्पतीनां वृक्षाणाम् । पारस्करादित्वात्सुडागमः ।

भट्टिकाव्ये—VI. 145.

अस्य निर्वर्त्य कर्तव्यं सुग्रीवो राघवाज्ञया ।
किष्किन्धाद्रिगुहां गन्तुं मनः प्रणिदधे द्रुतम् ॥ 1254 ॥

किष्किन्धा । पारस्करादित्वात्सुडागमः ।

अस्मिन्नेव ग्रन्थे श्लो० 1253. तस्करः ।

रघुवंशे—I. 27.

न किलानुययुस्तस्य राजानो रक्षितुर्यशः ।
व्यावृत्ता यत्परस्वेभ्यः श्रुतौ तस्करता स्थिता ॥ 1255 ॥

अस्मिन्नेव ग्रन्थे श्लो० 1054. इन्द्रश्च बृहस्पतिश्च इन्द्राबृहस्पती । 'देवताद्वन्द्वे च' (सू. 922.) इत्यानङ् । इन्द्राबृहस्पती देवते अस्य ऐन्द्राबार्हस्पत्यम् । 'देवताद्वन्द्वे च' (सू. 1239.) इत्युभयपदवृद्धिः ।

तुंकाममनसोरपीति मकारलोपः ।

चम्पूभारते—II. 29.

रुधिरं पातुकामेन तेन वो हन्तुमीरिता ।
अधरं पातुकामाहमस्मि ते रूपसम्पदा ॥ 1256 ॥

पातुकामेन । पातुकामा ।

॥ इति समासाश्रयविधिप्रकरणम् ॥

## ॥ अथ तद्धिताधिकारप्रकरणम् ॥

---

१०७३ । प्राग्दीव्यतोऽण् । ( ४. १. ८३ )

'तेन दीव्यति' ( सू. 1550 ) इत्यतः प्रागणधिक्रियते ।

१०७४ । अश्वपत्यादिभ्यश्च । ( ४. १. ८४ )

एभ्योऽण् स्यात्प्राग्दीव्यतीयेष्वर्थेषु । वक्ष्यमाणस्य ण्यस्यापवादः । अश्वपत्यादिः —४. ८.

१०७५ । तद्धितेष्वचामादेः । ( ७. २. ११७ )

ञिति णिति च तद्धिते परे अचामादेरचो वृद्धिः स्यात् ।

१०७६ । किति च । ( ७. २. ११८ )

किति तद्धिते च तथा । अश्वपतेरपत्यादि आश्वपतम् । गाणपतम् । गाणपत्यो मन्त्र इति तु प्रामादिकमेव ।

१०७७ । दित्यदित्यादित्यपत्युत्तरपदाण्ण्यः । ( ४. १. ८५ )

दित्यादिभ्यः पत्युत्तरपदाच्च प्राग्दीव्यतीयेष्वर्थेषु ण्यः स्यात् । अणोऽपवादः । दैत्यः । अदितेरादित्यस्य वा आदित्यः । प्राजापत्यः । यमाच्चेति काशिकायाम् । याम्यः ।

वा० । पृथिव्या ञाञौ । ( 2554. )

पार्थिवा पार्थिवी ।

वा० । देवाद्यञञौ । ( 2555. )

दैव्यम् दैवम् ।

वा० । बहिषष्टिलोपो यञ् च । ( 2556. )

बाह्यः ।

वा० । ईकक्च । ( 2557. )

बाहीकः ।

वा० । स्थाम्नोऽकारः । ( 2559. )

अश्वत्थामः । पृषोदरादित्वात्सस्य तः ।

वा० । सर्वत्र गोरजादिप्रसङ्गे यत् । ( 2561. )

गव्यम् ।

भट्टिकाव्ये—II. 27.

दैत्याभिभूतस्य युवामवोढं
मग्नस्य दोर्भिर्भुवनस्य भारम् ।
हवींषि संप्रत्यपि रक्षतं तौ
तपोधनैरित्थमभाषिषाताम् ॥ 1257 ॥

दितेरपत्यानि दैत्याः । अनेन ण्यः ।

भट्टिकाव्ये—XIV. 15.

प्राच्यमांजिहिषाञ्चक्रे प्रहस्तो रावणाज्ञया ।
द्वारं ररक्षतुर्याम्यं महापार्श्वमहोदरौ ॥ 1258 ॥

यमो देवता अस्येति याम्यम् । प्राग्दीव्यतीयेऽर्थे ण्यप्रत्ययः ।

१०७८ । उत्सादिभ्योऽञ् । ( ४. १. ८६ )

औत्सः ।

वा० । अग्निकलिभ्यां ढग्वक्तव्यः । ( 2689. )

अग्नेरपत्यादि आग्नेयं, कालेयम् । उत्सादिः—४. ९.

अस्मिन्नेव ग्रन्थे श्लो० 65. सत्वतोऽपत्यं स्त्री सात्वती नाम हरेः पितृष्वसा ।
अनेनाञ् । 'टिड्ढाणञ्' ( सू. 470. ) इति ङीप् ।

माघे—XVI. 14.

समरेषु रिपून्विनिघ्नता शिशुपालेन समेत्य सम्प्रति ।
सुचिरं सह सर्वसात्वतैर्भव विश्वस्तविलासिनीजनः ॥ 1259 ॥

पूर्ववद्ञ् ।

॥ इति तद्धिताधिकारप्रकरणम् ॥

---

## ॥ अथापत्याधिकारप्रकरणम् ॥

१०७९ । स्त्रीपुंसाभ्यां नञ्स्नञौ भवनात् । (४. १. ८७)

'धान्यानां भवने' (सू. 1802) इत्यतः प्रागर्थेषु स्त्रीपुंसाभ्यां क्रमात् नञ्स्नञौ स्तः । स्त्रैणः पौंस्नः । भवभावसम्बन्धसमूहहितार्थादिषु ।

अस्मिन्नेव ग्रन्थे श्लो० 86. स्त्रीषु भवाः स्त्रैणाः । स्त्रैणाश्च ता गिरश्च स्त्रैण- । भवार्थे नञ् । यद्वा स्त्रीणां समूहः स्त्रैणम् । समूहार्थे नञ् । तस्य गिरः ।

चम्पूरामायणे— VI. 64.

ग—ततस्तं वल्लोऽपि स्त्रैणसमुचितेन कण्ठस्वरेण मृदुलमेवं जगाद ॥1260॥
स्त्रैणस्य स्त्रीभावस्य समुचितेन । भावार्थे नञ् ।

भट्टिकाव्ये—III. 7.

कर्णेजपैराहितराज्यलोभा<br>
स्त्रैणेन नीता विकृतिं लघिम्ना ।<br>
रामप्रवासे व्यमृशन्न दोषं<br>
जनापवादं सनरेन्द्रमृत्युम् ॥ 1261 ॥

स्त्रैणेन स्त्रीसम्बन्धिना लघिम्ना । सम्बन्धार्थे नञ् ।

अनर्घराघवे—II. 67.

पूषा वसिष्ठः कुशिकात्मजोऽयं<br>
त्रयस्त एते गुरवो रघूणाम् ।<br>
महामुनेरस्य गिरा कृतोऽपि<br>
स्त्रैणो वधो मां न सुखाकरोति ॥ 1262 ॥

स्त्रैणः स्त्रीसम्बन्धी वधः । पूर्ववत् नञ् ।

अस्मिन्नेव ग्रन्थे श्लो० 87. हे पौंस्नि । पुंहिते पुमर्हे वा स्नञ् । एवं स्त्रीभ्यो हितमर्हं वा स्त्रैणं माम् । नञ् । पौंस्नीति । नञ्स्नञोरुपसङ्ख्यानादीकारः ।

विश्वगुणादर्शे—455.

> अगूढगाढस्तनकुम्भिकुम्भ-
> मम्भोजडम्भोदयजैत्रनेत्रम् ।
> चित्तं धत्ते बत चोलदेश-
> स्त्रैणं प्रवीणं रतिकान्तबाणम् ॥ 1263 ॥

स्त्रीणां समूहः स्त्रैणं समूहार्थे नञ् ।

## १०८० । द्विगोर्लुगनपत्ये । (४. १. ८८)

इति लुक् स्यात् । पञ्चसु कपालेषु संस्कृतः पुरोडाशः पञ्चकपालः । अनपत्ये किम् ? द्वयोर्मित्रयोरपत्यं द्वैमित्रिः । अत इञ् । तस्य न लुक् । द्वयोरह्नोर्भवः द्व्यह्नः । 'कालाट्ठञ्' (सू. 1381) अनेन ठञो लुक् ।

अस्मिन्नेव ग्रन्थे श्लो० 648. द्वौ अञ्जली समाहृतौ **द्व्यञ्जलम्** । 'तद्धितार्थ' (सू. 728) इत्यादिना समाहारे द्विगुः । 'द्वित्रिभ्यामञ्जलेः' (सू. 804) इति समासान्तष्टच् द्व्यञ्जलमिति लक्षणया द्व्यञ्जलिगृहीतमित्यर्थः । अन्यथा घटः पट इतिवत् द्व्यञ्जलं जलमिति सामानाधिकरण्यायोगात् । न तु द्व्यञ्जलिः प्रमाणमस्येति सामानाधिकरण्यसिद्धिः । द्विगोर्लुगनपत्य इति प्रमाणतद्धितलुकि समासान्तानुपपत्तिप्रसङ्गात् । तत्रातद्धितलुकीत्यनुवृत्तेरिति ।

## १०८८ । तस्यापत्यम् । (४. १. ९२)

अपत्येऽर्थे उक्ता वक्ष्यमाणाश्च प्रत्यया वा स्युः ।

अस्मिन्नेव ग्रन्थे श्लो० 204. पर्वतस्यापत्यं स्त्री **पार्वती** । अनेनाण् । 'टिड्ढाणञ्' (सू. 470) इत्यादिना ङीप् ।

रघुवंशे—X. 49.

> रावणावग्रहक्लान्तमिति वागमृतेन सः ।
> अभिवृष्य मरुत्सस्यं कृष्णमेघस्तिरोदधे ॥ 1264 ॥

विश्रवसोऽपत्यं पुमानिति विग्रहे रावणः । विश्रवस्शब्दात् शिवादित्वादणि विश्रवसो विश्रवणरवणावित्यन्तर्गणसूत्रेण विश्रवस्शब्दस्य वृत्तिविषये रवणादेशे रावण इति सिद्धम् ।

अस्मिन्नेव ग्रन्थे श्लो० 23. रावणः । पूर्ववत् ।

१०९५ । अत इञ् ( ४. १. ९५ )

इञ् स्यादपत्येऽर्थे । दाक्षिः ।

अस्मिन्नेव ग्रन्थे श्लो० 288. दशरथस्यापत्यं पुमान् दाशरथिः । अदन्ताद्दशरथशब्दादपत्येऽर्थे इञ् ।

भट्टिकाव्ये — V. 77.

महाकुलीन ऐक्ष्वाके वंशे दाशरथिर्मम ।
पितुः प्रियङ्करो भर्ता क्षेमकारस्तपस्विनाम् ॥ 1265 ॥

दाशरथिः । पूर्ववत् ।

भट्टिकाव्ये — XIV. 39.

ही चित्रं लक्ष्मणेनोचे रावणिश्च तिरोदधे ।
विचकार ततो रामश्शरान् संतत्रसुर्द्विपः ॥ 1266 ॥

रावणस्यापत्यं रावणिः । अत इञ् ।

१०९६ । बाह्वादिभ्यश्च । ( ४. १. ९६ )

बाहविः औडुलोमिः । बाह्वादिः — ४. १०. आकृतिगणोऽयम् ।

अस्मिन्नेव ग्रन्थे श्लो० 469. शौरिः ।

अस्मिन्नेव ग्रन्थे श्लो० 396. सुमित्राया अपत्यं पुमान् सौमित्रिः लक्ष्मणः । इञ्प्रत्ययः ।

अस्मिन्नेव ग्रन्थे श्लो० 1015. सौमित्रिः पूर्ववत् ।

अस्मिन्नेव ग्रन्थे श्लो० 15. सौमित्रिः ।

भट्टिकाव्ये—XVII. 31.

अध्यावच्छक्रजिद्ध्वंसं समाधेश्चलद्व च ।
तमाह्वयत सौमित्रिरगर्जच्च भयङ्करम् ॥ 1267 ॥

सौमित्रिः ।

१०९७ । सुधातुरकङ् च । (४. १. ९७)

चादिञ् । सुधातुरपत्यं सौधातकिः ।

वा० । व्यासवरुडनिषादचाण्डालबिम्बानां चेति वक्तव्यम् । (2611.)

१०९८ । न य्वाभ्यां पदान्ताभ्यां पूर्वौ तु ताभ्यामैच् । (७. ३. ३)

पदान्ताभ्यां यकारवकाराभ्यां परस्य न वृद्धिः, किन्तु ताभ्यां पूर्वौ क्रमादैचावागमौ स्तः । वैयासकिः वारुडकिः इत्यादि ।

अनर्घराघवे—IV. 11.

यज्ञोपप्लवशान्तये परिणतो राजा सुतं याचित-
स्तं चानीय विनीय चायुधविधौ ते जघ्निरे राक्षसाः ।
त्रैयक्षं विदलय्य कार्मुकमथ स्वीकार्य सीतामितो
नो विघ्नः कुहनाविटेन वटुना किं तेन कारिष्यते ॥ 1268 ॥

त्र्यक्षो महेशः तस्येदं त्रैयक्षम् । 'तस्येदम्' (सू. 1500.) इत्यण् । अनेन ऐच् ।

११०१ । नडादिभ्यः फक् । (४. १. ९९)

गोत्र इत्येव । नाडायनः । चारायणः । अनन्तरो नाडिः । नडादिः—४.१२.

११०३ । यञिञोश्च । (४. १. १०१)

गोत्रे यौ यञिञौ तदन्तात्फक् स्यात् । गार्ग्यायणः । दाक्षायणः ।

११०५ । द्रोणपर्वतजीवन्तादन्यतरस्याम् । (४. १. १०३)

एभ्यो गोत्रे फक्वा । द्रौणायणः द्रौणिः । पार्वतायनः पार्वतिः ; जैवन्तायनः जैवन्तिः । अनादिरिह द्रोणः। अश्वत्थाम्न्यनन्तरे तूपचारात् ।

११०६ । अनृष्यानन्तर्ये विदादिभ्योऽञ् ( ४. १. १०४ )

पुत्रस्यापत्यं पौत्रः । विदादिः—४. १३.

११०७ । गर्गादिभ्यो यञ् । ( ४. १. १०५ )

गोत्र इत्येव । गार्ग्यः । वात्स्यः । गर्गादिः—४. १४.

अस्मिन्नेव ग्रन्थे श्लो० 626. जमदग्नेरपत्यं पुमान् जामदग्न्यः परशुरामः ; गर्गादिपाठादपत्येऽपि गोत्रत्वारोपाद्यञ् । साक्षादपत्यत्वविवक्षायां तु ऋष्यणि जामदग्नो भवति ।

किरातार्जुनीये—XIII. 62.

अस्त्रवेदमधिगम्य तत्त्वतः
कस्य चेह भुजवीर्यशालिनः ।
जामदग्न्यमपहाय गीयते
तापसेषु चरितार्थमायुधम् ॥ 1269 ॥

जामदग्न्यः । जमदग्नेरपत्यं, यञ् ।

११०८ । यञञोश्च । ( २. ४. ६४ )

बहुत्वे लुक् स्यात् । गर्गाः । वत्साः । बिदाः । उर्वाः । पौत्राः । दौहित्राः । लुक् न ।

१११५ । शिवादिभ्योऽण् ( ४. १. ११२ )

गोत्रे इति निवृत्तम् । शिवस्यापत्यं शैवः । गाङ्गः । शिवादिः—४. १६. पक्षे तिकादित्वात्फिञ् । गाङ्गायनिः । तिकादिः— ४. २२. शुभ्रादित्वाड्ढक् । गाङ्गेयः । शुभ्रादिः—४. १७.

अस्मिन्नेव ग्रन्थे श्लो० 1264. विश्रवसोऽपत्यं पुमान् रावणः । विश्रवश्शब्दात् शिवादित्वादणि विश्रवसो विश्रवणरवणाविति अन्तर्गणसूत्रेण विश्रवश्शब्दस्य वृत्तिविषये रवणादेशे रावण इति सिद्धम् ।

अस्मिन्नेव ग्रन्थे श्लो० 374. काकुत्स्थो रामः । शिवादित्वादण् ।

भट्टिकाव्ये—V. 56.

आप्यानः स्कन्धकण्ठांसं रुषितं सहितुं रणे ।
प्रोर्णुवन्तं दिशो बाणैः काकुत्स्थं भीरु कः क्षमः ॥ 1270 ॥

ककुत्स्थस्यापत्यं काकुत्स्थः । शिवादिभ्योऽण् ।

१११७ । ऋष्यन्धकवृष्णिकुरुभ्यश्च । ( ४. १. ११४ )

ऋषयो मन्त्रद्रष्टारः । वासिष्ठः । वैश्वामित्रः । अन्धकेभ्यः, श्वाफल्कः । वृष्णिभ्यः, वासुदेवः । आनिरुद्धः । शौरिः इति तु बाह्वादित्वादिञ् । कुरुभ्यः, नाकुलः । साहदेवः ।

रघुवंशे—V. 1.

तमध्वरे विश्वजिति क्षितीशं
निश्शेषविश्राणितकोशजातम् ।
उपात्तविद्यो गुरुदक्षिणार्थी
कौत्सः प्रपेदे वरतन्तुशिष्यः ॥ 1271 ॥

कौत्सः । अनेनाण् । इञोऽपवादः ।

१११८ । मातुरुत्संख्यासम्भद्रपूर्वायाः । ( ४. १. ११५ )

संख्यादिपूर्वस्य मातृशब्दस्योदादेशः स्यादण्प्रत्ययश्च । द्वैमातुरः । षाण्मातुरः । सांमातुरः । भाद्रमातुरः । संख्या इति किम् । सौमात्रः । शुभ्रादित्वाद्वैमात्रेयः ।

अस्मिन्नेव ग्रन्थे श्लो० 399. तिसृणां मातॄणामपत्यं पुमान् त्रैमातुरः । 'तद्धितार्थ' ( सू. 728) इत्यादिना समासः । अनेनाण् । उकारश्च ।

माघे—II. 60.

हते हिडिम्बरिपुणा राज्ञि द्वैमातुरे युधि ।
चिरस्य मित्रव्यसनी सुदमो दमघोषजः ॥ 1272 ॥

द्वयोर्मात्रोरपत्यं पुमान् द्वैमातुरः । पूर्ववत् ।

११२१ । कन्यायाः कनीन च । (४. १. ११६)

ढकोऽपवादोऽण् । तत्सन्नियोगेन कनीनादेशश्च । कानीनो व्यासः कर्णश्च । अनूढाया एवापत्यमित्यर्थः ।

११२२ । ढक् च मण्डूकात् । (४. १. ११९)

चादण् । पक्षे इञ् । माण्डूकेयः माण्डूकः माण्डूकिः ।

अस्मिन्नेव ग्रन्थे श्लो० 732. हे कूपमाण्डूकि । तत्तुल्यबुद्धे । चकारादपत्याणि ङीप् ।

११२३ । स्त्रीभ्यो ढक् । (४. १. १२०)

स्त्रीप्रत्ययान्तेभ्यो ढक् स्यात् । वैनतेयः । बाह्वादित्वात्सौमित्रिः । शिवादित्वात्सापत्नः ।

अस्मिन्नेव ग्रन्थे श्लो० 56. सुरभेरपत्यं सौरभेयी । ढकि ङीप् ।

अस्मिन्नेव ग्रन्थे श्लो० 1018. कनिष्ठाया अपत्यं पुमान् कानिष्ठिनेयः । ज्यैष्ठिनेयः । अनेन ढक् । कल्याण्यादित्वादिनङ् ।

भट्टिकाव्ये—IV. 35.

कृते सौभागिनेयस्य भरतस्य विवासितौ ।
पित्रा दौर्भागिनेयौ यौ पश्यतं चेष्टितं तयोः ॥ 1273 ॥

दुर्भगाया अपत्ये पुमांसौ दौर्भागिनेयौ । 'स्त्रीभ्यो ढक्' (सू. 1123) इति ढकि 'कल्याण्यादीनामिनङ् च' (सू. 1131) इतीनङादेशः । 'हृद्भग' (सू. 1133) इत्युभयपदवृद्धिः । सुभगाया अपत्यं पुमान् सौभागिनेयः । पूर्ववत् ।

११२५ । इतश्चानिञः । (४. १. १२२)

इकारान्ताद्द्व्यचोऽपत्ये ढक् स्यान्न त्विञन्तात् । दौलेयः नैधेयः ।

भट्टिकाव्ये—II. 32.

गाधेयदिष्टं विरसं रसन्तं
रामोऽपि मायाचणमल्पचुञ्चुः ।

स्थास्नुं रणे स्मेरमुखो जगाद
मारीचमुच्चैर्वचनं महार्थम् ॥ 1274 ॥

गाधेरपत्यं पुमान् गाधेयो विश्वामित्रः । द्व्यच इत्यनुवृत्तौ अनेन ढक् ।

११२६ । शुभ्रादिभ्यश्च । ( ४. १. १२३ )

ढक् स्यात् । शुभ्रस्यापत्यं शौभ्रेयः । शुभ्रादिः—४. १७.

माघे—XVIII. 23.

कुन्तेनोच्चैस्सादिना हन्तुमिष्टान्
**नाजानेयो** दन्तिनस्त्रस्यति स्म ।
कर्मोदारं कीर्तये कर्तुकामान्
किं वा जात्याः स्वामिनो ह्रेपयन्ति ॥ 1275 ॥

**आजानेयः** कुलीनाश्वः 'आजानेयाः कुलीनाः स्युः' II. viii. 45. इत्यमरः । शुभ्रादित्वाड्ढक् ।

अस्मिन्नेव ग्रन्थे श्लो० 212. **काद्रवेयैः** कद्रूपुत्रैः । अनेन ढक् । 'ढे लोपोऽकद्र्वाः' ( सू. 1142 ) इति प्रतिषेधाल्लोपो न ।

अनर्घराघवे—V. 33.

पितायं रेतोधास्तव तरणिरस्मत्कुलगुरु-
र्मनुर्वैमात्रेयस्तदपि सहजं मित्रमसि नः ।
अथापि ज्ञातेयं शिथिलयसि कापेयचपलः
शरास्तन्मे वालिक्षतजरसलोलाः प्रतिभुवः ॥ 1276 ॥

**वैमात्रेयः विमातृकः ।**

अनर्घराघवे—VI. 44.

ग—अरे ब्रह्मबन्धो ? **बान्धकिनेय** ? गौतमगोत्रपांसन ! ॥ 1277 ॥

**बान्धकिनेयः** असतीपुत्रः । 'अथ बान्धकिनेयः स्याद्बन्धुलश्चासतीसुतः' । II. vi. 26. इत्यमरः । शुभ्रादित्वाड्ढक् । कल्याण्यादित्वादिनङ् ।

११३१ । कल्याण्यादीनामिनङ् च । ( ४. १. १२६ )

एषामिनङादेशः स्यात्, ढक् च । कल्याण्यादिः—२. १८. काल्याणिनेयः । बान्धकिनेयः ।

अस्मिन्नेव ग्रन्थे श्लो० 1018. **कानिष्ठिनेयस्य** कनिष्ठापुत्रस्य ; **ज्यैष्ठिनेयं** ज्येष्ठापुत्रम् । उभयत्र इनङादेशः ।

अस्मिन्नेव ग्रन्थे श्लो० 1273. दुर्भगाया अपत्ये पुमांसौ **दौर्भागिनेयौ** । 'स्त्रीभ्यो ढक्' ( सू. 1128 ) इति ढक् । अनेन इनङादेशः । 'हृद्भग' (सू. 1138) इत्युभयपदवृद्धिः । सुभगाया अपत्यं पुमान् **सौभागिनेयः** । पूर्ववत् ।

चम्पूभारते—VI. 83.

ग—भो भो विदितं किं भवतामपीदं सम्प्रति खलु मात्स्यपुरे कामपि कामिनीं कामयमानः कीचको निशि तस्याः पतिभिरदृश्यैः पञ्चभिर्गन्धर्वैरनुरहसि स्वसंख्यापदाभिधेयमनीयत । तस्यै पुनरपि द्रुह्यन्तः तदनुजा अपि तथैवेति काचिदियं किंवदन्ती कर्णात्कर्णमधिरोहति । एवं चेदसंशयं सा चतुष्पथमण्डपस्तम्भसालभञ्जिकेव सर्वकरपरामर्शभाजनं पाञ्चालदुहिता । ते पुनरज्ञातवासिनः परेतपतिपवमानपाकशासनाश्विनां **पारस्त्रैणेया**स्तस्याः पतिविडम्बकाः । तेष्वपि द्वितीयेनैव बाहुबलशालिना वधूद्रुहां निहन्त्रा भवितव्यम् । अहो ! सर्वत्र विशृङ्खलममीषां दौश्शील्यम् ॥ 1278 ॥

**पारस्त्रैणेयाः** । इनङादेशः ।

अनर्घराघवे—V. 51.

ग—अयमपि किष्किन्धेश्वरस्कन्धावारकवीरो भगवतः प्रभञ्जनस्य **पारस्त्रैणेयः** पुत्रो हनूमान् ॥ 1279 ॥

**पारस्त्रैणेयः** । 'स्त्रीभ्यो ढक्' इति ढक् । अनेन इनङादेशः । अनुशतिकादित्वादुभयपदवृद्धिः ।

अस्मिन्नेव ग्रन्थे श्लो० 1277. **बान्धकिनेयः** । असतीपुत्रः । शुभ्रादित्वाड्ढक् । अनेन इनङ् ।

अनर्घराघवे—V. 37.

प्रकृतकान्तारकुमारभक्ति-
दौर्भागिनेयो जनकेन मुक्तः ।
मनुष्यसामन्तसुतो निषङ्गी
सहानुजस्तिष्ठति दण्डकायाम् ॥ 1280 ॥

दौर्भागिनेयः । दुर्भगाया अपत्यं पुमान् दौर्भागिनेयः । 'स्त्रीभ्यो ढक्' (सू. 1143.) इति ढक् । अनेन इनङादेशः । 'हृद्भग' (सू. 1133) इत्युभयपद-वृद्धिः ।

११३२ । कुलटाया वा । (४. १. १२७)

इनङ्मात्रं विकल्प्यते । ढक् तु नित्यः पूर्वेणैव । कौलटिनेयः कौलटेयः । सती भिक्षुक्यत्र कुलटा । या तु व्यभिचारार्थं कुलान्यटति तस्याः 'क्षुद्राभ्यो वा' (सू. 1137.) इति पक्षे ढ्रक् । कौलटेरः ।

'कौलटेयः कौलटेरः भिक्षुकी तु सती यदि ।
तदा कौलटिनेयोऽस्याः कौलटेयोऽपि चात्मजे'
II. vi. 26, 27. इत्यमरः ।

११३३ । हृद्भगसिन्ध्वन्ते पूर्वपदस्य च । (७. ३. १९)

इत्युभयपदवृद्धिः ञिति णिति किति च ।

अस्मिन्नेव ग्रन्थे श्लो० 1147. सुहृदो भावस्सौहार्दम् ।

सौजन्यम् । युवाद्यण् । उभयपदवृद्धिः ।

अस्मिन्नेव ग्रन्थे श्लो० 743. सुहृदयस्य भावस्सौहृदम् । युवादित्वादण् । 'हृदयस्य हृत्' (सू. 988) इति हृदादेशः । वामनवचनात् नोभयपदवृद्धिः ।

अस्मिन्नेव ग्रन्थे श्लो 1273. दुर्भगाया अपत्ये पुमांसौ दौर्भागिनेयौ । ढक् । उभयपदवृद्धिः । सुभगाया अपत्यं पुमान् सौभागिनेयः । ढक् । उभयपदवृद्धिः ।

कुमारसंभवे—II. 53.

वचस्यवसिते तस्मिन् ससर्ज गिरमात्मभूः ।
गर्जितानन्तरां वृष्टिं सौभाग्येन जिगाय सा ॥ 1281 ॥

सा गीः । सुभगाया भावः सौभाग्यम् । ष्यञ् । मनोहरत्वम् । अनेनोभयपद-वृद्धिः ।

माघे—XIII. 27.

प्रतिशब्दपूरितदिगन्तरः पतन्
पुरगोपुरं प्रति स सैन्यसागरः ।
रुरुचे हिमाचलगुहामुखोन्मुखः
पयसां प्रवाह इव सौरसैन्धवः ॥ 1282 ॥

सुरसिन्धोः गङ्गाया अयं सौरसैन्धवः । 'तस्येदम्' (सू. 1500) इत्यण् । अनेनोभयपदवृद्धिः ।

चम्पूभारते—II. 66.

गन्धर्वाणां पत्युर्गर्वजुषस्सौरसैन्धवे ललितम् ।
पाथसि मज्जः शिशिरो रोधसि भङ्गस्तु तापहेतुरभूत् ॥ 1283 ॥

माघे—III. 80.

उत्तालतालीवनसम्प्रवृत्तसमीरसीमन्तितकेतकीकाः ।
आसेदिरे लावणसैन्धवीनां चमूचरैः कच्छभुवां प्रदेशाः ॥ 1284 ॥

लवणसिन्धोरिमा लावणसैन्धव्यः । 'तस्येदम्' (सू. 1500) नित्यम् । अनेनोभयपदवृद्धिः । 'टिड्ढाणञ्' (सू. 470) इति ङीप् ।

अनर्घराघवे—VII. 126.

बलिद्विषः पादनखांशुराजिभिः
स्मरारिमौलीन्दुमरीचिवीचिभिः ।
हिमाद्रिनिष्यन्दरसैः पदे पदे
विवर्धते वैबुधसैन्धवी रुचिः ॥ 1285 ॥

विबुधसिन्धोरियं वैबुधसैन्धवी । अण् । उभयपदवृद्धिः ।

## ११३४ । चटकाया ऐरक् । ( ४. १. १२८ )

**वा० । चटकादिति वाच्यम् । ( 2624. )**

चटकस्य चटकाया वा अपत्यं चाटकैरः ।

वा० । स्त्रियामपत्ये लुग्वक्तव्यः । (2625.)

तयोरेव स्त्र्यपत्यं चटका । अजादित्वाट्टाप् ।

'चटकः कलविङ्कः स्यात्तस्य स्त्री चटका तयोः ।
पुमपत्ये चाटकैरः स्त्र्यपत्ये चटकैव हि ॥' II. v. 19.

इत्यमरः ।

११३५ । गोधाया ढ्रक् (४. १. १२९)

शुभ्रादित्वाड्ढक् । 'तयो गौधेरगौधारगौधेया गोधिकात्मजे' II. v. 6. इत्यमरः ।

११३६ । आरगुदीचाम् । (४. १. १३०)

गौधारः ।

११३७ । क्षुद्राभ्यो वा । (४. १. १३१)

अङ्गहीनाः शीलहीनाश्च क्षुद्राः । ताभ्यो वा ढ्रक् । पक्षे ढक् । काणेरः काणेयः । दासेरः दासेयः । कुलटा असती ।

'कौलटेयः कौलटेरः भिक्षुकी तु सती यदि ।
तदा कौलटिनेयोऽस्याः कौलटेयोऽपि चात्मजे ॥' II. vi. 26, 27.
इत्यमरः । 'कुलटाया वा' (सू. 1132) इति वा इनङादेशः ।

११३८ । पितृष्वसुश्छण् । (४. १. १३२)

पैतृष्वस्रीयः,

११३९ । ढकि लोपः । (४. १. १३३)

पितृष्वसुरन्तस्य लोपः स्याड्ढकि । पैतृष्वसेयः ।

११४० । मातृष्वसुश्च । ( ४. १. १३४ )

पितृष्वसुर्यदुक्तं तदस्यापि स्यात् । मातृष्वस्रीयः मातृष्वसेयः ।

'पैतृष्वसेयः स्यात्पैतृष्वस्रीयश्च पितृष्वसुः ।
सुतो मातृष्वसुश्चैवम्' II. vi. 25. इत्यमरः ।

अस्मिन्नेव ग्रन्थे श्लो० 1143. मातृष्वसुरपत्यं स्त्री मातृष्वसेयी । ढकि अन्त्यलोपश्च । 'मातृपितृभ्यां स्वसा' (सू. 984) इति षत्वम् । 'टिड्ढाणञ्' (सू. 470) इति ङीप् ।

११४१ । चतुष्पाद्भ्यो ढञ् । ( ४. १. १३५ )

११४२ । ढे लोपोऽकद्र्वाः । ( ६. ४. १४७ )

कद्रूभिन्नस्योवर्णान्तस्य भस्य लोपः स्याड्ढे परे । कामण्डलेयः । कमण्डलु-शब्दश्चतुष्पाज्जातिविशेषे ।

११४४ । केकयमित्रयुप्रलयानां यादेरियः । ( ७. ३. २ )

एषां यकारादेः इयादेशः स्यात् ञिति णिति किति च तद्धिते परे ।

अस्मिन्नेव ग्रन्थे श्लो० 877. केकयस्यापत्यं स्त्री कैकेयी । 'जनपदशब्दात्' (सू. 1186.) इत्यञ् । 'टिड्ढाणञ्' (सू. 470.) इति ङीप् । यस्य इयादेशः ।

माघे—IV. 64.

प्रालेयशीतमचलेश्वरमीश्वरोऽपि
सान्द्रेभचर्मवसनावरणोऽधिशेते ।
सर्वर्तुनिर्वृतिकरे निवसन्नुपैति
न द्वन्द्वदुःखमिह किञ्चिदकिञ्चनोऽपि ॥ 1286 ॥

प्रलयादागतं प्रालेयं हिमम् । 'तत आगतः' (सू. 1453.) इत्यण् । अनेन यशब्दस्य इयादेशः ।

माघे—IX. 87.

इत्थं नारीर्घटयितुमलं कामिभिः काममासन्
प्रालेयांशोस्सपदि रुचयश्शान्तमानान्तरायाः ।
आचार्यत्वं रतिषु विलसन् मन्मथश्रीविलासा
ह्रीप्रत्यूहप्रशमकुशलाः शीधवश्चक्रुरासाम् ॥ 1287 ॥

प्रालेयं पूर्ववत् ।

११४५ । दाण्डिनायनहास्तिनायनाथर्वणिकजैह्माशिनेयवाशिनायनिभ्रौणहत्यधैवत्यसारवैक्ष्वाकमैत्रेयहिरण्मयानि । (६. ४. १७४)

एतानि निपात्यन्ते । मैत्रेयः । मैत्रेयी ।

अस्मिन्नेव ग्रन्थे श्लो॰ 1265. इक्ष्वाकूणामयमैक्ष्वाकः । अनेन निपातनादुकारलोपः ।

रघुवंशे—XV. 49.

अथ धूमाभिताम्राक्षं वृक्षशाखावलम्बिनम् ।
ददर्श कश्चिदैक्ष्वाकस्तपस्यन्तमधोमुखम् ॥ 1288 ॥

इक्ष्वाकुवंशप्रभव ऐक्ष्वाको रामः । 'कोपधादण्' (सू. 1356) इत्यणि कृतेऽनेन उकारलोपनिपातः ।

रघुवंशे—XV. 61.

श्लाघ्यस्त्यागोऽपि वैदेह्याः पत्युः प्राग्वंशवासिनः ।
अनन्यजानेस्सैवासीद्यस्माज्जाया हिरण्मयी ॥ 1289 ॥

हिरण्मयी सौवर्णी । अनेन निपातः । पूर्ववत् ।

अस्मिन्नेव ग्रन्थे श्लो॰ 43. हिरण्यस्य विकारः हिरण्मयी । अनेन निपातः पूर्ववत् ।

अस्मिन्नेव ग्रन्थे श्लो॰ 109. हिरण्यस्य विकारो हिरण्मयम् । पूर्ववत् । स्त्री चेट्टित्वान्ङीप् । अथर्वाणमधीते । आथर्वणिकः । वसन्तादिभ्यष्ठक् । निपातनाट्टिलोपो न ।

११४७ । अत्रिभृगुकुत्सवसिष्ठगोतमाङ्गिरोभ्यश्च । (२. ४. ६५)

एभ्यो गोत्रप्रत्ययस्य लुक् स्यात्तत्कृते बहुत्वे, न तु स्त्रियाम् । अत्रयः । भृगवः । कुत्साः । वसिष्ठाः । गोतमाः । अङ्गिरसः ।

अस्मिन्नेव ग्रन्थे श्लो० 1271. कौत्साः । 'ऋष्यन्धक' (सू. 1117) इत्यण् । बहुत्वे लुक् स्यात् ।

११५३ । राजश्वशुराद्यत् । (४ १. १३७)

वा० । राज्ञो जातावेवेति वाच्यम् । (2627.)

११५४ । ये चाभावकर्मणोः । (६. ४. १६८)

यादौ तद्धिते परेऽन् प्रकृत्या स्यात्, न तु भावकर्मणोः । राजन्यः श्वशुर्यः । जातिग्रहणात् शूद्रादावुत्पन्नो राजनः ।

अस्मिन्नेव ग्रन्थे श्लो० 494. राज्ञोऽपत्यानि पुमांसो राजन्याः । क्षत्रियाः । यत् । प्रकृतिभावः ।

रघुवंशे—IV. 87.

सत्रान्ते सचिवसखः पुरस्क्रियाभि-
गुर्वीभिः शमितपराजयव्यलीकान् ।
काकुत्स्थश्चिरविरहोत्सुकावरोधान्
राजन्यान् स्वपुरनिवृत्तयेऽनुमेने ॥ 1290 ॥

राजन्यान् । पूर्ववत् ।

अनर्घराघवे—IV. 17.

राजन्यरुधिराम्भोभिः कृतत्रिषवणो मुनिः ।
प्राप्तः परशुरामोऽयं न विद्मः किं करिष्यति ॥ 1291 ॥

राजन्यः । पूर्ववत् ।

अस्मिन्नेव ग्रन्थे श्लो० 1060. सामसु साधून् सामन्यान् । 'तत्र साधुः' (सू. 1650) इति यत् । अनेन प्रकृतिभावः ।

भट्टिकाव्ये—II. 44.

क्षिप्रं ततोऽध्वन्यतुरङ्गयायी
यविष्ठवद्वृद्धतनोऽपि राजा ।
आख्यायकेभ्यः श्रुतसूनुवृत्ति-
र्म्लानयानो मिथिलामगच्छत् ॥ 1292 ॥

अध्वानमलं गामिन्यः अध्वन्याः । शीघ्रगा इत्यर्थः । 'अध्वनो यत्खौ' (सू. 1817) इति यत्प्रत्ययः । अनेन प्रकृतिभावान्न टिलोपः ।

रघुवंशे—IV. 1.

स राज्यं गुरुणा दत्तं प्रतिपद्याधिकं बभौ ।
दिनान्ते निहितं तेजः सवित्रेव हुताशनः ॥ 1293 ॥

राज्ञः कर्म राज्यं प्रजापरिपालनात्मकम् । 'पत्यन्तपुरोहितादिभ्यो यत्' (सू. 1793) इति यत् । 'अभावकर्मणोः' इति निषेधान्न प्रकृतिभावः ।

११५५ । अन् । ( ६. ४. १६७ )

अणि अन् प्रकृत्या स्यादभावकर्मणोः ।

माघे—IX. 25.

वसुधान्तनिस्सृतमिवाहिपतेः
पटलं फणामणिसहस्ररुचाम् ।
स्फुरदंशुजालमथ शीतरुचः
ककुभं समस्कुरुत माघवनीम् ॥ 1294 ॥

मघोनः इमां माघवनीम् । मघवन् अन्नन्तः । 'तस्येदम्' (सू. 1500) इत्यण् । प्रकृतिभावः । 'आत्माध्वानौ खे' (सू. 1671) इति प्रकृतिभावे आत्मनीनम् । 'तक्षन्नलोपश्च' (ग. सू. 81. सू. 1310) तक्षकीयः ।

माघे—IV. 65.

नवनगवनरेखाश्याममध्याभिरामिः
स्फटिककटकभूमिर्नाटयत्येष शैलः ।

अहिपरिकरभाजो भास्मनैरङ्गरागै-
रधिगतधवलिम्नः शूलपाणेरभिख्याम् ॥ 1295 ॥

भास्मनैः भस्ममयैः । वैकारिकोऽण्प्रत्ययः । अनेन प्रकृतिभावात् 'नस्तद्धिते' (सू. 679) इति नास्ति टिलोपः ।

११५६ । संयोगादिश्च । (६. ४. १६६)

इन् प्रकृत्या स्यादणि परे । चक्रिणोऽपत्यं चाक्रिणः ।

११५७ । न मपूर्वोऽपत्येऽवर्मणः (६. ४. १७०)

मपूर्वोऽन् प्रकृत्या न स्यादपत्येऽणि । भाद्रसामः । मपूर्वः किम् । सौत्वनः । अपत्ये किम् । चर्मणा परिवृतश्चार्मणो रथः । अवर्मणः किम्? चक्रवर्मणोऽपत्यं चाक्रवर्मणः ।

वा० । वा हितनाम्न इति वाच्यम् । (4215.)

हितनाम्नोऽपत्यं हैतनामः हैतनामनः ।

चम्पूरामायणे—III. 12.

ग—ततः परमहर्षेण महर्षिणा प्रणीताभिराशीर्भिस्सह सुरत्रासनशरासनं सरसिजास्त्रं सौत्रामणं तुणीरयुग्मं रुक्ममयकोशं खड्गञ्च प्रतिगृह्य तदाज्ञया गोदावर्यास्तटनिकटप्रकटितां पञ्चवटीमसेवत ॥ 1296 ॥

सुत्राम्ण इदं सौत्रामणम् । 'तस्येदम्' (सू. 1500) इत्यण् । 'तस्यापत्यम्' (सू. 1088) इत्यणि न प्रकृतिभावः ।

अनर्घराघवे—II. 65.

दिक्कूलङ्कषकीर्तिधौतवियतो निर्व्याजवीर्योद्धता-
स्ते यूयं रघवः प्रसिद्धमहसो यैः सोऽपि देवाधिपः ।
विश्राणैरसुराधिराजविजयक्रीडानिदानं धनुः
पौलोमीकुचपत्रभङ्गरचनाचातुर्यमध्यापितः ॥ 1297 ॥

पुलोम्नोऽपत्यं स्त्री पौलोमी । 'तस्यापत्यम्' (1088) इत्यण् । ङीप् । अनेन न प्रकृतिभावः ।

अनर्घराघवे—VI. 24.

एताः पश्य पलादपत्तनभुवः सौत्रामणीनां दृशा-
मस्राम्भोभिरदेवमातृकगृहारामाभिरामश्रियः ।
एतासु प्रतिघातिविक्रमकथोपालम्भवैतण्डिकैः
कृतेन्द्रध्वजिनीजयानुकृतिभिर्डिम्भैरपि क्रीडितम् ॥ 1298 ॥

सौत्रामणीनाम् । 'तस्येदम्' (सू. 1088) इत्यण् । अतः प्रकृतिभावः ।

अस्मिन्नेव ग्रन्थे श्लो० 1295. भास्मनैः भस्ममयैः । वैकारिकोऽण् । अतः प्रकृतिभावः ।

अस्मिन्नेव ग्रन्थे श्लो० 59. चर्मणो विकारे चार्मणे । 'तस्य विकारः' (सू. 1514) इत्यण् । कोशे टिलोपो वक्तव्य इति नियमात्कोशादन्यत्र टिलोपाभावः ।

११५८ । ब्राह्मोऽजातौ । (६. ४. १७१)

योगविभागोऽत्र कर्तव्यः । ब्राह्म इति निपात्यतेऽनपत्येऽणि । ब्राह्मं हविः । ब्रह्मणोऽपत्यं ब्राह्मणः ।

भट्टिकाव्ये—IV. 4.

आहिषातां रघुव्याघ्रौ शरभङ्गाश्रमं ततः ।
अध्यासितं श्रिया ब्राह्मया शरणं शरणैषिणाम् ॥ 1299 ॥

ब्राह्मया ब्रह्मसम्बन्धिन्या 'तस्येदम्' (सू. 1500) इत्यण् । ङीप् । अजाताविति व्यतिरिक्तार्थे निपातनाट्टिलोपः ।

चम्पूरामायणे—III. 12.

प्रभामिवार्कीं तमसां निहन्त्रीं
ब्राह्मीं दधानं नियमेन लक्ष्मीम् ।

तपोनिधिं शौर्यनिधिः प्रपन्नः
स्वनाम सङ्कीर्त्य ननाम रामः ॥ 1300 ॥

**ब्राह्मीम्** । पूर्ववत् ।

अनर्घराघवे—I. 22.

यः क्षत्रदेहं परितक्ष्य टङ्कै-
स्तपोमयैर्ब्राह्मणमुच्चकार ।
परोरजोभिः स्वगुणैरगाधः
स गाधिपुत्रोऽपि गृहानुपैति ॥ 1301 ॥

**ब्राह्मणं** देहं ब्राह्मणजातिसम्बद्धम् । ब्राह्मणमिति जातिपरम् । तेन ब्रह्मण इदं ब्राह्मणमित्यणि कृते 'ब्राह्मोऽजातौ' (सू. 1158) इति टिलोपो न भवति । यद्यपि विशुद्धमातापितृयोनिजत्वं ब्राह्मणत्वमिति सर्वतान्त्रिकसिद्धं, तथापि क्षत्रियजातस्य परशुरामस्य योजनगन्धिजातस्य व्यासस्य च ब्राह्मण्यं तपःप्रभावाद्यथा, तथास्यापीत्यदोषः ।

## ११५९ । औक्षमनपत्ये । (६. ४. १७३)

अणि टिलोपो निपात्यते । औक्षं पदम् । अनपत्ये किम् ? उक्ष्णोऽपत्यमौक्ष्णः ।

## ११६१ । क्षत्राद्घः । (४. १. १३८)

क्षत्रियः जातावित्येव । क्षात्रिरन्यः ।

## ११६२ । कुलात्खः । (४. १. १३९)

कुलीनः । तदन्तादपि । आढ्यकुलीनः ।

## ११६३ । अपूर्वपदादन्यतरस्यां यड्ढकञौ । (४. १. १४०)

कुलादित्येव । पक्षे खः । कुल्यः कौलेयकः कुलीनः । पदग्रहणं किम् । बहुकुल्यः बाहुकुलेयकः बहुकुलीनः ।

**अस्मिन्नेव ग्रन्थे श्लो० 66. कुल्याम्** । अर्हार्थे साध्वर्थे वा यदिति मल्लिनाथः । **'तत्र साधुः' (सू. 1650) इति यदिति जयमङ्गलः ।**

११६४ । महाकुलादञ्खञौ । ( ४. १. १४१ )

अन्यतरस्यामित्यनुवर्तते । पक्षे खः । माहाकुलः माहाकुलीनः महाकुलीनः ।

अस्मिन्नेव ग्रन्थे श्लो० 66. माहाकुलीम् महाकुलापत्यम् । अञ् । 'टिड्ढाणञ्' (सू. 470) इति ङीप् । माहाकुलीनस्य महाकुलापत्यस्य । खञ् ।

अस्मिन्नेव ग्रन्थे श्लो० 1265. महाकुलस्यापत्यं पुमान् महाकुलीनः । विकल्पादनुवृत्तः खप्रत्ययः ।

११६५ । दुष्कुलाड्ढक् । ( ४. १. १४२. )

पूर्ववत्पक्षे खः । दौष्कुलेयः दुष्कुलीनः ।

अस्मिन्नेव ग्रन्थे श्लो० 66. दौष्कुलेयेन दुष्कुलापत्येन । ढक् ।

११६६ । स्वसुश्छः । ( ४. १. १४३ )

स्वस्रीयः ।

श्रीमद्रामायणे—I. Lxiii. 4.

स्वस्रीयं मम राजेन्द्र द्रष्टुकामो महीपतिः ।
तदर्थमुपयातोऽहमयोध्यां रघुनन्दन ॥ 1302 ॥

११६७ । भ्रातुर्व्यच्च । ( ४. १. १४४ )

चाच्छः । भ्रातृव्यः । भ्रात्रीयः ।

भट्टिकाव्ये—XV. 120.

द्रुतमत्रास्त सुग्रीवो भ्रातृव्यं शत्रुसङ्कटात् ।
मुष्टिना कौम्भकर्णिञ्च क्रुद्धः प्राणैरतित्यजत् ॥ 1303 ॥

भ्रातृव्यं भ्रातुरपत्यम् । व्यत्प्रत्ययः ।

११६९ । रेवत्यादिभ्यष्ठक् । ( ४. १. १४६ )

रेवत्यादिः—४. २०.

११७४। ठस्येकः। (७. ३. ५०)

ठस्येकादेशः स्यात्। रैवतिकः।

अस्मिन्नेव ग्रन्थे श्लो० 91. लावण्यं कान्तिविशेषोऽस्यास्तीति लावणिकम्। लावण्यवत्। 'अत इनिठनौ' (सू. 1922) इति ठन्प्रत्यये इकादेशः। 'यस्येति' (सू. 311) इति लोपे 'हलस्तद्धितस्य' (सू. 472) इति यकारलोपः। अन्यत्र तु लवणं पण्यमस्येति लावणिकः लवणव्यवहारी। लवणाट्ठञ्।

११७५। कुर्वादिभ्यो ण्यः। (४. १. १५१)

कुर्वादिः—४. २१. अपत्ये कौरव्या ब्राह्मणाः वावदूक्याः। सम्राजः क्षत्रिये, साम्राज्यम्। साम्राजोऽन्यः।

नैषधे—III. 42.

पीयूषधारानघराभिरन्तस्तासां रसोदन्वति मज्जयानः।
रम्भादिसौभाग्यरहःकथाभिः **काव्येन** काव्यं सृजताहताभिः ॥ 1304 ॥

कवेरपत्येन पुंसा **काव्येन** शुक्रेण। ण्यः।

अस्मिन्नेव ग्रन्थे श्लो० 60. **काव्यः** शुक्रः। पूर्ववत्।

११७७। उदीचामिञ्। (४. १. १५३)

वा०। तक्ष्णोऽण उपसंख्यानम्। (2640.)

ताक्ष्णः। पक्षे ताक्ष्ण्यः।

११७८। तिकादिभ्यः फिञ्। (४. १. १५४)

११७९। कौसल्यकार्मार्याभ्यां च। (४. १. १५५)

अपत्ये फिञ्। कोसलस्यापत्यं कौसल्यायनिः। कर्मारस्यापत्यं कार्मार्यायणिः

वा०। छागवृषयोरपि। (2643.)

छाग्यायनिः वार्ष्यायणिः।

भट्टिकाव्ये—VII. 92.

म्रियामहे न गच्छामः कौसल्यायनिवल्लभाम् ।
उपलभ्यामपश्यन्तः कौमारीं पततां वर ॥ 1305 ॥

कोसलानां राजा कोसलः । तस्यापत्यं पुमान् कौसल्यायनिः । उत्तरकोसलेश्वरापत्यम् दाशरथो रामः । अनेन परमप्रकृतेः कोसलशब्दादपत्यार्थे फिञ् । तत्सन्नियोगात्कोसलशब्दस्य कौसल्यभावनिपातः । अत एव भाष्यवार्तिकयोरपि कोसलकर्मारेत्यादिना मूलप्रकृतेरेव प्रत्ययो दर्शितः । कौसल्याया अपत्यमित्यर्थे फिञिति जयमङ्गलादयः । तदसत् । तदा स्त्रीभ्यो ढकि कौसलेय इति स्यात् । फस्यायन्नादेशः ।

### ११८५ मनोर्जातावञ्यतौ षुक् च । (४. १. १६१)

मानुषो मनुष्यः ।

भट्टिकाव्ये—IV. 22.

मानुषानभिलष्यन्ती रोचिष्णुर्दिव्यधर्मिणी ।
त्वमप्सरायमाणेह स्वतन्त्रा कथमञ्चसि ॥ 1306 ॥

मनोरपत्यानि मानुषाः । अञ् षुक् च ।

रघुवंशे—II. 33.

तमार्यगृह्यं निगृहीतधेनुर्मनुष्यवाचा मनुवंशकेतुम् ।
विस्माययन्विस्मितमात्मवृत्तौ सिंहोरुसत्त्वं निजगाद सिंहः ॥ 1307 ॥

मनुष्यः ।

### ११८६ । जनपदशब्दात्क्षत्त्रियादञ् । (४. १. १६८)

जनपदक्षत्त्रिययोर्वाचकादञ् स्यादपत्ये । ऐक्ष्वाकः । 'दाण्डिनायन' (सू. 1145) इति सूत्रे निपातनाट्टिलोपः ।

वा० । पूरोरण् वक्तव्यः । ( 2670. )

पौरवः ।

वा० । पाण्डोर्ड्यण् । ( 2671. )

पाण्ड्यः ।

अस्मिन्नेव ग्रन्थे श्लो० 1255. इक्ष्वाकुवंश्यनृप ऐक्ष्वाको रामः । 'कोपधाद्ण्' (सू. 1356) इत्यणि कृते 'दाण्डिनायन' (सू. 1145) इति सूत्रे निपातनादुकारलोपः ।

चम्पूभारते—II. 11.

पार्थमेव पुरतो निधाय ते
  पौरवास्तदनु सन्निधौ गुरोः ।
भक्तिभिर्व्यनमयन्निजं शिरः
  पार्षदस्तु परिभूतिलज्जया ॥ 1308 ॥

पौरवा ।

रघुवंशे—IV. 49.

दिशि मन्दायते तेजो दक्षिणस्यां रवेरपि ।
तस्यामेव रघोः **पाण्ड्याः** प्रतापं न विषेहिरे ॥ 1309 ॥

पाण्डूनां जनपदानां राजानः **पाण्ड्याः** ।

**११८८ । द्व्यञ्मगधकलिङ्गसूरमसादण् । (४. १. १७०)**

अञोऽपवादः । द्व्यच्, आङ्गः वाङ्गः सौह्मः । मागधः । कालिङ्गः । सौरमसः । तस्य राजन्यप्येवम् ।

रघुवंशे—III. 5.

न मे ह्रिया शंसति किञ्चिदीप्सितं
  स्पृहावती वस्तुषु केषु **मागधी** ।
इति स्म पृच्छत्यनुवेलमादृतः
  प्रियासखीरुत्तरकोसलेश्वरः ॥ 1310 ॥

मगधस्य राज्ञोऽपत्यं स्त्री **मागधी** सुदक्षिणा । अणि ङीप् ।

रघुवंशे—VI. 40.

प्रतिजग्राह **कालिङ्गस्तमस्त्रैर्गजसाधनः** ।
पक्षच्छेदोद्यतं शक्रं शिलावर्षीव पर्वतः ॥ 1311 ॥

कलिङ्गानां राजा **कालिङ्गः** । अण् ।

रघुवंशे—IV. 35.

अनम्राणां समुद्धर्तुस्तस्मात्सिन्धुरयादिव ।
आत्मा संरक्षितस्सुह्मैः वृत्तिमाश्रित्य वैतसीम् ॥ 1312 ॥

सुह्मैः सुह्मदेशीयैः । सुह्मादयः शब्दा जनपदवाचिनः क्षत्रियमाचक्षते ।

चम्पूभारते—X. 64.

वङ्गं कङ्ककुलामिषं धृतविपल्लिङ्गं कलिङ्गं पुन-
र्भोजं भाजनमापदां यमपुरीसीमायुधं मागधम् ।
चोलं दुःखनिचोलचित्तमिषुभिः कुर्वन्सुपर्वाधिभू-
पुत्रस्तत्र दिनावसानसमये रुन्धे स सिन्धूद्वहम् ॥ 1313 ॥

वङ्गमिति पाठोऽनुप्रासभङ्गादुपेक्ष्यः । वङ्कं वङ्कदेशाधिपतिम् । जनपदशब्द-स्सर्वत्र तदधिपक्षत्रियवाची । कलिङ्गम् ।

रघुवंशे—IV 36.

वङ्गानुत्खाय तरसा नेता नौसाधनोद्यतान् ।
निचखान जयस्तम्भान् गङ्गास्रोतोऽन्तरेषु सः ॥ 1314 ॥

## ११८९ । वृद्धेत्कोसलाजादाञ्ञ्यङ् । (४. १. १७२)

वृद्धात्, आम्बष्ठ्य सौवीर्यः । इत्, आवन्त्यः । कौसल्यः । अजादस्यापत्य-माजाद्यः ।

माघे—I. 75.

ओमित्युक्तवतोऽथ शार्ङ्गिण इति व्याहृत्य वाचं नभ-
स्तस्मिन्नुत्पतिते पुरस्सुरमुनाविन्दोः श्रियं बिभ्रति ।
शत्रूणामनिशं विनाशपिशुनः क्रुद्धस्य चैद्यं प्रति
व्योम्नीव भ्रुकुटिच्छलेन वदने केतुश्चकारास्पदम् ॥ 1315 ॥

चेदीनां जनपदानां राजा चैद्यः । ञ्यङ् ।

अस्मिन्नेव ग्रन्थे श्लो० 634. चैद्येन ।

अस्मिन्नेव ग्रन्थे श्लो० 215. कौसलस्य राज्ञोऽपत्यं स्त्री कौसल्या । ञ्यङ् । यङश्चाप् ।

अस्मिन्नेव ग्रन्थे श्लो० 342. कौसल्या । पूर्ववत् ।

११९२ । ते तद्राजाः । ( ४. १. १७४ )

अञादय एतत्संज्ञाः स्युः ।

११९३ । तद्राजस्य बहुषु तेनैवास्त्रियाम् ( २. ४. ६२ )

बहुष्वर्थेषु तद्राजस्य लुक् स्यात् तदर्थकृते बहुत्वे न तु स्त्रियाम् । इक्ष्वाकवः । पञ्चाला इत्यादि ।

रघुवंशे—III. 70.

अथ स विषयव्यावृत्तात्मा यथाविधि सूनवे
नृपतिककुदं दत्वा यूने सितातपवारणम् ।
मुनिवनतरुच्छायां देव्या तया सह शिश्रिये
गलितवयसामिक्ष्वाकूणामिदं हि कुलव्रतम् ॥ 1316 ॥

इक्ष्वाकूणामिक्ष्वाकोर्गोत्रापत्यानाम् । तद्राजसंज्ञकत्वादणो लुक् ।

अस्मिन्नेव ग्रन्थे श्लो० 531. इक्ष्वाकूणामिक्ष्वाकुवंश्यानाम् । तद्राजत्वाद्बहुष्वणो लुक् ।

रघुवंशे—XIII. 61.

जलानि या तीरनिखातयूपा वहत्ययोध्यामनु राजधानीम् ।
तुरङ्गमेधावभृतावतीर्णैरिक्ष्वाकुभिः पुण्यतरीकृतानि ॥ 1317 ॥

इक्ष्वाकुभिरिक्ष्वाकुगोत्रापत्यैः । तद्राजत्वादणो लुक् ।

११९४ । कम्बोजाल्लुक् । ( ४. १. १७५ )

अस्मात्तद्राजस्य लुक् । कम्बोजः ।

वा० । कम्बोजादिभ्य इति वक्तव्यम् । ( 2674. )

कम्बोजादिः—४. २४. चोलः । शकः । द्व्यज्लक्षणस्याणो लुक् । केरलः । यवनः । अञो लुक् ।

रघुवंशे—IV. 69.

कम्बोजास्समरे सोढुं तस्य वीर्यमनीश्वराः ।
गजालानपरिक्लिष्टैरक्षोटैस्सार्धमानताः ॥ १३१८ ॥

कम्बोजा राजानः । कम्बोजास्समरे इति पाठस्सुगमः । दीर्घपाठे तु कम्बोजोऽभिजनो येषामित्यर्थः । सिन्ध्वादित्वादण् । अत्र न लुक् ।

अस्मिन्नेव ग्रन्थे श्लो० 1313. चोलम् । 'द्व्यञ्मगध' (सू. 1188) इत्यण् । कम्बोजादित्वाल्लुक् ।

१२०० । क्रौड्यादिभ्यश्च । (४. १. ८०)

स्त्रियां ष्यङ्प्रत्ययः स्यात् । क्रौड्यादिः—४. ६०. 'यङश्चाप्' (सू. 528) क्रौड्या, व्याड्या ।

(ग. सू.) 'सूतयुवत्याम्' 55.

सूत्या ।

(ग. सू.) 'भोजक्षत्रिये' 56.

भोज्या ।

अस्मिन्नेव ग्रन्थे श्लो० 75. भोजस्य राज्ञोऽपत्यां स्त्रियं भोज्याम् इन्दुमतीम् । 'क्रौड्यादिभ्यश्च' (सू. 1200) इत्यत्र 'भोजक्षत्रिय' इत्युपसङ्ख्यानात् ष्यङ्प्रत्ययः । 'यङश्चाप्' (सू. 528) इति चाप् ।

॥ इति अपत्याधिकारप्रकरणम् ॥

———

## ॥ अथ चातुरर्थिकप्रकरणम् ॥

---

१२०२। तेन रक्तं रागात्। (४. २. १.)

रज्यतेऽनेनेति रागः। कषायेण रक्तं वस्त्रं काषायम्। माञ्जिष्ठम्।

रघुवंशे—XV. 77.

काषायपरिवीतेन स्वपदार्पितचक्षुषा।
अन्वमीयत शुद्धेति शान्तेन वपुषैव सा ॥ 1319 ॥

कषायेण रक्तं काषायम्। अनेनाण्।

किरातार्जुनीये—VII. 36.

आकीर्णं बलरजसा घनारुणेन
प्रक्षोभैस्सपदि तरङ्गितं तटेषु।
मातङ्गोन्मथितसरोजरेणुपिङ्गं
माञ्जिष्ठं वसनमिवाम्बु निर्बभासे ॥ 1320 ॥

माञ्जिष्ठं वसनम्।

१२०३। लाक्षारोचनाट्ठक्। (४. २. २.)

लाक्षिकः। रौचनिकः।

वा०। शकलकर्दमाभ्यामुपसङ्ख्यानम्। (2679.)

शाकलिकः। कार्दमिकः। 'आभ्यामणपि' इति वृत्तिकारः। शाकलः। कार्दमः।

वा०। नील्या अन्। (2680.)

नील्या रक्तं नीलम्।

वा०। पीतात्कन्। (2681.)

पीतकम्।

वा० । हरिद्रामहारजनाभ्यामञ् । (2682.)

हारिद्रम् । माहारजनम् ।

भट्टिकाव्ये—V. 62.

कमण्डलुकपालेन शिरसा च मृजावता ।
संवस्य लाक्षिके वस्त्रे मात्राः सम्भाण्ड्य दण्डवान् ॥ 1321 ॥

लाक्षया रक्ते लाक्षिके । अनेन ठक् ।

किरातार्जुनीये—V. 45.

क्षिपति योऽनुवनं विततां बृह-
दृहतिकामिव रौचनिकीं रुचम् ।
अयमनेकहिरण्मयकन्दर-
स्तव पितुर्दयितो जगतीधरः ॥ 1322 ॥

रोचनया रक्तां रौचनिकीम् । अनेन ठक् । 'टिड्ढाणञ्' (सू. 470) इति ङीप् ।

किरातार्जुनीये—X. 54.

सरभसमवलम्ब्य नीलमन्या
विगलितनीवि विलोलमन्तरीयम् ।
अभिपतितुमनाः ससाध्वसेव
च्युतरशनागुणसन्दितावतस्थे ॥ 1323 ॥

नील्या रक्तं नीलम् । नील्या अन् । अन्तरीयम् ।

१२०४ । नक्षत्रेण युक्तः कालः । (४. २. ३)

पुष्येण युक्तं पौषमहः । पौषी रात्रिः । 'नक्षत्रे च लुपि' (सू. 642) इति तृतीयासप्तम्यौ ।

अस्मिन्नेव ग्रन्थे श्लो० 139. पौष्यां पुष्यनक्षत्रयुक्तायां पौर्णमास्यां तिथौ । 'पुष्ययुक्ता पौर्णमासी पौषी' I. iii. 14. इत्यमरः । अनेनाण् । 'टिड्ढाणञ्' (सू. 470) इति ङीप् ।

मेघसंदेशे—I. 2.

तस्मिन्नद्रौ कतिचिदबलाविप्रयुक्तस्स कामी
नीत्वा मासान् कनकवलयभ्रंशरिक्तप्रकोष्ठः ।
आषाढस्य प्रथमदिवसे मेघमाश्लिष्टसानुं
वप्रक्रीडापरिणतगजप्रेक्षणीयं ददर्श ॥ 1324 ॥

आषाढनक्षत्रेण युक्ता पौर्णमासी आषाढी । अनेनाण् । ङीप् । ततोऽणि आषाढो मासः ।

अस्मिन्नेव ग्रन्थे श्लो० 607. मघासु मघायुक्तकाले अनेनाणि 'लुबविशेषे' (सू. 1205) इति तस्य लुपि 'लुपि युक्तवद्व्यक्तिवचने' (सू. 1294) इति प्रकृतिलिङ्गवचनत्वात् स्त्रीलिङ्गबहुत्वे ; 'नक्षत्रे च लुपि' (सू. 642) इति लुबन्तान्नक्षत्रवाचकशब्दाद्वैकल्पिकी सप्तमी ।

## १२११ । परिवृतो रथः । (४. २. १०)

वस्त्रैः परिवृतो वास्त्रो रथः । रथः किम् ; वस्त्रेण परिवृतः कायः ; 'रथे काम्बलवास्त्राद्याः कम्बलादिभिरावृते' II. viii. 55. इत्यमरः ।

## १२१२ । पाण्डुकम्बलादिनिः । (४. २. ११)

पाण्डुकम्बलेन परिवृतः पाण्डुकम्बली । पाण्डुकम्बलशब्दो राजास्तरणवर्णकम्बलस्य वाचकः । 'पाण्डुकम्बलसंवीतस्यन्दनः पाण्डुकम्बली' II. Viii. 55. इत्यमरः ।

## १२१३ । द्वैपवैयाघ्रादञ् । (४. २. १२)

द्वीपिनो विकारः द्वैपम् । तेन परिवृतो द्वैपो रथः । एवं वैयाघ्रः । 'उभौ तु द्वैपवैयाघ्रौ द्वीपिचर्मावृते रथे' II. viii. 54. इत्यमरः ।

## १२१४ । कौमारापूर्ववचने । (४. २. १३)

कौमार इत्यविभक्तिको निर्देशः । अपूर्वत्वे निपातनमिदम् । अपूर्वपतिं कुमारीं पतिरुपपन्नः कौमारः पतिः । यद्वा अपूर्वपतिः कुमारी पतिमुपपन्ना कौमारी भार्या ।

अस्मिन्नेव ग्रन्थे श्लो० 1305. अनूढपूर्वाया: स्त्रिया वोढा कौमार: । तस्य स्त्रीं कौमारीम् । अनेन पाणिग्रहणापूर्वत्वेऽण्प्रत्ययान्तनिपाते ङीप् । अकृतपूर्वदारपतिं लब्धवतीं कौमारीमिति जयमङ्गल: ।

१२१५ । तत्रोद्धृतममत्रेभ्य: (४. २. १४)

शरावे उद्धृत: शाराव ओदन: । उद्धरतिरिहोद्धरणपूर्वके निधाने वर्तते । तेन सप्तमी । उद्धृत्य निहित इत्यर्थ: ।

१२१६ । स्थण्डिलाच्छयितरि व्रते । (४. २. १५)

स्थण्डिले शेते स्थाण्डिलो भिक्षु: ।

१२१७ । संस्कृतं भक्षा: । (४. २. १६)

सप्तम्यन्तादण् स्यात्संस्कृतेऽर्थे । भ्राष्ट्रे संस्कृता भ्राष्ट्रा यवा: ।

१२१८ । शूलोखाद्यत् । (४. २. १७)

अणोऽपवाद: । शूले संस्कृतं शूल्यं मांसम् । उखा पात्रविशेष: । तस्यां संस्कृतमुख्यम् ।

अस्मिन्नेव ग्रन्थे श्लो० 1060. शूले काष्ठाग्रे, उखायां स्थाल्यां संस्कृतं मांसं शूल्यमुख्यञ्च ।

१२१९ । दध्नष्ठक् । (४. २. १८)

दध्नि संस्कृतं दाधिकम् ।

१२२० । उदश्वितोऽन्यतरस्याम् । (४. २. १९)

ठक् स्यात् । पक्षेऽण् ।

१२२१ । इसुसुक्तान्तात्कः । (७. ३. ५१)

इस्, उस्, उक्, त एतदन्तात्परस्य ठस्य क: स्यात् । उदकेन श्वयति वर्धत इत्युदश्वित् । तत्र संस्कृत: औदश्वित्क: । औदश्वित: ।

अस्मिन्नेव ग्रन्थे श्लो० 434. भवत्या इदं भावत्कं भवदीयम् । 'भवतष्ठक्छसौ' (सू, 1339) इति ठकि, पुंवद्भावे ठक्छसोरुपसङ्ख्यानात्पुंवद्भावेऽनेन क: ।

## १२२३ । साऽस्मिन्पौर्णमासीति । ( ४. २. २१ )

इतिशब्दात्संज्ञायामिति लभ्यते । पौषी पौर्णमास्यस्मिन् पौषो मासः ।

अस्मिन्नेव ग्रन्थे श्लो० 1324. अषाढनक्षत्रेण युक्ता पौर्णमासी आषाढी । 'नक्षत्रेण युक्तः कालः' (सू. 1204) इत्यण् । आषाढी पौर्णमासी अस्मिन्निति आषाढो मासः । अनेन संज्ञायामण् ।

## १२२५ । विभाषा फाल्गुनीश्रवणाकार्तिकीचैत्रीभ्यः । ( ४. २. २३ )

एभ्यष्ठक् । पक्षेऽण् । फाल्गुनिकः फाल्गुनो मासः । श्रावणिकः श्रावणः । कार्तिकिकः कार्तिकः । चैत्रिकः चैत्रः ।

## १२२६ । साऽस्य देवता । ( ४. २. २४ )

इन्द्रो देवता अस्येति ऐन्द्रं हविः । पाशुपतम् । बार्हस्पत्यम् ।

नैषधे—IV. 33.

शशिमयं दहनास्त्रमुदित्वरं
मनसिजस्य विमृश्य वियोगिनी ।
झटिति वारुणमस्त्रमिव दसौ
तदुचितं प्रतिशस्त्रमुपाददे ॥ 1325 ॥

वारुणं वरुणदेवताकम् । अनेनाण् ।

## १२२७ । कस्येत् । ( ४. २. २५ )

कशब्दस्य इदादेशः स्यात्प्रत्ययसन्नियोगेन । को ब्रह्मा देवता अस्येति कायं हविः । श्रीर्देवता अस्येति श्रायम् ।

## १२२८ । शुक्राद्घन् । ( ४. २. २६ )

शुक्रियम् ।

१२३१। महेन्द्राद्घाणौ च। (४. २. २९)

चाच्छः। महेन्द्रियं माहेन्द्रं महेन्द्रीयं हविः।

भट्टिकाव्ये—V. 11.

अध्वरेष्वग्निचित्वत्सु सोमसुत्वत्सु आश्रमान्।
मा तु महेन्द्रियं भागमैति दुश्च्यवनोऽधुना ॥ 1326 ॥

महेन्द्रो देवता अस्य महेन्द्रियम्। घः।

१२३२। सोमाट्ट्यण्। (४. २. ३०)

सौम्यम्। टित्वान्ङीप्। सौमी ऋक्।

१२३३। वाय्वृतुपित्रुषसो यत्। (४. २. ३१)

वायव्यम्। ऋतव्यम्।

१२३४। रीङृतः। (७. ४. २७)

पित्र्यम्। उषस्यम्।

रघुवंशे—XI. 64.

पित्र्यमंशमुपवीतलक्षणं मातृकञ्च धनुरूर्जितं दधत्।
यः ससोम इव घर्मदीधितिः सद्विजिह्व इव चन्दनद्रुमः ॥ 1327 ॥

पितुरयं पित्र्यः। अनेन यत्प्रत्ययः।

रघुवंशे—IV. 4.

सममेव समाक्रान्तं द्वयं द्विरदगामिना।
तेन सिंहासनं पित्र्यमखिलञ्चारिमण्डलम् ॥ 1328 ॥

पितुरागतं पित्र्यम्। 'पितुर्यच्च' (सू. 1458) इति यत्।

१२३५। द्यावापृथिवीशुनासीरमरुत्वदग्नीषोमवास्तोष्पतिगृहमेधाच्छ च। (४. २. ३२)

चायत्। द्यावापृथिवीयम् द्यावापृथिव्यम्। शुनासीरीयम् शुनासीर्यम्।

१२३६ । अग्नेर्ढक् । (४. २. ३३)

आग्नेयम् ।

अलङ्कारचत्रे — I. 31.

एतस्मै समराङ्गणप्रणयिने निघ्नेन कः प्रस्फुर-
द्दम्भोलिद्युतिमण्डलोद्भटभुजस्तम्भाय जम्भारये ;
निर्यद्भिर्बहिरेष रोषदहनज्योतिःस्फुलिङ्गैरिव
स्वै रज्यद्भिरपीक्षणैः समतनोदाग्नेयमस्त्रं द्विषाम् ॥ 1329 ॥

आग्नेयमग्निदेवताकमस्त्रम् ।

१२३८ । महाराजप्रोष्ठपदाट्ठञ् । (४. २. ३५)

माहाराजिकम् । प्रौष्ठपदिकम् ।

१२३९ । देवताद्वन्द्वे च । (७. ३. २१)

अत्र पूर्वोत्तरपदयोरादेरचो वृद्धिः स्यात् ञिति णिति किति च परे । आग्निमारु-
तम् । ऐन्द्राबार्हस्पत्यम् ।

अस्मिन्नेव ग्रन्थे श्लो० 1352. अग्निमरुतौ देवते अस्य आग्निमारुतम् ।

अस्मिन्नेव ग्रन्थे श्लो० 1354. इन्द्रश्च बृहस्पतिश्च इन्द्राबृहस्पती ।
'देवताद्वन्द्वे च' (सू. 922) इत्यानङ् । इन्द्राबृहस्पती देवते अस्य ऐन्द्राबार्हस्प-
त्यम् । अनेनोभयपदवृद्धिः ।

१२४० । नेन्द्रस्य परस्य । (७. ३. २२)

परस्येन्द्रस्य वृद्धिर्न स्यात् । सौमेन्द्रः ।

१२४१ । दीर्घाच्च वरुणस्य । (७. ३. २३)

दीर्घात्परस्य वरुणस्य न वृद्धिः । ऐन्द्रावरुणम् । दीर्घात्किम् । आग्निवारुणी-
मनड्वाहीमालभेत ।

वा० । पूर्णमासादण् वक्तव्यः । ( 2707. )

पूर्णो मासोऽस्यां वर्तत इति पौर्णमासी तिथिः ।

१२४२ । पितृव्यमातुलमातामहपितामहाः । ( ४. २. ३६ )

एते निपात्यन्ते ।

वा० । पितुर्भ्रातरि व्यत् । ( 2708. )

पितुर्भ्राता पितृव्यः ।

वा० । मातुर्डुलच् । ( 2708. )

मातुर्भ्राता मातुलः ।

वा० । मातृपितृभ्यां पितरि डामहच् । (2709. )

मातुः पिता मातामहः । पितुः पिता पितामहः ।

वा० । मातरि षिच्च । ( 2710. )

मातामही, पितामही । 'पितुर्भ्राता पितृव्यश्च मातुर्भ्राता तु मातुलः' II. vii. 31. 'पितामहः पितृपिता' II. vii. 33. मातुर्मातामहाद्येवं' II. vii. 33 इत्यमरः ।

भट्टिकाव्ये—XVII. 32.

अकुप्यदिन्द्रजित्तत्र पितृव्यश्चागदद्वचः ।
त्वमत्राजायथा देहं इहापुण्यः सुरामिषैः ॥ 1330 ॥

पितृव्यं पितृभ्रातरं विभीषणम् । पितृशब्दाद्भ्रातरि व्यन्निपातितः ।

अस्मिन्नेव ग्रन्थे श्लो० 974. पितृव्यः पितुर्भ्राता । मातुलः मातुर्भ्राता । अनेन व्यड्डुलजन्तौ निपातितौ ।

भट्टिकाव्ये—XV. 118.

आघूर्णिष्टां क्षतौ क्ष्माञ्च तावाशिश्रियतामुभौ ।
मातुलौ विह्वलौ दृष्ट्वा कुम्भं वालिसुतो नगैः ॥ 1331 ॥

मातुलौ । पूर्ववत् ।

अस्मिन्नेव ग्रन्थे श्लो० 553. मातुलकम् । पूर्ववत् ।

अस्मिन्नेव ग्रन्थे श्लो० 597. मातुः पिता मातामहः । डामहच् प्रत्ययो निपातः ।

स्तोत्ररत्ने—65.

अकृत्रिमत्वच्चरणारविन्दप्रेमप्रकर्षावधिमात्मवन्तम् ।
पितामहं नाथमुनिं विलोक्य प्रसीद मद्वृत्तमचिन्तयित्वा ॥ 1332 ॥

पितुः पिता पितामहः ।

१२४३ । तस्य समूहः । (४. २. ३७)

इत्यण् । काकानां समूहः काकम् । बाकम् । 'पुरुषाद्वधविकारसमूहतेन-कृतेषु' (वा० 3000. सू. 1672) इति ढञ् । पौरुषेयं पुरुषसमूहः ।

अस्मिन्नेव ग्रन्थे श्लो० 1087. अपां समूहः आपम् । अनेनाण् ।

माघे—II. 4.

रत्नस्तम्भेषु सङ्क्रान्तप्रतिमास्ते चकाशिरे ।
एकाकिनोऽपि परितः पौरुषेयावृता इव ॥ 1333 ॥

पौरुषेयम् । ढञ् ।

१२४४ । भिक्षादिभ्योऽण् । (४. २. ३८)

भिक्षाणां समूहो भैक्षम् । गर्भिणीनां समूहो गार्भिणम् । 'भैक्षं भिक्षाकदम्बकम्' II. viii. 46. इत्यमरः । 'गणिकादेस्तु गाणिक्यं गार्भिणं यौवतं गणे' II. vi. 22. इत्यमरः ।

नैषधे—II. 41.

अवधृत्य दिवोऽपि यौवतै-
र्न सहाधीतवतीमिमामहम् ।
कतमस्तु विधातुराशये
पतिरस्या वसतीत्यचिन्तयम् ॥ 1334 ॥

यौवतैः युवतिसमूहैः । भिक्षादित्वात्समूहार्थेऽणप्रत्ययः ।

माघे—XIX. 27.

स का र ना ना र का स का य सा द द सा य का ।
र सा ह वा वा ह सा र ना द वा द द वा द ना ॥ 1335 ॥

सर्वतो भ्रमणात् सर्वतोभद्रश्चित्रबन्धः । आरः अरीणां समूहः । भिक्षादिभ्योऽण् ।

अखिलेन ग्रन्थे श्लो० 236. पादातानाम् पदातिसमूहानाम् । पूर्ववत् ।

चम्पूभारते—XI. 6.

पादातं पादातं रथ्या रथ्यां च हास्तिकं गजता ।
अश्वीयं चाश्वीयं द्रागभिदुद्राव कम्पितमहीकम् ॥ 1336 ॥

पादातम् । पूर्ववत् ।

चम्पूभारते—III. 101.

क्रीडतो मण्डलीभूय कृष्णयोरप्सु यौवते ।
तटिन्यास्तटयोः प्रान्ते ताटङ्के इव रेजतुः ॥ 1337 ॥

यौवते । पूर्ववत् ।

## १२४५ । इनण्यनपत्ये । (६. ४. १६४)

अनपत्यार्थेऽणि परे इन् प्रकृत्या स्यात् । इति टिलोपो न । गर्भिणीनां समूहो गार्भिणम् । 'भस्याढे' (वा० 3923. सू. 836) इति पुंवद्भावः । हस्तिनीनां समूहो हास्तिकम् । ठक् । नान् ।

भट्टिकाव्ये—VII. 45.

सांराविणं न कर्तव्यं यावन्नायाति दर्शनम् ।
संदृष्टायां तु वैदेह्यां निग्रहो वोऽर्थवानरैः ॥ 1338 ॥

समन्ताद्रावः सांराविणम् । 'अभिविधौ भाव इनुण्' (सू. 3218) इति सम्पूर्वाद्रौतेरिनुण्प्रत्ययः । 'अणिनुणः' (सू. 3219) इति ततोऽण् । अनेन प्रकृतिभावात् 'नस्तद्धिते' (सू. 679) इति न टिलोपः ।

१२४६ । गोत्रोक्षोष्ट्रोरभ्रराजराजन्यराजपुत्रवत्स-
मनुष्याजाद्वुञ् ( ४. २. ३९. )

एभ्यः समूहे वुञ् स्यात् ।

१२४७ । युवोरनाकौ । ( ७. १. १. )

यु वु एतयोरनुनासिकयोः क्रमात् अन अक एतावादेशौ स्तः । ग्लुचुकायनीनां समूहो ग्लौचुकायनकम् । औक्षकमित्यादि ।

वा० । प्रकृत्या अके राजन्यमनुष्ययुवानः । ( 4214. )

राजन्यकम् । मानुष्यकम् । 'तत आगत' ( सू. 1453 ) इत्यपि तु मानुषः ।

वा० । वृद्धाच्चेति वक्तव्यम् । ( 2716. )

वार्धकम् । इति समूहार्थे वुञ् । वृद्धस्य भावो वार्धकमित्यत्र तु 'द्वन्द्वमनोज्ञादिभ्यश्च' ( सू. 1798 ) इति वुञ् । 'वृद्धसङ्घेऽपि वार्धकम्' II. viii. 40. इत्यमरः ।

माघे—V. 62.

> उत्तीर्णभारलघुनाप्यलघूलपौघ-
> सौहित्यनिःसहतरेण तरोरधस्तात् ।
> रोमन्थमन्थरचलद्गुरुसास्नमासां-
> चक्रे निमीलदलसेक्षणमौक्षकेण ॥ 1339 ॥

औक्षकेण । उक्ष्णां समूहेन । वुञ् ।

माघे—V. 65.

> बिभ्राणमायतिमतीमवृथा शिरोधिं
> प्रत्यग्रतामतिरसामधिकं दधन्ति ।
> लोलोष्ठमौष्ट्रकमुदग्रमुखं तरूणा-
> मभ्रंलिहानि लिलिहे नवपल्लवानि ॥ 1340 ॥

औष्ट्रकमुष्ट्रसमूहः । वुञ् ।

माघे—XVIII. ८०.

आयान्तीनामविरतरयं राजकानीकिनीना-
मित्थं सैन्यैस्सममलघुभिः श्रीपतेरूर्मिमद्भिः ।
आसीदोघैर्मुहुरिव महद्वारिधेरापगानां
दोलायुद्धं कृतगुरुतरध्वानमौद्धत्यभाजाम् ॥ 1341 ॥

राज्ञां समूहाः राजकानि । वुञ् ।

माघे—XV. 5.

स निकामघर्मितमभीक्ष्णमवदवधूतराजकः ।
क्षिप्तबहुलजलबिन्दुवपुः प्रलयार्णवोत्थित इवादिसूकरः ॥ 1342 ॥

राज्ञां समूहो राजकम् ।

भट्टिकाव्ये—II. 52.

अनेकशो निर्जितराजकस्त्वं
पितॄनताप्सीर्नृपरक्ततोयैः ।
संक्षिप्य संरम्भमसद्विपक्षं
कार्स्नार्भकेऽस्मिंस्त्वव राम रामे ॥ 1343 ॥

राजकानि ।

भट्टिकाव्ये—XXI. 13.

प्रणमन् ब्रह्मणा प्रोक्तो राजकाधिपतिस्ततः ।
नाशोत्स्यन्मैथिली लोके नाचरिष्यदिदं यदि ॥ 1344 ॥

राजकानाम् ।

अनर्घराघवे—IV. 16.

सर्वराजकदुर्धर्षं सर्वदेवमयं धनुः ।
भञ्जता रामभद्रेण विजिग्ये भुवनत्रयम् ॥ 1345 ॥

राजकम् ।

अस्मिन्नेव ग्रन्थे श्लो॰ 647. राजन्यानां समूहो राजन्यकम् । वुञ् ।

माघे—II. 114.

उपेयिवांसि कर्तारः पुरीमाजातशात्रवीम् ।
राजन्यकान्युपायज्ञैरेकार्थानि चरैरिव ॥ 1346 ॥

राजन्यकानि ।

अस्मिन्नेव ग्रन्थे श्लो० 1033. राजन्यकम् ।

अनर्घराघवे—IV. 7.

ग—अहो ! यतः प्रभृति वैदेहीवरणाय प्रहितेन पुरोधसा कथ्यमानं ककुत्स्थकुलकुमारस्य मानुष्यकातिशयमश्रृणवम्, ततः प्रभृति कष्टां दशामनुभवामि ॥1347॥

योपधाद्वुञ् । मानुष्यकं मनुष्यकर्म ।

रघुवंशे—I. 60.

उपपन्नं ननु शिवं सप्तस्वङ्गेषु यस्य मे ।
दैवीनां मानुषीणाञ्च प्रतिकर्ता त्वमापदाम् ॥ 1348 ॥

मनुष्येभ्य आगतानां मानुषीणाम् । 'तत आगत' (सू. 1453) इत्यणि ङीप् । न प्रकृतिभावः ।

नैषधे—I. 77.

फलानि पुष्पाणि च पल्लवे करे
वयोऽतिपातोद्गतवातवेपिते ।
स्थितैस्समाधाय महर्षिवार्धका-
द्वने तदातिथ्यमशिक्षि शाखिभिः ॥ 1349 ॥

महर्षीणां वार्धकात् वृद्धसमूहात् । अनेन समूहार्थे वुञ् ।

रघुवंशे—I. 8.

शैशवेऽभ्यस्तविद्यानां यौवने विषयैषिणाम् ।
वार्धके मुनिवृत्तीनां योगेनान्ते तनुत्यजाम् ॥ 1350 ॥

वृद्धस्य भावो वार्धकम् वृद्धत्वम् । 'द्वन्द्वमनोज्ञादिभ्यश्च' (सू. 1798) इति भावार्थे वुञ् ।

१२४८ । केदाराद्यञ् च ( ४. २. ४० )

चाद्वुञ् । कैदार्यम् कैदारकम् ।

वा० । गणिकाया यञिति वक्तव्यम् । ( 2719. )

गाणिक्यम् । 'कैदारकं स्यात्कैदार्यं क्षेत्रं कैदारिकं गणे' II. ix. 11. 'गणिकादेस्तु गाणिक्यम्' II. vi. 22. इत्यमरः ।

१२४९ । ठञ्कवचिनश्च । ( ४. २. ४१ )

चात्केदारादपि । कवचिनां समूहः कावचिकम् । कैदारिकम् ।

माघे—XII. 42.

स व्रीहिणां यावदपासितुं गताः
शुकान्मृगैस्तावदुपद्रुतश्रियाम् ।
**कैदारिकाणाम**भितस्समाकुलाः
सहासमालोकयति स्म गोपिकाः ॥ 1351 ॥

**कैदारिकाणां** क्षेत्रसमूहानाम् । चकाराट्ठञ् ।

१२५० । ब्राह्मणमाणववाडवाद्यत् । ( ४. २. ४२ )

ब्राह्मण्यम् । माणव्यम् । वाडव्यम् ।

वा० । पृष्ठादुपसङ्ख्यानम् । ( 2720. )

पृष्ठ्यम् ।

१२५१ । ग्रामजनबन्धुभ्यस्तल् ( ४. २. ४३ )

ग्रामता । जनता । बन्धुता ।

वा० । गजसहायाभ्यां चेति वक्तव्यम् । ( 2721. )

गजता । सहायता ।

भट्टिकाव्ये—III. 11.

गतो वनं श्वो भवितेति रामः
शोकेन देहे जनतातिमात्रम् ।
धीरास्तु तत्र च्युतमन्यवोऽन्ये
दधुः कुमारानुगमे मनांसि ॥ 1352 ॥

जनानां समूहो जनता । समूहार्थे तल्प्रत्ययः ।

माघे—XII. 31.

तैर्वैजयन्तीवनराजिराजिभिः
गिरिप्रतिच्छन्दमहामतङ्गजैः ।
बह्वयः प्रसर्पज्जनतानदीशतै-
र्भुवो बलैरन्तरयांबभूविरे ॥ 1353 ॥

जनता ।

माघे—V. 14.

छायामपास्य महतीमपि वर्तमाना-
मागामिनीं जगृहिरे जनतास्तरूणाम् ।
सर्वो हि नोपगतमप्यपचीयमानं
वर्धिष्णुमाश्रयमनागतमप्युपैति ॥ 1354 ॥

जनता, पूर्ववत् ।

अस्मिन्नेव ग्रन्थे श्लो० 629. जनता । पूर्ववत् ।

भट्टिकाव्ये—III. 23.

तास्सान्त्वयन्ती भरतप्रतीक्षा
तं बन्धुता न्यक्षिपदाशु तैले ।
दूतांश्च राजात्मजमानिनीषून्
प्रास्थापयन्मन्त्रिमतेन यूनः ॥ 1355 ॥

बन्धुता बन्धुसमूहः । सामूहिकस्तल् ।

माघे—VI. 19.

न खलु दूरगतोऽप्यतिवर्तते
महमसाविति बन्धुतयोदितैः ।
प्रणयिनो निशमय्य वधूर्बहिः
स्वरसृतैरमृतैरिव निर्ववौ ॥ 1356 ॥

बन्धुतया । पूर्ववत् ।

अस्मिन्नेव ग्रन्थे श्लो० 266. बन्धूनां समूहो बन्धुता । पूर्ववत् ।

चम्पूभारते—V. 69.

तस्मिन् व्रते स्वपनलब्धसुरारिसाह्य-
स्त्यागे तनोस्तदनु बन्धुतया निषिद्धः ।
तस्माद्वनात्पुनरपि प्रतिपद्य धैर्यं
घुष्यद्बलो निववृते कुरुराजधानीम् ॥ 1357 ॥

बन्धुतया । पूर्ववत् ।

अस्मिन्नेव ग्रन्थे श्लो० 1019. गजताः गजसमूहान् ।

अस्मिन्नेव ग्रन्थे श्लो० 1336. गजता । पूर्ववत् ।

१२५६ । अचित्तहस्तिधेनोष्ठक् । (४. २. ४७)

साक्तुकम् । हास्तिकम् । धैनुकम् ।

अस्मिन्नेव ग्रन्थे श्लो० 647. हस्तिनां समूहो हास्तिकम् । ठक् ।

अस्मिन्नेव ग्रन्थे श्लो० 1334. हास्तिकम् ।

अस्मिन्नेव ग्रन्थे श्लो० 678. हास्तिकानि ।

१२५७ । केशाश्वाभ्यां यञ्छावन्यतरस्याम् । (४. २. ४८)

पक्षे ठगणौ । केशाद्यञ्ठकौ । अश्वाच्छाणौ । कैश्यम् कैशिकम् । अश्वीयम् आश्वम् ।

नैषधे—IV. 114.

रचय चारुमते स्तनयोर्वृतिं
गणय केशिनि कैश्यमसंयतम् ।
अवगृहाण तरङ्गिणि नेत्रयो-
र्जलझराविति शुश्रुविरे गिरः ॥ 1358 ॥

कैश्यं केशसमूहम् । यञ् ।

चम्पूभारते—IV. 37.

दृष्ट्वा भिया सदसि धावनमाचरन्त्याः
कैश्ये चकार स कराङ्गुलिमानताङ्ग्याः ।
वक्षोरुहेषु च महीपपुरंध्रिवर्गो
नासाग्रसीम्नि सुचियश्च नदीसुतायाः ॥ 1359 ॥

कैश्ये ।

चम्पूभारते—II. 32.

इत्येनां भाषमाणां रजनिचरपतिः क्रोधलिङ्गैः स्फुलिङ्गै-
र्दग्धेवाक्ष्णोरभीक्ष्णं स्फुटघटितभुजास्फोटवाचाटिताशः ।
बिभ्राणो बभ्रुकैश्यं त्वमिह वससि को मृत्युवक्त्रार्धजग्धो
दुर्बुद्धे तिष्ठ यासि क पुनरिति गिरा मेदुरः प्रादुरासीत् ॥1360॥

कैश्यम् ।

चम्पूभारते—XI. 33.

निजप्रियाकैश्यकृषोऽस्य शत्रो-
र्निर्भिद्य वक्षः पिबतोऽसृगम्भः ।
समीरसूनोश्च पिशाचिकानां
सपीतिकेल्यां कलहो बभूव ॥ 1361 ॥

कैश्यम् ।

माघे—XVIII. 5.

वप्रांबद्धा धौरितेन प्रयाता-
मश्वीयानामुच्चकैरुच्चलन्तः ।
रौक्मा रेजुः स्थासका मूर्तिभाजो
दर्पस्येव व्याप्तदेहस्य शेषाः ॥ 1362 ॥

अश्वीयानामश्वसमूहानाम् । छप्रत्ययः ।

अस्मिन्नेव ग्रन्थे श्लो० 647. अश्वानां समूहोऽश्वीयम् ।

अस्मिन्नेव ग्रन्थे श्लो० 1336. अश्वीयम् ।

किरातार्जुनीये—XV. 24.

विभिन्नपातिताश्वीयनिरुद्धरथवर्त्मनि ।
हतद्विपनगष्ठ्यूतरुधिराम्बुनदाकुले ॥ 1363 ॥

अश्वीयम् । पूर्ववत् । 'वृन्दे त्वश्वीयपाश्ववत्' II. viii. 49. इत्यमरः ।

१२५८ । पाशादिभ्यो यः । (४. २. ४९)

पाश्या । तृण्या । धूम्या । वन्या । वात्या । पाशादिः—४. २९.

चम्पूभारते—VIII. 66.

वार्यस्तपोधनवरेण्यमनःखलीनै-
स्तृण्यां मुहुः कबलयञ्जगदार्तिरूपाम् ।
नीचान्विधातुमसुरान्निजशृङ्गतुल्यान्
कोपादुदेष्यति चयः कुहनातुरङ्गः ॥ 1364 ॥

तृणानां समूहस्तृण्या । यप्रत्ययः ।

चम्पूभारते—VIII. 69.

श्रुत्वा ततः परमतं पुरुषोत्तमात्ते
फेनायमानरणसंनहनाब्धिपूराः ।

आराधयन् विधिवदल्लगणं श्मशाने
पीतां वमन्तमिव कान्तिमिषेण धूम्याम् ॥ 1365 ॥

धूमानां समूहो धूम्या ।

चम्पूभारते—III. 116.

हुताशनपरित्रासादुच्चलन्त्या वनश्रियः ।
कबरीव श्लथावेगात्कापि धूम्या खमानशे ॥ 1366 ॥

धूम्या ।

अस्मिन्नेव ग्रन्थे श्लो॰ 93. धूम्याम् ।

अस्मिन्नेव ग्रन्थे श्लो॰ 675. वात्या । वातसमूहः ।

अस्मिन्नेव ग्रन्थे श्लो॰ 259. वात्या ।

वा॰ । वातात्समूहे च । ( 3220. )

वातूलः ।

चम्पूरामायणे—VI. 72.

वातूल इव तूलानां वानराणां रणाजिरे ।
विद्रावणस्ततो मायाविद्रावणसुतोऽभवत् ॥ 1367 ॥

वातूलः ।

१२५९ । खलगोरथात् । ( ४. २. ५० )

खल्या । गव्या । रथ्या ।

माघे—XVIII. 3.

रथ्याघोषैर्बृंहणैर्वारणाना-
मैक्यं गच्छन् वाजिनां ह्रेषया च ।
व्योमव्यापी सन्ततं दुन्दुभीना-
मव्यक्तोऽभूदीशितेव प्रणादः ॥ 1368 ॥

रथानां समूहो रथ्या । समूहार्थे यत् ।

अस्मिन्नेव ग्रन्थे श्लो० 1336. रथ्या ।

१२६० । इनित्रकट्यचश्च । (४. २. ५१)

खलगोरथेभ्यः क्रमादेते स्युः । खलिनी । गोत्रा । रथकट्या ।

वा० । खलादिभ्य इनिर्वक्तव्यः । (2735.)

डाकिनी । कुटुम्बिनी । खलादिः—४. ३०. 'त्रिषु द्वैपादयो रथ्या रथकट्या रथव्रजे' II. viii. 56. इत्यमरः । 'गोत्रा गोनिचये भूम्याम्' इति मेदिनी ।

चम्पूभारते—VI. 20.

ग—अनन्तरं स्ववशा पाञ्चालसुता भृशमादृतकङ्कतमतिरसोत्पादनचणमधिकशोभनाटनपाटवमाश्रितगन्धर्वकुलमाकलितगोत्रान्तरं पञ्चधा रूपमुदञ्चयन्ती पञ्चापि पतीननुयातवती ॥ 1369 ॥

**गोत्रा** गोवृन्दः ।

चम्पूभारते—VII. 1.

आरूढे द्यामर्कबिम्बे परेद्युः
साकं सैन्यैः सार्वभौमः कुरूणाम् ।
पार्थादेकां बिभ्रदाहृत्य **गोत्रां**
मात्स्यादन्यां तत्पुरं हर्तुमागात् ॥ 1370 ॥

**गोत्रा** ।

१२६२ । राजन्यादिभ्यो वुञ् । (४. २. ५३)

राजन्यकः । राजन्यादिः—४. ३१.

१२६३ । भौरिक्याद्यैषुकार्यादिभ्यो विधल्भक्तलौ । (४. २. ५४)

भौरिकीणां विषयो देशः भौरिकिविधम् । ऐषुकारिभक्तम् । भौरिक्यादिः—४. ३२. ऐषुकार्यादिः—४. ३३.

१२६७ । सङ्ग्रामे प्रयोजनयोद्धृभ्यः ( ४. २. ५६ )

सोऽस्य इत्यनुवर्तते । सुभद्रा प्रयोजनमस्य सङ्ग्रामस्येति सौभद्रः । भरता योद्धारोऽस्य सङ्ग्रामस्येति भारताः ।

१२६८ । श्येनतिलस्य पाते ञे । ( ६. ३. ७१ )

श्येन तिल एतयोर्मुनागमः स्यात् ञप्रत्यये परे पातशब्द उत्तरपदे । श्येनपातोऽस्यां श्यैनम्पाता मृगया । तिलपातोऽस्यां वर्तते तैलंपाता स्वधा ।

१२६९ । तदधीते तद्वेद । ( ४. २. ५९ )

व्याकरणमधीते वेद वा वैयाकरणः ।

१२७० । क्रतूक्थादिसूत्रान्ताट्ठक् । ( ४. २. ६० )

वा० । आख्यानाख्यायिकेतिहासपुराणेभ्यश्च । ( 2746. )

अनर्घराघवे—IV. 64.

सुचरितमिदमैतिहासिकानां
हृदि न विरंस्यति यत्तवैष पुत्रः ।
भृगुसुतपरशूदराद्विराजां
सहजविजित्वरमाचकर्ष तेजः ॥ 1371 ॥

इतिहासः पुरावृत्तं तद्विदन्त्यैतिहासिकाः । अनेन ठक् ।

अनर्घराघवे—I. 32.

ग—भगवन् सर्वाद्भुतनिधे भगवन्तमनुगन्तुमुत्किमसुन्किकस्य के वयं, एवं किल त्रिशङ्कुसङ्कीर्तनोपाख्यानपारदृश्वानः पौराणिकाः कथयन्ति ॥ 1372 ॥

पौराणिकाः ।

१२७१ । क्रमादिभ्यो वुन् । ( ४. २. ६१ )

क्रमकः ; क्रमादिः—४. ३५.

१२७३ । वसन्तादिभ्यष्ठक् । (४. २. ६३)

वासन्तिकः । अथर्वाणमधीते आथर्वणिकः । 'दाण्डिनायन' (सू. 1145) इति सूत्रे निपातनाट्टिलोपो न ।

१२७५ । गाथिविदथिकेशिगणिपणिनश्च । (६. ४. १६५)

एतेऽणि प्रकृत्या स्युः । इति टिलोपो न । पणिनो गोत्रापत्यं पाणिनः । ततो युनि इञ् पाणिनिः ।

अस्मिन्नेव ग्रन्थे श्लो० 974. पाणिनिना प्रोक्तं पाणिनीयम् । अनेन पाणिनिरिति सिद्धम् । ततः 'तेन प्रोक्तम्' (सू. 1481) इति छः ।

१२८० । तेन निर्वृत्तम् । (४. २. ६८)

कुशाम्बेन निर्वृत्ता कौशाम्बी नगरी ।

चम्पूरामायणे—I. 53.

ग—पुरा खलु कुशेशयासनजन्मा कुशाभिधानो राजर्षिः कुशाम्बप्रमुखैश्चतुर्भिः कौशाम्बीमहोदयधर्मारण्यगिरिव्रजाख्यानां पुरीणां कर्तृभिः पुत्रैर्बभूव ॥ 1373 ॥

कौशाम्बी ।

१२८१ । तस्य निवासः । (४. २. ६९)

इत्यण् । शिबीनां निवासो देशः शैबः ।

किरातार्जुनीये—I. I.

श्रियः कुरूणामधिपस्य पालिनीं
प्रजासु वृत्तिं यमयुङ्क्त वेदितुम् ।
स वर्णिलिङ्गी विदितस्समाययौ
युधिष्ठिरं द्वैतवने वनेचरः ॥ 1374 ॥

कुरूणां निवासाः कुरवो जनपदाः । अनेनाण् । 'जनपदे लुप्' (सू. 1293) इति लुप् । 'लुपि युक्त' (सू. 1294) इति प्रकृतिवल्लिङ्गवचने ।

किरातार्जुनीये—I. 17.

> सुखेन लभ्या दधतः कृषीवलै-
> रकृष्टपच्या इव सस्यसम्पदः ।
> वितन्वति क्षेममदेवमातृका-
> श्चिराय तस्मिन्कुरवश्चकासति ॥ 1375 ॥

कुरवः ।

१२८२ । अदूरभवश्च । (४. २. ७०)

विदिशाया अदूरभवं नगरं वैदिशम् । चकारेण प्रागुक्तास्त्रयोऽर्थाः सन्निधाप्यन्ते । तेन वक्ष्यमाणप्रत्ययानां चातुरर्थिकत्वं सिध्यति ।

भट्टिकाव्ये—VI. 73.

> नन्दनानि मुनीन्द्राणां रमणानि वनौकसाम् ।
> वनानि भेजतुर्वीरौ ततः पाम्पानि राघवौ ॥1376 ॥

पम्पाया अदूरभवानि पाम्पानि । अनेनाण् ।

१२८७ । सङ्कलादिभ्यश्च । (४. २. ७५)

सङ्कलेन निर्वृत्तं साङ्कलम् । पौष्कलम् । सङ्कलादिः—४. ३७.

१२९२ । वुञ्छण्कठजिलसेनिरढञ्ण्ययफक्फिञिञ्ञ्यकक्ठकोऽरीहणकृशाश्वर्श्यकुमुदकाशतृणप्रेक्षाश्मसखिसङ्काशबलपक्षकर्णसुतङ्गमप्रगदिन्वराहकुमुदादिभ्यः । (४. २. ८०)

सप्तदशभ्यः सप्तदश क्रमात्स्युश्चतुरर्थ्याम् । अरीहणादिभ्यो वुञ् । अरीहणेन निर्वृत्तमारीहणकम् । अरीहणादिः—४. ३९. कृशाश्वादिभ्यश्छण् । कार्शाश्वीयम् । कृशाश्वादिः—४. ४०. ऋश्यादिभ्यः कः । ऋश्यकम् । ऋश्यादिः—४. ४१. कुमुदादिभ्यष्ठच् । कुमुदिकम् । कुमुदादिः—४. ४२. काशादिभ्य इलः । काशिलः । काशादिः—४. ४३. तृणादिभ्यः सः । तृणसम् । तृणादिः—४. ४४. प्रेक्षादिभ्य इनिः । प्रेक्षी । प्रेक्षादिः—४. ४५. अश्मादिभ्यो रः । अश्मरः । अश्मादिः—

४.४६. सख्यादिभ्यो ढञ् । साखेयम् । सख्यादिः—४.४७. सङ्काशादिभ्यो ण्यः । साङ्काश्यम् । सङ्काशादिः—४.४८. बलादिभ्यो यः । बल्यम् । बलादिः—४.४९. पक्षादिभ्यः फक् । पाक्षायणः । पक्षादिः—४.५०.

(ग. सू. ) पथः पन्थ च । 97.

पान्थायनः । कर्णादिभ्यः फिञ् । कार्णायनिः । कर्णादिः—४.५१. सुतङ्गमादिभ्य इञ् । सौतङ्गमिः । सुतङ्गमादिः—४.५२. प्रगद्यादिभ्यो ञ्यः । प्रागद्यः । प्रगद्यादिः—४.५३. वराहादिभ्यः कक् । वाराहकः । वराहादिः—४.५४. कुमुदादिभ्यष्ठक् । कौमुदिकः । कुमुदादिः—४.५५.

अस्मिन्नेव ग्रन्थे श्लो० 635. द्रुः द्रुमो हन्यतेऽनेनेति द्रुघणः । कुठारादिः । 'करणेऽयोविद्रुषु' (सू. 3259) इति करणार्थे हन्तेरप्प्रत्ययो घनादेशश्च । अरीहणादिपाठात् णत्वम् ।

अस्मिन्नेव ग्रन्थे श्लो० 959. सङ्काशेन निर्वृत्तं साङ्काश्यम् । तस्मिन् पुरे । 'सङ्काशादिभ्यो ण्यः' इति ण्यप्रत्ययः ।

## १२९३ । जनपदे लुप् । (४. २. ८१)

जनपदे वाच्ये चातुरर्थिकस्य लुप् स्यात् ।

अस्मिन्नेव ग्रन्थे श्लो० 1374. कुरूणां निवासः कुरवो जनपदाः । 'तस्य निवासः' (सू. 1281) इत्यण् । जनपदे लुप् ।

अस्मिन्नेव ग्रन्थे श्लो. 1375. कुरवः ।

## १२९४ । लुपि युक्तवद्व्यक्तिवचने । (१. २. ५१)

लुपि सति प्रकृतिवल्लिङ्गवचने स्तः । पञ्चालानां निवासो जनपदः पञ्चालाः । कुरवः । अङ्गाः । वङ्गाः । कलिङ्गाः ।

अस्मिन्नेव ग्रन्थे श्लो० 1374. कुरूणाम् ।

अस्मिन्नेव ग्रन्थे श्लो० 607. मघासु मघायुक्तकाले । 'नक्षत्रेण युक्तः कालः' (सू. 1204.) इत्यण् । 'लुबविशेषे' (सू. 1205.) इति तस्य लुपि अनेन प्रकृतिलिङ्गवचनत्वात् स्त्रीलिङ्गबहुत्वे । 'नक्षत्रे च लुपि' (सू. 642.) इति लुबन्तान्नक्षत्रवाचकशब्दाद्वैकल्पिकी सप्तमी ।

१३०० । विशेषणानां चाजातेः । ( १. २. ५२ )

वा० । हरीतक्यादिषु व्यक्तिः । ( 715. )

हरीतक्याः फलानि हरीतक्यः । हरीतक्यादिः— ४. ८५.

१३०२ । शर्कराया वा । ( ४. २. ८३ )

अस्माच्चातुरर्थिकस्य वा लुप्स्यात् ।

१३०३ । ठक्छौ च । ( ४. २. ८४ )

शर्कराया एतौ स्तः । कुमुदादौ वराहादौ च पाठात्पक्षे ठच्कौ । वाग्रहणसामर्थ्यात् पक्षे औत्सर्गिकोऽण् । तस्य लुब्विकल्पः । षड्रूपाणि : शर्करा शार्करम् शार्करिकम् शर्करीयम् शर्करिकम् शर्करकम् । 'शर्करादिभ्योऽण्' (सू. 2052.) शर्करेवशार्करम् ।

१३०४ । नद्यां मतुप् । ( ४. २. ८५ )

इक्षुमती ।

१३०५ । मध्वादिभ्यश्च । ( ४. २. ८६ )

मतुप्स्याच्चातुरर्थिकः । मधुमान् । मध्वादिः— ४. ५७.

१३०६ । कुमुदनडवेतसेभ्यो ड्मतुप् । ( ४. २. ८७ )

कुमुद्वान् । नड्वान् । वेतस्वान् ।

वा० । महिषाच्चेति वक्तव्यम् । ( 2761. )

महिष्मान्नाम देशः ।

अस्मिन्नेव ग्रन्थे श्लो० 11. कुमुद्वतीम् कुमुदिनीम् । ड्मतुप् । 'उगितश्च' (सू. 455.) इति ङीप् ।

अनर्घराघवे—II. 84.

निशाचराणां तमसां निहन्ता
पुरोऽयमुद्गच्छति रामचन्द्रः ।

अथोल्लसद्भिर्नयनैर्मुनीना-
मयं कुमुद्वानजनि प्रदेशः ॥ 1377 ॥

**कुमुद्वान्** । पूर्ववत् ।

अनर्घराघवे—V. 18.

विन्ध्यगिरिगजकन्यान्तःपुरमेतास्तरङ्गमालिन्यः ।
वेतस्वतीभिरद्भिस्तौर्यत्रिकगुणनिकां दधते ॥ 1378 ॥

**वेतस्वतीभिः** । ङमतुपि ङीप् ।

१३०७ । **नडशादाड्ड्वलच्** । ( ४. २. ८८ )

नड्वलः । 'शादो जम्बालघासयोः' III. iii. 90. इत्यमरः । शाद्वलः ।

रघुवंशे—XVIII. 5.

तस्यानलौजास्तनयस्तदन्ते
वंशश्रियं प्राप नलाभिधानः ।
यो **नड्वलानीव** गजः परेषां
बलान्यमृद्नान्नलिनाभवक्त्रः ॥ 1379 ॥

**नड्वलानि** नडप्रायस्थलानि । ड्वलच् ।

रघुवंशे—II. 17.

स पल्वलोत्तीर्णवराहयूथा-
न्यावासवृक्षोन्मुखबर्हिणानि ।
ययौ मृगाध्यासितशाद्वलानि
श्यामायमानानि वनानि पश्यन् ॥ 1380 ॥

शादाः शष्पाण्येषु देशेषु सन्तीति शाद्वलाः । ड्वलच् ।

अस्मिन्नेव ग्रन्थे श्लो० 627. **शाद्वलाः** । शादप्रायप्रदेशाः । 'नडप्राये नड्वान् नड्वल इत्यपि । कुमुद्वान् कुमुदप्राये वेतस्वान् बहुवेतसे । शाद्वलश्शादहरिते' II. i. 10—11. इत्यमरः ।

१३०८ । शिखाया वलच् । ( ४. २. ८९ )

शिखावलः ।

१३०९ । उत्करादिभ्यश्छः । ( ४. २. ९० )

उत्करीयः । उत्करादिः— ४. ५८.

१३१० । नडादीनां कुक् च । ( ४. २. ९१ )

नडकीयम् । नडादिः— ४. ५०.

( ग. सू. ) तक्षन्नलोपश्च । ६१.

तक्षकीयः ।

॥ इति चातुरर्थिकप्रकरणम् ॥

॥ अथ शैषिकप्रकरणम् ॥

१३१२ । शेषे । (४. २. ९२)

अपत्यादिचतुरर्थ्यन्तादन्योऽर्थः शेषः । तत्राणादयः स्युः । चक्षुषा गृह्यते चाक्षुषं रूपम् । श्रावणः शब्दः । औपनिषदः पुरुषः । दृषदि पिष्टा दार्षदाः सक्तवः । उलूखले क्षुण्ण औलूखलो यावकः । अश्वैरुह्यत इत्याश्वो रथः । चतुर्भिरुह्यते चातुरं शकटम् ।

१३१३ । राष्ट्रावारपाराद्घखौ । (४. २. ९३)

आभ्यां क्रमाद्घखौ स्तः शेषे । राष्ट्रियः । अवारपारीणः ।

वा० । अवारपाराद्विगृहीतादपि । (2771.)

वा० । विपरीताच्चेति वक्तव्यम् । (2772.)

अवारीणः । पारीणः । पारावारीणः ।

१३१४ । ग्रामाद्यखञौ । (४. २. ९४)

ग्राम्यः ग्रामीणः ।

१३१५ । कत्त्र्यादिभ्यो ढकञ् । (४. २. ९५)

कुत्सितास्त्रयः कत्त्रयः । तत्र जातादिः कात्त्रेयकः । नागरेयकः । ग्रामादित्यनुवृत्तेः ग्रामेयकः ।

माघे—XIV. 64.

ग्राम्यभावमपहातुमिच्छवो योगमार्गपतितेन चेतसा ।
दुर्गमेकमपुनर्निवृत्तये यं विशन्ति वशिनं मुमुक्षवः ॥ 1381 ॥

ग्रामे भवा ग्राम्याः । यप्रत्ययः ।

माघे—XII. 38.

गोष्ठेषु गोष्ठीकृतमण्डलासनान्
सनादमुत्थाय मुहुस्स वल्गतः ।

ग्राम्यानपश्यत्कपिशं पिपासतः
स्वगोत्रसङ्कीर्तनभावितात्मनः ॥ 1382 ॥

ग्राम्यान् । पूर्ववत् ।

माघे—XII. 37.

कोशातकीपुष्पगुलुच्छकान्तिभि-
र्मुखैर्विनिद्रोल्बणबाणचक्षुषः ।
ग्रामीणवध्वस्तमलक्षिता जनै-
श्चिरं वृतीनामुपरि व्यलोकयन् ॥ 1383 ॥

ग्रामेषु भवा ग्रामीणाः । खञ्प्रत्ययः ।

१३१६ । कुलकुक्षिग्रीवाभ्यः श्वास्यलङ्कारेषु । (४. २. ९६)

कौलेयकः श्वा । कौक्षेयकोऽसिः । ग्रैवेयकोऽलङ्कारः । 'कौलेयकस्सारमेयः' II. x. 22. 'कौक्षेयको मण्डलाग्रः' II. viii. 90. 'ग्रैवेयकं कण्ठभूषा' II. vi. 104. इत्यमरः ।

अस्मिन्नेव ग्रन्थे श्लो० 656. तीक्ष्णकौक्षेयकाणां निशितासीनाम् । ढकञ्प्रत्ययः ।

अनर्घराघवे—VI. 17.

श्रुत्वा दाशरथी सुवेलकटके साटोपमर्धे धनु-
ष्टङ्कारैः परिपूरयन्ति ककुभः प्रोञ्छन्ति कौक्षेयकान् ।
अभ्यस्यन्ति तथैव चित्रफलके लङ्कापतेस्तत्पुन-
र्वैदेहीकुचपत्रवल्लिरचनाचातुर्यमर्थे कराः ॥ 1384 ॥

कौक्षेयकान् । पूर्ववत् ।

१३१७ । नद्यादिभ्यो ढक् । (४. २. ९७)

नादेयम् । माहेयम् । वाराणसेयम् । नद्यादिः—४. ६१.

१३१८ । दक्षिणापश्चात्पुरसस्त्यक् । (४. २. ९८)

दक्षिणा इत्याजन्तमव्ययम् । दाक्षिणात्यः । पाश्चात्यः । पौरस्त्यः ।

रघुवंशे—IV. 62.

संग्रामस्तुमुलस्तस्य पाश्चात्यैरश्वसाधनैः ।
शार्ङ्गकूजितविज्ञेयप्रतियोधे रजस्यभूत् ॥ 1385 ॥

पाश्चात्यैः । त्यक् ।

चम्पूभारते—VIII. 11.

पाश्चात्यपाथोनिधिपार्श्वभागे
सम्पूर्य कुक्षिं सलिलस्य पूरैः ।
सजातियूथाच्च्युतिमाश्रितस्य
क्रमं दधौ यो घनशावकस्य ॥ 1386 ॥

पश्चाद्भवः पाश्चात्यः । पश्चिमः ।

रघुवंशे—IV. 34.

पौरस्त्यानेवमाकामंस्तांस्ताञ्जनपदाञ्जयी ।
प्राप तालीवनश्याममुपकण्ठं महोदधेः ॥ 1387 ॥

पुरोभवान् पौरस्त्यान् प्राच्यान् । त्यक् ।

अनर्घराघवे—II. 78.

तथा पौरस्त्यायां दिशि कुमुदकेदारकलिका-
कपाटघ्नीमिन्दुः किरणलहरीमुल्ललयति ।
समन्तादुन्मीलद्बहलजलबिन्दुस्तबकिनो
यथा पुञ्जायन्ते प्रतिगुडकमेणाङ्कमणयः ॥ 1388 ॥

पौरस्त्यायां पूर्वस्यां दिशि ।

अनर्घराघवे—IV. 3.

इतः पौरस्त्यायां ककुभि विवृणोति क्रमदल-
त्तमिस्रामर्माणं किरणकलिकामम्बरमणिः ।

इतो निष्क्रामन्ती नवरतिगुरोः प्रोञ्छति वधूः
स्वकस्तूरीपत्राङ्कुरमकरिकामुद्रितमुरः ॥ 1389 ॥

पौरस्त्यायाम् । पूर्ववत् ।

१३१९ । कापिश्याः ष्फक् । ( ४. २. ९९ )

कापिश्यां जातादि कापिशायनं मधु । कापिशायनी द्राक्षा ।

माघे—X. 4.

कापिशायनसुगन्धि विघूर्णन्
उन्मदोऽधिशयितुं समशेत ।
फुल्लदृष्टि वदनं वनिताना-
मब्जचारु चषकं च षडंघ्रिः ॥ 1390 ॥

कापिशायनेन मद्येन ।

१३२१ । द्युप्रागपागुदक्प्रतीचो यत् । ( ४. २. १०१ )

दिव्यम् । प्राच्यम् । अपाच्यम् । उदीच्यम् । प्रतीच्यम् ।

अस्मिन्नेव ग्रन्थे श्लो० 1258. प्राचि भवं प्राच्यं पूर्वद्वारम् ।

१३२४ । अव्ययात्त्यप् । ( ४. २. १०४ )

वा० । अमेहक्वतसित्रेभ्य एव । ( 2779. )

अमान्तिकसहार्थयोः । अमात्यः । इहत्यः । क्वत्यः । ततस्त्यः । तत्रत्यः ।

वा० । त्यब्नेर्ध्रुव इति वक्तव्यम् । ( 2780. )

नित्यः ।

चम्पूरामायणे—II. 36.

सिद्धार्थको महामात्यस्तत्परित्यागमब्रवीत ।
सरयूपातितानेकप्रजामरणकारणात् ॥ 1391 ॥

अमात्यः ।

अस्मिन्नेव ग्रन्थे श्लो० 1023. अमाशब्दस्सहार्थे । सह राज्ञा कार्येषु भवतीत्यमात्यः ।

अस्मिन्नेव ग्रन्थे श्लो० 515. क भवा क्कत्या ।

माघे—III. 76.

विक्रीय दिश्यानि धनान्युरूणि
द्वैप्यानसावुत्तमलाभभाजः ।
तरीषु तत्रत्यमफल्गु भाण्डं
सांयात्रिकानावपतोऽभ्यनन्दत् ॥ 1392 ॥

तत्र भवं तत्रत्यम् ।

वा० । निसो गते । (2781.)

१३२५ । ह्रस्वात्तादौ तद्धिते । (८. ३. १०१)

ह्रस्वादिणः परस्य सस्य षः स्यात् तादौ तद्धिते । निर्गतो वर्णाश्रमेभ्यः निष्ट्यः चण्डालादिः ।

अस्मिन्नेव ग्रन्थे श्लो० 28. ज्योतिष्टमाम् उत्कृष्टतेजोभृताम् । षत्वम् ।

वा० । अरण्याण्णः । (2782.)

आरण्यास्सुमनसः । 'अरण्यान्मनुष्ये' (सू. 1353) इति वुञ् । आरण्यकः ।

माघे—VIII. 10.

आघ्राय श्रमजमनिन्द्यगन्धबन्धुं
निःश्वासश्वसनमसक्तमङ्गनानाम् ।
आरण्यास्सुमनस ईषिरे न भृङ्गै-
रौचित्यं गणयति को विशेषकामः ॥ 1393 ॥

अरण्ये भवा आरण्याः । णप्रत्ययः । ततष्टाप् ।

रघुवंशे—V. 15.

शरीरमात्रेण नरेन्द्र तिष्ठन्
आभासि तीर्थप्रतिपादितर्द्धिः ।

आरण्यकोपात्तफलप्रसूतिः
स्तम्बेन नीवार इवावशिष्टः ॥ 1394 ॥

अरण्ये भवा आरण्यका मनुष्याः । 'अरण्यान्मनुष्ये' ( सू. 1353 ) इति वुञ् ।

१३२६ । ऐषमोह्यःश्वसोऽन्यतरस्याम् । ( ४. २. १०५ )

एभ्यस्त्यब्वा । पक्षे वक्ष्यमाणौ ट्युट्युलौ । ऐषमस्त्यम् ऐषमस्तनम् । ह्यस्त्यम् ह्यस्तनम् । श्वस्त्यम् श्वस्तनम् । पक्षे शौवस्तिकं वक्ष्यते । 'श्वसस्तुट् च' (सू. 1385) श्वस्शब्दाट्ठञ् वा स्यात्तस्य तुडागमश्च । 'द्वारादीनाञ्च' (सू. 1386) इत्यौजागमः ।

अस्मिन्नेव ग्रन्थे श्लो० 478. श्वोभवा विद्यमानाः शौवस्तिकाः । ठञि तुडागमः । औजागमः ।

१३३५ । वृद्धिर्यस्याचामादिस्तद्वृद्धम् । ( १. १. ७३ )

यस्य समुदायस्याचां मध्ये आदिर्वृद्धिस्तद्वृद्धसंज्ञं स्यात् ।

१३३६ । त्यदादीनि च । ( १. १. ७४ )

वृद्धसंज्ञानि स्युः । त्यदादिः सर्वादौ द्रष्टव्यः । सर्वादिः— १. १.

१३३७ । वृद्धाच्छः । ( ४. २. ११४ )

शालीयः । मालीयः । तदीयः ।

रघुवंशे—XV. 11.

तस्य मार्गवशादेका बभूव वसतिर्यतः ।
रथस्वनोत्कण्ठमृगे वाल्मीकीये तपोवने ॥ 1395 ॥

वाल्मीकीये वाल्मीकिसम्बन्धिनि । छप्रत्ययः ।

माघे—II. 8.

भवद्भिरामवसरप्रदानाय वचांसि नः ।
पूर्वरङ्गः प्रसङ्गाय नाटकीयस्य वस्तुनः ॥ 1396 ॥

नाटके भवं नाटकीयम् ।

अस्मिन्नेव ग्रन्थे श्लो० 632. राजव्रजीयैः राजसङ्घसम्बन्धिभिः ।

चम्पूभारते— I. 11.

ग—या खलु पुरा कुरुधराधिपापराधसमेधितक्रोधेन हलधरेण निजायुधेन हटात्कर्षणशिक्षया समुत्क्षिप्तदक्षिणक्षितिभागा तदीयभुवनभूषणायमानां भोगवतीमात्मना विजेतुं भागीरथीपाथःपथेनावतीर्य कृतप्रस्थानेवाद्यापि परिदृश्यते ॥ 1397 ॥

तस्येदं तदीयम् ।

नैषधे—II. 108.

भ्रमणरयविकीर्णस्वर्णभासा खगेन
क्वचन पतनयोग्यं देशमन्विष्यताधः ।
मुखविधुमदसीयं सेवितुं लम्बमानः
शशिपरिधिरिवोच्चैर्मण्डलस्तेन तेने ॥ 1398 ॥

अमुष्या अयं अदसीयः । वृद्धाच्छः । त्यदादिवृद्धसंज्ञा ।

अस्मिन्नेव ग्रन्थे श्लो० 461. अस्माकमिदमस्मदीयम् ।

चम्पूरामायणे— IV. 5.

मलयगिरिचरोऽयं मन्मथाधोरणाज्ञा-
मथितपथिकवर्गो मारुतव्यालहस्ती ।
विरचयति मदीये शैत्यसौरभ्यमान्द्यै-
स्त्रिविधमदसमृद्धो मानसे वप्रलीलाम् ॥ 1399 ॥

ममेदं मदीयम् ।

चम्पूरामायणे—II. 79.

स्वतस्सिद्धं यस्मिन्नितरदुरवापं विजयते
सुमित्रापुत्रत्वादपि जगति रामानुजपदम् ।
यदीयाक्षिद्वन्द्वप्रतिनिधि भवेदम्बुजयुगं
निशीथे निर्निद्रं यदि तमपि साक्षादकृत सः ॥ 1400 ॥

यदीयम् ।

माघे—I. 26.

हरत्यघं सम्प्रति हेतुरेष्यतः
शुभस्य पूर्वाचरितैः कृतं शुभैः ।
शरीरभाजां भवदीयदर्शनं
व्यनक्ति कालत्रितयेऽपि योग्यताम् ॥ 1401 ॥

भवदीयम् ।

१३३८ । एङ् प्राचां देशे । (१. १. ७५)

वा० । वा नामधेयस्य वृद्धसंज्ञा वक्तव्या । (576.)

दैवदत्तः । देवदत्तीयः ।

१३३९ । भवतष्ठक्छसौ । (४. २. ११५)

वृद्धाद्भवत एतौ स्तः । भावत्कः । भवदीयः । 'ठक्छसोश्च' (वा. 3929. सू. 836) इति पुंवद्भावः ।

अस्मिन्नेव ग्रन्थे श्लो० 434. भवत्या इदं भावत्कं भवदीयम् । ठकि पुंवद्भावः । 'इसुस्' (सू. 1221) इति कः ।

१३४० । काश्यादिभ्यष्ठञ्ञिठौ । (४. २. ११६)

(ग. सू.) । आपदादिपूर्वपदात्कालान्तात् । 74.

आपत्कालिका । काश्यादिः—४. ६३. आपदादिः—४. ६३.

१३५३ । अरण्यान्मनुष्ये । (४. २. १२९)

वुञ् । 'अरण्याण्णः' (वा. 2782. सू. 1325) इत्यस्यापवादः ।

वा० । पथ्यध्यायन्यायविहारमनुष्यहस्तिष्विति वाच्यम् । (2819.)

आरण्यकः पन्था अध्यायो न्यायो विहारो मनुष्यो हस्ती वा ।

वा० । वा गोमयेषु । (2820.)

आरण्यका आरण्या वा गोमयाः ।

अस्मिन्नेव ग्रन्थे श्लो० 1394. अरण्ये भवा आरण्यका मनुष्याः ।

उत्तररामचरिते—I. 22.

पुत्रसंक्रान्तलक्ष्मीकैर्यद्वृद्धेक्ष्वाकुभिर्धृतम् ।
धृतं बाल्ये तदार्येण पुण्यमारण्यकव्रतम् ॥ 1402 ॥

आरण्यकानां व्रतम् ।

अनर्घराघवे—IV. 60.

ग—वत्स अप्रशस्तः खलु आरण्यकानां जनपदेषु चिरप्रचारः । तत्क पुनरस्मान्नेष्यसि ॥ 1403 ॥

आरण्यकानाम् ।

१३५४ । विभाषा कुरुयुगन्धराभ्याम् । ( ४. २. १३० )

वुञ् । कौरवकः कौरवः । यौगन्धरकः यौगन्धरः ।

१३५७ । कच्छादिभ्यश्च । ( ४. २. १३३ )

देशवाचिभ्योऽण् । काच्छः । सैन्धवः । कच्छादिः—४. ६५.

१३६२ । गहादिभ्यश्च । ( ४. २. १३८ )

छः स्यात् । गहीयः । गहादिः—४. ६६.

( ग. सू. ) कुग्जनस्य परस्य च । 89.

जनकीयम् । परकीयम् ।

( ग. सू. ) देवस्य च । 90.

देवकीयम् ।

( ग. सू. ) वेणुकादिभ्यश्छण् वाच्यः । 91.

वैणुकीयम् वैत्रकीयम् । औत्तरपदकीयम् ।

किरातार्जुनीये—VII. 14.

संवाता मुहुरनिलेन नीयमाने
दिव्यस्त्रीजघनवरांशुके विवृत्तिम् ।
पर्यस्यत्पृथुमणिमेखलांशुजालं
संजज्ञे युतकमिवान्तरीयमूर्वोः ॥ 1404 ॥

अन्तरे भवमन्तरीयम् अधोंऽशुकम् ।

माघे—IV. 5.

क्वचिज्जलापायविपाण्डुराणि
धौतोत्तरीयप्रतिमच्छवीनि ।
अभ्राणि बिभ्राणमुमाङ्गसङ्ग-
विभक्तभस्मानमिव स्मरारिम् ॥ 1405 ॥

उत्तरीयम् ।

१३६४ । राज्ञः क च । (४. २. १४०)

वृद्धत्वाच्छे सिद्धे तत्सन्नियोगेन कादेशमात्रं विधीयते । राजकीयम् ।

१३६७ । पर्वताच्च । (४. २. १४३)

पर्वतीयः ।

माघे—XII. 51.

शैलाधिरोहाभ्यसनाधिकोद्धुरैः
पयोधरैरामलकीवनाश्रिताः ।
तं पर्वतीयप्रमदाश्चचायिरे
विकासविस्फारितविभ्रमेक्षणाः ॥ 1406 ॥

पर्वतो निवासो येषां ते पर्वतीयाः किरातादयः । छप्रत्ययः

रघुवंशे—IV. 77.

तत्र जन्यं रघोर्घोरं पर्वतीयैर्गणैरभूत् ।
नाराचक्षेपणीयाश्मनिष्पेषोत्पतितानलम् ॥ 1407 ॥

पर्वते भवैः पर्वतीयैः । पूर्ववत् ।

१३६९ । विभाषाऽमनुष्ये । (४. २. १४४)

मनुष्यभिन्नेऽर्थे पर्वताच्छो वा स्यात् । पक्षेऽण् । पर्वतीयानि पार्वतानि वा फलानि ।

१३७० । युष्मदस्मदोरन्यतरस्यां खञ्च । (४. ३. १)

चाच्छः । पक्षेऽण् । युवयोर्युष्माकं वा अयं युष्मदीयः । अस्मदीयः । 'त्यदादीनि च' (सू. 1336) इति वृद्धसंज्ञा । वृद्धाच्छः ।

१३७१ । तस्मिन्नणि च युष्माकास्माकौ । (४. ३. २)

युष्मदस्मदोरेतावादेशौ स्तः खञ्यणि च । यौष्माकीणः । आस्माकीनः । यौष्माकः । आस्माकः ।

माघे—VIII. 50.

आस्माकी युवतिदृशामसौ तनोति
छायैव श्रियमनपायिनीं किमेभिः ।
मत्वैवं स्वगुणपिधानसाभ्यसूयैः
पानीयैरिति विदधाविरेऽञ्जनानि ॥ 1408 ॥

अस्माकमियमास्माकी अस्मदीया । 'युष्मदस्मदोः' (सू. 1370) इत्यण् । अनेनास्माकादेशः । 'टिड्ढाण्' (सू. 470) इति ङीप् ।

१३७२ । तवकममकावेकवचने । (४. ३. ३)

एकार्थवाचिनोर्युष्मदस्मदोस्तवकममकौ स्तः खञ्यणि च । तावकीनः तावकः । मामकीनः मामकः ।

चम्पूभारते—V. 25.

प्रीतेन तेन पुनरप्यधिपः कपीना-
मूचे तथा युधि भवानधुनार्थयेऽहम् ।
कर्तुं तनुं नयनयोः पथि **तावकीनां**
तत्तादृशीमुदधिपल्वलतासवित्रीम् ॥ 1409 ॥

**तावकीनां** तव सम्बन्धिनीम् । 'युष्मदस्मदोः' (सू. 1370) इति खञ् अनेन तवकादेशः । खस्येनादेशश्च ।

चम्पूरामायणे—V. 51.

बाहुचन्दननिषङ्गकोटरादुद्धृतो रघुपतेश्शरोरगः ।
प्राणवायुमविनीत **तावकं** काल्यापनमपास्य पास्यति ॥ 1410 ॥

तवायं **तावकः** । 'युष्मदस्मदोः' (सू. 1370) रित्यण् । अनेन तवकादेशः ।

नैषधे—II. 52.

न सुवर्णमयी तनुः परं ननु किं वागपि **तावकी** तथा ।
न परं पथि पक्षपातितानवलम्बे किमु मादृशोऽपि सा ॥ 1411 ॥

तवेयं **तावकी** । 'युष्मदस्मदोः' (सू. 1370) इत्यणि ङीप् ।
चम्पूरामायणे—II. 29.

मा भूत्त्वत्पदपद्मयोररुणिमा कान्तारसञ्चारतः
पाणौ पाटलिमा मनाक् प्रसरतु ज्याकर्षणादेव मे ।
कैकेयीपरिभूततातवचने नम्रो भवान्मा स्म भूत्
किञ्चिन्**मामक**मार्य शौर्यजलधे नम्रं धनुर्वर्तताम् ॥ 1412 ॥

ममेदं **मामकम्** । 'युष्मदस्मदोः' (सू. 1370) इत्यण् । अनेन ममकादेशः ।
छे तु—

**१३७३ । प्रत्ययोत्तरपदयोश्च । (७. २. ९८)**

इति त्वमौ । मदादेशः । त्वदादेशः । त्वदीयः । मदीयः । त्वत्पुत्रः । मत्पुत्रः ।

भट्टिकाव्ये—III. 32.

नैतन्मतं मत्कमिति ब्रुवाणः सहस्रशोऽसौ शपथानशप्यत् ।
उद्ग्राह्यमानः पितरं सरामं लुठयन् सशोको भुवि रोरुदावान् ॥ 1413 ॥

अहं ग्रामणीरस्य मत्कं मत्कर्तृकम् । 'स एषां ग्रामणीः' (सू. 1878.) इति कन्प्रत्ययः । अनेन मदादेशः ।

भट्टिकाव्ये—VIII. 16.

संशृणुष्व कपे मत्कैस्सङ्गच्छस्व वनैः शुभैः ।
समारन्त ममाभीष्टास्सङ्कल्पास्त्वय्युपागते ॥ 1414 ॥

अहमेषां ग्रामणीः मत्कानि । मत्स्वामिकानीत्यर्थः । पूर्ववत् ।

चम्पूरामायणे—IV. 17.

सन्त्रस्य पूर्वममुतस्तव बन्धुरेष
भेजे यथाद्रिमकुतोभयमृश्यमूकम् ।
भर्ता ममायमपि राम शरैरमेधं
प्राप्तो मदीयहृदयच्छलमद्रिदुर्गम् ॥ 1415 ॥

मदीयम् ।

भट्टिकाव्ये—XVIII. 26.

दिशो व्यश्नुवते हृष्टास्त्वत्कृतां जहति स्थितिम् ।
क्षोदयन्ति च नः क्षुद्रा हसन्तस्त्वां विपद्गतम् ॥ 1416 ॥

त्वत्कृताम्, त्वदादेशः ।

भट्टिकाव्ये—IX. 125.

मन्नियोगाच्च मारीचः पलायनपरायणः ।
युयुत्सारहितो रामं ममारापहरन्वने ॥ 1417 ॥

मन्नियोगात् । अस्मदो मदादेशः ।

१३७८ । मध्यान्मः । ( ४. ३. ८ )

मध्यमः ।

भट्टिकाव्ये—VIII. 37.

शतसाहस्रमारक्षं मध्यमं रक्षसां कपिः ।
ददर्श यत्कृतान्तोऽपि म्रियेतासाद्य भीषणम् ॥ 1418 ॥

मध्ये भवं मध्यमम् ।

अस्मिन्नेव ग्रन्थे श्लो० 1140. मध्यमपुत्रः ।

१३८० । द्वीपादनुसमुद्रं यञ् । ( ४. ३. १० )

समुद्रस्य समीपे यो द्वीपस्तद्विषयाद्द्वीपशब्दात् यञ् स्यात् । द्वैप्यम् । द्वैप्या ।

अस्मिन्नेव ग्रन्थे श्लो० 1392. द्वैप्यान् समुद्रद्वीपवासिनः पोतवणिजः ।

१३८१ । कालाट्ठञ् । ( ४. ३. ११ )

कालवाचिभ्यष्ठञ् स्यात् । मासिकम् । सांवत्सरिकम् । सायंप्रातिकः । कथं तर्हि 'शार्वरस्य तमसो निषिद्धये' इति ( कुमारसंभवे—VIII. 58 ) कालिदासः, 'अनुदितौषसराग' इति (किरातार्जुनीये— IX. 8) भारविः ; समानकालीनं, प्राक्कालीनमित्यादि च । अपभ्रंशा एवैत इति प्रामाणिकाः । 'तत्र जातः' ( सू. 1393. ) इति यावत्कालाधिकारः ।

( ग. सू. ) आपदादिपूर्वपदात्कालान्तात् । 74.

इति ठञ्ञिठौ । आपत्कालिकी आपत्कालिका ।

अनर्घराघवे—II. 10.

ग— अये प्राभातिकी भुवनस्य लक्ष्मीः ॥ 1419 ॥

प्राभातिकी, प्रभातभवा ।

चम्पूभारते—VII. 49.

वीणामुनीन्द्रो विजयस्य युद्धं
नीरन्ध्रभावेन निरीक्षमाणः ।
आनन्दजैरश्रुभिरेव चक्रे
हस्तार्पितैराह्निककृत्यमग्रे ॥ 1420 ॥

अह्नि भवमाह्निकम् ।

किरातार्जुनीये—IX. 8.

आकुलश्चलपतत्त्रिकुलानामारवैरनुदितौषसरागः ।
आययावहरिदश्वविपाण्डुस्तुल्यतां दिनमुखेन दिनान्तः ॥ 1421 ॥

उषसि भवः औषसः । 'सन्धिवेला' (सू. 1387) इत्यादिना योगविभागादण् । अन्यथा कालाट्ठञ् स्यात् । 'आकालिकडाद्यन्तवचने' (सू. 1777) इत्याकालिकट् । समानकालावाद्यन्तौ यस्येत्याकालिकः । समानकालस्याकालादेशः । आशुविनाशीत्यर्थः ।

अस्मिन्नेव ग्रन्थे श्लो० 78. समानकालावाद्यन्तावस्यामाकालिकीम् । अकालभवत्वात् उत्पत्त्यनतरं विनाशिनीत्यर्थः । समानकालाट्ठञ् ।

अस्मिन्नेव ग्रन्थे श्लो० 79. पूर्ववत् ।

नैषधे—I. 21.

अधारि पद्मेषु तदङ्घ्रिणा घृणा
क्व तच्छयच्छायलवोऽपि पल्लवे ।
तदास्य दास्येऽपि गतोऽधिकारितां
न शारदः पार्विकशर्वरीश्वरः ॥ 1422 ॥

पर्वणि भवः पार्विकः । 'नस्तद्धिते' (सू. 679.) इति टिलोपः ।

१३८४ । निशाप्रदोषाभ्यां च । ( ४. ३. १४ )

वा ठञ् स्यात् । नैशिकम् नैशम् । प्रादोषिकम् प्रादोषम् ।

अनर्घराघवे—VII. 72.

प्राचीनाचलचुम्बिचन्द्रमणिभिर्निर्व्यूढपाद्यं निजै-
र्निर्यासैरुडुभिर्निजेन वपुषा दत्तार्घलाजाञ्जलि ।

अन्तःप्रौढकलङ्कतुच्छमभितः सान्द्रे परिस्तीर्यते
बिम्बादङ्कुरभग्ननैशिकतमस्सन्दोहमिन्दोरिह ॥ 1423 ॥

**नैशिकं** निशाभवम् । ठञ् ।

किरातार्जुनीये—V. 2.

तपनमण्डलदीपितमेकत-
स्सततनैशतमोवृतमन्यतः ।
हसितभिन्नतमिस्रचयं पुरः
शिवमिवानुगतं गजचर्मणा ॥ 1424 ॥

**नैशेन** निशि भवेन तमसा वृतम् ।

माघे—XI. 37.

करजदशनचिह्नं **नैश**मङ्गेऽन्यनारी-
जनितमिति सरोषामीर्ष्यया शङ्कमानाम् ।
स्मरसि न खलु दत्तं मत्तयैतत्त्वयैव
स्त्रियमनुनयतीत्थं व्रीडमानां विलासी ॥ 1425 ॥

निशायां भवं **नैशम्** । अण् ।

## १३८५ । श्वसस्तुट् च । (४. ३. १५)

श्वस्शब्दाट्ठञ् वा स्यात्तस्य तुडागमश्च । शौवस्तिकम् ।

अस्मिन्नेव ग्रन्थे श्लो० 478, श्वो भवा विद्यमानाः **शौवस्तिकाः** । ठञि तुडागमः ।

## १३८६ । द्वारादीनाञ्च । (७. ३. ४)

इत्यैजागमः । द्वारादिः— ८. २.

अस्मिन्नेव ग्रन्थे श्लो० 75. द्वारे नियुक्ता **दौवारिकी** । 'तत्र नियुक्तः' (सू. 1620) इति ठक् । ऐजागमः ।

भट्टिकाव्ये—XII. 7.

दौवारिकाभ्याहतशक्रदूतं
सोपायनोपस्थितलोकपालम् ।
साशङ्कभीष्मासविशन्निशाटं
द्वारं ययौ रावणमन्दिरस्य ॥ 1426 ॥

**दौवारिकः** ।

अस्मिन्नेव ग्रन्थे श्लो० 478. श्वो भवा विद्यमाना **शौवस्तिकाः** । 'श्वसस्तुट् च' (सू. 1385.) इति ठञि तुडागमः । अनेन ऐजागमः ।

अस्मिन्नेव ग्रन्थे श्लो० 1239. शुन इव पदमस्येति श्वापदो व्याघ्रः । 'अन्येषामपि' (सू. 3539) इति दीर्घ इति व्याख्या । तन्न । 'शुनो दन्त (वा. 5049, सू. 1049) इति दीर्घः । 'तस्येदम्' (सू. 1500) इत्यणि अनेन एजागमः **शौवापदम्** । 'पदान्तस्यान्यतरस्याम्' (सू. 1561) इत्यैज्वा ।

## १३८७ । सन्धिवेलाद्यृतुनक्षत्रेभ्योऽण् । (४. ३. १६)

सन्धिवेलादिभ्य ऋतुभ्यो नक्षत्रेभ्यश्च कालवृत्तिभ्योऽण् स्यात् । सन्धिवेलादिः—४. ६७. सन्धिवेलायां भवं सान्धिवेलम् । ग्रैष्मम् । तैषम् ।

माघे—IX. 15.

अथ सान्द्रसान्ध्यकिरणारुणितं
हरिहेतिहूति मिथुनं पततोः ।
पृथगुत्पपात विरहार्तिदल-
द्धृदयस्त्रुतासृगनुलिप्तमिव ॥ 1427 ॥

**सान्ध्याः** सन्ध्यायां भवाः । अण् ।

अस्मिन्नेव ग्रन्थे श्लो० 1422. शरदि भवः **शारदः** । ऋत्वण् ।

अस्मिन्नेव ग्रन्थे श्लो० 1421. उषसि भवः **औषसः** । योगविभागादण् । अन्यथा कालाट्ठञ् स्यात् ।

किरातार्जुनीये—IX. 11.

औषसातपभयादपलीनं वासरच्छविविरामपटीयः ।
सन्निपत्य शनकैरिव निम्नादन्धकारमुदवाप समानि ॥ 1428 ॥

औषसः । पूर्ववत् ।

१३८८ । प्रावृष एण्यः । (४. ३. १७)

इत्येण्यप्रत्ययः ।

रघुवंशे—I. 36.

स्निग्धगम्भीरनिर्घोषमेकं स्यन्दनमाश्रितौ ।
प्रावृषेण्यं पयोवाहं विद्युदैरावताविव ॥ 1429 ॥

प्रावृषि भवः प्रावृषेण्यः । एण्यप्रत्ययः । 'प्रावृषष्ठप्' (सू. 1394) इति लुप् । प्रावृषि जातः प्रावृषिकः ।

१३८९ । वर्षाभ्यष्ठक् । (४. ३. १८)

वर्षासु साधु वार्षिकं वासः । 'कालात्साधुपुष्प्यत्पच्यमानेषु' (सू. 1418) इति साध्वर्थे ।

रघुवंशे—IV. 16.

वार्षिकं सञ्जहारेन्द्रो धनुर्जैत्रं रघुर्दधौ ।
प्रजार्थसाधने तौ हि पर्यायोद्यतकार्मुकौ ॥ 1430 ॥

वर्षासु भवं वार्षिकम् । ठक् ।

रघुवंशे—XII. 25.

प्रययावातिथेयेषु वसन् ऋषिकुलेषु सः ।
दक्षिणां दिशमृक्षेषु वार्षिकेष्विव भास्करः ॥ 1431 ॥

वर्षासु भवानि वार्षिकाणि । ठक् ।

१३९० । सर्वत्राण् च तलोपश्च । ( ४. ३. २२ )

हेमन्तादण् स्यात्तलोपश्च वेदलोकयोः । चकारात् पक्षे ऋत्वण् । हैमनम् हैमन्तम् ।

अस्मिन्नेव ग्रन्थे श्लो० 67. हेमन्ते भवः हैमनः । हेमन्तशब्दाच्छैषिकोऽण् तकारलोपश्च ।

माघे—VI. 77.

कान्ताजनेन रहसि प्रसभं गृहीत-
केशे रते स्मरसहासवतोषितेन ।
प्रेम्णा मनस्सु रजनीष्वपि हैमनीषु
के शेरते स्म रसहासवतोषितेन ॥ 1432 ॥

हेमन्ते भवा हैमन्यः । हेमन्तशब्दादण् । तकारलोपश्च । 'टिड्ढा' ( सू. 470 ) इति ङीप् ।

१३९१ । सायञ्चिरम्प्राह्णेप्रगेऽव्ययेभ्यष्टयुटयुलौ तुट् च ।
( ४. ३. २३ )

सायमित्यादिभ्यश्चतुर्भ्योऽव्ययेभ्यश्च कालवाचिभ्यः टयुटयुलौ स्तः, तयोस्तु च । तुटः प्रागन्तादेशः । सायन्तनम् । चिरन्तनम् । प्राह्णप्रगयोरेदन्तत्वं निपात्यते । प्राह्णेतनम् । प्रगेतनम् । दोषातनम् । दिवातनम् ।

वा० । चिरपरुत्परारिभ्यस्त्नो वक्तव्यः । ( 2842. )

चिरत्नम् । परुत्नम् । परारित्नम् ।

वा० । अग्रादिपश्चाड्डिमच् । ( 2844. )

अग्रिमम् । आदिमम् । पश्चिमम् ।

वा० । अन्ताच्च । ( 2845. )

अन्तिमम् ।

अस्मिन्नेव ग्रन्थे श्लो० 55. सायं सायं वा भवा सायन्तनी । ट्युः । ङीप् । दिवा भवां दिवातनीम् । पूर्ववत् । सदा भवा सदातनी । पूर्ववत् ।

माघे—VI. 72.

मुदमन्दभुवामपां मयूराः
सहसायन्त नदी पपाट लाभे ।
अलिनारमतालिनी शिलीन्ध्रे
सह सायन्तनदीपपाटलाभे ॥ 1433 ॥

सायं भवस्सायन्तनः । ट्युः । तुडागमः ।

माघे—I. 15.

न यावदेतावुदपश्यदुत्थितौ
जनस्तुषाराञ्जनपर्वताविव ।
स्वहस्तदत्ते मुनिमासने मुनि-
श्चिरन्तनस्तावदभिन्यवीविशत् ॥ 1434 ॥

चिरन्तनः पुराणः । पूर्ववत् ।

अस्मिन्नेव ग्रन्थे श्लो० 441. पुराभवं पुरातनम् । ट्युः ।

रघुवंशे—I. 20.

तस्य संवृतमन्त्रस्य गूढाकारेङ्गितस्य च ।
फलानुमेयाः प्रारम्भाः संस्काराः प्राक्तना इव ॥ 1435 ॥

प्राग्भवाः प्राक्तनाः ।

अस्मिन्नेव ग्रन्थे श्लो० 695. सदा भवः सनातनः नित्यः ।

भट्टिकाव्ये—VI. 13.

इदं नक्तन्तनं दाम पौष्पमेतद्दिवातनम् ।
शुचेवोद्बध्य शाखायां प्रग्लायति तया विना ॥ 1436 ॥

नक्तं भवं नक्तन्तनम् । दिवा भवं दिवातनम् ।

कुमारसंभवे—IV. 46.

अथ मदनवधूरुपप्लवान्तं व्यसनकृशा परिपालयाम्बभूव ।
शशिन इव दिवातनस्य रेखा किरणपरिक्षयधूसरा प्रदोषम् ॥ 1437 ॥

दिवातनस्य । पूर्ववत् ।

रघुवंशे—XIII. 76.

भूयस्ततो रघुपतिर्विलसत्पताक-
मध्यास्त कामगति सावरजो विमानम् ।
दोषातनं बुधबृहस्पतियोगदृश्य-
स्तारापतिस्तरलविद्युदिवाभ्रवृन्दम् ॥ 1438 ॥

दोषा भवं दोषातनम् ।

भट्टिकाव्ये—VII. 51.

उदक्शतवलिं कोट्या सुषेणं पश्चिमां तथा ।
दिशं प्रास्थापयद्राजा वानराणां कृतत्वरः ॥ 1439 ॥

पश्चाद्भवां पश्चिमाम् । डिमच् ।

चम्पूभारते—I. 4.

ग्रीष्मेषु शीतकरकान्तकृतोदरासु
यद्गोपुराग्रिमदरीषु पथागतस्य ।
विश्राम्यतो रविहयस्य विलम्बनेषु
चिह्नं तदीयदिनसन्ततिदीर्घभावः ॥ 1440 ॥

अग्रिमाः ।

चम्पूभारते—IV. 13.

ग. तत्र नानाजनपदमेदिनीवल्लभमल्लमकुटमणिकिरणपल्लविते यज्ञवाटे त्रिपथगापृथातनूजाभ्यां नियुक्तो वैमात्रेयैर्भ्रातृभिर्जितुभवनवनसवनेषु पृथक्पृथगाराधितया स्वेनाप्यातिथ्याय निमन्त्र्यमाणेन वीतिहोत्रेणेव ज्वलता हेमपात्रेण परिष्क्रियमाणपाणितलस्सहदेवः निखिलभक्तजनकृत्यनिर्वहणभारेणैव निभृतावयवं सभ्यलोकलोचनपद्मयुगलपङ्क्ति-

परस्परवैमुख्यवदान्यरूपकोमलिमानं महर्षिजनवलयमध्यमहेन्द्रनीलरत्नं चिरत्नं पुमांसं समासाद्य प्रथममर्घ्येण परिपूजयाञ्चक्रे ॥ 1441 ॥

चिरत्नम् । त्नप्रत्ययः ।

अनर्घराघवे—II. 11.

पीत्वा भृशं कमलकुड्मलशुक्तिकोषा
दोषातनीं तिमिरवृष्टिमथ स्फुटन्तः ।
निर्यन्मधुव्रतकदम्बमिषाद्वमन्ति
बिभ्रन्ति कारणगुणानिव मौक्तिकानि ॥ 1442 ॥

दोषातनीम् ।

अनर्घराघवे—II. 43.

इह वनेषु स कौतुकवामनो
मुनिरतप्त तपांसि पुरातनः ।
तमिव वामवलोक्य तपस्विनो
नयनमद्य मनागुदमीमिलन् ॥ 1443 ॥

पुरातनः ।

नैषधे—III. 62.

करेण वाञ्छेव विधुं विधर्तुं
यमित्थमात्थादरिणी तमर्थम् ।
पातुं श्रुतिभ्यामपि नाधिकुर्वे
वर्णं श्रुतेर्वर्ण इवान्तिमः किम् ॥ 1444 ॥

अन्ते भवोऽन्तिमः । डिमच् ।

वा० । नवस्य न्वादेशो त्नप्तनप्खाश्च प्रत्यया वक्तव्याः । (सू. 2093)

नूत्नम् । नूतनम् । नवीनम् ।

वा० । नश्च पुराणे प्रात् । ( 3328. )

प्रशब्दान्नो वक्तव्यः, चात्पूर्वोक्ताः । प्रणम् । प्रत्नम् । प्रतनम् । प्रीणम् ।

चम्पूभारते—II. 19.

सविनयमथ दर्शितं महीयः
सचिववरेण पुरोचनेन शत्रोः ।
जतुगृहमभजन्त तत्र पार्था
जगदिव नूत्नमशेषवस्तुपूर्णम् ॥ 1445 ॥

नूत्नम् नवम् ।

चम्पूभारते—I. 1.

कल्याणं वो विधत्तां करटमदधुनीलोलकल्लोलमाला-
खेलल्लोलम्बकोलाहलमुखरितदिक्चक्रवालान्तरालम् ।
प्रत्नं वैतण्डरत्नं सततपरिचलत्कर्णतालप्ररोह-
द्वाताङ्कुराजिहीर्षादरविवृतफणाश्रृङ्गभूषाभुजङ्गम् ॥ 1446 ॥

प्रत्नं पुराणम् ।

## १३९२ । विभाषा पूर्वाह्णापराह्णाभ्याम् । (४. ३. २४)

आभ्यां ट्युट्युलौ वा स्तः तयोस्तुट् च । पक्षे ठञ् । पूर्वाह्णेतनम् । अपराह्णेतनम् । 'घकालतनेषु' (सू. 975) इत्यलुग्वा ।

## १३९३ । तत्र जातः (४. ३. २५)

जात इत्यर्थेऽणादयो घादयश्च स्युः । स्रुघ्ने जातः स्रौघ्नः । औत्सः । राष्ट्रियः । अवारपारीण इत्यादि ।

नैषधे—IV. 61.

असितमेकपुराशितमप्यभू-
न्न पुनरेष विधुर्विशदं विषम् ।
अपि निपीय सुरैर्जनितक्षयं
स्वयमुदेति पुनर्नवमार्णवम् ॥ 1447 ॥

अर्णवे जातमार्णवम् । अण् ।

१३९४ । प्रावृषष्ठप् । ( ४. ३. २६ )

'प्रावृष एण्यः' ( सू 1388) इत्येण्यस्यापवादः । प्रावृषि जातः प्रावृषिकः ।

अस्मिन्नेव ग्रन्थे श्लो० 1128. प्रावृषि जातः प्रावृषिकः । ठप् : ठस्येकः ।

१४०१ । पूर्वाह्णापराह्णार्द्रामूलप्रदोषावस्कराद्वुन् । ( ४. ३. २८ )

पूर्वाह्णकः । अपराह्णकः । आर्द्रकः । मूलकः । प्रदोषकः । अवस्करकः ।

१४०२ । पथः पन्थ च । ( ४. ३. २९ )

पथि जातः पन्थकः ।

१४०७ । श्रविष्ठाफल्गुन्यनूराधास्वातितिष्यपुनर्वसुहस्तविशाखाषाढाबहुला-
ल्लुक् । ( ४. ३. ३४ )

एभ्यो नक्षत्रवाचिभ्यः परस्य जातार्थप्रत्ययस्य लुक् स्यात् ।

१४०८ । लुक्तद्धितलुकि । ( १. २. ४९ )

तद्धितलुकि सत्युपसर्जनस्त्रीप्रत्ययस्य लुक् स्यात् । श्रविष्ठासु जातः श्रविष्ठः । फल्गुन इत्यादि ।

वा० । चित्रारेवतीरोहिणीभ्यः स्त्रियामुपसङ्ख्यानम् । ( 2857. )

चित्रायां जाता चित्रा । रेवती । रोहिणी । आभ्यः अनेन लुकि कृते पिप्पल्यादेराकृतिगणत्वात्पुनर्ङीप् ।

वा० । फल्गुन्याषाढाभ्यां टानौ वक्तव्यौ । ( 2858. )

स्त्रियामित्येव । फल्गुनी । अषाढा ।

वा० । श्रविष्ठाषाढाभ्यां छण् वक्तव्यः । ( 2359. )

श्राविष्ठीयः । आषाढीयः ।

अस्मिन्नेव ग्रन्थे श्लो० 1165. जम्ब्वाः फलं जम्बु । 'जम्ब्वा वा' (सू. 1544) इत्यणभावपक्षेऽञि 'फले लुक्' (सू. 1541) इति लुक् । अनेन स्त्रीप्रत्ययनिवृत्तिः ।

अस्मिन्नेव ग्रन्थे श्लो० 971. अलाब्वा विकारः फलमलाबु । ओरञ् । 'फले लुक्' (सू. 1541) इति लुक् । अनेन स्त्रीप्रत्ययनिवृत्तिः ।

अस्मिन्नेव ग्रन्थे श्लो० 1439. उदक् । उदीचीं दिशम् । उदीचीशब्दात्सप्तमान्तात् 'दिक्शब्देभ्यः' (सू. 1974) इत्यस्तातिप्रत्यये 'अञ्चेर्लुक् (सू. 1980) इति लुकि अनेन स्त्रीप्रत्ययस्यापि लुक् ।

भट्टिकाव्ये—XIV. 16.

प्रययाविन्द्रजित्प्रत्यगियाय स्वयमुत्तरम् ।
समध्यासिसिषाञ्चक्रे विरूपाक्षः पुरोदरम् ॥ 1448 ॥

प्रत्यक् । पूर्ववत् ।

माघे—VI. 34.

द्विरददन्तवलक्षमलक्ष्यत
स्फुरितभृङ्गमृगच्छवि केतकम् ।
घनघनौघविघट्टनया दिवः
कृशशिखं शशिखण्डमिव च्युतम् ॥ 1449 ॥

केतक्याः पुष्पं केतकम् । 'पुष्प' (वा. 2950. सू. 1545) इत्यणं लुकि अनेन स्त्रीप्रत्ययस्यापि लुक् ।

१४१२ । कृतलब्धक्रीतकुशलाः । (४. ३. ३८)

तत्रेत्येव । स्रुघ्ने कृतो लब्धः क्रीतः कुशलो वा स्रौघ्नः ।

१४१५ । उपजानूपकर्णोपनीवेष्ठक् । (४. ३. ४०)

औपजानुकः । औपकर्णिकः । औपनीविकः ।

भट्टिकाव्ये—IV. 25.

वपुश्चान्दनिकं यस्य कार्णवेष्टनिकं मुखम् ।
सङ्ग्रामे सर्वकर्मीणौ पाणी यस्यौपजानुकौ ॥ 1450 ॥

उपजानु जानुसमीपे भवावौपजानुकौ । ठक् ।

अस्मिन्नेव ग्रन्थे श्लो० 1106. उपकर्णमिति समीपार्थेऽव्ययीभावः । तत्र प्रायभवे औपकर्णिके । ठक् ।

भट्टिकाव्ये—IV. 26.

बद्धो दुर्बलरक्षार्थमसिर्येनौपनीविकः ।
यश्चापमाश्मनप्रख्यं सेषुं धत्तेऽन्यदुर्वहम ॥ 1451 ॥

उपनीवि नीविसमीपे भवः औपनीविकः । ठक् ।

माघे—X. 60.

प्राप्य नाभिनदमज्जनमाशु प्रस्थितं निवसनग्रहणाय ।
औपनीविकमरुन्ध किल स्त्री वल्लभस्य करमात्मकराभ्याम् ॥ 1452 ॥

उपनीवि नीविसमीपे प्रायेण भवमौपनीविकम् । ठक् ।

१४१६ । सम्भूते । (४. ३. ४१)

स्रुघ्ने सम्भवति स्रौघ्नः ।

१४१७ । कोशाड्ढञ् । (४. ३. ४२)

कौशेयं वस्त्रम् ।

अस्मिन्नेव ग्रन्थे श्लो० 1320. [1] कौशेयं कृमिकोशोत्थम् ।

१४१८ । कालात्साधुपुष्प्यत्पच्यमानेषु । (४. ३. ४३)

---

1. इदमुदाहरणम् कौशेयं वसनमिवेति पाठे.

हेमन्ते साधुर्हैमन्तः प्राकारः। वसन्ते पुष्प्यन्ति वासन्त्यः कुन्दलताः। शरदि पच्यन्ते शारदाः शालयः। 'वर्षाभ्यष्ठक्' (सू. 1389.) वर्षासु साधुर्वार्षिकः।

१४१९। उप्ते च (४. ३. ४४)

हेमन्ते उप्यन्ते हैमन्ता यवाः।

१४२८। तत्र भवः (४. ३. ५३)

स्रुघ्ने भवः स्रौघ्नः।

१४२९। दिगादिभ्यो यत् (४. ३. ५४)

दिश्यम्। वर्ग्यम्। दिगादिः—४. ६८.

अस्मिन्नेव ग्रन्थे श्लो० 1392. दिक्षु भवानि दिश्यानि।

माघे—V. 54.

आजिघ्रति प्रणतमूर्धनि बाह्लिदेश्ये
तस्याङ्गसङ्गमसुखानुभवोत्सुकायाः।
नासाविरोकपवनोल्लसितं तनीयो
रोमाञ्चतामिव जगाम रजः पृथिव्या ॥ 1453 ॥

बाह्लिदेश्ये। अनेन भवार्थे यत्प्रत्ययः। तदन्तविधिस्तु मृग्यः।

अस्मिन्नेव ग्रन्थे श्लो० 853. मेघ्यैः मेघभवैः।

भट्टिकाव्ये—I. 13.

निष्ठां गते दत्रिमसभ्यतोषे
विहित्रिमे कर्मणि राजपत्न्यः।
प्राशुर्हुतोच्छिष्टमुदारवंश्या-
स्तिस्रः प्रसोतुं चतुरस्सुपत्रान् ॥ 1454 ॥

उदारवंश्याः महाकुलप्रसूताः। दिगादियतः तदन्तविधिनिषेधात् राजवंश्यादिषु साध्वर्थे य इति वामनः।

१४४२ । वर्गान्ताच्च । ( ४. ३. ६३ )

कवर्गीयम् ।

१४४३ । अशब्दे यत्खावन्यतरस्याम् । ( ४. ३. ६४ )

पक्षे पूर्वेण छः । मद्वर्ग्यः । मद्वर्गीणः । मद्वर्गीयः ।

भट्टिकाव्ये — II. 48.

> लब्धां ततो विश्वजनीनवृत्ति-
> स्तामात्मनीनामुदवोढ रामः ।
> सम्बन्धमुक्ताफलभर्मभूषां
> संबंहयन्तीं रघुवर्ग्यलक्ष्मीम् ॥ 1455 ॥

रघुवर्गे भवां रघुवर्ग्याम् । यत् । वर्गान्ताच्चेत्यनुवृत्तौ अशब्दे इति यत् ।

१४३० । शरीरावयवाच्च । ( ४. ३. ५५ )

इति भवार्थे यत् । दन्त्यम् । कण्ठ्यम् । 'शरीरावयवाद्यत्' (सू. 1666) इति हितार्थे यत् ।

अस्मिन्नेव ग्रन्थे श्लो० 142. नसि भवा नस्या ।

माघे VIII. 57.

> वक्षोभ्यो घनमनुलेपनं यतूना-
> मुत्तंसान्नाहरत वारि मूर्धजेभ्यः ।
> नेत्राणां मदरुचिरक्षतैव तस्थौ
> चक्षुष्यः खलु महतां परैरलङ्घ्यः ॥ 1456 ॥

चक्षुषि भवश्चक्षुष्यः ।

अस्मिन्नेव ग्रन्थे श्लो० 678. मूर्धनि भवा मूर्धन्याः । यत् । 'ये च' (सू. 1667) इति प्रकृतिभावात् 'नस्तद्धिते' (सू. 679) इति टिलोपो न ।

१४३३ । दृतिकुक्षिकलशिवस्त्यस्त्यहेर्ढञ् । ( ४. ३. ५६ )

दार्तेयम् । कौक्षेयम् । कलशिर्घटः । तत्र भवं कालशेयम् ।

अस्मिन्नेव ग्रन्थे श्लो० 31. अहिषु भवानाहेयान् । ढञ् ।
'कुरुकुक्षि' (सू. 1316) इति ढकञि कौक्षेयकोऽसिः ।

१४३४ । ग्रीवाभ्योऽण् च । (४. ३. ५७)

चाड्ढञ् । ग्रैवम् ग्रैवेयम् ।

रघुवंशे—IV. 48.

भोगिवेष्टनमार्गेषु चन्दनानां समर्पितम् ।
नास्रसत्करिणां ग्रैवं त्रिपदीच्छेदिनामपि ॥ 1457 ॥

ग्रीवासु भवं ग्रैवं कण्ठबन्धनम् । अण् ।

माघे—XVIII. 10.

घण्टानादो निस्स्वनो डिण्डिमानां
ग्रैवेयाणामारवो बृंहितानि ।
आमेतीव प्रत्यवोचन् गजाना-
मुत्साहार्थं वाचमाधोरणस्य ॥ 1458 ॥

ग्रीवासु भवानां ग्रैवेयाणाम् कण्ठशृङ्खलानाम् । ढञ् । 'कुलकुक्षिग्रीवाभ्यः' (सू. 1316) इति ढकञि ग्रैवेयकम् । 'ग्रैवेयकं कण्ठभूषा' II. vi. 104. इत्यमरः ।

१४३५ । गम्भीराञ्ञ्यः । (४. ३. ५८)

गम्भीरे भवं गाम्भीर्यम् ।

वा० । पञ्चजनादुपसंख्यानम् । (2868.)

पाञ्चजन्यः ।

माघे—III. 21.

प्रवृद्धमन्द्राम्बुदधीरनादः
कृष्णार्णवाभ्यर्णचरैकहंसः ।
मन्दानिलापूरकृतं दधानो
निध्वानमश्रूयत पाञ्चजन्यः ॥ 1459 ॥

पञ्चजनो नाम कश्चिदसुरः । तत्र भवः पाञ्चजन्यः । अत्र , 'पञ्चजनेभ्यश्चेति वक्तव्यम्' इति ञ्य इति व्याख्यायां वर्णितं ।

१४३७ । अन्तःपूर्वपदाट्ठञ् । ( ४. ३. ६० )

अव्ययीभावादित्येव । वेश्मन्यन्तोऽन्तर्वेश्मम् । 'अनश्च' ( सू. 681 ) इति समासान्तष्टच् । 'नस्तद्धिते' ( सू. 679 ) इति टिलोपः । तत्र भवमान्तर्वेश्मिकम् ।

वा० । अध्यात्मादेष्ठञिष्यते । ( 2869. )

अध्यात्मं भवमाध्यात्मिकम् । अध्यात्मादिः— ३. ७०. अध्यात्मादिराकृतिगणः ।

अस्मिन्नेव ग्रन्थे श्लो० 78. समानकालावाद्यन्तावस्या आकालिकीम् । अकालभवत्वादुत्पत्त्यनन्तरं विनाशिनीमित्यर्थः । 'आकालिक' ( सू. 1777 ) इति समानकालाट्ठक् । प्रकृतेराकालादेशः । केचिदकालशब्दादेवाध्यात्मादित्वाद्भवार्थे ठञित्याहुः ।

अनर्घराघवे—VI. 55.

दर्पोऽयं भवतस्सुरासुरचमूदोःकाण्डकण्डूविष-
ज्वालाजाङ्गलिकेन जङ्गलभुजां त्वयापि न त्याजितः ।
येनैन्द्रे रथवर्मणी रघुशिशोरस्योपनीते त्वया
राजद्विष्टमिदं विधाय स कथं शक्रोऽपि वर्तिष्यते ॥ 1460 ॥

'जाङ्गली विषविद्यायाम्' इति मेदिनीकारः । जाङ्गलीमधीते वेत्ति वा जाङ्गलिकः । अध्यात्मादित्वाट्ठञिति व्याख्या । 'विषवैद्यो जाङ्गलिकः' I. vii. 13. इत्यमरः ।

१४३८ । अनुशतिकादीनाञ्च । ( ७. ३. २० )

एषामुभयपदवृद्धिः स्यात् ञिति णिति किति च । आधिदैविकम् । आधिभौतिकम् । ऐहलौकिकम् । पारलौकिकम् । अनुशतिकादिः— ७. ४.

अस्मिन्नेव ग्रन्थे श्लो० 260. सार्वलौकिकः । सर्वस्मिन् लोके विदितः । 'लोकसर्वलोकाट्ठञ्' ( सू. 1710 ) इति ठञि अनेनोभयपदवृद्धिः ।

अस्मिन्नेव ग्रन्थे श्लो० 1283. **सौरसैन्धवे** सुरसिन्धुसम्बन्धिनि । 'तस्येदम्' (सू. 1549) इत्यणि उभयपदवृद्धिः । 'हृद्भगसिन्धु' (सू. 1133) इत्युभयपदवृद्धिः ।

रघुवंशे—X. 14.

योगनिद्रान्तविशदैः पावनैरवलोकनैः ।
भृग्वादीननुगृह्णन्तं **सौखशायनिकान्**ृषीन् ॥ 1461 ॥

सुखशयनं पृच्छन्तीति **सौखशायनिकाः** । 'पृच्छतौ' (वा. 2953, सू. 1549.) इति ठक् । अनेनोभयपदवृद्धिः ।

रघुवंशे—VIII. 26.

अकरोच्च तदौर्ध्वदैहिकं
पितृभक्त्या पितृकार्यकल्पवित् ।
न हि तेन तथा तनुत्यजः
तनयावर्जितपिण्डकाङ्क्षिणः ॥ 1462 ॥

**और्ध्वदैहिकं** देहादूर्ध्वं भवतीति तत्तिलोदकपिण्डदानादिकम् । 'ऊर्ध्वदेहाच्चेति वक्तव्य' मिति ठक् । अनेनोभयपदवृद्धिः ।

चम्पूरामायणे—II. 72.

ग—अथ यथाविधिविहित**और्ध्वदैहिकं** गमितचतुर्दशदिवसं दिवसकरकुलहितेन पुरोहितेन नगरवृद्धैश्च सार्धं अमात्याः समुपेत्य मकुटभरणाय प्रार्थयामासुः ॥ 1463 ॥

**और्ध्वदैहिकम्** । पूर्ववत् ।

अस्मिन्नेव ग्रन्थे श्लो० 30. **और्ध्वदैहिकीम्** । पूर्ववत् । 'टिड्ढाणञ्' (सू. 470) इत्यादिना ङीप् ।

अनर्घराघवे—V. 32.

दृप्यत्पौलस्त्यकण्डूमिदुरभुजभरोष्मायमाणः कपीन्द्रो
नायं नस्सन्दधीत क्वचिदपि हि विधौ नैव साहाय्यकामः ।

सोऽहं सुग्रीवमेवमनन्तरं मित्रमिच्छामि पश्चात्
पारस्त्रैणेयपुत्रव्ययशिथिलशुचं शक्रमारप्स्यामि ॥ 1464 ॥

परस्त्रिया अपत्यं पारस्त्रैणेयः । स्त्रीभ्यो ढक् । कल्याण्यादित्वादिनङ् । अनुशतिकादित्वादुभयपदवृद्धिः ।

चम्पूरामायणे—V. 13.

एषा राक्षससार्वभौमनगरी रक्षश्चमूरक्षिता
तस्येदं सदनं सुवर्णशिखरं बिभ्राणमभ्रावलिम् ।
एतत्पुष्पकमाहृतं धनपतेरित्यादरान्मारुते-
स्तत्रादर्शयदिन्दुदीपकिरणप्रद्योतिताशा निशा ॥ 1465 ॥

सार्वभौमः । उभयपदवृद्धिः ।

अस्मिन्नेव ग्रन्थे श्लो० 1280. दुर्भगाया अपत्यं पुमान् दौर्भागिनेयः । स्त्रीभ्यो ढक् । कल्याण्यादित्वात् इनङ् । 'हृद्भग' (सू. 1133.) इत्युभयपदवृद्धिः ।

१४४१ । जिह्वामूलाङ्गुलेश्छः ( ४. ३. ६२ )

जिह्वामूलीयम् । अङ्गुलीयम् ।

रघुवंशे—VI. 18.

कुशेशयाताम्रतलेन कश्चित्
करेण रेखाध्वजलाञ्छनेन ।
रत्नाङ्गुलीयप्रभयानुविद्धा-
नुदीरयामास सलीलमक्षान् ॥ 1466 ॥

अङ्गुलीषु भवानि अङ्गुलीयानि ऊर्मिकाः । छप्रत्ययः ।

अस्मिन्नेव ग्रन्थे श्लो० 216. अङ्गुलौ भवमङ्गुलीयम् । छः । अङ्गुलीयमेवाङ्गुलीयकम् । स्वार्थे कः ।

अस्मिन्नेव ग्रन्थे श्लो० 336. अङ्गुलीयकमस्यै प्रायच्छत् । पूर्ववत् ।

१४४२ । वर्गान्ताच्च । ( ४. ३. ६३ )

कवर्गीयम् ।

१४४३ । अशब्दे यत्खावन्यतरस्याम् । (४. ३. ६४)

पक्षे पूर्वेण छः । मद्वर्ग्यः । मद्वर्गीणः । मद्वर्गीयः ।

अस्मिन्नेव ग्रन्थे श्लो० 1455. रघुवर्गे भवा रघुवर्ग्या । वर्गान्ताच्चेत्यनुवृत्तावनेन यत् ।

१४४४ । कर्णललाटात्कनलङ्कारे । (४. ३. ६५)

कर्णिका । ललाटिका ।

चम्पूभारते—IV. 2.

ग—तत्क्षणमतितितिक्षया त्वमष्टादशकृत्वो दृष्टापजयोऽस्ययं पुनरितरः किशोर इति कृष्णावुभावप्यवधीर्य हिडिम्बवककुटुम्बशोकोदयादारम्य प्रवीरजनकर्णिकामौक्तिकायमानकीर्तेरात्मनः संमुखीनं दृढतरपरिकरबन्धं जरासन्धं गन्धवहनन्दनः पञ्चदशदिनानि नियुध्य तेषां त्रिभागपरिसङ्ख्याभिधानपदाभिधेयेन सह योजयामास ॥ 1467 ॥

कर्णिका । कन् । 'प्रत्ययस्थात्' (सू. 463) इति स्त्रियां कात्पूर्वस्येत्वम् ।

कुमारसंभवे—V. 55.

तदा प्रभृत्युन्मदना पितुर्गृहे
ललाटिकाचन्दनधूसरालका ।
न जातु बाला लभते स्म निर्वृतिं
तुषारसङ्घातशिलातलेष्वपि ॥ 1468 ॥

ललाटस्यालङ्कारः ललाटिका तिलकः । कन्प्रत्ययः । पूर्ववत् ।

१४५३ । तत आगतः । (४. ३. ७४)

स्रुघ्नादागतः स्रौघ्नः ।

अस्मिन्नेव ग्रन्थे श्लो० 1348. देवेभ्य आगतानां दैवीनाम् । मनुष्येभ्य आगतानां मानुषीणाम् । अनेनाणि 'टिड्ढाण्' (सू. 470) इत्यादिना ङीप् ।

रघुवंशे—V. 9.

नीवारपाकादि कडङ्गरीयैरामृश्यते जानपदैर्न कच्चित् ।
कालोपपन्नातिथिकल्प्यभागं वन्यं शरीरस्थितिसाधनं वः ॥ 1469 ॥

जनपदेभ्य आगतैर्जानपदैः । पूर्ववदण् ।

१४५४ । ठगायस्थानेभ्यः । (४. ३. ७५)

शुल्कशालाया आगतः शौल्कशालिकः ।

१४५६ । विद्यायोनिसम्बन्धेभ्यो वुञ् । (४. ३. ७७)

औपाध्यायकः । पैतामहकः ।

१४५७ । ऋतष्ठञ् । (४. ३. ७८)

हौतृकम् । भ्रातृकम् ।

रघुवंशे—VIII. 6.

अधिकं शुशुभे शुभंयुना द्वितयेन द्वयमेव सङ्गतम् ।
पदमृद्धमजेन पैतृकं विनयेनास्य नवं च यौवनम् ॥ 1470 ॥

पितुरागतं **पैतृकम्** । ठञ् ।

रघुवंशे—XVII. 28.

वितानसहितं तत्र भेजे **पैतृकमासनम्** ।
चूडामणिभिरुद्घृष्टपादपीठं महीक्षिताम् ॥ 1471 ॥

**पैतृकम्** । पूर्ववत् ठञ् ।

रघुवंशे—XI. 64.

पित्र्यमंशमुपवीतलक्षणं **मातृकञ्च** धनुरूर्जितं दधत् ।
यस्ससोम इव घर्मदीधितिः सद्विजिह्व इव चन्दनद्रुमः ॥ 1472 ॥

**मातुरयं मातृकः** ।

१४५८ । पितुर्यच्च । (४. ३. ७९)

चात् ठञ् । पित्र्यम् पैतृकम् ।

अस्मिन्नेव ग्रन्थे श्लो० 1328. पितुरागतं पित्र्यम् । अनेन यत् ।

अस्मिन्नेव ग्रन्थे श्लो० 589. पितुरागतं पैतृकम् । पितुर्यच्चेति चकारात् ऋतष्ठञ् ।

चम्पूभारते—IV. 76.

शिलीमुखाभ्यां शिवसव्यसाचिनोः
समुज्झिताभ्यां युगपत्किरेस्तनौ ।
समं विभज्यायुरभुज्यत क्षणात्
सहोदराभ्यामिव पैतृकं धनम् ॥ 1473 ॥

पैतृकम् । पूर्ववट्ठञ् ।

१४६० । नञः शुचीश्वरक्षेत्रज्ञकुशलनिपुणानाम् । (७. ३. ३०)

नञः परेषां शुच्यादिपञ्चानामादेरचो वृद्धिः पूर्वपदस्य तु वा ञिदादौ परे ।

आशौचम् अशौचम् । आनैश्वर्यम् अनैश्वर्यम् । आक्षैत्रज्ञम् अक्षैत्रज्ञम् । आकौशलम् । अकौशलम् । आनैपुणम् अनैपुणम् ।

चम्पूभारते—I. 50.

सामोदो भीमसम्भूतिसम्भृताशौचवत्तया ।
सङ्कुचन्निव संस्पर्शे समीरो मन्दमाववौ ॥ 1474 ॥

आशौचम् । उभयत्र वृद्धिः ।

अनर्घराघवे—V. 3.

ग—ततश्च शावाशौचमास्थितस्य क्षत्रियस्य प्रतिषिद्धमस्त्रग्रहणमिति छिद्रान्वेषिभिर्जनस्थानवास्तव्यैः खरदूषणप्रभृतिभिस्तत्र विराधो नाम राक्षसः तीक्ष्णः प्रहितः ॥ 1475 ॥

शावमाशौचमिति पाठे उभयपदवृद्धिः । शावाशौचमित्यत्र अशौचमित्येकत्र वृद्धिः ।

माघे—XVIII. 49.

कश्चिद्दूरादायतेन द्रढीयः-
प्रासप्रोतप्रोतसान्तःक्षतेन ।
हस्ताग्रेण प्राप्तमेवाग्रतोऽभू-
दानैश्वर्यं वारणस्य ग्रहीतुम् ॥ 1476 ॥

अनीश्वरस्य भावः **आनैश्वर्यम्** । असामर्थ्यम् । ब्राह्मणादित्वात् ष्यञ् । उभयपदवृद्धिः ।

माघे—XVI. 30.

प्रकटान्यपि नैपुणं महत्परवाच्यानि चिराय गोपितुम् ।
विवरीतुमथात्मनो गुणान् भृशमाकौशलमार्यचेतसाम् ॥ 1477 ॥

**आकौशलं** अकौशलम् । विकल्पेन नञ्पूर्वपदस्यापि वृद्धिः । नञ्नञौ नतिसिद्धौ ।

१४६२ । मयट् च । (४. ३. ८२)

तत आगतः । सममयम् । विषममयम् । देवदत्तमयम् ।

माघे—VI. 61.

हिमऋतावपि ताः स्म भृशस्विदो
युवतयस्सुतरामुपकारिणि ।
प्रकटयत्यनुरागमकृत्रिमं
**स्मरमयं** रमयन्ति विलासिनः ॥ 1478 ॥

स्मरादागतं **स्मरमयम्** । अनेन मयट् ।

किरातार्जुनीये—II. 36.

अपनेयमुदेतुमिच्छता तिमिरं **रोषमयं** धिया पुरः ।
अविभिद्य निशाकृतं तमः प्रभया नांशुमताप्युदीयते ॥ 1479 ॥

**रोषमयं** रोषादागतम् ।

भट्टिकाव्ये—V. 48.

ततश्चित्रीयमाणोऽसौ रत्नहेममयो मृगः ।
यथासुखीनस्सीतायाः पुप्लुवे बहु लोभयन् ॥ 1480 ॥

रत्नानां हेम्नश्च विकारो रत्नहेममयो मृगस्सन् । 'मयड् वैतयोः' (सू. 1523) इति विकारे मयट् ।

## १४६३ । प्रभवति । (४. ३. ८३)

तत इत्येव । हिमवतः प्रभवति हैमवती गङ्गा ।

रघुवंशे—IV. 45.

स सैन्यपरिभोगेन गजदानसुगन्धिना ।
कावेरीं सरितां पत्युरशङ्कनीयामिवाकरोत् ॥ 1481 ॥

कावेरी ।

'तस्मै प्रभवति सन्तापादिभ्यः' (सू. 1765) सन्तापाय प्रभवति सान्तापिकः । सांग्रामिकः ।

## १४६४ । विदूराञ्ञ्यः । (४. ३. ८४)

विदूरात्प्रभवति वैदूर्यो मणिः ।

अस्मिन्नेव ग्रन्थे श्लो० 618. विदूरात्प्रभवन्तीति वैदूर्याणि । वालवायजमणयः । ञ्यप्रत्ययः ।

## १४६८ । शिशुक्रन्दयमसभद्वन्द्वेन्द्रजननादिभ्यश्छः । (४. ३. ८८)

शिशूनां क्रन्दनं शिशुक्रन्दः । तमधिकृत्य कृतो ग्रन्थः शिशुक्रन्दीयः । यमस्य सभा यमसभम् । क्लीबत्वं निपातनात् । यमसभीयः । किरातार्जुनीयम् । इन्द्रजननादिराकृतिगणः । इन्द्रजननीयम् विरुद्धभोजनीयम् ।

किरातार्जुनीयव्याख्यायां—I. 5.

मल्लिनाथकविस्सोऽयं मन्दात्मानुजिघृक्षया ।
तत्किरातार्जुनीयाख्यं काव्यं व्याख्यातुमिच्छति ॥ 1482 ॥

किरातश्चार्जुनश्च किरातार्जुनौ तावधिकृत्य कृतं काव्यं किरातार्जुनीयम्। मालविकाग्निमित्रीयम्।

१४६९। सोऽस्य निवासः (४. ३. ८९)

स्रुघ्नो निवासोऽस्य स्रौघ्नः। 'तस्य निवासः' (सू. 1291) शिबीनां निवासो देशः शैबः।

१४७०। अभिजनश्च। (४. ३. ९०)

स्रुघ्नोऽभिजनोऽस्य स्रौघ्नः। यत्र स्वयं वसति स निवासः। यत्र पूर्वैरुषितं सोऽभिजन इति विवेकः।

१४७३। सिन्धुतक्षशिलादिभ्योऽणञौ। (४. ३. ९३)

सिन्ध्वादिभ्योऽण् तक्षशिलादिभ्योऽञ् स्यातां सोऽस्याभिजन इत्यर्थे। सिन्ध्वादिः— ४. ७१. तक्षशिलादिः— ४. ७५. सैन्धवः। तक्षशिला नगरी अभिजनोऽस्य ताक्षशिलः।

अस्मिन्नेव ग्रन्थे श्लो० 1318. काम्बोजास्तत्र इति पाठे सिन्ध्वादित्वादण्। 'कम्बोजादिभ्य इति वक्तव्यम्' (वा० 2674. सू. 1194) इति लुकि, कम्बोजाः।

कम्बोजादिः—४. २४.

१४७५। भक्तिः। (४. ३. ९५)

सोऽस्येत्यनुवर्तते। भज्यते सेव्यत इति भक्तिः। स्रुघ्नो भक्तिरस्य स्रौघ्नः।

माघे—II. 26.

सर्वकार्यशरीरेषु मुक्त्वाङ्गस्कन्धपञ्चकम्।
सौगतानामिवात्मान्यो नास्ति मन्त्रो महीभृताम्॥ 1483॥

सुगतो भक्तिर्भजनीयो येषां ते सौगताः बौद्धाः।

१४७७। महाराजाट्ठञ्। (४. ३. ९७)

माहाराजिकः। 'महाराजप्रोष्ठपदाट्ठञ्' (सू. 1338) माहाराजिकम्।

१४७८ । वासुदेवार्जुनाभ्यां वुन् । ( ४. ३. ९८ )

वासुदेवकः । अर्जुनकः ।

१४८१ । तेन प्रोक्तम् । ( ४. ३. १०१ )

पाणिनिना प्रोक्तं पाणिनीयम् ।

अस्मिन्नेव ग्रन्थे श्लो॰ 974 पाणिनीयमष्टाध्यायीव्याकरणम् । छप्रत्ययः ।

१४८२ । तित्तिरिवरतन्तुखण्डिकोखाच्छण् । ( ४. ३. १०२ )

तित्तिरिणा प्रोक्तमधीयते तैत्तिरीयाः ।

अनर्घराघवे—III. 13.

यजूंषि तैत्तिरीयाणि मूर्तानि वमति स्म यः ।
स योगी याज्ञवल्क्यस्त्वां वेदान्तानध्यजीगपत् ॥ 1484 ॥

तित्तिरिमुनिना प्रकर्षेणानूदितानि तैत्तिरीयाणि ।

१४९० । पाराशर्यशिलालिभ्यां भिक्षुनटसूत्रयोः । ( ४. ३. ११० )

पाराशर्येण प्रोक्तं भिक्षुसूत्रमधीयते पाराशरिणो भिक्षवः । शैलालिनो नटाः । 'शैलालिनस्तु शैलूषा जाया जीवा कृशाश्विनः । भरता इत्यपि नटाः' II. x. 12. इत्यमरः । 'भिक्षुः परिव्राट् कर्मन्दी पाराशर्यपि मस्करी' II. vii. 41. इत्यमरः ।

१४९१ । कर्मन्दकृशाश्वादिनिः । ( ४. ३. १११ )

भिक्षुनटसूत्रयोरित्येव । कर्मन्देन प्रोक्तमधीयते कर्मन्दिनो भिक्षवः । कृशाश्विनो नटाः ।

१४९२ । तेनैकदिक् । ( ४. ३. ११२ )

सुदाम्नाद्रिणा एकदिक् सौदामिनी ।

माघे—XVII. 69.

अन्यूनोन्नतयोऽतिमात्रपृथवः पृथ्वीधरश्रीभृत-
स्तन्वन्तः कनकावलीभिरुपमां सौदामिनीदामभिः ।

वर्षन्तश्शममानयन्तुपलसञ्छन्नाखण्डलेष्वायुधाः
काले कालियकायकालवपुषः पान्तु नगाम्भोमुचः ॥ 1485 ॥

सुदाम्ना पर्वतेनैकदिशः सौदामिन्यो विद्युतः । अनेनापि ङीप् ।

१४९५ । उपज्ञाते । (४. ३. ११५)

पाणिनिनोपज्ञातं पाणिनीयम् ।

१४९६ । कृते ग्रन्थे । (४. ३. ११६)

वररुचिना कृतो वाररुचो ग्रन्थः ।

१४९७ । संज्ञायाम् । (४. ३. ११७)

तेनेत्येव । अग्रन्थार्थमिदम् । मक्षिकाभिः कृतं माक्षिकं मधु ।

१४९९ । क्षुद्राभ्रमरवटरपादपादञ् । (४. ३. ११९)

तेन कृते संज्ञायाम् । क्षुद्राभिः कृतं क्षौद्रम् । भ्रामरम् । वाटरम् । पादपम् ।

रघुवंशे—IV. 63.

भल्लापवर्जितैस्तेषां शिरोभिः श्मश्रुलैर्महीम् ।
तस्तार सरघाव्याप्तैस्स क्षौद्रपटलैरिव ॥ 1486 ॥

क्षुद्राभिः कृतानि क्षौद्राणि मधूनि । अञ् ।

अस्मिन्नेव ग्रन्थे श्लो० 352. भ्रमरैः कृतं भ्रामरं मधु । संज्ञायामञ् ।

१५०० । तस्येदम् । (४. ३. १२०)

उपगोरिदमौपगवम् ।

अस्मिन्नेव ग्रन्थे श्लो० 60. चन्द्रस्येमां चान्द्रीम् । अणि ङीप् ।

अस्मिन्नेव ग्रन्थे श्लो० 137. सूर्यस्येमाः सौर्यः । 'सूर्यतिष्य' (सू. 499) इति यलोपः । अणि ङीप् ।

अस्मिन्नेव ग्रन्थे श्लो० 800. वासवस्येमा वासव्यः । अणि ङीप् ।

चम्पूभारते—III. 16.

तस्मिन्नभस्तरणिसुत्पतिते मुनीन्द्रे
सा तेषु पञ्चसु समं ववृते मृगाक्षी ।
साङ्क्रन्दनेषु विटपिष्विव दानलक्ष्मी-
र्मानोभवेषु जयसिद्धिरिवाशुगेषु ॥ 1487 ॥

संक्रन्दनस्येमे साङ्क्रन्दनाः । मनोभवस्येमे मानोभवाः । अण् ।

वा० । समिधामाधाने षेण्यण् । (2912.)

सामिधेन्यो मन्त्रः । सामिधेनी ऋक् ।

१५०१ । रथाद्यत् । (४. ३. १२१)

रथ्यं चक्रम् । 'तद्वहति रथयुग' (सू. 1627) रथं वहति रथ्यः अश्वः ।

१५०४ । हलसीराट्ठक् । (४. ३. १२४)

हालिकम् । सैरिकम् । 'हलसीराट्ठक् (सू. 1633) हलं वहति हालिकः । 'तेन दीव्यति खनति जयति जितं' (सू. 1550) हलेन खनति हालिकः । सीरेण खनति सैरिकः । 'खनत्यनेन तद्वोढास्येदं हालिकसैरिकौ' II. ix. 64. इत्यमरः ।

१५०५ । द्वन्द्वाद्वुन्वैरमैथुनिकयोः । (४. ३. १२५)

काकोलूकिका । कुत्सकुशिकिका ।

वा० । वैरे देवासुरादिभ्यः प्रतिषेधः । (2914)

दैवासुरम् ।

॥ इति शैषिकप्रकरणम् ॥

---

## ॥ अथ प्राग्दीव्यतीयप्रकरणम् ॥



### १५१४ । तस्य विकारः । ( ४. ३. १३४ )

वा० । अश्मनो विकारे टिलोपो वक्तव्यः । ( 4186. )

अश्मनो विकारः आश्मः । भास्मनः । मार्त्तिकः ।

अस्मिन्नेव ग्रन्थे श्लो० 1295. भास्मनैः भस्ममयैः । वैकारिकोऽण् । 'अन्' ( सू. 1155 ) इति प्रकृतिभावात् 'नस्तद्धिते' ( सू. 679 ) इति नास्ति टिलोपः ।

अस्मिन्नेव ग्रन्थे श्लो० 1451. अश्मैवाश्मनम् । स्वार्थेऽण् । विकारार्थे टिलोपो नान्यत्र । 'पुरुषाद्वधविकारसमूहतेनकृतेषु' ( वा० 3000. सू. 1672 ) पुरुषस्य विकारः पौरुषेयः । ढञ् ।

### १५१५ । अवयवे च प्राण्योषधिवृक्षेभ्यः । ( ४.३.१३५ )

चाद्विकारे । मयूरस्यावयवो विकारो वा मायूरः । मौर्वम् । पैप्पलम् ।

### १५१६ । बिल्वादिभ्योऽण् । ( ४. ३. १३६ )

बैल्वम् । बिल्वादिः— ४. ७२.

चम्पूरामायणे—V. 53.

ग—रावणोऽपि विभीषणभाषणमङ्गीकृत्य प्लवङ्गमानामङ्गेषु लाङ्गूलमेव वरम् । तदेतत्कार्पासवाससा संवीतं वह्निसात्कृत्य चत्वरे चत्वरे घोषानुद्घोष्य सप्रहारं नगरीं परितः सञ्चारयतेति राक्षसानादिदेश ॥ 1488 ॥

कार्पासम् ।

### १५१७ । कोपधाच्च । ( ४. ३. १३७ )

अण् । तर्कु, तार्कवम् ।

१५१८ । त्रपुजतुनोः षुक् । (४. ३. १३८)

आभ्यामण् स्याद्विकारे, एतयोः षुगागमश्च । त्रापुषम् । जातुषम् ।

चम्पूभारते—II. 62.

अश्ममात्मसमनामदैवतं
सम्प्रयुज्य समरे घनञ्जयः ।
तत्र तस्य रथमग्रवर्तिनं
जातुषालयसहायमातनोत् ॥ 1489 ॥

चम्पूभारते—II. 100.

अथ जातुषालयसमर्पणात्कृतं
परिपोषमस्य वपुषोऽभिवीक्षितुम् ।
स्पृहयालवः किल पृथासुताः क्रमात्
परिचिक्रमुर्हुतवहं वधूसखाः ॥ 1490 ॥

१५१९ । ओरञ् । (४. ३. १३९)

दैवदारवम् । भाद्रदारवम् । 'ओरञ्' । (सू. 1283) इति तु चातुरर्थिकः ।

१५२१ । पलाशादिभ्यो वा । (४. ३. १४१)

पालाशम्, खादिरम्, कारीरम् । पलाशादिः ४. ८०.

१५२२ । शम्याः ष्लञ् । (४. ३. १४२)

शामीलं भस्म । षित्वान्ङीष्, शामीली स्रुक् ।

१५२३ । मयड्वैतयोर्भाषायामभक्ष्याच्छादनयोः । (४. ३. १४३)

मयड्वा स्याद्विकारावयवयोः । अश्ममयम् । आश्मनम् ।

अस्मिन्नेव ग्रन्थे श्लो० 1480. रत्नानां हेम्नश्च विकारो रत्नहेममयो मृगः ।

१५२४ । नित्यं वृद्धशरादिभ्यः । ( ४. ३. १४४ )

आम्रमयम् । शरमयम् । शरादिः— ४. ८१.

वा० । एकाचो नित्यम् । ( 5052. )

त्वङ्मयम् । वाङ्मयम् ।

अनर्घराघवे— I. 12.

ग—भाव, तत्समनूवताम् , अस्य हि मौद्गल्यानां ब्रह्मर्षीणामन्ववायमनुधन्यस्य मुरारि-
नामधेयस्य बालवाल्मीकेर्वाङ्मयममृतबिन्दुनिस्यन्दि कन्दलयति कौतुकं मे ॥1491॥

वाङ्मयं वचनविकारः । विकारार्थे मयट् ।

अस्मिन्नेव ग्रन्थे श्लो 137. अपां विकारोऽम्मयो जलमयः । शरादिः—
६. ३३. 'शरादीनां च' (सू. 1042) शरावती कुशावतीति दीर्घः ।

१५२५ । गोश्च पुरीषे । ( ४. ३. १४५ )

गोः पुरीषं गोमयम् ।

माघे—III. 48.

शुकाङ्गनीलोपलनिर्मितानां लिप्तेषु भासा गृहदेहलीनाम् ।
यस्यामलिन्देषु न चक्रुरेव मुग्धाङ्गना गोमयगोमुखानि ॥ 1492 ॥

गोः पुरीषं **गोमयम्** ।

१५३२ । प्राणिरजतादिभ्योऽञ् । ( ४. ३. १५४ )

शौकम् । बाकम् । राजतम् ।

माघे—XII. 11.

नानाविधाविष्कृतसामजस्वरः
सहस्रवर्त्मा चपलैर्दुरध्ययः ।

गान्धर्वभूयिष्ठतया समानतां
स सामवेदस्य दधौ जलोदधिः ॥ 1493 ॥

गन्धर्वा अश्वाः तत्कर्म **गान्धर्वम्** । अञ् ।

माघे—IV. 13.

यत्राधिरूढेन महीरुहोच्चै-
रुन्निद्रपुष्पाक्षिसहस्रभाजा ।
सुराधिपाधिष्ठितहस्तिमल्ल-
लीलां दधौ **राजत**गण्डशैलः ॥ 1494 ॥

रजतस्य विकारो **राजतः** । अञ् ।

अस्मिन्नेव ग्रन्थे श्लो० 64. काञ्चनस्य विकारं **काञ्चनीम्** । अञि ङीप् ।

अस्मिन्नेव ग्रन्थे श्लो० 33. हेम्नो विकारो **हैमी** । अञ् । 'नस्तद्धिते' (सू. 679) इति टिलोपः । रजतादिः— ४. ८३.

## १५३५ । उष्ट्राद्वुञ् ( ४. ३. १५७ )

प्राण्यञोऽपवादः । औष्ट्रकः । 'गोत्रोक्षोष्ट्र' (सू. 1246) इति समूहे वुञ् ।

## १५३७ । एण्या ढञ् । ( ४. ३. १५९ )

ऐणेयम् । एणस्य तु ऐणम् । 'ऐणेयमेण्याश्चर्माद्यमेणस्यैणमुभे त्रिषु' II. v. 8. इत्यमरः ।

अस्मिन्नेव ग्रन्थे श्लो० 59. एणी हरिणीभेदः । तद्विकारभूता **ऐणेयी** । तस्यां त्वचि ।

अनर्घराघवे—IV. 27.

जटां धत्ते मूर्धा परशुधनुषी बाहुशिखरं
प्रकोष्ठो रौद्राक्षं वलयमिषुदण्डानपि करः ।

प्ररूढप्रौढाञ्जनविकटरौद्राद्भुतमिदं
प्रशान्तामैणेयीं त्वचमपि च वक्षः कलयति ॥ 1486 ॥

एण्या विकारः ऐणेयी । एण्या ढञ् ।

१५३८ । गोपयसोर्यत् । ( ४. ३. १६० )

गव्यम् पयस्यम् ।

१५३९ । द्रोश्च ( ४. ३. १६१ )

द्रुर्वृक्षस्तस्य विकारोऽवयवो वा द्रव्यम् ।

१५४१ । फले लुक् । ( ४. ३. १६३ )

विकारावयवप्रत्ययस्य लुक् स्यात्फले । आमलक्याः फलमामलकम् । 'लुक्तद्धितलुकि' ( सू. 1408 ) इति स्त्रीप्रत्ययस्य निवृत्तिः ।

अस्मिन्नेव ग्रन्थे श्लो० 971. अलाब्वा विकारः फलमलाबु । ओरञ् । लुक् । स्त्रीप्रत्ययनिवृत्तिः ।

अस्मिन्नेव ग्रन्थे श्लो० 1165. जम्ब्वाः फलं जम्बु । 'जम्ब्वा वा' ( सू. 1544 ) इत्यणभावपक्षे ओरञि अनेन लुक् । स्त्रीप्रत्ययनिवृत्तिः ।

१५४२ । प्लक्षादिभ्योऽण् ( ४. ३. १६४ )

प्लाक्षम् ।

१५४३ । न्यग्रोधस्य च केवलस्य । ( ७. ३. ५ )

नैयग्रोधम् ।

१५४४ । जम्ब्वा वा । ( ४. ३. १६५ )

जम्बूशब्दात्फलेऽण् वा स्यात् । जाम्बवम् । पक्षे ओरञ् । तस्य लुक् । जम्बु ।

अस्मिन्नेव ग्रन्थे श्लो० 1165. जम्ब्वाः फलं जम्बु । ओरञि लुकि स्त्रीप्रत्ययनिवृत्तिः ।

१५४५ । लुप् च । ( ४. ३. १६६ )

जम्ब्वाः फलं जम्बूः । 'बार्हतं च फले जम्ब्वा जम्बूः स्त्री जम्बु जाम्बवम्' II. iv. 19. इत्यमरः ।

वा० । पुष्पमूलेषु बहुलम् । (2950.)

अस्मिन्नेव ग्रन्थे श्लो० 1449. केतक्याः पुष्पं **केतकम्** । अणो लुकि नादिवृद्धिः । 'लुक्तद्धितलुकि' (सू. 1408) इति स्त्रीप्रत्ययस्यापि लुक् ।

रघुवंशे—IV. 55.

मुरलामारुतोद्धूतमगमत्कैतकं रजः ।
तद्योधवारबाणानामयत्नपटवासताम् ॥ 1496 ॥

अत्र न ।

अस्मिन्नेव ग्रन्थे श्लो० 607. मघासु मघायुक्तकाले । 'नक्षत्रेण युक्तः कालः' (सू. 1204) इत्यणि 'लुबविशेषे' (सू. 1205) इति तस्य लुपि 'लुपि युक्तवत्' (सू. 1294) इति प्रकृतिलिङ्गवचने 'नक्षत्रे' (सू 642) इति वैकल्पिकी सप्तमी ।

१५४६ । हरीतक्यादिभ्यश्च । ( ४. ३. १६७ )

एभ्यः फलप्रत्ययस्य लुप् स्यात् । हरीतक्यादीनां लिङ्गमेव प्रकृतिवत् । हरीतक्याः फलानि हरीतक्यः । हरीतक्यादिः— ४. ८५.

१५४७ । कंसीयपरशव्ययोर्यञञौ लुक्च । ( ४. ३. १६८ )

कंसीयपरशव्यशब्दाभ्यां यञञौ स्तः छयतोश्च लुक् । कंसः पानभाजनम् । 'वृतॄ' (उ. सू. 342) इत्यौणादिकः सप्रत्ययः । कंसाय हितं कंसीयम् । 'तस्मै हितं' (सू. 1665) इति छः । तस्य विकारः कांस्यम् । यञ् । परशवे हितं परशव्यम्, तस्य विकारः पारशवः ।

अस्मिन्नेव ग्रन्थे श्लो० 1032. कंसीयस्य विकारः **कांस्यः** । तालादिः । यञ् । छस्य लुक् ।

माघे—XV. 81.

> दयिताय सासवमुदस्तमनस्तदवसादितः करात् ।
> कांस्यमुपहितसरोजपत्त्रमगौघमारसुरु राजयोषितः ॥ 1497 ॥

कंसः पानभाजनम् । कमेरौणादिकस्सप्रत्ययः । तस्मै हितं कंसीयं लोहविशेषः । प्राक्क्रीतीयश्छः । तस्य विकारः **कांस्यम्** पानपात्रम् । अनेन यञ् । छस्य लुक् ।

॥ इति प्राग्दीव्यतीयप्रकरणम् ॥

---

## ॥ अथ ठगधिकारप्रकरणम् ॥



### १५४८ । प्राग्वहतेष्ठक् । ( ४. ४. १ )

तद्वहतीत्यतः प्राक् ठगधिक्रियते ।

वा० । तदाहेति माशब्दादिभ्य उपसङ्ख्यानम् । ( 2951. )

माशब्दादिः— ४. ८६.

अनर्घराघवे—IV. 50.

ग—आः पाप दुर्मुख वसिष्ठ इव विश्वामित्र इव **स्वस्तिवाचनिको** ब्राह्मणस्ते परशुरामः ॥ 1498 ॥

स्वस्तिवाचनमाह **स्वस्तिवाचनिकः** । ठक् । 'उत्तरपदस्य' ( सू. 1396 ) इति वृद्धिः ।

### १५४९ । स्वागतादीनां च । ( ७. ३. ७ )

ऐच् न स्यात् । स्वागतमित्याह स्वागतिकः । स्वागतादिः— ७. ३.

वा० । आहौ प्रभूतादिभ्यः । ( 2952. )

प्रभूतमाह प्राभूतिकः । प्रभूतादिः— ४. ८७.

वा० । पृच्छतौ सुस्नातादिभ्यः । ( 2953. )

सुस्नातं पृच्छति सौस्नातिकः । सौखशायनिकः । सुस्नातादिः— ४. ८८.

वा० । गच्छतौ परदारादिभ्यः । ( 2954. )

पारदारिकः । गौरुतल्पिकः । परदारादिः— ४. ८९.

रघुवंशे—VI. 61.

विन्ध्यस्य संस्तम्भयिता महाद्रेः
निश्शेषपीतोज्झितसिन्धुराजः ।

प्रीत्याश्वमेधावभृथार्द्रमूर्तेः
सौस्नातिको यस्य भवत्यगस्त्यः ॥ 1499 ॥

सुस्नातं पृच्छतीति **सौस्नातिकः** । ठक् ।

अस्मिन्नेव ग्रन्थे श्लो० 1461. सुखशयनं पृच्छतीति **सौखशायनिकः** । ठक् । उभयपदवृद्धिः ॥

**चम्पूभारते**—XI. 23.

ग— तदनु तत्र परस्परसङ्घट्टनजनितस्फुलिङ्गव्याजेन निपीतपूर्वान् रुधिरशीकरानजीर्णशङ्कया वमन्तीभिः खड्गवल्लरीभिश्च कबन्धोत्पाटनवृद्धिपाटवमेव संग्रामदेशादेशिकसदेशादभ्यसितुमवनीतलमवतीर्णैः पयोधरपटलैरिव खेटकमण्डलैश्च युगपदेव बहुविधवीरयोधजनप्रवेशसौकर्याय तरणिरन्ध्रसरणिं विशालयितुमिव वियत्तले दूरमुच्चलिताभिः शक्तिभिश्च प्रतिक्षणक्षपितविपक्षकुलवृत्तान्तं मुहुर्मुहुरटनिमुखेन कथयितुमिव धानुष्ककर्णाभ्यर्णं प्रत्यागतैः कोदण्डदण्डैश्च युद्धविलोकनबद्धकौतुकसिद्धयौवतकुचमण्डलनिजकुम्भतारतम्यपरिचिचीषयेव दूरं नभसि करान् प्रसारयद्भिः शुण्डालमण्डलैश्च विचित्रतरचक्रचङ्क्रमणमिषेण पदात्पदमपि न गन्तव्यमिति विमतनिरोधकुण्डलानामिव कुर्वद्भिर्वद्भिश्च शोणितपङ्कशोणितैर्वेगसम्भ्रमविदार्यमाणधरणीरन्ध्रनिर्गत्वरफणीन्द्रफणामणिकिरणशोणीमसृणितैरिव चक्रैः संक्रीडद्भिः शताङ्गैश्च भयानके सकलभुजगतनूरुह**सौखशायनिके** समीके ॥ 1500 ॥

**सौखशायनिके** । पूर्ववत् ।

चम्पूभारते—XI. 13.

दिङ्मूलशैलकुहरेशयकेसरीन्द्र-
**सौखप्रसुप्तिक**महापटहारवेण ।
कर्णो बलेन करनर्तितकालपृष्ठो
जन्यस्थलीमथ रथेन जवाज्जगाहे ॥ 1501

सुखप्रसुप्तं पृच्छतीति **सौखप्रसुप्तिकः** । ठक् ।

**अनर्घराघवे**—II. 3.

दिङ्मण्डलीमुकुटमण्डनपद्मराग-
रत्नाङ्कुरे किरणमालिनि गर्भितेऽपि ।

सौखप्रसुप्तिकमधुव्रतचक्रवाल-
वाचालपङ्कजवनीसरसाः सरस्यः ॥ 1502 ॥

सौखप्रसुप्तिकाः । पूर्ववत् ।

१५५० । तेन दीव्यति खनति जयति जितम् । (४. ४. २)

अक्षैर्दीव्यति आक्षिकः । अभ्र्या खनति आभ्रिकः । हलेन खनति हालिकः । सैरिकः । अक्षैर्जयति आक्षिकः । अक्षैर्जितमाक्षिकम् ।

अनर्घराघवे—IV. 4.

अयं मृदुमृणालिनीवनविलासवैहासिक-
स्त्विषां वितपते पतिस्सपदि दृश्यमाना निजाः ।
स्तनौ पुलकयन्ति चोत्पलदृशां प्रियोरःस्थले
विपर्ययितवृत्तयो घुसृणपङ्कपत्राङ्कुराः ॥ 1503 ॥

विहासो विहसितम् । तेन दीव्यतीति वैहासिकः । ठक् ।

१५५१ । संस्कृतम् । (४. ४. ३)

दध्ना संस्कृतं दाधिकम् । मारीचिकम् ।

१५५३ । तरति । (४. ४. ५)

उडुपेन तरति औडुपिकः ।

१५५४ । गोपुच्छाट्ठञ् । (४. ४. ६)

गौपुच्छिकः ।

१५५५ । नौ द्व्यचष्ठन् । (४. ४. ७)

नाविकः । घटिकः । बाहुभ्यां तरति बाहुका स्त्री ।

१५५६ । चरति । (४. ४. ८)

चर गतिभक्षणयोः । तृतीयान्ताद्गच्छति भक्षयतीत्यर्थयोः ठक् स्यात् । हस्तिना चरति हास्तिकः । शाकटिकः । दध्ना भक्षयति दाधिकः ।

रघुवंशे—IX. 53.

अ[illegible]वागुरिकैः प्रथमास्थितं
व्यपगतानलदस्यु विवेश सः।
स्थिरतुरङ्गमभूमि निपानवन्
मृगवयोगवयोपचितं वनम् ॥ 1504 ॥

वागुरा मृगबन्धनरज्जुः। तया चरन्तीति वागुरिकाः जालिकाः। अनेन ठक्।

रघुवंशे—X. 47.

वैमानिकाः पुण्यकृतस्त्यजन्तु मरुतां पथि।
पुष्पकालोकसंक्षोभं मेघावरणतत्पराः ॥ 1505 ॥

विमानैश्चरन्तीति वैमानिकाः। ठक्।

१५५८। पर्पादिभ्यः ष्ठन्। (४. ४. १०)

पर्पेण चरति पर्पिकः। पर्पिकी। येन पीठेन पङ्गवश्चरन्ति स पर्पः।

पर्पादिः— ४. १०. अश्विकः। रथिकः।

अस्मिन्नेव ग्रन्थे श्लो० 1149. रथेन चरति रथिकः। ष्ठन्।

१५५९। श्वगणाट्ठञ् च। (४. ४. ११)

चात् ष्ठन्।

१५६०। श्वादेरिञि। (७. ३. ८)

ऐज् न। श्वभस्त्रस्यापत्यं श्वाभस्त्रिः। श्वादंष्ट्रिः।

वा०। इकारादाविति वाच्यम्। (4612.)

श्वगणेन चरति श्वागणिकः। श्वागणिकी। ठञ्। 'टिड्ढ' (सू. 470) इति ङीप्। श्वगणिकः। श्वगणिकी। षिद्गौरादिभ्यो ङीष्।

भट्टिकाव्ये—XI. 46.

विधृतनिशितशस्त्रैस्तद्युतं यातुधानै-
रुरुजठरमुखीभिस्सङ्कुलं राक्षसीभिः।

[1] श्वगणिकशतकीर्णं वागुराकम्र्गीभि-
र्वनमिव सभयाभिर्देवबन्दीभिरासीत् ॥ 1506 ॥

श्वगणेन चरन्ति श्वगणिकाः । ठन् । श्वगणा विद्यन्ते येषामिति श्वगणिनः । 'अत इनिठनौ' (सू. 1922) इति इनिः ।

अस्मिन्नेव ग्रन्थे श्लो० 1504. शुनां गणः । स एषामस्तीति श्वगणिनः । पूर्ववदिनिः ।

## १५६१ । पदान्तस्यान्यतरस्याम् । (७. ३. ९)

श्वादेरङ्गस्य पदशब्दान्तस्यैज्वा । श्वापदस्येदं श्वापदं, शौवापदम् ।

अस्मिन्नेव ग्रन्थे श्लो० 1239. शुन इव पदमस्येति श्वापदो व्याघ्रः । 'अन्येषामपि' (सू. 3539) इति दीर्घः इति व्याख्याने । तन्न । 'शुनो दन्त' (सू. 1049) इति दीर्घः । 'तस्येदं' (सू. 1500) इत्यणि 'द्वारादीनां च' (सू. 1386) इत्यैजागमोऽनेन विकल्पितः ।

## १५६२ । वेतनादिभ्यो जीवति । (४. ४. १२)

वेतनेन जीवति वैतनिकः । धानुष्कः । वेतनादिः— ४. ९१. 'भृतको भृतिभुक् कर्मकरो वैतनिकश्च सः' II. x. 15. इत्यमरः । 'धन्वी धनुष्मान् धानुष्कः' II. viii. 70. इति 'शस्त्राजीवे' II. viii. 68. इति चामरः ।

## १५६३ । वस्नक्रयविक्रयाट्ठन् (४. ४. १३)

वस्नेन मूल्येन जीवति वस्निकः । क्रयविक्रयग्रहणं सङ्घातविगृहीतार्थम् । क्रयविक्रयिकः । क्रयिकः । विक्रयिकः ।

माघे—V. 24.

यावत्स एव समयस्सममेव तावत्
अव्याकुलाः पटमयान्यभितो वितत्य ।

1. श्वग णिशतविकीर्ण इति पाठान्तरम्

पर्याप्तक्रयिकलोकमगण्यपण्य-
पूर्णापणा विपणिनो विपणीर्विभेजुः ॥ 1507 ॥

क्रयेण जीवतीति क्रयिकः । 'क्रिय इकन्' (उ. सू. 2[illegible]) इत्यौणादिक इकन् । क्रयिकः ।

१५६४ । आयुधाच्छ च । (४. ४. १४)

चाट्ठन् । आयुधेन जीवति आयुधीयः आयुधिकः ।

माघे—XVIII. 11.

यातैश्चातुर्विध्यमस्त्रादिभेदा-
दभ्यासङ्गैः सौष्ठवं लाघवं च ।
शिक्षाशक्तिं प्राहरन् दर्शयन्तो
मुक्तामुक्तैरायुधैरायुधीयाः ॥ 1508 ॥

आयुधीया आयुधजीविनः । 'शस्त्राजीवे काण्डपृष्ठायुधीयायुधिकाः समाः' II. viii. 68. इत्यमरः ।

उत्तररामचरिते—IV. 23.

ल— धिक् चपल । किमुक्तवानसि, नैकस्माद्दण्डधारा आयुधीयश्रेणयः क्षितिरपि इमां वाचं न सहन्ते । रामभद्रश्चन्द्रकेतुरपि [illegible] सोऽप्यनुशिष्यदर्शनकुतूहलि- सहृदयो न यावदायाति तावत्त्वरिततरमनेन तत्कालकृतेनाश्वेन ॥ 1509 ॥

आयुधेनास्त्रेण जीवन्तीति आयुधीयाः ।

१५६५ । हरत्युत्सङ्गादिभ्यः (४. ४. १५)

उत्सङ्गेन हरति औत्सङ्गिकः । उत्सङ्गादिः— ७. ९२.

१५६६ । भस्त्रादिभ्यः ष्ठन् । (४. ४. १६)

भस्त्रया हरति भस्त्रिकः । षित्त्वान्ङीष् । भस्त्रिकी । भस्त्रादिः— ४. ९३.

१५६७ । विभाषा विवधात् । (४. ४. १७)

विवधेन हरति विवधिकः। पक्षे ठक्। वैवधिकः। वीवधादपि ष्ठन्। वीवधिकः वीवधिकी। विवधवीवधशब्दौ उभयतोबद्धशिक्ये स्कन्धवाह्ये काष्ठे वर्तेते।

चम्पूभारते—III. 37

कालेन सङ्गततमां कटुतामवेत्य
स्वर्गौकसामथ सुधारसनिस्पृहाणाम्।
अभ्रंलिहान्फलवतस्तटनारिकेलान्
सह्यात्मजासलिलवैवधिकानमंस्त ॥ 1510 ॥

विवधेन हरति वैवधिकः। ठक्।

## १५६८। अण् कुटिलिकायाः। (४. ४. १८)

कुटिलिका व्याधानां गतिविशेषः, कर्मारोपकरणभूतं लोहं च। कुटिलिकया हरति मृगानङ्गारान्वा कौटिलिको व्याधः कर्मारश्च।

## १५६९। निर्वृत्तेऽक्षद्यूतादिभ्यः। (४. ४. १९)

अक्षद्यूतेन निर्वृत्तमाक्षद्यूतिकं वैरम्। अक्षद्यूतादिः।—४. ९४.

## १५७०। त्रेर्मम्नित्यम्। (४. ४. २०)

त्रिप्रत्ययान्तप्रकृतिकात्तृतीयान्तान्निर्वृत्तेऽर्थे मप् स्यान्नित्यम्। कृत्या निर्वृत्तं कृत्रिमम्। पक्त्रिमम्।

वा०। भावप्रत्ययान्तादिमब्वक्तव्यः। (2959.)

पाकेन निर्वृत्तं पाकिमम्। त्यागिमम्। 'ड्वितः क्त्रिः'। (सू. 3266) इति क्त्रिः

भट्टिकाव्ये—VII. 67.

निघानिघतरुच्छन्ने तस्मिंस्ते लब्धिमैः फलैः।
तृप्तास्तां भ्राजथुमतीं पप्रच्छुः कस्य पूरियम् ॥ 1511 ॥

लब्धिमैर्लाभनिर्वृत्तैः लब्धैः। डुलभष्। मप्।

अस्मिन्नेव ग्रन्थे श्लो० 266. त्रिवप्त्रिमम् । डुवप् धातोः क्त्रि

अस्मिन्नेव ग्रन्थे श्लो० 1454. कृत्रिमो धातेन निर्मितः । डुकृञ् धातो ' ड्वितः क्त्रिः ' (सू. ३२६६) इत्यनेन क्त्रादेशः ' चित्रिमे विधिविद्धे ' ; विहित इत्यर्थः । पूर्ववत्प्रत्यये डुवप् धातोर्हिंगदेशः ।

अस्मिन्नेव ग्रन्थे श्लो० 33. कृत्रिमं क्रियानिर्वृत्तम् । डुकृञ् धातो क्त्रिः । मप् ।

१५७२ । संसृष्टे । (४. ४. २२)

दध्ना संसृष्टं दाधिकम् ।

१५७३ । चूर्णादिनिः । (४. ४. २३)

चूर्णैः संसृष्टाश्चूर्णिनोऽपूपाः ।

१५७४ । लवणाल्लुक् । (४. ४. २४)

लवणेन संसृष्टो लवणसूपः । लवणं शाकम् । ' लवणाट्ठञ् ' (सू. 1602) लवणं पण्यमस्येति लावणिकः ।

१५७५ । मुद्गादण् । (४. ४. २५)

मौद्ग ओदनः ।

१५७६ । व्यञ्जनैरुपसिक्ते । (४. ४. २६)

ठक् । दध्ना उपसिक्तं दाधिकम् ।

१५७७ । ओजस्सहोऽम्भसा वर्तते (४. ४. २७)

ओजसा वर्तते औजसिकः शूरः । साहसिकश्चौरः । आम्भसिको मत्स्यः ।

नैषधे—VI. 63.

यत्रावदत्तामतिभीय भैमी
त्यज त्यजेदं सखि साहसिक्यम् ।
त्वमेव कृत्वा मदनाय दत्से
बाणान् प्रसूनानि गुणेन सज्जान् ॥ 1512 ॥

सहसा वर्तत इति साहसिकः अविमृश्यकारी । अनेन ठक् । तस्य कर्म **साहसिक्यम्** । ब्राह्मणादित्वात् ष्यञ् ।

अनर्घराघवे—IV. 49.

जातस्सोऽहं दिनकरकुले क्षत्त्रियश्रोत्रियेभ्यो
विश्वामित्रादपि भगवतो दृष्टदिव्यास्त्रपारः ।
अस्मिन्वंशे कथयतु जनो दुर्यशो वा यशो वा
विप्रे शस्त्रग्रहणगुरुणस्साहसिक्याद्बिभेमि ॥ 1513 ॥

**साहसिक्यम्** । पूर्ववत् ।

१५७८ । **तत्प्रत्यनुपूर्वमीपलोमकूलम्** । ( ४. ४. २८ )

द्वितीयान्तादस्माद्वर्तत इत्यस्मिन्नर्थे ठक् स्यात् । क्रियाविशेषणत्वाद् द्वितीया । प्रतीपं वर्तते प्रातीपिकः । आन्वीपिकः । प्रातिलोमिकः । आनुकूलिकः ।

अस्मिन्नेव ग्रन्थे श्लो० 74. प्रतिकूलं वर्तत इति **प्रातिकूलिकीं** प्रतिकूलवर्तिनीम् । ठक् । 'टिड्ढाणञ्' ( सू. 470 ) इति ङीप् ।

१५७९ । **परिमुखं च** । ( ४. ४. २९ )

परिमुखं वर्तते पारिमुखिकः । चात्पारिपार्श्विकः ।

**वा०** । वृद्धेर्वृधुषिभावो वक्तव्यः । ( 2965. )

वार्धुषिकः ।

१५८१ । **कुसीददशैकादशात्ष्ठन्ष्ठचौ** । ( ४. ४. ३१ )

कुसीदं वृद्धिस्तदर्थं द्रव्यं कुसीदम् । तत्प्रयच्छतीति कुसीदिकः । कुसीदिकी ।

१५८३ । **रक्षति** । ( ४. ४. ३३ )

समाजं रक्षति सामाजिकः ।

**नैषधे**—V. 110.

**यामिकाननुपमृद्य च मादृक्**
**तां निरीक्षितुमपि क्षमते कः ।**

रक्षिजनेऽयमपध्वनिरिति

मुषि विश्वसिति कुत्र कुमारी ॥ 1514 ॥

यामान् रक्षन्तीति यामिकाः प्रहररक्षकाः । अनेन ठक् ।

१५८४ । शब्ददर्दुरं करोति । (४. ४. ३४)

शब्दं करोति शाब्दिकः । दार्दुरिकः ।

१५८५ । पक्षिमत्स्यमृगान्हन्ति । (४. ४. ३५)

पक्षिणो हन्ति पाक्षिकः । शाकुनिकः । मायूरिकः । मात्स्यिकः । मैनिकः । मार्गिकः । हारिणिकः । सारङ्गिकः ।

१५९१ । धर्मं चरति । (४. ४. ४१)

धार्मिकः ।

वा० । अधर्माच्चेति वक्तव्यम् । (२९६६.)

आधर्मिकः ।

१५९३ । समवायान्समवैति । (४. ४. ४३)

सामवायिकः सामूहिकः ।

माघे — II. 113.

अज्ञातदोषैर्दोषज्ञैरुद्दूष्योभयवेतनैः ।
भेद्याः शत्रोरभिव्यक्तशासनैः सामवायिकाः ॥ 1515 ॥

सामवायिकाः सङ्घमुख्यास्सचिवादयः । ठक् ।

अनर्घराघवे—IV. 15.

ग— शृणु वत्से, कार्यज्ञासि । अस्ति वनौकसां मन्त्री जाम्बवान् । स मतङ्गाश्रमवासस्त्वामुपसृत्य श्रमणां नाम सिद्धशबरीमभ्यर्थितवान् । यथास्य वालिनो वैराग्येन क्षीणा लुब्धापवारिताः प्रकृतयः किष्किन्धायां कुमारसुग्रीवमभिषेक्ष्यमाणाः सामवायिकं रामभद्रमपेक्षन्ते ॥ 1516 ॥

समवायः सैन्यसमूहः । तं समवैति आगत्य मिलितो भवतीति सामवायिकः । ठक् ।

१५९४ । परिषदो ण्यः । ( ४. ४. ४४ )

परिषदं समवैति पारिषद्यः ।

१५९५ । सेनाया वा । ( ४. ४. ४५ )

ण्यः स्यात् । पक्षे ठक् । सैन्याः । सैनिकाः । 'सेनायां समवेता ये सैन्यास्ते सैनिकाश्च ते' II. viii. 62. इत्यमरः ।

अस्मिन्नेव ग्रन्थे श्लो० 963. सेनायां सममेतास्सैन्याः । ण्यप्रत्ययः ।

माघे—XIX. 32.

कृतोरुवेगं युगपद्व्यजिगीषन्त सैनिकाः ।
विपक्षं बाहुपरिघैर्जङ्घाभिरितरेतरम् ॥ 1517 ॥

सेनायां समवेतास्सैनिकाः । अनेन पाक्षिकष्ठक् ।

भट्टिकाव्ये—XIV. 17.

शुश्राव रामस्तत्सर्वं प्रतस्थे च ससैनिकः ।
विस्फारयाञ्चकारास्त्रं बबन्धाथ च बाणधी ॥ 1518 ॥

ठक् ।

किरातार्जुनीये—XII. 48.

हरसैनिकाः प्रतिभयेऽपि गजमदसुगन्धिकेसरैः ।
स्वस्थमभिददृशिरे सहसा प्रतिबोधजृम्भितमुखैर्मृगाधिपैः ॥ 1519 ॥

हरसैनिकाः । ठक् ।

१६०१ । तदस्य पण्यम् । ( ४. ४. ५१ )

अपूपाः पण्यमस्य आपूपिकः ।

१६०२ । लवणाट्ठञ् । ( ४. ४. ५२ )

लावणिकः ।

अस्मिन्नेव ग्रन्थे श्लो० 91. लवणं पण्यमस्येति लावणिकः लवणव्यवहारी । लवणेन संसृष्टो लवणस्सूपः । लवणाल्लुक् ।

१६०३ । किसरादिभ्यः ष्ठन् । ( ४. ४. ५३ )

किसरं पण्यमस्य किसरिकः । षित्वान्ङीष् । किसरिकी । किसर, उशीर, नलद इत्यादि किसरादयः । सर्वे सुगन्धिद्रव्यविशेषवाचिनः । किसरादिः— ४. ९६.

१६०४ । शलालुनोऽन्यतरस्याम् । ( ४. ४. ५४ )

शलालुकः । ष्ठन् । शालालुकः । ठक् ।

१६०५ । शिल्पम् । ( ४. ४. ५५ )

मृदङ्गवादनं शिल्पमस्य मार्दङ्गिकः ।

चम्पूभारते— V. 50.

अभ्रंलिहस्य वटभूमिरुहस्तलेऽसौ
स्थित्वाशृणोत्तदनु वैणिकगीतिगीतिम् ।
सङ्गीतभङ्गिरसिकैः सह बन्धुवर्गै-
राकारयन्निव सुराधिपगायकेन्द्रम् ॥ 1520 ॥

वैणिकः ।

१६०६ । मड्डुकझर्झरादणन्यतरस्याम् । ( ४. ४. ५६ )

मड्डुकवादनं शिल्पमस्य माड्डुकः । माड्डुकिकः । झार्झरः । झार्झरिकः ।

१६०७ । प्रहरणम् । ( ४. ४. ५७ )

तदस्येत्येव । असिः प्रहरणमस्य आसिकः । धानुष्कः । 'वेतनादिभ्यो जीवति' (सू. 1562) इत्यपि धानुष्कः ।

भट्टिकाव्ये—IV. 10.

वसानस्तन्त्रकनिभे सर्वाङ्गीणे तरुत्वचौ ।
काण्डीरः खाड्गिकश्शार्ङ्गी रक्षन्विप्रांस्तनुत्रवान् ॥ 1521 ॥

खड्गः प्रहरणमस्य खाड्गिकः । अनेन ठक् । खड्गिक इति पाठे खड्गोऽस्यास्तीति खड्गिकः । 'अत इनिठनौ' (सू. 1922) इति ठन् ।

माघे—II. 28.

अनिर्लोडितकार्यस्य वाग्जालं वाग्मिनो वृथा ।
निमित्तादपराद्धेषोर्धानुष्कस्येव वल्गितम् ॥ 1522 ॥

धनुः प्रहरणमस्येति धानुष्को धन्वी । ठक् ।

अस्मिन्नेव ग्रन्थे श्लो० 1034. धानुष्काः । प्रासिकाः ।

१६०८ । परश्वधाट्ठञ् च । (४. ४. ५८)

पारश्वधिकः ।

अस्मिन्नेव ग्रन्थे श्लो० 1034. परश्वधः प्रहरणमेषां पारश्वधिकाः ।

१६०९ । शक्तियष्ट्योरीकक् (४. ४. ५९)

शाक्तीकः । याष्टीकः ।

अस्मिन्नेव ग्रन्थे श्लो० 1034. शक्तिः प्रहरणमेषां शाक्तीकाः । ईकक् ।

अस्मिन्नेव ग्रन्थे श्लो० 610. यष्टिः प्रहरणमेषां याष्टीकाः । ईकक् ।

१६१० । अस्ति नास्ति दिष्टं मतिः । (४. ४. ६०)

तदस्येत्येव । अस्ति परलोक इत्येवं मतिर्यस्य स आस्तिकः । नास्तीति मतिर्यस्य स नास्तिकः । दिष्टमिति मतिर्यस्य स दैष्टिकः ।

अस्मिन्नेव ग्रन्थे श्लो० 948. परलोके मतिरस्तीत्यास्तिकः । ठक् ।

माघे—XVI. 7.

अहितादनपत्रपस्त्रसन्नतिमात्तोज्झितभीरनास्तिकः ।
विनयोपहितस्त्वया कुतः सदृशोऽन्यो गुणवानविस्मयः ॥ 1523 ॥

नास्ति परलोक इति मतिरस्येति नास्तिकः । ठक् ।

माघे—II. 88.

नालम्बते दैष्टिकतां न निषीदति पौरुषे ।
शब्दार्थौ सत्कविरिव द्वयं विद्वानपेक्षते ॥ 1524 ॥

दिष्टं मतिरस्येति दैष्टिकः दैवप्रमाणकः । ठक् ।

१६१२ । शीलम् । ( ४. ४. ६१ )

अपूपभक्षणं शीलमस्य आपूपिकः ।

किरातार्जुनीये—IX. 74.

अन्योन्यरक्तमनसामथ बिभ्रतीनां
चेतोभुवो हरिसखाप्सरसां निदेशम् ।
वैबोधिकध्वनिविभावितपश्चिमार्धा
सा संहृतेव परिवृत्तिमियाय रात्रिः ॥ 1525 ॥

विबोधः प्रबोधनं शीलमेषां ते वैबोधिकाः वैतालिकाः । ठक् ।

१६१३ । कार्मस्ताच्छील्ये । ( ६. ४. १७२ )

कार्म इति ताच्छील्ये णे टिलोपो निपात्यते । कर्मशीलः कार्मः ।

१६१६ । हितं भक्षाः । ( ४. ४. ६५ )

अपूपभक्षणं हितमस्मै आपूपिकः ।

१६१७ । तदस्मै दीयते नियतम् । ( ४. ४. ६६ )

अग्रभोजनं नियतं दीयतेऽस्मै आग्रभोजनिकः ।

१६१८ । श्राणामांसौदनाट्टिठन् । ( ४. ४. ६७ )

श्राणा नियतं दीयतेऽस्मै श्राणिकः । टित्वात् श्राणिकी । मांसौदनिकः । मांसिकः । औदनिकः ।

१६१९ । भक्तादणन्यतरस्याम् । ( ४. ४. ६८ )

पक्षे ठक् । भक्तमस्मै नियतं दीयते भाक्तः भाक्तिकः ।

१६२० । तत्र नियुक्तः । ( ४. ४. ६९ )

इति ठक् । आकरे नियुक्तः आकरिकः ।

अनर्घराघवे—VI. 18.

ग—अथ वत्स, गोपुरगौल्मिकबलाध्यक्षेण वत्सेन नरान्तकेन किं प्रतिपन्नम् ॥ 1526 ॥

गुल्मस्सेना, घट्टं वा । तत्र नियुक्तो **गौल्मिकः** । ठक् ।

अस्मिन्नेव ग्रन्थे श्लो० 1426. **दौवारिकाः** द्वारे नियुक्ताः । ठक् । 'द्वारादीनाम्' ( सू. 1386 ) इत्यैच् ।

अस्मिन्नेव ग्रन्थे श्लो० 75. द्वारे नियुक्ता **दौवारिकी** । ठक् । ऐजागमः । 'टिड्ढाणञ्' ( सू. 470 ) इति ङीप् ।

१६२१ । अगारान्ताट्ठन् । ( ४. ४. ७० )

देवागारे नियुक्तो दैवागारिकः ।

१६२४ । निकटे वसति । ( ४. ४. ७३ )

नैकटिको भिक्षुः ।

अस्मिन्नेव ग्रन्थे श्लो० 860. ग्रामस्यान्तिके क्रोशमात्रं त्यक्त्वा यतयो ये निवसन्ति ते **नैकटिकाः** । ठक् ।

१६२५ । आवसथात्ष्ठल् । ( ४. ४. ७४ )

आवसथे वसति आवसथिकः । षित्वान्ङीष् । आवसथिकी ।

॥ इति ठगधिकारप्रकरणम् ॥

---

१६२६ । प्राग्घिताद्यत् । ( ४. ४. ७५ )

'तस्मै हितम्' (सू. 1665) इत्यतः प्राग्यदधिक्रियते ।

१६२७ । तद्वहति रथयुगप्रासङ्गम् । ( ४. ४. ७६ )

रथं वहति रथ्यः । युग्यः । वत्सानां दमनकाले स्कन्धे यत्काष्ठमासज्यते स प्रासङ्गः । तं वहति प्रासङ्ग्यः । 'रथ्यो वोढा रथस्य यः' II. viii. 47. इत्यमरः । 'खलगोरथात्' (सू. 1259) इति समूहार्थे यत् । रथ्या ।

१६२८ । धुरो यड्ढकौ । ( ४. ४. ७७ )

धुर्यः । धौरेयः ।

रघुवंशे—I. 54.

अथ यन्तारमादिश्य धुर्यान्विश्रामयेति सः ।
तामवारोहयत्पत्नीं रथादवततार च ॥ 1527 ॥

धुरं वहन्तीति धुर्याः । यत्प्रत्ययः ।

अस्मिन्नेव ग्रन्थे श्लो० 917. धुरं वहन्तीति धौरेयाः । ढक् ।

अस्मिन्नेव ग्रन्थे श्लो० 57. धौरेयीभिः । ढकि 'टिड्ढाणञ्' (सू. 470) इति ङीप् ।

भट्टिकाव्ये—XVII. 99.

ततः शतसहस्रेण रामः श्रौर्णोन्निशाचरम् ।
बाणानामक्षिणोद्धुर्यान् सारथिं चादुनोद् द्रुतम् ॥ 1528 ॥

धुर्यान् अश्वान् । यत् ।

अस्मिन्नेव ग्रन्थे श्लो० 1122. धुरीणाः । 'खः सर्वधुरात्' (सू. 1630) इति योगविभागात्खः ।

१६३० । खः सर्वधुरात् । (४. ४. ७८)

सर्वधुरं वहतीति सर्वधुरीणः ।

अस्मिन्नेव ग्रन्थे श्लो० 1080. सर्वधुरीणाः सर्वभारवाही । खप्रत्ययः ।

१६३१ । एकधुराल्लुक् च । (४. ४. ७९)

एकधुरं वहति एकधुरीणः । एकधुरः ।

अनर्घराघवे— I. 39.

कूर्मराजभुजगाधिपगोत्रग्रावदिक्करिभिरेकधुरीणः ।
मां प्रसूय कथमस्तु विगीतो हा परार्थविमुखो रघुवंशः ॥ 1529 ॥

एका चासौ धूश्च एकधुरा । 'ऋक्पूः (सू. 940) इत्यादिना समासान्तोऽच् । 'खः सर्वधुरात्' (सू. 1630) इत्यनुवृत्तेः अनेन खः ।

अस्मिन्नेव ग्रन्थे श्लो० 1000. एकधुरं वहन्तीति एकधुरीणाः । समा इत्यर्थः । खः ।

१६३२ । शकटादण् । (४. ४. ८०)

शकटं वहति शाकटो गौः ।

१६३३ । हलसीराट्ठक् । (४. ४. ८१)

हलं वहति हालिकः । सैरिकः । 'हलसीराट्ठक्' (सू. 1504) तस्येदमित्यर्थे ठक् । हालिकम् । सैरिकम् । 'मतजनहलात्' (सू. 1649) इति यत् । हलस्य कर्षो हल्यः ।

१६३४ । संज्ञायां जन्या । (४. ४. ८२)

जनी वधूः । तां वहति प्रापयति जन्या ।

१६३५ । विध्यत्यधनुषा । (४. ४. ८३)

द्वितीयान्ताद्विध्यतीत्यर्थे यत्स्यात् । पादौ विध्यन्ति पद्याश्शर्कराः । 'पद्यत्यतदर्थे' (सू. 991) इति पादस्य पत् । अतदर्थे किम् । पादार्थमुदकं पाद्यम् निषेधात्पदादेशो न ।

१६३६ । धनगणं लब्धा । (४. ४. ८४)

वृत्तमेतत् । धनं लब्धा धन्यः । गणं लब्धा गण्यः ।
अस्मिन्नेव ग्रन्थे श्लो० 680. धनं लब्धा धन्यः पुण्यवान् । धन ।

१६३७ । अन्नाण्णः । (४. ४. ८५)

अन्नं लब्धा आन्नः ।

१६३८ । वशं गतः । (४. ४. ८६)

वश्यः परेच्छानुसारी ।

१६३९ । पदमस्मिन्दृश्यम् । (४. ४. ८७)

पद्यः कर्दमः । नातिशुष्क इत्यर्थः ।

१६४१ । संज्ञायां धेनुष्या । (४. ४. ८९)

धेनुशब्दस्य पुगागमो यत्प्रत्ययश्च स्वार्थे निपात्यते संज्ञायाम् । 'धेनुष्या बन्धके स्थिता' II. ix. 72. इत्यमरः ।

१६४२ । गृहपतिना संयुक्ते ञ्यः । (४. ४. ९०)

गृहपतिर्यजमानः तेन संयुक्तो गार्हपत्योऽग्निः ।

चम्पूरामायणे—I. 21.

ग—एतेऽपि पावका रूढिशङ्कावहां हुतवहाख्यां वहन्तस्तद्गृहे गार्हपत्यपुरोगाः पौरोगवधुरं दधते ॥ 1530 ॥
गार्हपत्यः ।

१६४३ । नौवयोधर्मविषमूलमूलसीतातुलाभ्यस्तार्यतुल्यप्राप्यवध्यानाम्यसमसमितसंमितेषु । (४. ४. ९१)

नावा तार्यं नाव्यम् । वयसा तुल्यो वयस्यः । धर्मेण प्राप्यं धर्म्यम् । विषेण वध्यो विष्यः । मूलेनानाम्यं मूल्यम् । मूलेन समो मूल्यः । सीतया समितं सीत्यम् क्षेत्रम् । तुलया संमितं तुल्यम् ।

माघे XII. 76.

अव्याहतक्षिप्रगतैस्समुच्छ्रिता-
ननुज्झितद्राघिमभिर्गरीयसः ।
**नाव्यं** पयः केचिदतारिषुर्भुजैः
क्षिपद्भिरूर्मीनपरैरिवोर्मिभिः ॥ 1531 ॥

नावा तार्यं **नाव्यम्** । ' नाव्यं त्रिलिङ्गं नौतार्ये ' I. ix. 10. इत्यमरः ।

रघुवंशे—IV. 31.

मरुपृष्ठान्युदम्भांसि **नाव्याः**सुप्रतरा नदीः ।
विपिनानि प्रकाशानि शक्तिमत्त्वाच्चकार सः ॥ 1532 ॥

नौभिस्तार्या **नाव्याः** । यत् ।

नैषधे—I. 56.

अथ श्रिया भर्त्सितमत्स्यलाञ्छनः
समं **वयस्यैः** स्वरहस्यवेदिभिः ।
पुरोपकण्ठोपवनं किलेक्षिता
दिदेश यानाय निदेशकारिणः ॥ 1533 ॥

वयसा तुल्या **वयस्याः** स्निग्धाः । यत् ।

अस्मिन्नेव ग्रन्थे श्लो० 107. वयसा तुल्या **वयस्या** ।

**१६४४ । धर्मपथ्यर्थन्यायादनपेते । (४. ४. ९२)**

धर्मादनपेतं धर्म्यम् । पथ्यम् । अर्थ्यम् । न्याय्यम् ।

भट्टिकाव्ये—VI. 24.

तथाऽर्तोपि क्रियां **धर्म्यां** स कालेनामुचत्क्वचित् ।
महतां हि क्रिया नित्या छिद्रे नैवावसीदति ॥ 1534 ॥

**धर्म्यां** धर्मादनपेताम् । यत् ।

अस्मिन्नेव ग्रन्थे श्लो० 106. **धर्म्यासु** ।

भट्टिकाव्ये— II. 25.

तान्प्रत्यवादीदथ राघवोऽपि
यथेप्सितं सन्तुत कर्म धर्म्यम् ।
तपोमरुद्भिर्भवतां शराग्निः
सन्धुक्ष्यतां नोऽरिसमिन्धनेषु ॥ 1535

धर्म्यम् ।

भट्टिकाव्ये—VII. 44.

प्रग्राहैरिव पत्राणामन्वेष्या मैथिली शनैः ।
ज्ञातव्या चेङ्गितैर्धर्म्यैर्धीमन्तो राघवागमम् ॥ 1536 ॥

धर्म्यैः ।

भट्टिकाव्ये—XII. 85.

हतः स्वदोषैर्भवता प्रहारः
पादेन धर्म्ये पथि मे स्थितस्य ।
स चिन्तनीयस्सह मन्त्रिमुख्यैः
कस्मावयोर्राघवनाद्यथातु ॥ 1537 ॥

धर्म्ये ।

माघे—II. 10.

उत्तिष्ठमानस्तु परो नोपेक्ष्यः पथ्यमिच्छता ।
समौ हि शिष्टैराम्नातौ वर्त्स्यन्तावामयः स च ॥ 1538 ॥

पथोऽनपेतं पथ्यम् । यत् ।

रघुवंशे—IV. 6.

परिकल्पितसान्निध्या काले काले च बन्दिषु ।
स्तुत्यं स्तुतिभिरर्थ्याभिरुपतस्थे सरस्वती ॥ 1539 ॥

अर्थ्याभिः अर्थादनपेताभिः । यत् ।

भट्टिकाव्ये—VII. 41.

न्याय्यं यद्यत्र तत्कार्यं पर्यायेणाविरोधिभिः ।
निशोपशायः कर्तव्यः फलोच्चायश्च संहतैः ॥ 1540 ॥

न्यायादनपेतं **न्याय्यम्** । यत् । 'परिन्योः' (सू. 3209) इति निपूर्वादिणो घञ् । न्यायः ।

भट्टिकाव्ये—VII. 20.

शैले विश्रयिणं क्षिप्रमनादरिणमभ्यमी ।
**न्याय्यं** परिभवी ब्रूहि पापमव्यथिनं कपिम् ॥ 1541 ॥

**न्याय्यं** न्यायादनपेतम् । यत् ।

रघुवंशे—II. 55.

सेयं स्वदेहार्पणनिष्क्रयेण
**न्याय्या** मया मोचयितुं भवत्तः ।
न पारणा स्याद्विहता तवैवं
भवेदलुप्तश्च मुनेः क्रियार्थः ॥ 1542 ॥

**न्याय्या** न्यायादनपेता ।

कुमारसंभवे—VI. 87.

इदमत्रोत्तरं **न्याय्यमिति** बुद्ध्या विमृश्य सः ।
आददे वचसामन्ते मङ्गलालङ्कृतां सुताम् ॥ 1543 ॥

**न्याय्यम्** ।

### १६४५ । छन्दसो निर्मिते (४. ४. ९३)

छन्दसा निर्मितं छन्दस्यम् । इच्छया कृतमित्यर्थः ।

### १६४६ । उरसोऽण् च । (४. ४. ९४)

चाद्यत् । उरसा निर्मितः पुत्र औरसः । उरस्यः ।

### १६४७ । हृदयस्य प्रियः (४. ४. ९५)

हृदो देशः । यत्प्रत्ययः । 'हृदयस्य हृल्लेख' (सू. 985) इति हृदादेशः । सुहृदयस्य भावः सौहृदम् । युवादित्वादण् । पूर्ववत् हृदादेशः । सुहृदयस्य सौहृदः । 'हृद्भग' (सू. 1133) इत्युभयपदवृद्धिः ।

अस्मिन्नेव ग्रन्थे श्लो० 1146. हृद्यताम् ।

१६४९ । मतजनहलात्करणजल्पकर्षेषु । (४. ४. ९७)

मतं ज्ञानम् । तस्य करणं भावसाधनं वा मत्यम् । जनस्य जल्पो जन्यः । हलस्य कर्षो हल्यः ।

१६५० । तत्र साधुः । (४. ४. ९८)

अग्रे साधुः अग्र्यः । सामसु साधुः सामन्यः । 'ये चाभावकर्मणोः' (सू. 1154) इति प्रकृतिभावः । कर्मण्यः । शरण्यः ।

अस्मिन्नेव ग्रन्थे श्लो० 1060. सामसु साधून् सामन्यान् । यत् । प्रकृतिभावः ।

अस्मिन्नेव ग्रन्थे श्लो० 66. कुले साध्वीं कुल्याम् । यत् ।

रघुवंशे—VI. 21.

असौ शरण्यः शरणोन्मुखाना-
मगाधसत्त्वो मगधप्रतिष्ठः ।
राजा प्रजारञ्जनलब्धवर्णः
परंतपो नाम यथार्थनामा ॥ 1544 ॥

शरणे रक्षणे साधुः शरण्यः ।

अस्मिन्नेव ग्रन्थे श्लो० 1454 उदारवंश्या महाकुलप्रसूताः । वंशे भवाः वंश्याः । 'दिगादिभ्यो यत्' (सू. 1429) इति भवार्थे यत् । दिगादियतस्तदन्तविधिनिषेधात् राजवंश्यादयः साध्वर्थे य इति वामनः ।

१६५१ । प्रतिजनादिभ्यः खञ् । (४. ४. ९९)

प्रतिजनं साधुः प्रातिजनीनः । सांयुगीनः । सार्वजनीनः । वैश्वजनीनः ।

प्रतिजनादिः— ४. ९८.

चम्पूभारते—X. 93.

सापि शक्तिरभिहत्य नराशं
सांयुगीनजनसंनुतशौर्यम् ।
वायुसूनुपरिघादिव भीता
वासवस्य सविधं प्रतिपेदे ॥ 1545 ॥

**सांयुगीनेन** रणे साधुना । 'सांयुगीनो रणे साधुः' II. viii 78. इत्यमरः ।

चम्पूभारते—X. 38.

आश्चर्यस्थूललक्षं तदनु दिविषदामन्तरिक्षस्थितानां
क्षोणीन्द्राणां रिपूणामसुमृगहरणे कूटयन्त्रायमाणम् ।
गन्धर्वैः केसराढ्यैर्मदमधुभिरिभैः केतुपत्रैश्शताङ्गैः
पद्मव्यूहं व्यतानीत्प्रथनभुवि गुरुस्सांयुगीनाग्रगण्यः ॥ 1546 ॥

**सांयुगीनाः** ।

कुमारसंभवे—II. 57.

संयुगे सांयुगीनं तमुद्यतं प्रसहेत कः ।
अंशादृते निषिक्तस्य नीललोहितरेतसः ॥ 1547 ॥

संयुगे साधुः **सांयुगीनः** ।

रघुवंशे—XI. 30.

इत्यपास्तमखविघ्नयोस्तयो-
स्सांयुगीनमभिनन्द्य विक्रमम् ।
ऋत्विजः कुलपतेर्यथाक्रमं
वाग्यतस्य निरवर्तयन्क्रियाः ॥ 1548 ॥

**सांयुगीनम्** ।

अनर्घराघवे—IV. 20.

ग—अहह यथा मृष्टभोजिना कृतान्तेन प्रत्यवसितास्ते सांयुगीनाः ॥ 1549 ॥

१६५२ । भक्ताण्णः । ( ४. ४. १०० )

भक्ते साधवो भाक्ताः शालयः । 'भक्तादणन्यतरस्याम्' ( सू. [illegible] ) इति त्वण् ।

१६५३ । परिषदो ण्यः । ( ४. ४. १०१ )

पारिषद्यः । पारिषद इति योगविभागाण्णोऽपि । पारिषदः । 'परिषदो ण्यः' ( सू. 1594 ) परिषदं समवैति पारिषद्यः ।

१६५४ । कथादिभ्यष्ठक् । ( ४. ४. १०२ )

कथायां साधुः काथिकः ।

अस्मिन्नेव ग्रन्थे श्लो॰ 298. वैतण्डिकैः । कथादिः— ४. ९९.

१६५५ । गुडादिभ्यष्ठञ् । ( ४. ४. १०३ )

गुडे साधुर्गौडिक इक्षुः ।

१६५६ । पथ्यतिथिवसतिस्वपतेर्ढञ् । ( ४. ४. १०४ )

पथि साधु पाथेयम् । आतिथेयम् । वसनं वसतिः तत्र साधुर्वासतेयी रात्रिः । स्वापतेयं धनम् ।

चम्पूरामायणे—IV. 43.

पर्याप्तप्रमदमुपेयुषां कपीनां
पन्थानं दशमुखमार्गमार्गणाय ।
पाथेयीकृतकपिराजशासनानां
पाथोभिर्नयनमथातिथिर्बभूव ॥ 1550 ॥

पाथेयीकृतं पाथेयशब्दाच्च्विः ।

अस्मिन्नेव ग्रन्थे श्लो॰ 58. अतिथिषु साध्वीमातिथेयीम् । ढञि ङीप् ।

रघुवंशे—V. 2.

स मृण्मये वीतहिरण्मयत्वा-
त्पात्रे निधायार्घ्यमनर्घशीलः ।

श्रुतप्रकाशं यशसा प्रकाशः
प्रत्युज्जगामातिथिमातिथेयः ॥ 1551 ॥

अतिथिषु साधुरातिथेयः ।

माघे—XIV. 38.

तत्प्रतीतमनसामुपेयुषां
द्रष्टुमाहवनमग्रजन्मनाम् ।
आतिथेयमनिवारितातिथिः
कर्तुमाश्रमगुरुस्स नाश्रमत् ॥ 1552 ॥

अतिथिषु साधु आतिथेयम् । ढञ् ।

कुमारसंभवे—V. 31.

तमातिथेयी बहुमानपूर्वया
सपर्यया प्रत्युदियाय पार्वती ।
भवन्ति साम्येऽपि निविष्टचेतसां
वपुर्विशेषेष्वतिगौरवाः क्रियाः ॥ 1553 ॥

अतिथिषु साध्वी आतिथेयी । ढञि ङीप् ।

अस्मिन्नेव ग्रन्थे श्लो॰ 1431. अतिथिषु साधूनि आतिथेयानि ।

अनर्घराघवे—IV. 69.

ग—हा वत्से जानकि, निशाचराणामातिथेयीभवितुं दशरथगृहे प्रविष्टासि ॥ 1554 ॥

भट्टिकाव्ये—IV. 8.

वनेषु वासतेयेषु निवसन्पर्णसंस्तरे ।
शय्योत्थायं मृगान्विध्यन् नातिथेयो विचक्रमे ॥ 1555 ॥

वसतौ साधुषु वासतेयेषु । वसतियोग्येषु । अतिथिषु साधुरातिथेयः । ढञ् ।

माघे—XIV. 9.

स्वापतेयमधिगम्य धर्मतः
पर्यपालयमवीवृधश्च यत् ।
तीर्थगामि करवै विधानत-
स्तज्जुषस्व जुहवानि चानले ॥ 1556 ॥

स्वपतौ स्वामिनि साधु स्वापतेयं वित्तम् । ढञ् ।

१६५७ । सभाया यः । ( ४. ४. १०५ )

सभ्यः ।

माघे—XIV. 53.

इत्थमत्र विततक्रमे क्रतौ
वीक्ष्य धर्ममथ धर्मजन्मना ।
अर्घदानमनुचोदितो वच-
स्सभ्यमभ्यधित शन्तनोस्सुतः ॥ 1557 ॥

सभायां साधु सभ्यं वचः । यप्रत्ययः ।

१६५८ । समानतीर्थे वासी । ( ४. ४. १०७ )

वसतीति वासी । समाने तीर्थे गुरौ वसतीति सतीर्थ्यः । 'तीर्थे ये' ( सू. 1015 ) इति समानस्य सः ।

१६५९ । समानोदरे शयित ओ चोदात्तः । ( ४. ४. १०८ )

समाने उदरे शयितः समानोदर्यो भ्राता । 'विभाषोदरे' ( सू. 1016 ) इति वैकल्पिकस्समानस्य सभावः ।

१६६० । सोदराद्यः । ( ४. ४. १०९ )

सोदर्यः । अर्थः प्राग्वत् ।

अस्मिन्नेव ग्रन्थे श्लो० 1190. समानोदरे शयितं **समानोदर्यम्**एकोदरभ्रातरम्। 'समानोदरे' (सू. 1659) इति यप्रत्ययः। 'विभाषोदरे' (सू. 1066) इति विकल्पेन समानस्य सभावाभावः।

अस्मिन्नेव ग्रन्थे श्लो० 1191. **समानोदर्यस्य**।

अस्मिन्नेव ग्रन्थे श्लो० 1192. समानोदरे शयितं **सोदर्यम्** एकोदरम्। अनेन यप्रत्ययः। समानस्य सभावः।

अस्मिन्नेव ग्रन्थे श्लो० 1193. समानोदरे शयितं **सोदर्यम्**। अनेन यः। 'विभाषोदरे' (सू. 1066) इति समानस्य सभावः।

नैषधे—I. 58.

> अथान्तरेणावटुगामिनाध्वना
> निशीथिनीनाथमहस्सहोदरैः।
> निगालगाद्देवमणेरिवोत्थितै-
> र्विराजितं केसरकेशरश्मिभिः॥ 1558॥

**सहोदरैः**।

॥ इति प्राग्घितीयप्रकरणम्॥

॥ अथ छयद्विधिप्रकरणम् ॥

१६६१ । प्राक् क्रीताच्छः । (५. १. १)

'तेन क्रीते' (सू. 1702) इत्यतः प्राक् छोऽधिक्रियते ।

१६६२ । उगवादिभ्यो यत् । (५. १. २)

(ग. सू.) शुनः सम्प्रसारणं वा च दीर्घत्वम् । 96.

शून्यम् । शुन्यम् ।

(ग. सू.) ऊधसोऽनङ् च । 97.

ऊधन्यः ।

चम्पूरामायणे— III. 39.

स्नाणा चेज्जनकतनया किं न तिष्ठेत मद्वं
हिंस्रैस्सत्त्वैर्न खलु निहता रक्तसिक्ता न दूर्वा ।
गोदावर्यां पुलिनविहृतिं रामशून्या न कुर्या-
द्युक्तं नक्तञ्चरकबलनात्संशया संस्थिता सा ॥ 1559 ॥

शून्या । गवादिः— ५. १.

१६६४ । विभाषा हविरपूपादिभ्यः । (५. १. ४)

आमिक्ष्यं दधि । आमिक्षीयम् । पुरोडाश्यास्तण्डुलाः पुरोडाशीयाः । अपूप्यम् अपूपीयम् । अपूपादिः— ५. २.

अस्मिन्नेव ग्रन्थे श्लो० 1042. दध्ना सहितं पयः आमिक्षा । तस्यै हितमामिक्षीयम् । पुरोडाशाय हितं पुरोडाश्यम् । आमिक्षापुरोडाशयोर्हविष्ट्वादनेन छयतौ । हितार्थे छयताविति जयमङ्गलः । तादर्थ्य इति मल्लिनाथः ।

## १६६५। तस्मै हितम्। (५. १. ५)

वत्सेभ्यो हितो वत्सीयो गोधुक्। शङ्कवे हितं शङ्कव्यं दारु। गव्यं हविष्यम्। 'हितयोगे' (वा. 1461. सू. 580) इति चतुर्थी।

अस्मिन्नेव ग्रन्थे श्लो० 692. सवनाय हितः सवनीयः। तदर्थो वा सवनीयः। प्राक्क्रीतीयः छप्रत्ययः। तदीयानि **सावनीयानि**।

अस्मिन्नेव ग्रन्थे श्लो० 1032. कंसाय हितं **कंसीयम्**। छप्रत्ययः।

अनर्घराघवे— II. 35.

प्रज्ञातब्रह्मतत्त्वोऽपि **स्वर्गीयैरेष** खेलति।
गृहस्थसमयाचारप्रक्रान्तैः सप्ततन्तुभिः॥ 1560॥

**स्वर्गीयैः** स्वर्गहितैः। छः।

## १६६६। शरीरावयवाद्यत्। (५. १. ६)

दन्त्यम्। कण्ठ्यम्।

वा०। नस्नासिकायाः। (3497.)

नस्यम्। नाभ्यम्। हितार्थे यत्। 'शरीरावयवाच्च' (सू. 1430) इति भवार्थे यत्। मूर्धन्यः। 'ये चाभावकर्मणोः' (सू. 1154) इति प्रकृतिभावः।

## १६६७। ये च तद्धिते। (६. १. ६१)

यादौ तद्धिते परे शिरश्शब्दस्य शीर्षन्नादेशः स्यात्। शीर्षण्यः।

**वा०। वा केशेषु। (3493.)**

शीर्षण्याः, शिरस्या वा केशाः।

## १६६८। खलयवमाषतिलवृषब्रह्मणश्च। (५. १. ७)

खलाय हितं खल्यम्। यव्यम्। माष्यम्। तिल्यम्। वृष्यम्। ब्रह्मण्यम्। चाद्रथ्या।

१६७० । आत्मन्विश्वजनभोगोत्तरपदात्खः । (५. १. ९)

१६७१ । आत्माध्वानौ खे । (६. ४. १६९)

एतौ खे प्रकृत्या स्तः । आत्मने हितमात्मनीनम् । विश्वजनीनम् । मातृभोगीणः । पितृभोगीणः । राजभोगीनः ।

वा० । पञ्चजनादुपसङ्ख्यानम् । (2996)

पञ्चजनीनम् ।

वा० । सर्वजनाट्ठञ् खश्च । (2997.)

सार्वजनिकः । सर्वजनीनः ।

वा० । महाजनाट्ठञ् । (2998.)

माहाजनिकः ।

(ग. सू.) आचार्यादणत्वञ्च । 184.

आचार्यभोगीनः ।

माघे—V. 44.

नोच्चैर्यदा तरुतलेषु ममुस्तदानी-
मार्धोरणैरभिहिताः पृथुमूलशाखाः ।
बन्धाय चिच्छिदुरिभास्तरसात्मनैव
नैवात्मनीनमथ वा क्रियते मदान्धैः ॥ 1561 ॥

आत्मने हितमात्मनीनम् । प्रकृतिभावे ‘नस्तद्धिते’ (सू. 679) इति टिलोपाभावः ।

अस्मिन्नेव ग्रन्थे श्लो० 1455. विश्वस्मै जनाय हिता विश्वजनीना । आत्मने हितामात्मनीनाम् । प्रकृतिभावादि पूर्ववत् । विश्वजनीनेत्यत्र ख एव ।

माघे—I. 41.

तदिन्द्रसन्दिष्टमुपेन्द्र यद्वचः
क्षणं मया विश्वजनीनमुच्यते ।

समस्तकार्येषु गतेन धुर्यता-
महिद्विषस्तद्भवता निशम्यताम् ॥ 1562 ॥

**विश्वजनीनम्** । पूर्ववत् । विश्वजनेषु साधुः वैश्वजनीनः । 'प्रतिजनादिभ्यः खञ्' (सू. 1651) इति खञ् ।

किरातार्जुनीये—XIII. 69.

आत्मनीनमुपतिष्ठते गुणाः
सम्भवन्ति विरमन्ति चापदः ।
इत्यनेकफलभाजि मा स्म भू-
दर्थिता कथमिवार्यसङ्गमे ॥ 1563 ॥

**आत्मनीनम्** ।

असिन्नेव ग्रन्थे श्लो० 50. स्वभोगाय हितां **स्वभोगीनाम्** । खः ।

असिन्नेव ग्रन्थे श्लो० 814. सर्वभोगाय हितं **सर्वभोगीणम्** ।

अनर्घराघवे—VI. 50.

कुशिकसुतसपर्यादृष्टदिव्यास्त्रतन्त्रो
भृगुपतिसहयुध्वा **वीरभोगीण**बाहुः ।
दिनकरकुलकेतुः कौतुकोत्तानचक्षु-
र्बहुमतरिपुकर्मा कार्मुकी रामभद्रः ॥ 1564 ॥

**वीरभोगीणः** ।

## १६७१ । आत्माध्वानौ खे । (६. ४. १६९)

एतौ खे प्रकृत्या स्तः । 'अध्वनो यत्खौ' (सू. 1817) अलंगामीत्यर्थे यत्खौ स्तः । अध्वानमलं गच्छति अध्वन्यः । अध्वनीनः । 'ये चाभावकर्मणोः' (सू. 1154) अनेन सूत्रेण च प्रकृतिभावः ।

असिन्नेव ग्रन्थे श्लो० 647. अध्वानमलंगामी **अध्वनीनम्** । 'अध्वनो यत्खौ' (सू. 1817) इति खः । अनेन प्रकृतिभावः ।

चम्पूभारते—I. 35.

निन्द्यते पितृभिस्तैस्तैर्निरुन्धन्नध्वगान् द्रुमान् ।
अध्वनीनैरतिश्रान्तैरवकेशीव पादपः ॥ 1565 ॥

अध्वनीनैः ।

भट्टिकाव्ये— XVIII. 34.

उन्मुच्य स्रजमात्मीयां मां स्रजयति को हसन् ।
नेदृक्त्यावके को मे नार्हे मे वदति निषद् ॥ 1566 ॥

आत्मीयाम् । छः । न प्रकृतिभावः ।

१६७२ । सर्वपुरुषाभ्यां णढञौ । ( ५. १. १० )

वा० । सर्वाण्णो वेति वक्तव्यम् । ( 2999. )

सर्वस्मै हितं सार्वम् । सर्वीयम् ।

वा० । पुरुषाद्वधविकारसमूहतेनकृतेषु । ( 3000. )

पुरुषस्य वधः पौरुषेयः इत्यादि ।

माघे— XIV. 4.

बह्वपि प्रियमयं तव ब्रुवन्न व्रजत्यनृतवादितां जनः ।
सम्भवन्ति यददोषदूषिते सार्व सर्वगुणसम्पदस्त्वयि ॥ 1567 ॥

हे सार्व सर्वहित । णप्रत्ययः ।

अस्मिन्नेव ग्रन्थे श्लो० 1333. पुरुषाणां समूहेन पौरुषेयेण । ढञ् ।

१६७५ । छदिरुपधिबलेर्ढञ् । ( ५. १. १३ )

रघुवंशे—XIV. 77.

पुष्पं फलं चार्तवमाहरन्त्यो
बीजं च बालेयमकृष्टरोहि ।

विनोदयिष्यन्ति नवाभिषङ्गा-
मुदारवाचो मुनिकन्यकास्त्वाम् ॥ 1568 ॥

बलये हितं **बालेयम्** ।

अनर्घराघवे—II. 20.

**बालेय**तण्डुलविलोपकदर्थिताभि-
रेताभिरग्निशरणेषु सधर्मिणीभिः ।
तत्त्रासहेतुमपि दण्डमुदस्यमान-
माघ्रातुमिच्छति मृगे मुनयो हसन्ति ॥ 1569 ॥

**बालेया** । ढञ् ।

**१६७९ । परिखाया ढञ् । (५. १. १७)**

पारिखेयी भूमिः ।

॥ इति छयद्विधिप्रकरणम् ॥

---

## ॥ अथार्हीयप्रकरणम् ॥

१६८० । प्राग्वतेष्ठञ् । (५. १. १८)

'तेन तुल्यं' (सू. 1778) इति वतिं वक्ष्यति । ततः प्राक् ठञधिक्रियते ।

१६९२ । शतमानविंशतिकसहस्रवसनादण् । (५. १. २७)

एभ्योऽण् स्यात् । शतमानेन क्रीतं शातमानम् । वैंशतिकम् । साहस्रम् । वासनम् ।

अनर्घराघवे—VII. 5.

त्वदर्थीयक्रव्यात्कपिकुलकबन्धव्यतिकरैः
करालेयं भूमिर्भुवनभयमद्यापि तनुते ।
अभूवन्नम्भोधेरिह रुचिरमव्ये भुवनयः
सहस्रं साहस्रास्त्रिदिवयुवतीनां च पतयः ॥ 1570 ॥

साहस्राः सहस्रपरिमाणाः । सहस्रं परिमाणं येषां ते साहस्राः । अण् ।

अस्मिन्नेव ग्रन्थे श्लो० 1184. चतुर्दशसाहस्रम् । चतुर्दश सहस्राणि परिमाणमस्येत्यस्मिन्नर्थे अनेनाण् । 'संख्यायाः संवत्सरसंख्यस्य च' (सू. [illegible]) इत्युत्तरपदवृद्धिः ।

अस्मिन्नेव ग्रन्थे श्लो० 1418. शतसहस्रं परिमाणमस्येति शतसाहस्रम् । अण् । उत्तरपदवृद्धिः ।

१७०६ । पुत्राच्छ च । (५. १. ४०)

चाद्यत् । पुत्रीयः पुत्र्यः ।

रघुवंशे—X. 4.

ऋष्यशृङ्गादयस्तस्य सन्तस्सन्तानकाङ्क्षिणः ।
आरेभिरे यतात्मानः पुत्रीयामिष्टिमृत्विजः ॥ 1571 ॥

पुत्रीयां पुत्रनिमित्ताम् । छप्रत्ययः ।

चम्पूरामायणे—I. 12.

ग— सोऽपि सुमन्त्रवचनाच्छान्ताधिः शान्ताकुटुम्बिनं सम्बन्धिनं मुनिमानीय वसिष्ठादिष्टमश्वमेधाध्वरं सरयूरोधसि विधाय तत्र पुत्रीयामिष्टिं विधिवत्कर्तुमारभत ॥ 1572 ॥

पुत्रीयाम् ।

१७०७ । सर्वभूमिपृथिवीभ्यामणञौ । (५. १ ४१)

सर्वभूमेर्निमित्तं संयोग उत्पातो वा सार्वभौमः । पार्थिवः । सर्वभूमिशब्दोऽनुशतिकादिषु पठ्यते ।

१७०८ । तस्येश्वरः । (५. १. ४२)

१७०९ । तत्र विदित इति च । (५. १ ४३)

सर्वभूमेरीश्वरः सर्वभूमौ विदितो वा सार्वभौमः पार्थिवः ।

रघुवंशे—IX. 4.

जनपदे न गदः पदमादधा-
वभिभवः कुत एव सपत्नजः ।
क्षितिरभूत्फलवत्यजनन्दने
शमरतेऽमरतेजसि पार्थिवे ॥ 1573 ॥

पृथिव्या ईश्वरे पार्थिवे । अण् ।

अस्मिन्नेव ग्रन्थे श्लो० 675. पार्थिवानाम् । पूर्ववत् ।

१७१० । लोकसर्वलोकाट्ठञ् । (५. १. ४४)

तत्र विदित इत्यर्थे लौकिकः । सार्वलौकिकः । अनुशतिकादित्वादुभयपदवृद्धिः ।

अस्मिन्नेव ग्रन्थे श्लो० 260. सार्वलौकिकः सर्वस्मिन् लोके विदितः । ठञ् । उभयपदवृद्धिः ।

१७२४ । संख्यायाः संज्ञासङ्घसूत्राध्ययनेषु । (५. १. ५८)

इति कन् ।

अस्मिन्नेव ग्रन्थे श्लो० 154. पञ्चानां सङ्घः पञ्चकम् । मनुष्ये कन्प्रत्ययः ।

माघे—XVIII. 70.

रामेण त्रिस्सप्तकृत्वो ह्रदानां
चित्रं चक्रे **पञ्चकं** क्षत्रियास्त्रैः ।
रक्ताम्भोभिस्तत्क्षणादेव तस्मिन्
संख्येऽसंख्याः प्रावहन्दीपवत्यः ॥ 1574 ॥

पञ्चकम् । पूर्ववत् ।

१७२५ । पङ्क्तिविंशतित्रिंशच्चत्वारिंशत्पञ्चाशत्षष्टिसप्तत्यशीतिनवतिशतम् । (५. १. ५९.)

एते रूढिशब्दा निपात्यन्ते ।

भट्टिकाव्ये—VII. 91.

त्रिंशतममहोऽतीतं मत्वा प्रत्यागमावधिम् ।
अकृतार्था विषीदन्तः परलोकमुपास्महे ॥ 1575 ॥

**त्रिंशत्** ।

भट्टिकाव्ये—IX. 3.

ततोऽशीतिसहस्राणि किङ्कराणां समादिशत् ।
इन्द्रजिन्मूर्विनाशाय मारुतेः क्रोधमूर्छितः ॥ 1576 ॥

**अशीतिः** ।

चम्पूरामायणे—I. 21.

ग— एष मृगाङ्कोऽपि मृगयायासपरिश्रान्तिविश्रान्त्यै ससम्भ्रमं नमज्जनपरिवृते मज्जनगृहाभिमुखे दशमुखे तत्रत्यविचित्रतरशातकुम्भस्तम्भाग्रप्रत्यग्रप्रत्युप्तस्फटिकशिलासालु-

भ्ञ्जिकापुञ्जकरतलकलितनिजोपलमयकलशमुखादच्छाच्छामविच्छिन्नधारामम्बुधारां निजकराभिमर्शादापादयन् प्रसादपिशुनानां शुनासीरचिरकाङ्क्षितानां विंशतिविंधवीक्षणानां क्षणमात्रे पात्रे भवति ॥ 1577 ॥

**विंशतिः ।**

## १७२६ । पञ्चद्दशतौ वर्गे वा । (५. १. ६०)

पञ्च परिमाणमस्य पञ्चद्वर्गः । दशत् । पक्षे, 'संख्यायाः' (सू. 1724) इति के पञ्चकः ।

## १७२८ । तदर्हति । (५. १. ६३)

लब्धुं योग्यो भवतीत्यर्थे द्वितीयान्ताट्ठगादयः स्युः । श्वेतच्छत्रमर्हति श्वैतच्छत्रिकः । ठञ् । 'तदर्हं' (सू. 1780) इति वतौ विधिमर्हति विधिवत् ।

## १७२९ । छेदादिभ्यो नित्यम् । (५. १. ६४)

छेदं नित्यमर्हति छैदिको वेतसः ।

## १७३० । शीर्षच्छेदाद्यच्च । (५. १. ६५)

शिरश्छेदं नित्यमर्हति शीर्षच्छेद्यः शैर्षच्छेदिकः । यट्ठकोस्संनियोगेन शिरसः शीर्षभावो निपात्यते । 'वध्यः शीर्षच्छेद्य इमौ समौ' III. i. 45. इत्यमरः ।

अस्मिन्नेव ग्रन्थे श्लो० 705. शीर्षच्छेद्यं शीर्षच्छेदार्हम् । यत् ।

रघुवंशे—XV. 51.

तपस्यनधिकारित्वात्प्रजानां तमघावहम् ।
शीर्षच्छेद्यं परिच्छिद्य नियन्ता शस्त्रमाददे ॥ 1578 ॥

**शीर्षच्छेद्यम् ।**

## १७३१ । दण्डादिभ्यो यत् । (५. १. ६६)

एभ्यो यत्स्यात्। दण्डमर्हतीति दण्ड्यः। अर्घ्यः। वध्यः। दण्डादिः— ५. ७.

रघुवंशे—I. 25.

स्थित्यै दण्डयतो दण्ड्यान् परिणेतुः प्रसूतये।
अप्यर्थकामौ तस्यास्तां धर्म एव मनीषिणः॥ 1579॥

दण्डमर्हन्तीति दण्ड्याः। यत्।

अस्मिन्नेव ग्रन्थे श्लो० 564. वध्यः वधार्हः।

माघे—XV. 20.

स्वयमेव शन्तनुतनूज यमिह गणमर्घ्यमभ्यधाः।
तत्र मुररिपुरयं कतमो यमनिन्द्य वन्दिवदभिष्टुपे वृथा॥ 1580॥

अर्घ्यमर्घार्हम्। यत्।

अस्मिन्नेव ग्रन्थे श्लो० 984. अर्घ्यं पूजार्हम्। अनेन यत्। अर्घार्थं पूजार्थं द्रव्यमर्घ्यम्। 'पादार्घाभ्यां च' (सू. 2993) इति तादर्थ्ये यत्।

## १७३३। कडङ्करदक्षिणाच्छ च। (५. १. ६९)

चाद्यत्। कडं करोतीति विग्रहेऽत एव निपातनात्खच्। कडङ्करं माषमुद्गादिकाष्ठमर्हतीति कडङ्करीयो गौः। कडङ्कर्यः। दक्षिणामर्हतीति दक्षिणीयः। दक्षिण्यः। 'दक्षिणीयो दक्षिणार्हस्तत्र दक्षिण्य इत्यपि' III. i. 5. इत्यमरः।

अस्मिन्नेव ग्रन्थे श्लो० 1469. कडङ्करं बुसमर्हन्तीति कडङ्करीया गोमहिषादयः। छः।

अस्मिन्नेव ग्रन्थे श्लो० 76. दक्षिणीयम्। छः।

अनर्घराघवे—VII. 140.

वीरमिन्द्रजितं जित्वा दिष्ट्या वर्धयतो जगत्।
अभये दक्षिणीयस्ते गीर्वाणग्रामणीरपि॥ 1581॥

दक्षिणीयो दक्षिणार्हः। इन्द्रजिज्जयेन इन्द्रस्याप्यभये दक्षिणा भवता दत्तेति।

भट्टिकाव्ये—II. 29.

प्रतुष्टुवुः कर्म ततः प्रकृष्टैस्तैर्यज्ञियैर्द्रव्यगुणैर्यथावत् ।
दक्षिण्यदिष्टं कृतमार्त्विजीनैस्तथातुधानैश्चिचिते प्रसर्पत् ॥ 1582 ॥

दक्षिणामर्हन्तीति **दक्षिण्याः** महामुनयः । यत् ।

१७३४ । स्थालीबिलात् । (५. १. ७०)

स्थालीबिलमर्हन्ति स्थालीबिलीयाः स्थालीबिल्याः तण्डुलाः । पाकयोग्या इत्यर्थः ।

१७३५ । यज्ञर्त्विग्भ्यां घखञौ । (५. १. ७१)

यथासंख्यं स्तः । यज्ञमृत्विजं वा अर्हति यज्ञियः आर्त्विजीनो यजमानः ।

**वा०** । यज्ञर्त्विग्भ्यां तत्कर्मार्हतीत्युपसंख्यानम् । (3052.)

यज्ञियो देशः । आर्त्विजीन ऋत्विक् ।

भट्टिकाव्ये—XIV. 99.

प्रतोदा जगलुर्वाममानञ्चुर्यज्ञिया मृगाः ।
ददाल भूः पुपूरे द्यौः कपीनामपि निस्वनैः ॥ 1583 ॥

**यज्ञिया** यज्ञार्हा मृगाः । घः ।

भट्टिकाव्ये—VII. 45.

वेदिवत्सपरिग्राहा यज्ञियैस्संस्कृता द्विजैः ।
दश्या मासतमादहः प्रागनिन्दितवेषभृत् ॥ 1584 ॥

**यज्ञियैः** यज्ञार्हैः । घः । द्विजैः ।

अस्मिन्नेव ग्रन्थे श्लो० 1582. **यज्ञियैः** यज्ञकर्मार्हैः द्रव्यगणैः पशुसोमादिभिः । **आर्त्विजीनैः** ऋत्विक्कर्मार्हैः । उभयत्र यथासङ्ख्यं घखञौ ।

॥ इत्यार्हीयप्रकरणम् ॥

---

॥ अथ ठञधिकारप्रकरणम् ॥

१७३७ । संशयमापन्नः । ( ५. १. ७३ )

सांशयिकः ।

१७३८ । योजनं गच्छति । ( ५. १. ७४ )

यौजनिकः ।

वा० । क्रोशशतयोजनशतयोरुपसङ्ख्यानम् । ( 3055. )

क्रोशशतं गच्छति क्रौशशतिकः । यौजनशतिकः ।

१७३९ । पथः ष्कन् । ( ५. १. ७५ )

षो ङीषर्थः । पन्थानं गच्छति पथिकः । पथिकी । 'पथः पन्थ च' ( सू. 1402 ) पथि जातः पन्थकः । वुन् ।

माघे—VI. 29.

पटलमम्बुमुचां पथिकाङ्गना
सपदि जीवितसंशयमेष्यति ।
सनयनाम्बुसखीजनसम्भ्रमा-
द्विधुरबन्धुरबन्धुरमैक्षत ॥ 1585 ॥

पथिकः । 'तत्र कुशलः पथः' ( सू. 1363 ) इति वुन् । पथि कुशलः पथिकः ।

१७४० । पन्थो ण नित्यम् । ( ५. १. ७६ )

पन्थानं नित्यं गच्छति पान्थः । पान्था ।

अस्मिन्नेव ग्रन्थे श्लो० 1195. पान्थाम् ।

## १७४२ । कालात् । (५. १. ७८)

'व्युष्टादिभ्योऽण्' (सू. 1769) इत्यतः प्रागधिकारोऽयम् ।

## १७४३ । तेन निर्वृत्तम् । (५. १. ७९)

अह्ना निर्वृत्तमाह्निकम् । ठञ् । 'तेन निर्वृत्तम्' (सू. 1280) कुशाम्बेन निर्वृत्ता कौशाम्बी नगरी । अण् ।

अनर्घराघवे—II. 30.

ग—यज्ञवाटमधिष्ठाय क्रमेण कृताह्निकस्य भगवतः कौशिकस्य प्रत्यनन्तरीभावः ॥ 1586 ॥

अह्ना दिवसेन निर्वृत्तमाह्निकम् । ठञ् । 'अह्नष्टखोरेव' (सू. 789) इति नियमात् टिलोपाभावः ।

अस्मिन्नेव ग्रन्थे श्लो० 1420. आह्निककृत्यम् । अह्ना निर्वृत्तमाह्निकम् । अह्नि भवमाह्निकम् । कालाट्ठञ् ।

## १७४४ । तमधीष्टो भृतो भूतो भावी । (५. १. ८०)

अधीष्टः सत्कृत्य व्यापारितः । भृतो वेतनेन क्रीतः । भूतः स्वसत्तया व्याप्तकालः । भावी तादृश एवानागतकालः । मासमधीष्टो मासिकोऽध्यापकः । मासं भृतो मासिकः कर्मकरः । मासं भूतो मासिको व्याधिः । मासं भावी मासिक उत्सवः ।

## १७४५ । मासाद्वयसि यत्खञौ । (५. १. ८१)

मासं भूतो मास्यः मासीनः ।

## १७४६ । द्विगोर्यप् । (५. १. ८२)

द्वौ मासौ भूतो द्विमास्यः ।

## १७४७ । षण्मासाण्ण्यच्च । (५. १. ८३)

षण्मास्यः । यप् । षाण्मास्यः । ण्यत् । षाण्मासिकः । ठञ् ।

१७५२ । सङ्ख्यायाः संवत्सरसङ्ख्यस्य च । ( ७. ३. १५

उत्तरपदस्य वृद्धिः स्यात् ।

अस्मिन्नेव ग्रन्थे श्लो० 1034. चतुर्दशसमाहम् ।

अस्मिन्नेव ग्रन्थे श्लो० 1418 शतसमाहम् ।

१७५३ । वर्षाल्लुक् च । ( ५. १. ८८ )

वर्षशब्दान्ताद् द्विगोर्वा खः । पक्षे ठञ् वा च लुक् । त्रीणि रूपाणि । द्विवर्षीणो व्याधिः । द्विवार्षिकः । द्विवर्षः ।

१७५५ । चित्तवति नित्यम् । ( ५. १. ८९ )

वर्षशब्दान्ताद् द्विगोः प्रत्ययस्य नित्यं लुक् स्याच्चेतने प्रत्ययार्थे । द्विवर्षो दारकः ।

अस्मिन्नेव ग्रन्थे श्लो० 741. षड्वर्षाणि भूतः षड्वर्षः । 'तद्धितार्थ' (सू. 728) इति समासः । 'तमधीष्टो' (सू. 1744) इत्यनुवृत्तौ अनेन तद्धितस्य लुक् । 'विको विंशतिवर्षस्तु' इति निघण्टुः । विंशतिवर्षाणि भूतो विंशतिवर्षः ।

१७५९ । तस्य च दक्षिणा यज्ञाख्येभ्यः । ( ५. १. ९५ )

द्वादशाहस्य दक्षिणा द्वादशाहिकी । अकालादपि । आग्निष्टोमिकी । वाजपेयिकी ।

अस्मिन्नेव ग्रन्थे श्लो० 76. राजसूयस्य दक्षिणा राजसूयिकीः । ठञि ङीप् ।

१७६३ । सम्पादिनि । ( ५. १. ९९ )

तेनेत्येव । कर्णवेष्टकाभ्यां सम्पादि कार्णवेष्टकिकं मुखम् । कर्णालङ्काराभ्या-मवश्यं शोभत इत्यर्थः ।

अस्मिन्नेव ग्रन्थे श्लो० 1450. चन्दनेन सम्पाद्यवश्यं गात्रशोभं भवतीति चान्दनिकम् । कर्णवेष्टनाभ्यां सम्पादि कार्णवेष्टनिकम् । उभयत्रापि ठक् ।

१७६५ । तस्मै प्रभवति सन्तापादिभ्यः । (५. १. १०१)

सन्तापाय प्रभवति सान्तापिकः । साङ्ग्रामिकः । सन्तापादिः— ५. ११.

अनर्घराघवे—IV. 57.

ग—भो भोः पौरजानपदाः, प्रवर्त्यतां माङ्गलिकमातोद्यम् । प्रसज्यतामद्यापि वैदेहीविवाहमहोत्सवो जामदग्न्यविजयोत्सवेन ॥ 1587 ॥

मङ्गलाय प्रभवति माङ्गलिकम् । अनेन ठक् इत्यनर्घराघवव्याख्यायाम् । किंतु सन्तापादौ न मङ्गलशब्दो दृश्यते ।

अस्मिन्नेव ग्रन्थे श्लो० 77. मङ्गलं प्रयोजनमासां माङ्गलिक्यः । 'प्रयोजनम्' (सू. 1772) इति ठगिति मल्लिनाथादिव्याख्या ।

अनर्घराघवे—V. 48.

नयो हि साङ्ग्रामिक एष दोष्मतां
यदात्मजातिप्रतिबद्धमायुधम् ।
अयःकुशीभिः कपयो न शस्त्रिण-
स्तलं च मुष्टिश्च नखाश्च सन्ति नः ॥ 1588 ॥

सङ्ग्रामाय प्रभवति साङ्ग्रामिकः । ठक् ।

१७६६ । योगाद्यच्च । (५. १. १०२)

चाट्ठञ् । योगाय प्रभवति योग्यः । यौगिकः ।
अस्मिन्नेव ग्रन्थे श्लो० 1111. योगाय प्रभवतीति योग्यः । यत् ।

१७६७ । कर्मण उकञ् । (५. १. १०३)

कर्मणे प्रभवति कार्मुकम् ।

माघे—VI. 16.

कुसुमकार्मुककार्मुकसंहित-
द्रुतशिलीमुखखण्डितविग्रहाः ।

मरणमप्यपरा: प्रतिपेदिरे
किमु मुहुर्मुमुहुर्गतभर्तृकाः ॥ 1589 ॥

**कार्मुकम्** । उकञ् ।

१७६८ । समयस्तदस्य प्राप्तम् । (५. १. १०४)

समयः प्राप्तोऽस्य सामयिकम् ।

१७६९ । ऋतोरण् । (५. १. १०५)

ऋतुः प्राप्तोऽस्यार्तवम् ।

रघुवंशे—IX. 29.

कुसुममेव न केवलमार्तवं
नवमशोकतरोः स्मरदीपनम् ।
किसलयप्रसवोऽपि विलासिनां
मदयिता दयिताश्रवणार्पितः ॥ 1590 ॥

ऋतुरस्य प्राप्त आर्तवम् । अण् ।

कुमारसंभवे—IV. 18.

रचितं रतिपण्डित त्वया स्वयमङ्गेषु ममेदमार्तवम् ।
ध्रियते कुसुमप्रसाधनं तव तच्चारुवपुर्न दृश्यते ॥ 1591 ॥

**आर्तवम्** ।

अस्मिन्नेव ग्रन्थे श्लो० 1422. शरदि भवः **शारदः** । 'सन्धिवेलाद्यृतुनक्षत्रेभ्यः' (सू. 1387) इत्यण् ।

१७७२ । **प्रयोजनम्** । (५. १. १०९)

तदस्येत्येव । इन्द्रमहः प्रयोजनमस्य ऐन्द्रमहिकम् । प्रयोजनं फलं कारणञ्च ।

अस्मिन्नेव ग्रन्थे श्लो० 77. मङ्गलं प्रयोजनमासां **माङ्गलिक्यः** । अनेन ठञ् । 'टिड्ढा' (सू. 470) इति ङीप् ।

अस्मिन्नेव ग्रन्थे श्लो० 1392. संयात्रा सम्भूययात्रा प्रयोजनं येषां तान् **सांयात्रिकान्** । अनेन ठक् ।

अनर्घराघवे—V. 2.

ग—ततश्चोदकान्तनिवर्तितानुयात्रिकबन्धुवर्गः ससम्भ्रमोपगतेन गुहेनोपनीतां नावमधिरुह्य ॥ 1592 ॥

अनुयात्रया चरत्यानुयात्रिकः । 'चरति' (सू. 1556) इति ठक् इति व्याख्यायाम् ।

अस्मिन्नेव ग्रन्थे श्लो० 1505. विमानैश्चरन्तीति **वैमानिकाः** । 'चरति' (सू. 1556) इति ठक् ।

माघे—IV. 11.

यतः परार्ध्यानि भृतान्यनूनैः
प्रस्थैर्मुहुर्भूरिभिरुच्छिखानि ।
आढ्यादिव **प्रापणिकादजस्रं**
जग्राह रत्नान्यमितानि लोकः ॥ 1593 ॥

प्रापणो व्यवहारः प्रयोजनमस्य **प्रापणिकः** वणिक् । अनेन ठक् । 'प्राङ्पणिकषः' (उ. सू. 199) इत्यौणादिकः किकन् । प्रापणिकः ।

## १७७३ । विशाखाषाढादण्मन्थदण्डयोः । (५. १. ११०)

आभ्यामण्स्यात्प्रयोजनमित्यर्थे क्रमान्मन्थदण्डयोरर्थयोः । विशाखा प्रयोजनमस्य **वैशाखो मन्थः । आषाढो दण्डः** ।

**वा० । चूडादिभ्य उपसङ्ख्यानम् ।**

चूडा चौडम् । श्रद्धा श्राद्धम् । 'वैशाखमन्थमन्थानम्' II. ix. 74. 'पालाशो दण्ड आषाढ' II. vii. 45. इत्यमरः ।

अस्मिन्नेव ग्रन्थे श्लो० 1006. आषाढः प्रयोजनमस्येत्याषाढः पलाशदण्डः । अण् ।

## १७७७ । आकालिकडाद्यन्तवचने । (५.१.११४)

समानकालावाद्यन्तौ यस्येत्याकालिकः । समानकालस्याकालादेशः । आशुविनाशीत्यर्थः ।

वा० । आकालाट्ठंश्च । (४०७३.)

आकालिका विद्युत् ।

अस्मिन्नेव ग्रन्थे श्लो० 78. समानकालावाद्यन्तौ यस्याः आकालिकीम् । उत्पत्त्यनन्तरं विनाशिनीमित्यर्थः । समानकालाट्ठक् । प्रकृतेराकालादेशः । ङीप् । अन्ये केचिदकालशब्दादेवाध्यात्मादित्वाद्भवार्थे ठञित्याहुः ।

अस्मिन्नेव ग्रन्थे श्लो० 79. आकालिकीम् । पूर्ववत् ।

॥ इति ठञः पूर्णोऽवधिः ॥

---

## ॥ अथ नञ्स्नञधिकारप्रकरणम् ॥

---

### १७७८ । तेन तुल्यं क्रिया चेद्वतिः । (५. १. ११५)

ब्राह्मणेन तुल्यं ब्राह्मणवदधीते । क्रिया चेदिति किम् । गुणतुल्ये मा भूत् । पुत्रेण तुल्यः स्थूलः ।

भट्टिकाव्ये—I. 3.

वसूनि तोयं घनवद्व्यतारीत्
सहासनं गोत्रभिदाध्यवात्सीत् ।
न त्र्यम्बकादन्यमुपास्थितासौ
यशांसि सर्वेषुभृतां निरास्थत् ॥ 1594 ॥

असौ वसूनि तोयं घनवद्व्यतारीत् वितीर्णवान् ।

अस्मिन्नेव ग्रन्थे श्लो० 1292. वृद्धतमोऽपि राजा यविष्ठवत् युवतमवत् मिथिलामगच्छत् ।

अस्मिन्नेव ग्रन्थे श्लो० 917. रथं कद्रथवद्बभञ्ज ।

अस्मिन्नेव ग्रन्थे श्लो० 839. वाली राममसाधुना तुल्यमसाधुवत् उपालब्ध ।

भट्टिकाव्ये—VII. 2.

तर्पणं प्रजनिष्णूनां सस्यानाममलं पयः ।
रोचिष्णवस्सविस्फूर्जा मुमुचुर्भिन्नवद्घनाः ॥ 1595 ॥

घनाः भिन्नवत् भिन्नैस्तुल्यं जलं मुमुचुः ।

अस्मिन्नेव ग्रन्थे श्लो० 352. अदयालुवत् निर्दयेन तुल्यम् ।

अस्मिन्नेव ग्रन्थे श्लो० 675. अपरा नार्यः भूम्या तुल्यं भूमिवत् कम्पमापुः ।

माघे—XIX. 1.

अथोत्तस्थे रणाटव्याममुहृद्वेणुदारिणा ।
नृपाङ्घ्रिपौघसङ्घर्षादग्निवद्वेणुदारिणा ॥ 1596 ॥

अग्निवद् अग्नितुल्यं उत्तस्थे उत्थितम् ।

माघे—XX. 62.

ज्वलदम्बरकोटरान्तरालं
बहुलार्द्राम्बुदपत्रबद्धधूमम् ।
परिदीपितदीर्घकाष्ठमुच्चै-
स्तरुवद्विश्वमुवोष जातवेदाः ॥ 1597 ॥

जातवेदाः जगत् तरुणा तुल्यं तरुवत् उवोष ददाह ।

१७७९ । तत्र तस्येव । (५. १. ११६)

मधुरायामिव मधुरावत् स्रुघ्ने प्राकारः । चैत्रस्येव चैत्रवत् मैत्रस्य भावः ।

माघे—XX. 59.

खचरैः क्षयमक्षयेऽहिसैन्ये
सुकृतैर्दुष्कृतवत्तदोपनीते ।
अयुगार्चिरिव ज्वलन्रुषासौ
रिपुरौदर्चिषमाजुहाव मन्त्रम् ॥ 1598 ॥

खचरैः अहिसैन्ये सुकृतैः दुष्कृतवत् । तत्रार्थे वतिप्रत्ययः ।

अस्मिन्नेव ग्रन्थे श्लो० 722. महीपाः कवय इव राज्ये काव्ये इव काव्यवत् । तत्रार्थे वतिः ।

अस्मिन्नेव ग्रन्थे श्लो० 988. अतुहिनधाम्नि दिग्वधूनां पाणिं गृह्णातीति पाणिग्राहो निजभर्ता तस्मिन्निव पाणिग्राहवत् । तत्रार्थे वतिः ।

नैषधे—IV. 71.

दहति कण्ठमयं खलु तेन किं
गरुडवद्द्विजवासनयोज्झितः ।

प्रकृतिरस्य विधुन्तुद दाहिका
मयि निरागसि का वद विमता ॥ 1599 ॥

ते कण्ठं **गरुडवत्** गरुडस्येव । तस्यार्थे वतिः ।

**१७८० । तदर्हम् । ( ५. १. ११७ )**

विधिमर्हति विधिवत् पूज्यते । क्रियाग्रहणं मण्डूकप्लुत्यानुवर्तते ।

किरातार्जुनीये—II. 58.

अवहितहृदयो विधाय सोऽर्हा-
**मृषिवदृषिप्रवरे** गुरूपदिष्टाम् ।
तदनुमतमलंचकार पश्चात्
प्रशम इव श्रुतमासनं नरेन्द्रः ॥ 1600 ॥

**ऋषिवत्** ऋष्यर्हाम् । अर्हार्थे वतिप्रत्ययः । अर्हां पूजाम् ।

अस्मिन्नेव ग्रन्थे श्लो० 337. राजानमर्हतीति **राजवत्** राजार्हम् । अनेन वतिप्रत्ययः । 'तद्धित' (सू. 448) इत्यव्ययत्वम् । अर्घ्यम् ।

रघुवंशे—V. 3.

तमर्चयित्वा **विधिवद्विधिज्ञ-**
स्तपोधनं मानधनाग्रयायी ।
विशांपतिर्विष्टरभाजमारात्
कृताञ्जलिः कृत्यविदित्युवाच ॥ 1601 ॥

**विधिवत्** विध्यर्हम् । अनेन वतिप्रत्ययः ।

अस्मिन्नेव ग्रन्थे श्लो० 532. **यथावत्** यथार्हम् । वतिः ।

अस्मिन्नेव ग्रन्थे श्लो 339. **यथावत्** यथार्हम् । 'तदर्हति' (सू. 1728) इत्यनेन लब्धुं योग्यो भवतीत्यर्थे द्वितीयान्ताट्ठञादयः । श्वेतच्छत्रमर्हति श्वैतच्छत्रिकः । दण्डमर्हति दण्ड्यः वध्य इत्यादयः ।

**१७८१ । तस्य भावस्त्वतलौ । ( ५. १. ११९ )**

**गोर्भावो गोत्वं गोता । त्वान्तं क्लीबम् । तलन्तं स्त्रियाम् ।**

चम्पूभारते—III. 122.

> हतदानवनिशाचरवर्गस्तत्र पाण्डवचमूना निहतोऽपि ।
> तन्निपक्षयुगनागगणानां संख्यया प्रतिभटत्वमकार्षीत् ॥ 1602 ॥

प्रतिभटानां भावः **प्रतिभटत्वम्** ।

अस्मिन्नेव ग्रन्थे श्लो० 1242. लघुनाशनगुरुचूर्णताम् ।

माघे—VI. 67.

> अतिसुरभिरभाजि पुष्पश्रिया-
> **मतनुतरतयेव** सन्तानकः ।
> तरुणपरभृतः स्वनं रागिणा-
> मतनुत रतये वसन्तानकः ॥ 1603 ॥

**अतनुतरतया** महत्तरत्वेन । अतनुशब्दात्तरबन्तात्तल्प्रत्ययः ।

**१७८३ । न नञ्पूर्वात्तत्पुरुषादचतुरसङ्गतलवणवटयुधकतरसलसेभ्यः । (५. १. १२१)**

इतः परं ये भावप्रत्ययास्ते नञ्तत्पुरुषान्न स्युश्चतुरादीन्वर्जयित्वा । 'नञस्शुचीश्वर' (सू. 460) इत्युत्तरपदस्य वृद्धिः । पूर्वपदस्य वैकल्पिकी । अशुचेर्भावः अशौचम् आशौचम् । अनैपुणम् आनैपुणम् । अकौशलम् आकौशलम् ।

**१७८४ । पृथ्वादिभ्य इमनिज्वा । (५. १. १२२)**

वावचनमणादिसमावेशार्थम् । पृथ्वादिः—५. १६.

अस्मिन्नेव ग्रन्थे श्लो० 20. **प्रथिमानम्** । पृथोर्भावः प्रथिमा ।

अस्मिन्नेव ग्रन्थे श्लो० 1261. **लघिम्ना** ।

भट्टिकाव्ये—XVIII. 25.

> चञ्चूर्यन्तेऽभितो लङ्कामस्मांश्चाप्यतिशेरते ।
> **भ्रमयन्ति** स्वसामर्थ्यं कीर्तिं नः कनयन्ति च ॥ 1604 ॥

भूमयन्ति । बहोर्भावः भूमा । अनेनेमनिच् । 'बहोर्लोप' ( सू. 2017 ) इति भूरादेशः । भूमास्यास्तीति भूमवत् । 'तदस्यास्त्यस्मिन्निति मतुप्' ( सू. 1894 ) भूमवत्कुर्वन्ति भूमयन्ति । भूमवच्छब्दात् 'तत्करोति' ( ग. सू. 204 ) इति णिचि लट् । णाविष्ठवद्भावात् 'विन्मतोर्लुक्' ( सू. 2020 ) इति मतुपो लुक् ।

चम्पूभारते—XI. 13.

तत्तादृशं तरणिभूभुजचण्डिमानं
संवीक्ष्य सर्वरिपुदृक्षु च भीतिभाक्षु ।
आसीत्प्रमोदपरिमेदुरमेकमेव
वामेतरं रणतले वनमालिनेत्रम् ॥ 1605 ॥

चण्डस्य भावश्चण्डिमा ।

चम्पूभारते—II. 2.

सुते पितृस्वादिमसम्प्रदाय-
शुशुत्सयेव श्वसनाशनेन्द्राः ।
समीरसूनुं समुपेत्य जिह्वा-
बहिःप्रसारान्बहुशो वितेनुः ॥ 1606 ॥

स्वादोर्भावः स्वादिमा । अग्रिमपश्चिमादिशब्दा डिमच्प्रत्ययान्ताः ।

## १७८५ । र ऋतो हलादेर्लघोः । ( ६. ४. १६१ )

हलादेर्लघोः ऋकारस्य रः स्यात् इष्ठेमेयस्सु ।

अस्मिन्नेव ग्रन्थे श्लो० 20. पृथोर्भावः प्रथिमा ।

चम्पूभारते—II. 12.

ग— रे रे क्षत्रियसत्तम, पुरा महत्तरमग्निदेश्यमग्निवेश्यं नाम मुनिमस्तपरिश्रमाय प्रश्रयेण सह शुश्रूषमाणस्त्वं मत्कृते पितुरनन्तरं ममाधिराज्यपदस्य प्रथममर्धं भवते वितीर्य ततः परमर्धमहमनुभविष्यामीति यद्यथा प्रत्यश्रृणुथास्तत्तथा निर्वर्तितं खलु धिग्विप्रमिति क्षुरप्रायेण विप्रियवचनेन प्रथीयसीं मनसि व्यथां मम वितीर्णवता महार्णवपरिधानवतीं वसुमतीं स्वयमेवानुभवता ननु भवता ॥ 1607 ॥

प्रथीयसीम् । पृथुशब्दादीयसुनि ङीप् ।

माघे—IX. 61.

ननु सन्दिशेति सुदृशोदितया
त्रपया न किञ्चन किलाभिदधे ।
निजमैक्षि मन्दमनिशं निशितैः
क्रशितं शरीरमशरीरशरैः ॥ 1608 ॥

क्रशितं कृशीकृतम् । कृशशब्दात् तत्करोतीति ण्यन्तात् कर्मणि क्तः । आविष्ठवद्भावेऽनेन ऋकारस्य रेफादेशः ।

१७८७ । वर्णदृढादिभ्यः ष्यञ् च । ( ५. १. १२३ )

चादिमनिच् । शौक्ल्यं शुक्लिमा । दार्ढ्यम् ।

वा० । पृथुमृदुभृशकृशदृढपरिवृढानामेव रत्वम् । ( 4211. )

द्रढिमा । षो ङीषर्थः । औचिती ।

अस्मिन्नेव ग्रन्थे श्लो० 980. कृष्णिमानम् ।

माघे—I. 74.

हृदयमरिवधोदयादुदूढ-
द्रढिम दधातु पुनः पुरन्दरस्य ।
घनपुलकपुलोमजाकुचाग्र-
द्रुतपरिरम्भनिपीडनक्षमत्वम् ॥ 1609 ॥

द्रढिम दार्ढ्यम् ।

अस्मिन्नेव ग्रन्थे श्लो० 57. मधुरिम माधुर्यम् । दृढादिः— ५. १७.

माघे—V. 66.

सार्धं कथञ्चिदुचितैः पिचुमन्दपत्रै-
रास्यान्तरालगतमाम्रदलं म्रदीयः ।

दासेरकः सपदि संवलितं निषादै-
र्विप्रं पुरा पतगराडिव निर्जगार ॥ 1610 ॥

आम्रदलं प्रदीयः ।

नैषधे—IV. 15.

विरहपाण्डिमरागतमोमषी-
शितिमतन्निजपीतिमवर्णकैः ।
दश दिशः खलु तद्दृगकल्पय-
ल्लिपिकरी नलरूपकचित्रिताः ॥ 1611 ॥

पाण्डिम, शितिम, पीतिम ।

अस्मिन्नेव ग्रन्थे श्लो० 160. नीलिम ।

१७८८ । गुणवचनब्राह्मणादिभ्यः कर्मणि च । (५. १. १२४)

चाद्भावे । ब्राह्मणादिः—५. १८. जडस्य कर्म भावो वा जाड्यम् । मूढस्य भावः कर्म वा मौढ्यम् । ब्राह्मण्यम् ।

वा० । अर्हतो नुम् च । (3092.)

अर्हतो भावः कर्म वा आर्हन्त्यम् । आर्हन्ती । षित्करणादीकारो बहुलमिति वामनवचनाद्वैकल्पिक ईकारः ।

माघे—XX. 44.

दधतस्तनिमानमानुपूर्व्या-
द्बभुरक्षिश्रवसो मुखे विशालाः ।
भरतज्ञकविप्रणीतकाव्य-
ग्रथिताङ्का इव नाटकप्रपञ्चाः ॥ 1612 ॥

काव्यं कविकर्म । ष्यञ् ।

अनर्घराघवे—I. 51.

ग—वामदेव, किमुच्यते आरण्यकेषु किमपि प्रकृष्टतमं ब्राह्मण्यमृश्यशृङ्गस्य। न केवलममुना वत्सेन ब्रह्मर्षिर्विभाण्डकः पुत्रवतां धुरमारोपितो दशरथोऽपि ॥ 1613 ॥

ब्राह्मण्यं ब्रह्मकर्म। ष्यञ्।

अनर्घराघवे—II. 42.

ग—वत्सौ समन्तादुपशीलितोऽयं संनिवेशः कच्चिदस्मदीयास्तपोवनभूमयो रमयन्ति वामुपस्नेहयति वा गार्हस्थ्यमृषीणाम् ॥ 1614 ॥

गार्हस्थ्यं गृहस्थत्वम्। ष्यञ्।

अस्मिन्नेव ग्रन्थे श्लो० 131. सादृश्यं सादृश्यम्। ष्यञ्। पित्करणाद्धिकल्पादीकारः।

अस्मिन्नेव ग्रन्थे श्लो० 782. वाचस्पत्यं वाग्मित्वम्। ष्यञ्।

माघे—II. 56.

गुणानामायथातथ्यादर्थं विप्लावयन्ति ये।
अमात्यव्यञ्जना राज्ञां दूष्यास्ते शत्रुसंज्ञिताः ॥ 1615 ॥

यथातथात्वमनतिक्रम्य यथातथम्। यथार्थेऽव्ययीभावः। ततो नञ्समासेऽयथातथम्। तस्य भावः आयथातथ्यम्। ष्यञ्।

माघे—III. 5.

तस्योल्लसत्काञ्चनकुण्डलाग्र-
प्रत्युप्तगारुत्मतरत्नभासा।
अवाप बाल्योचितनीलकण्ठ-
पिच्छावचूडाकलनामिवोरः ॥ 1616 ॥

बाल्यं शैशवम्। ष्यञ्।

अस्मिन्नेव ग्रन्थे श्लो० 155. पौनःपुन्यात् पुनःपुनरावृत्तेः। ष्यञ्।

भट्टिकाव्ये—XII. 20.

चापल्ययुक्तस्य हरेः कृशानुः
समेधितो बालधिभाक् त्वदीयैः ।
शस्त्रेण वध्यस्य गलन्नधाक्षीत्
राजन् प्रमादेन निजेन लङ्काम् ॥ 1617 ॥

चपलस्य भावश्चापल्यम् । ष्यञ् । युवादिष्वपि दृश्यते । तत्र चापलमिति रूपम् ।

अस्मिन्नेव ग्रन्थे श्लो० 130. कुशलस्य भावः कौशली कौशल्यम् । ष्यञ् । ङीष् ।

अस्मिन्नेव ग्रन्थे श्लो० 129. विदग्धस्य भावः वैदग्धी । ष्यञि विकल्पादीकारः ।

चम्पूभारते—III. 26.

सुखाचक्षुःश्रवस्तन्व्यास्सुरते मीलनं दृशोः ।
चक्रे मणितवैदग्ध्यं तस्य काननकौमुदीम् ॥ 1618 ॥

विदग्धस्य भावो वैदग्ध्यम् । ष्यञ् ।

अस्मिन्नेव ग्रन्थे श्लो० 1476. अनीश्वरस्य भाव आनैश्वर्यम् । ब्राह्मणादित्वात् ष्यञ् । 'नञ्शुचीश्वर' ( सू. 1460 ) इत्युभयपदवृद्धिः ।

अस्मिन्नेव ग्रन्थे श्लो० 19. चतुराणां भावश्चातुरी । ष्यञि विकल्पान्ङीष् ।

अस्मिन्नेव ग्रन्थे श्लो० 1512. सहसा वर्तत इति साहसिकः । 'ओजस्सहो' ( सू. 1577 ) इति ठक् । तस्य कर्म साहसिक्यम् । ब्राह्मणादित्वात्ष्यञ् ।

किरातार्जुनीये—XIII. 38.

दीपितस्त्वमनुभावसम्पदा गौरवेण लघयन्महीभृतः ।
राजसे मुनिरपीह कारयन्नाधिपत्यमिव शातमन्यवम् ॥ 1619 ॥

अधिपतेः कर्म आधिपत्यम् । कुशलचपलनिपुणपिशुनकुतूहलक्षेत्रज्ञा युवादिषु च पठ्यते । तत्र कौशलं चापलं नैपुणमित्यण् ।

१७८९ । यथातथयथापुरयोः पर्यायेण । ( ७. ३. ३१ )

नञः परयोरेतयोः पूर्वोत्तरपदयोः पर्यायेण आदेरचो वृद्धिर्विधाने । अयथातथा-भावः आयथातथ्यम् अयाथातथ्यम् । आयथापुर्यम् अयाथापुर्यम् ।

वा० । चतुर्वर्णादीनां स्वार्थ उपसङ्ख्यानम् । ( 4031. )

चत्वारो वर्णाश्चातुर्वर्ण्यम् । चातुराश्रम्यम् । षाड्गुण्यम् । सैन्यम् । सान्निध्यम् सामीप्यम् । औपम्यम् । त्रैलोक्यमित्यादि । सर्वे वेदास्सर्ववेदाः । तानधीते सर्ववेदः । सर्वादेरिति लुक् । स एव सार्ववैद्यः ।

( ग. सू. ) चतुर्वेदस्योभयपदवृद्धिश्च । 96.

चतुरो वेदानधीते चतुर्वेदः । स एव चातुर्वैद्यः । चतुर्विद्यस्येति पाठान्तरम् । चतुर्विद्य एव चातुर्वैद्यः ।

अस्मिन्नेव ग्रन्थे श्लो० 1615. यथातथात्वमनतिक्रम्य यथातथम् । यथार्थेऽ-व्ययीभावः । अतो नञ्समासेऽयथातथम् । तस्य भाव आयथातथ्यम् । ब्राह्मणादि-त्वात्ष्यञ् । अनेन विकल्पान्नञ्पूर्वपदवृद्धिः ।

अस्मिन्नेव ग्रन्थे श्लो० 552. त्रयो लोकास्त्रैलोक्यम् । स्वार्थे ष्यञ् ।

अनर्घराघवे—VII. 82.

गोत्रे साक्षादजनि भगवानेष यत्पद्मयोनिः
शय्योत्थायं यदखिलमहः प्रीणयन्ति द्विरेफान् ।
एकाग्रां यद्दधति भगवत्युष्णभानौ च भक्तिं
तत्प्रापुस्ते सुतनु वदनौपम्यमम्भोरुहाणि ॥ 1620 ॥

उपमैव औपम्यम् । स्वार्थे ष्यञ् ।

अनर्घराघवे—VII. 87.

सिंहलद्वीपमम्भोधिसम्भूतमिदमुत्पलम् ।
माणिक्याचलकिञ्जल्करमणीयमुदीक्ष्यते ॥ 1621 ॥

मणिकं माणिक्यम् ।

चम्पूरामायणे—I. 18.

अस्ति प्रशस्तविभवैर्विबुधैरलङ्घ्या
लङ्केति नाम रजनीचरराजधानी ।
**माणिक्य**मन्दिरभुवां महसां प्ररोहै-
स्तेजस्त्रयाय दिनदीपदशां दिशन्ती ॥ 1622 ॥

**माणिक्यम्** ।

१७९० । स्तेनाद्यन्नलोपश्च । (५. १. १२५)

स्तेन चौर्ये इत्यस्मात् पचाद्यच् । स्तेनस्य भावः कर्म वा स्तेयम् । स्तेनादिति योगं विभज्य स्तैन्यमिति ष्यञन्तमपि केचिदिच्छन्ति ।

कुमारसंभवे—II. 35.

व्यावृत्तगतिरुद्याने कुसुमस्तेयसाध्वसात् ।
न वाति वायुस्तत्पार्श्वे तालवृन्तानिलाधिकम् ॥ 1623 ॥

**स्तेयं चौर्यम्** । यत् ।

१७९१ । सख्युर्यः । (५. १. १२६)

सख्युर्भावः कर्म वा सख्यम् । 'दूतवणिग्भ्यां च' दूतस्य भावः कर्म वा दूत्यम् । 'स्यात्सन्देशहरो दूतो दूत्यं तद्भावकर्मणोः' II. viii. 16. इत्यमरः । वणिज्यमिति काशिका । माधवस्तु वणिज्याशब्दः स्वभावात्स्त्रीलिङ्गः, भाव एव चात्र प्रत्ययो न तु कर्मणीत्याह । भाष्ये तु 'दूतवणिग्भ्यां च' इति नास्त्येव । ब्राह्मणादित्वाद्वाणिज्यमपि । 'वाणिज्यन्तु वणिज्या स्यात्' II. xii. 79 इत्यमरः ।

अस्मिन्नेव ग्रन्थे श्लो० 507. **सख्यस्य** सखित्वस्य । यः ।

अस्मिन्नेव ग्रन्थे श्लो० 625. **सख्यम्** ।

नैषधे—V. 99.

पाणिपीडनमहं दमयन्त्याः कामयेमहि महीमिहिकांशो ।
दूत्यमत्र कुरु नः स्मरभीतिं निर्जितस्मर चिरस्य निरस्य ॥ 1624 ॥

**दूत्यं** दूतकर्म ।

१७९२ । कपिज्ञात्योर्ढक् । ( ५. १. १२७ )

कापेयम् । ज्ञातेयम् ।

अस्मिन्नेव ग्रन्थे श्लो० 1276. कापेयचञ्चलः । कपिभावचपलः । ज्ञातेयं ज्ञातिभावम् । भावे ढक् ।

अस्मिन्नेव ग्रन्थे श्लो० 1127. ज्ञातेः कर्म ज्ञातेयम् ज्ञात्युचितं कुरु ।

चम्पूभारते—III. 102.

उन्निष्पोन्मिष्य यन्नात्परिचलितयथापूर्वशक्त्याथ दृष्ट्या
तन्मध्ये वीक्ष्य कञ्चित्पुरुषमनुदिनच्छायहस्तातपत्रम् ।
अक्ष्णा ज्ञातेयमेतौ विदितमनयोः सञ्चदाधर्म्यलब्धात्
द्वैराज्यादाकुलाभूद्यदुकुरुवरयोरन्तरङ्गं चिरसीमा ॥ 1625 ॥

ज्ञातेयम् ।

१७९३ । पत्यन्तपुरोहितादिभ्यो यक् । ( ५. १. १२८ )

सैनापत्यम् । पौरोहित्यम् ।

( ग. सू. ) । राजासमासे । 106.

राजन्शब्दोऽसमासे यकं लभत इत्यर्थः । राज्ञो भावः कर्म वा राज्यम् । समासे तु ब्राह्मणादित्वात् ष्यञ् । आधिराज्यम् । पुरोहितादिः—५. २०.

कुमारसंभवे—II. 61.

तस्यात्मा शितिकण्ठस्य सैनापत्यमुपेत्य वः ।
मोक्ष्यते सुरबन्दीनां वेणीर्वीर्यविभूतिभिः ॥ 1626 ॥

सैनापत्यं सेनापतिभावः ।

चम्पूरामायणे—I. 22.

ग—अथ वैतानिकवैश्वानरान्तरः प्राजापत्यः सहेमपात्रः कश्चिदुत्थाय पुत्रीयते दशरथाय पायसममृतप्रायं प्रायच्छत् ॥ 1627 ॥

प्रजापतेः संबन्धी **प्राजापत्यः** । प्रजापतेर्भावः कर्म वा प्राजापत्यमिति न । प्रत्ययान्तात् यक् : विशेष्यपदं नपुंसकं स्यात् ।

अस्मिन्नेव ग्रन्थे श्लो० 1293. राज्ञः कर्म **राज्यम्** । यक् । 'ये चाभावकर्मणोः' (सू. 1154) इति निषेधात् न प्रकृतिभावः ।

चम्पूभारते — XI. 1.

अन्येद्युरब्धिमिलितैरसृगापगानां
पूरैरिवोद्वहति पूर्णमि शोणिताङ्के ।
सेनाधि**पत्य**सरणौ धृतराष्ट्रसूनुः
कर्णं सुवर्णघटवारिभिरभ्यषिञ्चत् ॥ 1628 ॥

**आधिपत्यम्** । न यक् । ब्राह्मणादित्वात् ष्यञ् ।

अस्मिन्नेव ग्रन्थे श्लो० 1607. अधिराजस्य भावः कर्म वा **आधिराज्यम्** । समासे ब्राह्मणादित्वात् ष्यञ् । असमासे राज्ञो भावः कर्म वा राज्यम् । अनेन यक् ।

चम्पूभारते—XI. 18.

ग— परेद्युः परिस्फुरितकमलचक्रव्यूहे प्रकाशमानपत्रिकुलसञ्चारे प्रकटितघनञ्जयतेजोवर्धने भाविनि प्रथन इव प्रभातसमये प्रादुर्भवति सति मधुमथनसारथेर्मघवत्कुमारस्य वधकृते शल्यसत्सारथ्यमेव परं साधनमवधारयता राधेयेन कृतबोधनस्सुयोधनस्सबहुमानं मानधनभाजं मद्रराजमुपगम्य स्वागमनिदानपरिज्ञानेन विमनायमानमपि तं तैस्तैर्मधुररचनैर्वचनैः कोपगिरेरधित्यकाप्रदेशात्कथञ्चिदवरोप्य कर्णरथनैपथ्यं **सारथ्य**मधिरोपयामास ॥ 1629 ॥

**सारथ्यं** सारथिकर्म । पुरोहितादित्वाद्यक् ।

## १७९४ । प्राणभृज्जातिवयोवचनोद्गात्रादिभ्योऽञ् । (५. १. १२९)

प्राणभृज्जाति । आश्वम् । औष्ट्रम् । वयोवचनं, कौमारम् । कैशोरम् । औद्गात्रम् । औन्नेत्रम् । सौष्ठवम् । दौष्ठवम् । उद्गात्रादिः— ५. २ ?.

अस्मिन्नेव ग्रन्थे श्लो० 1350. शिशोर्भावः **शैशवम्** बाल्यम् । वयोवचनार्थेऽञ् ।

अस्मिन्नेव ग्रन्थे श्लो० 1508. सुष्ठु भावः सौष्ठवम् । उद्गात्रादित्वादञ् ।
अस्मिन्नेव ग्रन्थे श्लो० 1025. सौष्ठवम् । पूर्ववत् ।

किरातार्जुनीये—XVI. 22.

प्रतीयते कार्यवशागतेषु स्थानेषु विष्टब्धतया न देहः ।
स्थितप्रयातेषु ससौष्ठवश्च लक्ष्येषु पातस्सदृशः शराणाम् ॥ 1630 ॥

सौष्ठवम् । पूर्ववत् ।

१७९५ । हायनान्तयुवादिभ्योऽण् । (५.१. १३०)

द्वैहायनम् । त्रैहायनम् । यौवनम् । स्थाविरम् ।

वा० । श्रोत्रियस्य यलोपश्च । (3093.)

श्रोत्रम् । कुशलचपलनिपुणपिशुनकुतूहलक्षेत्रज्ञा युवादिषु ब्राह्मणादिषु च पठ्यन्ते । कौशल्यं कौशलमित्यादि । युवादिः— ५. २२.

अस्मिन्नेव ग्रन्थे श्लो० 1350. यूनो भावो यौवनम् तारुण्यम् । अण् ।

अस्मिन्नेव ग्रन्थे श्लो० 1524. पौरुषे पुरुषकारे । युवादित्वादण् ।

अस्मिन्नेव ग्रन्थे श्लो० 731. पुरुषस्य कर्म पौरुषं पुरुषकारः । पूर्ववत् ।

रघुवंशे—XI. 42.

एवमाप्तवचनात्स पौरुषं काकपक्षकधरेऽपि राघवे ।
श्रद्दधे त्रिदशगोपमात्रके दाहशक्तिमिव कृष्णवर्त्मनि ॥ 1631 ॥

पौरुषम् ।

अस्मिन्नेव ग्रन्थे श्लो० 168. पौरुषम् ।

अस्मिन्नेव ग्रन्थे श्लो० 743. सुहृदयस्य भावः सौहृदम् । युवादित्वादण् । 'हृदयस्य हृत्' (सू. 988) इति हृद्भावविधानसामर्थ्यान्न 'हृद्भग' (सू. 1138) इत्युभयपदवृद्धिः । अत एव सौहृदसौहृदशब्दावपि हृद्भावादि' ति वामनः ।

अस्मिन्नेव ग्रन्थे श्लो० 1147. सुहृदो भावः **सौहार्दम्** । युवाद्यण् । 'हृद्भग' (सू. 1133) इत्युभयपदवृद्धिः ।

अस्मिन्नेव ग्रन्थे श्लो० 899. सुभ्रातृणां भावः **सौभ्रात्रम्** । युवादित्वादण् ।

कुमारसंभवे—IV. 31.

विधिना कृतमर्धवैशसं ननु मां कामवधे विमुञ्चता ।
अनपायिनि संश्रयद्रुमे गजभग्ने पतनाय वल्लरी ॥ 1632 ॥

विशसति हिनस्तीति विशसो घातुकः । पचाद्यच् । विशसस्य कर्म **वैशसम्** । युवादित्वादण् ।

भट्टिकाव्ये—XVII. 104.

उभावकृन्ततां केतूनव्यथेतामुभौ न तौ ।
अदीप्येतामुभौ धृष्णू प्रायुञ्जातां च **नैपुणम्** ॥ 1633 ॥

नैपुणं निपुणकर्म ।

अस्मिन्नेव ग्रन्थे श्लो० 1617. चपलस्य भावश्चा**पल्यम्** । ब्राह्मणादित्वात्ष्यञ् ।

## १७९६ । इगन्ताच्च लघुपूर्वात् । (५. १. १३१)

शुचेर्भावः कर्म वा शौचम् । मौनम् । कथं काव्यम् । कविशब्दस्य ब्राह्मणादित्वात् ष्यञ् ।

अस्मिन्नेव ग्रन्थे श्लो० 1612. **काव्यं** कविकर्म । ब्राह्मणादित्वात् ष्यञ् ।

## १७९७ । योपधाद्गुरूपोत्तमाद्वुञ् । (५. १. १३२)

रामणीयकम् ।

**वा०** । सहायाद्वा । (3094.)

साहाय्यम् । साहायकम् ।

किरातार्जुनीये—IV. 4.

तुतोष पश्यन् कलमस्य सोऽधिकं
सवारिजे वारिणि **रामणीयकम्** ।

पुरुर्लभे नार्हति कोऽभिनन्दितुं
प्रकर्षलक्ष्मीमनुरूपसङ्गमे ॥ 1634 ॥

रमणीयस्य भावः रामणीयकम् । वुञ् ।

रघुवंशे - XII. 78.

स मारुतिसमानीतमहौषधिहतव्यथः ।
लङ्कास्त्रीणां पुनश्चक्रे विलापाचार्यकं शरैः ॥ 1635 ॥

आचार्यकमाचार्यकर्म ।

नैषधे—V. 64.

कामनीयकमधःकृतकामं काममक्षिभिरवेक्ष्य तदीयम् ।
कौशिकः स्वमखिलं परिपश्यन्नन्वतप्यत स खलु कौशिकमेव ॥ 1636 ॥

कामनीयकं कमनीयत्वम् ।

नैषधे—V. 46.

नाकलोकभिषजोः सुषमा या पुष्पचापमपि चुम्बति सैव ।
वेद्मि तादृगनिषज्यदसौ तत् द्वारसङ्कनितवैद्यकवैद्यः ॥ 1637 ॥

वैद्यकं वैद्यस्य कर्म ।

चम्पूरामायणे—I. 22.

ग— भवन्तस्तावदवतरिष्यतो लक्ष्मीसहायस्य साहाय्यार्थमप्सरःप्रभृतिषु युवतिषु वानराच्छभल्लगोपुच्छनीलमुखवेषभृतः प्रथितप्रभावाः प्रजाः प्रजनयेयुः ॥ 1638 ॥

साहाय्यं सहायकर्म ।

रघुवंशे—XVII. 5.

स कुलोचितमिन्द्रस्य साहायकमुपेयिवान् ।
जघान समरे दैत्यं दुर्जयं तेन चावधि ॥ 1639 ॥

साहायकं सहकारित्वम् ।

चम्पूभारते—IV. 79.

सन्दृश्यते तव तपः खलु शुद्धमेतत्
यज्जन्तुहिंसनविधौ दृढबद्धकृच्छ्रम् ।
आस्तामिदं भुजबलं च मृगात्ययेऽस्मिन्
साहायकं यदुपजीवति मे शरस्य ॥ 1640 ॥

**साहायकम्** ।

१७२८ । **द्वन्द्वमनोज्ञादिभ्यश्च** । (५. १. १३३.)

शैष्योपाध्यायिका । मानोज्ञकम् । मनोज्ञादिः— ५. २३.

अस्मिन्नेव ग्रन्थे श्लो० 1350. वृद्धस्य भावो **वार्धकम्** वृद्धत्वम् । मनोज्ञादित्वाद्वुञ् ।

कुमारसंभवे—V. 44.

किमित्यपास्याभरणानि यौवने
धृतं त्वया वार्धकशोभि वल्कलम् ।
वद प्रदोषे स्फुटचन्द्रतारका
विभावरी यद्यरुणाय कल्पते ॥ 1641 ॥

**वार्धकम्** । पूर्ववत् ।

भट्टिकाव्ये—XII. 55.

विभीषणोक्तं बहु मन्यमानः
प्रोन्नम्य देहं परिणामनम्रम् ।
स्खलद्वलिर्वार्धककम्प्रमूर्धा
मातामहो रावणमित्युवाच ॥ 1642 ॥

**वार्धकम्** । पूर्ववत् ।

नैषधे—V. 66.

**प्रैयरूपकविशेषनिवेशैस्संवदद्भिरमराः श्रुतपूर्वैः ।**
**एष एव स नलः किमितीदं मन्दमन्दमितरेतरमूचुः ॥ 1643 ॥**

प्रियरूपस्य भावः **प्रैयरूपकम्** सौन्दर्यम्। मनोज्ञादित्वाद्वुञ्। 'वृद्धाच्चेति वक्तव्यम्' (वा. 2716. सू. 1247) इति समूहार्थे वुञ्।

अस्मिन्नेव ग्रन्थे श्लो॰ 1349. **वार्धकात्** वृद्धसमूहात्। 'वार्धकं वृद्धसङ्घाते वृद्धत्वे वृद्धकर्मणि' इति विश्वप्रकाशः। 'वृद्धसङ्घेऽपि वार्धकं' II. vi. 40 इत्यमरः।

अस्मिन्नेव ग्रन्थे श्लो॰ 770. आहोपुरुषिका 'आहोपुरुषिका दर्पाद्या स्यात्सम्भावनात्मनि' II. viii. 102. इत्यमरे क्षीरस्वामिनो व्याख्यानानुसारेण अहोपुरुषस्य भावः। **आहोपुरुषिका** आश्चर्यपुरुषत्वम्। मनोज्ञादित्वाद्वुञिति व्याचक्षते केचित्। मनोज्ञादिषु मृग्यमेतत्। अहोपुरुष इति यस्यां क्रियायां सा आहोपुरुषिकेति काशिका। मत्वर्थीयठञ्प्रत्ययः। मयूरव्यंसकादित्वात्समासः।

॥ इति नञ्स्नञधिकारप्रकरणम् ॥

---

## ॥ अथ पाञ्चमिकप्रकरणम् ॥



### १८०२ । धान्यानां भवने क्षेत्रे खञ् । ( ५. २. १ )

भवन्त्यस्मिन्निति भवनं मुद्गानां भवनम् क्षेत्रं मौद्गीनम् । 'मौद्गीनकौद्रवीणादि-शेषधान्योद्भवोचितम्' II. ix. 8. इत्यमरः ।

### १८०३ । व्रीहिशाल्योर्ढक् । ( ५. २. २ )

व्रैहेयम् । शालेयम् । 'क्षेत्रं व्रैहेयशालेयं व्रीहिशाल्युद्भवोचितं' II. ix. 6. इत्यमरः ।

### १८०४ । यवयवकषष्टिकाद्यत् । ( ५. २. ३ )

यवानां भवनं क्षेत्रं यव्यम् । यवक्यम् । षष्टिक्यम् । 'यव्यं यवक्यं षष्टिक्यं यवादिभवनं हि यत्' II. ix. 7. इत्यमरः ।

### १८०५ । विभाषा तिलमाषोमाभङ्गाणुभ्यः । ( ५. २. ४ )

यद्वा स्यात् । पक्षे खञ् । तिल्यम् तैलीनम् । माष्यम् माषीणम् । उम्यम् औमीनम् । भङ्ग्यम् भाङ्गीनम् । अणव्यम् आणवीनम् । 'तिल्यतैलीनवन्माषोमाणुभङ्गा-द्विरूपता' II. ix. 7. इत्यमरः ।

### १८०६ । सर्वचर्मणः कृतः खखञौ । (५. २. ५)

सर्वचर्मणा कृतस्सर्वचर्मीणः सार्वचर्मीणः ।

### १८०७ । यथामुखसम्मुखस्य दर्शनः खः । ( ५. २. ६ )

मुखस्य सदृशं यथामुखम् प्रतिबिम्बम् । सादृश्येऽव्ययीभावः । समं सर्वं मुखं संमुखम् । समशब्दस्यान्तलोपो निपात्यते । यथामुखं दर्शनो यथामुखीनः । सर्वस्य मुखस्य दर्शनस्सम्मुखीनः ।

भट्टिकाव्ये—XI. 4.

मार्गेण गन्तव्यथामुखीना निःश्वासमुद्रैर्मुनिभिर्नियाना: ।
ज्योतिर्निदात्तिकमविद्रव्यनिर्दिष्टेऽपि दोषे नयनोऽनुभीनाः ॥ 1644 ॥

अयथामुखीनाः पुरावृत्तमुखाः ।

रघुवंशे—XV. 17.

अवशूलं समासाद्य लवणं लक्ष्मणानुजः ।
रुरोध **सम्मुखीनो** हि जयो रन्ध्रप्रहारिणाम् ॥ 1645 ॥

रन्ध्रप्रहारिणां जयस्संमुखीनो हि [illegible]नः ।

अस्मिन्नेव ग्रन्थे श्लो० 1457. आत्मन्यसंमुखीनं आभिमुख्यभाजम् ।

नैषधे—I. 76.

ततः प्रसूने च फले च मञ्जुले
स **सम्मुखीनाङ्गुलिना** जनाधिपः ।
निवेद्यमानं वनपालपाणिना
व्यलोकयत्काननकामनीयकम् ॥ 1646 ॥

प्रसूने फले च **संमुखीना** सन्दर्शिनी ।

अनर्घराघवे—VI. 17.

ग—पुरस्तादेव दृष्टमिदमस्माभिः । देशकालव्यवहितस्यापि प्रमेयग्रामस्य **यथामुखीन**मादर्शतलं हि स्थविरबुद्धिः ॥ 1647 ॥

स्थविरबुद्धिः प्रमेयसमूहस्य **यथामुखीन**मादर्शतलम् ।

**१८०८ । तत्सर्वादेः पथ्यङ्गकर्मपत्रपात्रं व्याप्नोति । (५. २. ७)**

**सर्वादेः** पथ्याद्यन्तात् द्वितीयान्तात्खः स्यात् । सर्वपथान् व्याप्नोतीति **सर्वपथीनः** । **सर्वाङ्गीणः** । **सर्वकर्मीणः** । **सर्वपत्रीणः** । सर्वपात्रीणः ।

अस्मिन्नेव ग्रन्थे श्लो० 735. सर्वान् पथस्सर्वपथान् व्याप्नोतीति **सर्वपथीनम्**। 'पूर्वकाल' (सू. 726) इति समासः। 'ऋक्पू' (सू. 940) इति समासान्तः। अनेन खः।

अस्मिन्नेव ग्रन्थे श्लो० 9. सर्वपथीनया।

अनर्घराघवे—I. 44.

ध्यानमयदृष्टिपातप्रमुषितकालाध्वविप्रकर्षेषु ।
विषयेषु नैष्ठिकानां सर्वपथीना मतिः क्रमते ॥ 1648 ॥

**सर्वपथीना** सर्वपथव्यापिनी।

अस्मिन्नेव ग्रन्थे श्लो० 1521. सर्वाङ्गं व्याप्नोतीति **सर्वाङ्गीणे**। खः।

अस्मिन्नेव ग्रन्थे श्लो० 1450. सर्वकर्माणि व्याप्नुत इति **सर्वकर्मीणौ**। 'अषडक्षाशितङ्गु' (सू. 2079) इति स्वार्थे खः।

अस्मिन्नेव ग्रन्थे श्लो० 1191. अलं कर्मणे **अलंकर्मीणः**। तपश्चर्यायामलंकर्मीणः समर्थः। 'कर्मक्षमोऽलंकर्मीण' III. i. 18. इत्यमरः।

## १८०९। आप्रपदं व्याप्नोति। (५. २. ८)

पादस्याग्रं प्रपदम्। तन्मर्यादीकृत्य आप्रपदम्। आप्रपदीनः पटः।

माघे—III. 10.

मुक्तामयं सारसनावलम्बि
भाति स्म दामाप्रपदीनमस्य।
अङ्गुष्ठनिष्ठ्यूतमिवोर्ध्वमुच्चै-
स्त्रिस्रोतसस्सन्ततधारमम्भः ॥ 1649 ॥

आप्रपदं व्याप्नोतीति **आप्रपदीनं** पादाग्रचुम्बि। खप्रत्ययः।

## १८१०। अनुपदसर्वान्नायानयं बद्धाभक्षयतिनेयेषु। (५. २. ९)

अनुरायामे सादृश्ये वा। अनुपदं बद्धा अनुपदीना उपानत्। सर्वान्नानि भक्षयति सर्वान्नीनो भिक्षुः। अयानयः स्थलविशेषः तं नेयोऽयानयीनः शारः। 'सर्वान्नीनस्तु सर्वान्नभोजी' III. i. 22. इत्यमरः।

१८११। परोऽवरपरम्परपुत्रपौत्रमनुभवति। (५. २. १०)

परांश्चावरांश्चानुभवतीति परोऽवरीणः। परांश्च परतरांश्चानुभवति परम्परीणः। पुत्रपौत्रमनुभवति पुत्रपौत्रीणः।

भट्टिकाव्ये—V. 15.

कुरु बुद्धिं कुशाग्रीयामनुकामीनतां त्यज।
लक्ष्मीं परम्परीणां त्वं पुत्रपौत्रीणतां नय॥ 1650 ॥

परांश्च परतरांश्चानुभवतीति **परम्परीणा**। पितृपितामहादिक्रमागतेत्यर्थः। **पुत्रपौत्रीणताम्**।

१८१२। अवारपारात्यन्तानुकामं गामी। (५. २. ११)

अवारपारं गामी अवारपारीणः। अवारीणः। पारीणः। पारावारीणः। अत्यन्तं गामी अत्यन्तीनः। भृशं गन्तेत्यर्थः। अनुकामं गामी अनुकामीनः यथेष्टं गन्ता।

अस्मिन्नेव ग्रन्थे श्लो० 271. **त्रिवर्गपारीणम्**। त्रयाणां धर्मादीनां वर्गस्त्रिवर्गः। तस्य पारीणं पारगामिनम्। खप्रत्ययः।

अस्मिन्नेव ग्रन्थे श्लो० 43. **अत्यन्तीनत्वमत्यन्तगामित्वम्**।

भट्टिकाव्ये—XXII. 19.

द्रष्टास्यस्तत्र तिस्रो मे मातॄस्तुष्टान्तरात्मनः।
अत्यन्तीनं सखित्वं च प्राप्तास्यो भरताश्रयम्॥ 1651 ॥

**अत्यन्तीनम्**। अत्यन्तगामीत्यस्मिन्नर्थे खः।

अस्मिन्नेव ग्रन्थे श्लो० 1650. अनुकामं गामी **अनुकामीनः** यथेष्टं गन्ता। खः। 'कामं गाम्यनुकामीनो ह्यत्यन्तीनस्तथा भृशम्' II. viii. 77. इत्यमरः।

१८१३ । समां समां विजायते । ( ५. २. १२ )

समांसमीना गौः । ' समांसमीना सा यैव प्रतिवर्षं प्रसूयते ' II. ix. 72 इत्यमरः ।

१८१६ । अनुग्वलङ्गामी । ( ५. २. १५ )

अनुगु गोः पश्चात्पर्याप्तं गच्छति अनुगवीनो गोपालः ।

१८१७ । अध्वनो यत्खौ । ( ५. २. १६ )

अध्वानमलं गच्छति अध्वन्यः अध्वनीनः । ' ये चाभावकर्मणोः' (सू. 1154) ' आत्माध्वानौ खे ' ( सू. 1671 ) इति सूत्रयोरन्यतरेण प्रकृतिभावः ।

अस्मिन्नेव ग्रन्थे श्लो० 1292. अध्वानमलं गामिन अध्वन्याः । शीघ्रगा इत्यर्थः । यत्प्रत्ययः । ' ये चाभावकर्मणोः ' ( सू. 1154 ) इति प्रकृतिभावः ।

अस्मिन्नेव ग्रन्थे श्लो० 647. अध्वानमलंगामिनमध्वनीनम् । खः । ' आत्माध्वानौ खे ' ( सू. 1671 ) इति प्रकृतिभावः ।

अस्मिन्नेव ग्रन्थे श्लो० 1565. अध्वनीनैः । पूर्ववत् । ' उपसर्गादध्वनः ' ( सू. 953 ) प्राध्वः । अच् । टिलोपः ।

१८१८ । अभ्यमित्राच्छ च । ( ५. २. १७ )

चाद्यत्खौ । अभ्यमित्रीयः । अभ्यमित्र्यः । अभ्यमित्रीणः । अमित्राभिमुखं सुष्ठु गच्छतीत्यर्थः ।

भट्टिकाव्ये—V. 46.

तमुद्यतनिशातासिं प्रत्युवाच जिजीविषुः ।
मारीचोऽनुनयंस्त्रासादभ्यमित्र्यो भवामि ते ॥ 1652 ॥

अमित्रस्याभिमुखमभ्यमित्रम् । आभिमुख्येऽव्ययीभावः । अभ्यमित्रमलङ्गामीत्यस्मिन्नर्थे अत्र चकाराद्यत्खौ चेति यत् ।

भट्टिकाव्ये—V. 47.

हरामि रामसौमित्री मृगो भूत्वा मृगयुवौ ।
उद्योगमभ्यमित्रीणो यथेष्टं त्वञ्च सन्तनु ॥ 1653 ॥

अभ्यमित्रमभिसपत्नमलंगामी अभ्यमित्रीणः । चकारात्खः ।

चम्पूभारते—VII. 7.

औदास्यं किमिदं कुमार कुरवो गृह्णन्ति गास्तेऽखिला-
स्त्वद्दोष्णोस्समयोऽयमाजिषु परैर्दुष्प्रापमाप्तुं यशः ।
देवीं केकयनन्दनां कुरु महावीरप्रसूर्मूर्धनु
द्रागारोह रथं गृहाण च धनुर्यत्त्वाभ्यमित्रीणताम् ॥ 1654 ॥

अभ्यमित्रीणः । पूर्ववत्खः ।

१८१९ । गोष्ठात्खञ्भूतपूर्वे । (५. २ १८)

गोष्ठो भूतपूर्वो गौष्ठीनो देशः ।

अस्मिन्नेव ग्रन्थे श्लो० 206. भूतपूर्वे गोष्ठे गौष्ठीने । 'गौष्ठीनं भूतपूर्वकम्' II. i. 14. इत्यमरः । खञ् ।

चम्पूभारते—III. 1.

ग—तत्र वनीभवति वनीपकजनमनीषितपूरकपूरुकुलावनीपसुरसुरभिगौष्ठीने देशे स्मरणमात्रकृतसन्निधानेन सकलशिल्पपारदृश्वना विश्वकर्मणा स्वेनैव कर्मणा निर्मापितं कामनीयकविलोकनसुलभविस्मयभारगुरुतरानमरान् वोढुमक्षमतया क्ष्मातलमवलम्बमानैर्विमानैरिव कुरुविन्दमणिमन्दिरैरभ्रंलिहं जम्भरिपुनिदेशेन लम्भिततल्लाभोपपदमिन्द्रप्रस्थमधिष्ठिताय युधिष्ठिराय निवेद्य स्वपुरेऽपि सुषुमामीदृशीं परीक्षितुमिव स्यन्दनेन यदुनन्दनेन प्रयये ॥ 1655 ॥

गौष्ठीने । पूर्ववत्खञ् ।

१८२० । अश्वस्यैकाहगमः । (५. २. १९)

एकाहेन गम्यत इत्येकाहगमः । आश्वीनोऽध्वा ।

अनर्घराघवे—VII 88.

बृहत्पात्रप्राप्त्या विततजलमम्भोधिमुदरे
दधावीषद्ग्राह्यं किल कलशजन्मा कुलपतिः ।
यमाराध्यन्विन्ध्याचलशिखरशोथैकभिषजं
विवस्वानाश्वीनं गगनमविरोधात्कलयति ॥ 1656 ॥

रविः आकाशं आश्वीनमश्वेनैकाहगम्यं कलयति करोति । अश्वेन यदेकाहेन गम्यते तदाश्वीनम् । खञ् ।

१८२१ । शालीनकौपीने अधृष्टाकार्ययोः । ( ५. २. २० )

शालाप्रवेशमर्हति शालीनोऽधृष्टः । कूपपतनमर्हति कौपीनं पापम् ।

अस्मिन्नेव ग्रन्थे श्लो० 689. शालीनाया भावः शालीनता ।

अस्मिन्नेव ग्रन्थे श्लो० 104. शालीनत्वविवर्जिता अधाष्टर्यरहिता ।

माघे—XVI. 83.

लोकालोकव्याहतं घर्मरश्मेः
शालीनं वा धाम नालं प्रसर्तुम् ।
लोकस्याग्रे पश्यतो धृष्टमाशु
कामत्युच्चैर्भूभृतो यस्य तेजः ॥ 1657 ॥

शालीनम् ।

१८२२ । व्रातेन जीवति । ( ५. २. २१ )

व्रातेन शरीरायासेन जीवति न तु बुद्धिवैभवेन स व्रातीनः ।

अस्मिन्नेव ग्रन्थे श्लो० 860. नानाजातीया अनियतवृत्तयः उत्सेधजीविनो व्राताः । तत्कर्म व्रातम् । तेन जीवन्तीति व्रातीनाः । खञ् । नानाजातीया अनियतवृत्तयः शरीरमायास्य ये जीवन्ति ते व्रातास्तेषां यत्कर्म तदपि व्रातं तेन जीवन्तीति व्रातीनाः । खञ् ।

१८२३ । साप्तपदीनं सख्यम् । ( ५. २. २२ )

सप्तभिः पदैरवाप्यते साप्तपदीनम् ।

कुमारसंभवे—V. 39.

प्रयुक्तसत्कारविशेषमात्मना
न मां परं संप्रतिपत्तुमर्हसि ।
यतः सतां सन्नतगात्रि सङ्गतं
मनीषिभिः साप्तपदीनमुच्यते ॥ 1658 ॥

सतां सङ्गतं सख्यं सप्तभिः पदैरवाप्यत इति साप्तपदीनं सप्तपदोच्चारण साध्यम् । अनेन निपातनात्साधुः ।

## १८२४ । हैयङ्गवीनं संज्ञायाम् । (५. २. २३)

ह्योगोदोहस्य हियङ्गुरादेशो विकारार्थे खञ् निपात्यते । दुह्यत इति दोहः क्षीरम् । ह्योगोदोहस्य विकारो हैयङ्गवीनं नवनीतम् ।

अस्मिन्नेव ग्रन्थे श्लो॰ 1042. हैयङ्गवीनं ह्योगोदोहविकारं घृतम् । 'तत्तु हैयङ्गवीनं यत् ह्योगोदोहोद्भवं घृतम्' II. ix. 52. इत्यमरः ।

रघुवंशे—I. 45.

हैयङ्गवीनमादाय घोषवृद्धानुपस्थितान् ।
नामधेयानि पृच्छन्तौ वन्यानां मार्गशाखिनाम् ॥ 1659 ॥

ह्यस्तनगोदोहोद्भवं घृतं **हैयङ्गवीनम्** सद्योघृतम् । ह्यः पूर्वेद्युः ।

नैषधे—III. 130.

चेतोजन्मशरप्रसूनलघुभिर्व्यामिश्रतामाश्रय-
त्प्रेयोदूतपतङ्गपुङ्गवगवीहैयङ्गवीनं रसात् ।
स्वादंस्वादमसीममृष्टसुरभि प्राप्तापि तृप्तिं न सा
तापं प्राप नितान्तमन्तरतुलामानर्च्छ मूर्छामपि ॥ 1660 ॥

**हैयङ्गवीनम्** । पूर्ववत् ।

## १८२५ । तस्य पाकमूले पील्वादिकर्णादिभ्यः कुणब्जाहचौ । (५. २. २४)

पीलूनां पाकः पीलुकुणः । कर्णस्य मूलं कर्णजाहम् । पील्वादिः— ५. २४.
कर्णादिः— ५. २५.

अस्मिन्नेव ग्रन्थे श्लो० 327. कर्णयोर्मूले **कर्णजाहे** जाहच्प्रत्ययः ।

### १८२६ । पक्षात्तिः । ( ५. २. २५ )

मूलग्रहणमात्रमनुवर्तते । पक्षस्य मूलं पक्षतिः ।

अस्मिन्नेव ग्रन्थे श्लो० 327. **पक्षतौ** पक्षमूले प्रतिपदि चन्द्रलेखेव स्थिता । तिप्रत्ययः । 'पक्षतिर्गरुतो मूले द्वयोः प्रतिपदोरपि' इति यादवः ।

अस्मिन्नेव ग्रन्थे श्लो० 660. भृङ्गाणां **पक्षतयः** पक्षमूलानि । 'स्त्री पक्षतिः पक्षमूलम्' II. v. 37. इत्यमरः ।

अस्मिन्नेव ग्रन्थे श्लो० 777. **पक्षती** ।

### १८२७ । तेन वित्तश्चुञ्चुप्चणपौ । ( ५. २. २६ )

विद्यया वित्तः विद्याचुञ्चुः । विद्याचणः ।

अस्मिन्नेव ग्रन्थे श्लो० 1274. **मायाचणं** मायावित्तम् । चणप् । अस्त्रैर्वित्तः प्रसिद्धोऽ**स्त्रचुञ्चुः** । चुञ्चुप् ।

किरातार्जुनीये—XV. 38.

> **चारचुञ्चुश्चिरारेची चञ्चच्चीररुचा रुचः ।**
> चचार रुचिरश्चारु चारैराचारचञ्चुरः ॥ 1661 ॥

चारैर्गतिविशेषैर्वित्त इति **चारचुञ्चुः** । चुञ्चुप्प्रत्ययः ।

माघे—IV 31.

> व्योमस्पृशः प्रथयता कलधौतभित्ती-
> रुन्निद्रपुष्पचणचम्पकपिङ्गभासः ।
> सौमेरवीमधिगतेन नितम्बशोभा-
> मेतेन भारतमिलावृतवद्विभाति ॥ 1662 ॥

पुष्पैर्वित्ताः **पुष्पचणाः** । चणप् ।

अस्मिन्नेव ग्रन्थे ग० 1369. अत्यन्तरसोत्पादनेन चणं वित्तं प्रसिद्धमति**रसोत्पादनचणम्** । चणप् ।

१८२८ । विनञ्भ्यां नानाञौ न सह । ( ५. २. २७ )

असहार्थे पृथग्भावे वर्तमानाभ्यां स्वार्थे प्रत्ययौ । विना । नाना ।

अस्मिन्नेव ग्रन्थे श्लो० 487. विना ।

अस्मिन्नेव ग्रन्थे श्लो० 717. नाना ।

१८२९ । वेः शालच्छङ्कटचौ । ( ५. २. २८ )

१८३० । संप्रोदश्च कटच् । ( ५. २. २९ )

चकाराद्वेः कटच् । विशालम्, विशङ्कटम्, विकटम् । सङ्कटम् , प्रकटम्, उत्कटम् ।

वा० । अलाबूतिलोमाभङ्गाभ्यो रजस्युपसंख्यानम् । ( 3107. )

अलाबूनां रजः अलाबूकटम् ।

वा० । सङ्घाते कटच् । ( 3110. )

अवीनां सङ्घातोऽविकटः ।

वा० । विस्तारे पटच् । ( 3115. )

अविपटः ।

वा० । द्वित्वे गोयुगच् । ( 3116. )

द्वौ उष्ट्रौ उष्ट्रगोयुगम् ।

वा० । षट्त्वे षड्गवच् । ( 3117. )

अश्वषड्गवम् ।

वा० । स्नेहे तैलच् । ( 3118. )

तिलतैलम् ।

वा० । भवने क्षेत्रे शाकटशाकिनौ । ( 3119 )

इक्षुशाकटम् । इक्षुशाकिनम् ।

माघे—III. 50.

बृहत्तुलैरप्यतुलैर्वितानमालापिनद्धैरपि चावितानैः ।
रेजे विचित्रैरपि या सचित्रैर्गृहैर्विशालैरपि भूरिशालैः ॥ 1663 ॥

**विशालैः** ।

माघे—XIII. 34.

व्यचलन्विशङ्कटकटीरकस्थली-
शिखरस्खलन्मुखरमेखलाकुलाः ।
भवनानि तुङ्गमपनीयसङ्क्रम-
क्रमणक्वणत्कनकनूपुराः स्त्रियः 1664 ॥

**विशङ्कटाः** ।

अस्मिन्नेव ग्रन्थे श्लो० 626. **विशङ्कटे** विशाले । शङ्कटच्प्रत्ययः ।

माघे—X. 42.

उत्तरीयविनयात्त्रपमाणा
रुन्धती किल तदीक्षणमार्गम् ।
आवरिष्ट **विकटेन** विवोढु-
र्वक्षसैव कुचमण्डलमन्या ॥ 1665 ॥

**विकटेन** विशालेन । ‘विशङ्कटं विशालं स्यादरालं विकटं तथा’ इति वैजयन्ती ।

सम्प्रोदश्चेति चकाराद्वेः कटच् ।

चम्पूरामायणे—I. 41.

तत्काले पिशिताशनाशपिशुना सन्ध्येव काचिन्मुने-
रध्वानं तरसा रुरोध रुधिरक्षोदारुणा दारुणा ।
स्वाधीने हनने पुरीं विदधती मृत्योः स्वकृत्यात्यय-
क्रीडत्किङ्करसङ्घसङ्कटमहाशृङ्गाटकां ताटका ॥ 1666 ॥

**सङ्कटः** ।

१८३१ । अवात्कुटारच्च । (५. २. ३०)

चात्कटच्। अवाचीनोऽवकुटारः। अवकटः

१८३२। नते नासिकायाः संज्ञायां टीटञ्नाटज्भ्रटचः। (५. २. ३१)

अवात् इत्येव। नतं नमनम्। नासिकाया नतं अवटीटम्। अवनाटम्। अवभ्रटम्। तद्योगान्नासिका अवटीटा। पुरुषोऽप्यवटीटः। 'अवटीटोऽवनाटश्चावभ्रटो नतनासिके' II. vii. 45. इत्यमरः।

१८३३। नेर्बिडज्बिरीसचौ। (५. २. ३२)

निबिडम्। निबिरीसम्।

माघे—VII. 20.

जघनमलघुपीवरोरु कृच्छ्रा-
    दुरुनिबिरीसनितम्बभारखेदि।
दयिततमशिरोधरावलम्बि-
    स्वभुजलताविभवेन काचिदूहे ॥ 1667 ॥

निबिरीसः निबिडः। 'निबिडं निबिरीसञ्च दृढं गाढं प्रचक्षते' इति वैज-यन्ती। निशब्दाद्बिरीसच्प्रत्ययः।

माघे—VII. 6.

गुरुनिबिडनितम्बबिम्बभारा-
    क्रमणनिपीडितमङ्गनाजनस्य।
चरणयुगमसुलवत्पदेषु
    स्वरसमसक्तमलक्तकच्छलेन ॥ 1668 ॥

निबिडं दृढम्। निशब्दाद्बिडच्प्रत्ययः।

१८३५। उपाधिभ्यां त्यकन्नासन्नारूढयोः। (५. २. ३४)

संज्ञायामित्यनुवर्तते। पर्वतस्यासन्नं स्थलमुपत्यका। आरूढं स्थलमधित्यका। 'त्यकनश्च निषेधः' (वा. 4526. सू. 464) इति कात्पूर्वस्येत्वस्य निषेधः।

अस्मिन्नेव ग्रन्थे श्लो० 33. समुद्रस्योपत्यका आसन्ना । पर्वतासन्नवाचकेन आसन्नमात्रं लक्ष्यते । पर्वतस्याधित्यका । लक्षणया उपरि स्थितेत्यर्थः । 'उपत्यकाद्रेरासन्ना भूमिरूर्ध्वमधित्यका' II. iii. 7. इत्यमरः । त्यकन्प्रत्ययः ।

अस्मिन्नेव ग्रन्थे श्लो० 193. मोदगिरेरधित्यकाम् ।

१८३६ । कर्मणि घटोऽठच् । (५. २. ३५)

घटत इति घटः । पचाद्यच् । कर्मणि घटते कर्मठः पुरुषः ।

भट्टिकाव्ये— I. 11.

ऐहिष्ट तं कारयितुं कृतात्मा
क्रतुं नृपः पुत्रफलं मुनीन्द्रम् ।
ज्ञाताशयस्तस्य ततो व्यतानी-
त्स **कर्मठः** कर्म सुतानुबन्धि ॥ 1669 ॥

कर्मसु घटते चेष्टते सम्यक् करोतीति **कर्मठः** कर्मशूरः । 'कर्मशूरस्तु कर्मठः' III. i. 18. इत्यमरः । अठच् । 'नस्तद्धिते' (सू. 679) इति टिलोपः ।

१८३७ । तदस्य सञ्जातं तारकादिभ्य इतच् । (५. २. ३६)

तारकास्सञ्जाता अस्य तारकितं नभः । आकृतिगणोऽयम् । तारकादिः— ५. २६.

रघुवंशे—XV. 8.

अग्रजेन प्रयुक्ताशीस्ततो दाशरथी रथी ।
ययौ वनस्थलीः पश्यन् **पुष्पितास्सुरभीरभीः** ॥ 1670 ॥

पुष्पाणि सञ्जातानि यासां ताः **पुष्पिताः** । इतच् ।

नैषधे—III. 121.

यस्ते नवः **पल्लवितः** कराभ्यां
स्मितेन यः **कोरकितस्तवास्ते** ।
अङ्गम्रदिम्ना तव **पुष्पितो** यः
स्तनश्रिया यः **फलितस्तवैव** ॥ 1671 ॥

पुष्पितः सञ्जातपुष्पः । पल्लवितः सञ्जातपल्लवः । कोरकितः सञ्जातकोरकः । फलितस्सञ्जातफलः ।

कुमारसंभवे—VI. 15.

अथ ते मुनयस्सर्वे मानयित्वा जगद्गुरुम् ।
इदमूचुरनूचानाः प्रीतिकण्टकितत्वचः ॥ 1672 ॥

कण्टकितास्सञ्जातकण्टकाः । इतच् ।

अस्मिन्नेव ग्रन्थे श्लो० 151. कुसुमितं सञ्जातकुसुमम् । इतच् ।

कुमारसंभवे—VIII. 67.

चन्द्रपादजनितप्रवृत्तिभि-
श्चन्द्रकान्तजलबिन्दुभिर्गिरिः ।
मेखलातरुषु निद्रितानमून्
बोधयत्यसमये शिखण्डिनः ॥ 1673 ॥

निद्रितान् सञ्जातनिद्रान् । इतच् ।

अस्मिन्नेव ग्रन्थे श्लो० 208. सुखितां सञ्जातसुखाम् । इतच् ।

कुमारसंभवे—IV. 27.

इति चैनमुवाच दुःखिता सुहृदः पश्य वसन्त किं स्थितम् ।
तदिदं कणशो विकीर्यते पवनैर्भस्म कपोतकर्बुरम् ॥ 1674 ॥

दुःखमस्यास्सञ्जातं दुःखिता । इतच् ।

किरातार्जुनीये—IX. 30.

आतपे धृतिमता सह वध्वा
यामिनीविरहिणा विहगेन ।
सेहिरे न किरणा हिमरश्मे-
र्दुःखिते मनसि सर्वमसह्यम् ॥ 1675 ॥

दुःखिते सञ्जातदुःखे । इतच् ।

अस्मिन्नेव ग्रन्थे श्लो० 1320. तरङ्गितं सञ्जाततरङ्गम् । इतच् ।

चम्पूरामायणे—I. 103.

रामे बाहुबलं वितृण्वति धनुर्वंशे गुणारोपणं
मा भूत्केवलमात्मना तिलकिते वंशेऽपि वैकर्तने ।
आकृष्टं नितरां तदेव न परं सीतामनोऽपि द्रुतं
भङ्गस्तस्य न केवलं क्षितिभुजां दोस्तम्भदम्भस्य च ॥ 1676 ॥

तिलकिते सञ्जाततिलके ।

रघुवंशे—XI. 93.

अथ पथि गमयित्वा क्लृप्तरम्योपकार्ये
कतिचिदवनिपालः शर्वरीश्शर्वकल्पः ।
पुरमविशदयोध्यां मैथिलीदर्शिनीनां
**कुवलयित**गवाक्षां लोचनैरङ्गनानाम् ॥ 1677 ॥

कुवलयानि येषां सञ्जातानि कुवलयिताः । इतच् ।

रघुवंशे—XII. 53.

रक्षसा मृगरूपेण वञ्चयित्वा स राघवौ ।
जहार सीतां पक्षीन्द्रप्रयासक्षण**विघ्नितः** ॥ 1678 ॥

**विघ्नितः** सञ्जातविघ्नः । इतच् ।

अस्मिन्नेव ग्रन्थे श्लो० 232. **विघ्निताः** सञ्जातविघ्नाः ।

अस्मिन्नेव ग्रन्थे श्लो० 1342. **घर्मितं** सञ्जातघर्मम् ।

नैषधे—IV. 13.

हृदि दमस्वसुरश्रुझरप्लुते
प्रतिफलद्विरहात्तमुखानतेः ।
हृदयभाजमराजत चुम्बितुं
नलमुपेत्य **किलागमितं** मुखम् ॥ 1679 ॥

**आगमितं** सञ्जातागमनम् । इतच् ।

अस्मिन्नेव ग्रन्थे श्लो० 1611. चित्रिताम्सञ्जातचित्रा: ।

कुमारसंभवे—V. 14.

अतन्द्रिता सा स्वयमेव वृक्षकान्
घटस्तनप्रस्रवणैर्व्यवर्धयत् ।
गुहोऽपि येषां प्रथमाप्तजन्मनां
न पुत्रवात्सल्यमपाकरिष्यति ॥ 1680 ॥

अतन्द्रिता असञ्जाततन्द्रा । इतच् ।

कुमारसंभवे—IV. 30.

गत एव न ते निवर्तते स सखा दीप इवानिलाहतः ।
अहमस्य दशेव पश्य मामविषह्यव्यसनप्रधूमिताम् ॥ 1681 ॥

प्रधूमितां सञ्जातधूमाम् ।

रघुवंशे—IV. 2.

दिलीपानन्तरं राज्ये तं निशम्य प्रतिष्ठितम् ।
पूर्वं प्रधूमितो राज्ञां हृदयेऽग्निरिवोत्थितः ॥ 1632 ॥

प्रधूमितः । पूर्ववत् ।

रघुवंशे—III. 12.

कुमारभृत्याकुशलैरनुष्ठिते
भिषग्भिराप्तैरथ गर्भभर्मणि ।
पतिः प्रतीतः प्रसवोन्मुखीं प्रियां
ददर्श काले दिवमभ्रितामिव ॥ 1683 ॥

अभ्राण्यस्याःसञ्जातानि अभ्रिता ताम् अभ्रिताम् । इतच् ।

१८३८ । प्रमाणे द्वयसज्दघ्नञ्मात्रचः । (५. २. ३७)

तदस्येत्यनुवर्तते । ऊरू प्रमाणमस्य ऊरुद्वयसम् । ऊरुदघ्नम् । ऊरुमात्रम् ।

वा० । वत्वन्तात्स्वार्थे द्वयसच्मात्रचौ बहुलम् । (3134.)

तावदेव तावद्द्वयसम् । तावन्मात्रम् ।

अस्मिन्नेव ग्रन्थे श्लो० 626. सम्पन्नतालः प्रमाणमस्य **सम्पन्नताल-द्वयसः** । द्वयसच् ।

माघे—XII. 72.

तत्पूर्व**मंसद्वयसं** द्विपाधिपाः
क्षणं सहेलाः परितो जगाहिरे ।
सद्यस्ततस्तेरुरनारतस्रुत-
स्वदानवारिप्रचुरीकृतं पयः ॥ 1684 ॥

अंसौ प्रमाणमस्या**ंसद्वयसम्** । द्वयसच् ।

अस्मिन्नेव ग्रन्थे श्लो० 67. गजपतिः प्रमाणमासां **गजपतिद्वयसीः** । द्वयसच् । 'टिड्ढाण्' (सू. 470) इति ङीप् ।

अस्मिन्नेव ग्रन्थे श्लो० 68. **गुल्फद्वयसीं** गुल्फप्रमाणाम् । पूर्ववत् ।

माघे—VIII. 21.

तिष्ठन्तं पयसि पुमांस**मंसमात्रे**
**तद्दघ्नं** तदवयती किलात्मनोऽपि ।
अभ्येतुं सुतनुरभीरियेष मौग्ध्या-
दाश्लेषि द्रुतममुना निमज्जतीति ॥1685 ॥

सः प्रमाणमस्य **तद्दघ्नं** तत्प्रमाणं । प्रमाणार्थे दघ्नच् । अंसौ प्रमाणमस्येत्यंस-**मात्रे** अंसप्रमाणे । मात्रच् ।

चम्पूभारते—V. 13.

हतरिपुं विनिवृत्तमवेक्ष्य तं
हरिहयस्य सुरैस्सह तुष्यतः ।
नयनवारिभिरङ्गमनाप्लुतं
न ददृशे **तिलमात्र**मपि स्वकम् ॥ 1686 ॥

**तिलमात्रं** तिलप्रमाणम् । मात्रच् ।

अस्मिन्नेव ग्रन्थे श्लो० 1631. त्रिदशगोपः इन्द्रगोपकीटः प्रमाणमस्य **त्रिदशगोपमात्रः** । मात्रच् । ततः स्वार्थे कः ।

भट्टिकाव्ये—VIII. 26.

आत्मानमवजानानः शशमात्रो नयन् दिनम् ।
शास्ये रात्राविति प्राज्ञः नत्यज्ञासीत्क्रियापटुः ॥ 1687 ॥

शशमात्रः शशप्रमाणकः ।

१८३९ । पुरुषहस्तिभ्यामण् च । (५. २. ३८)

पुरुषः प्रमाणमस्य पौरुषम् पुरुषद्वयसम् । हास्तिनं हस्तिद्वयसम् ।

नैषधे—I. 57.

अमी ततस्तस्य विभूषितं सितं
जवेऽपि मानेऽपि च पौरुषाधिकम् ।
उपाहरन्नश्वमजस्रचञ्चलैः
खुराञ्चलैः क्षोदितमन्दुरोदरम् ॥ 1688 ॥

पौरुषात् । अण् । 'पुरुषाद्वध' (वा. 3000. सू. 1672) इति वधाद्यर्थे पौरुषेय इति ढञ् ।

१८४० । यत्तदेतेभ्यः परिमाणे वतुप् । (५. २. ३९)

यत्परिमाणमस्य यावान् । तावान् । एतावान् ।

चम्पूभारते—VII. 25.

मातुर्मुखं मम पुरः पुर एव तिष्ठ-
त्युत्कण्ठितस्य नय तत्सविधं कृपालो ।
यावन्ति सन्ति मम कोशगृहे सवित्री
तावद्भिरेव कनकैरभिषेक्ष्यति त्वाम् ॥ 1689 ॥

यावन्ति कनकानि तावद्भिः । वतुप् ।

चम्पूभारते—VIII. 2.

सेनानां यावतीः पार्थो युद्धायाक्षौहिणीर्दधौ ।
धार्तराष्ट्रश्च तत्सप्तभिस्तावतीरधिकाः पुनः ॥ 1690 ॥

यावतीः । तावतीः । वतुप् । ‘ उगितश्च ’ ( सू. 455 ) इति ङीप् ।

चम्पूभारते—VIII. 15.

एतावतो बन्धुजनान्निहत्य
किं लब्धया कृष्ण भुवानया मे ।
सकन्दमूलानि सनिर्झराणि
न किं ममाद्यापि वनानि तानि ॥ 1691 ॥

एतावतः बन्धुजनान् ।

१८४१ । किमिदम्भ्यां वो घः । ( ५. २. ४० )

आभ्यां वतुप्स्यात्, वस्य च घः । कियान् । इयान् ।

नैषधे—I. 130.

धिगस्तु तृष्णातरलीभवन्मन-
स्समीक्ष्य पक्षान्मम हेमजन्मनः ।
तवार्णवस्येव तुषारशीकरै-
र्भवेदमीभिः कमलोदयः **कियान्** ॥ 1692 ॥

**कियान्** । स्त्रियां कियती । ‘ उगितश्च ’ ( सू. 455 ) इति ङीप् ।

माघे—VIII. 70.

स्वच्छाम्भस्स्नपनविधौतमङ्गमोष्ठ-
स्ताम्बूलद्युतिविशदो विलासिनीनाम् ।
वासश्च प्रतनु विविक्तमस्त्वि**तीया**-
नाकल्पो यदि कुसुमेषुणा न शून्यः ॥ 1693 ॥

**इयान्** एतावान् ।

१८४२ । किमः सङ्ख्यापरिमाणे डति च । ( ५. २. ४१ )

चाद्वतुप् । तस्य च वस्य घः । काः सङ्ख्या येषां ते कति कियन्तः ।

१८४३ । सङ्ख्याया अवयवे तयप् । ( ५. २. ४२ )

पञ्चावयवा अस्य पञ्चतयं दारु ।

अस्मिन्नेव ग्रन्थे श्लो० 21. अङ्कानां सङ्ख्यतयम् ।

अस्मिन्नेव ग्रन्थे श्लो० 738. द्रव्यगुणक्रियाजातिभेदेन चत्वारोऽवयवा अस्या इति चतुष्टयी चतुर्विधा । सङ्ख्याया अवयवे तयप् । 'टिड्ढा' (सू. 470) इति ङीप् । शब्दानां प्रवृत्तिः ।

१८४४ । द्वित्रिभ्यां तयस्यायज्वा । ( ५. २. ४३ )

द्वयम् द्वितयम् । त्रयं त्रितयम् ।

चम्पूभारते—X. 33.

ग—अथ जयद्रथघटोत्कचनिधनशोकातिशयगुरुन्द्वयानपि कुरुनाथसवितु-मिव कुलकूटस्थे कुमुदबान्धवे कुलिशायुधदिशमेत्य काशनीकाशैरंशुभिराकाशं दिशाव-काशं व्याकाशयमाने सति कोपकुटिलीकृतचापौ विराटद्रुपदसूनू द्रुतमर्नीचैर्नाराचैराचार्यं शल्लकैश्शल्यमृगमिव निबद्धतनुमातेनतुः ॥ 1694 ॥

**द्वयान्** । तयस्यायजादेशः ।

भट्टिकाव्ये—VIII. 18.

> ये सूर्यमुपतिष्ठन्ते मन्त्रैस्सन्ध्यात्रयं द्विजाः ।
> रक्षोभिस्तापितास्तेऽपि सिद्धिं ध्यायन्ति तेऽधुना ॥ 1695 ॥

**त्रयम्** । अयच् ।

अस्मिन्नेव ग्रन्थे श्लो० 71. **नरशिखित्रयी** । अयजादेशे 'टिड्ढा' (सू. 470) इति ङीप् ।

अस्मिन्नेव ग्रन्थे श्लो० 1230. **जगत्त्रयी** । पूर्ववत् ।

अस्मिन्नेव ग्रन्थे श्लो० 1401. **कालत्रितये** । तयप् ।

## १८४५ । उभादुदात्तो नित्यम् । (५. २. ४४)

उभशब्दात्तयपोऽयच् स्यात् । उभयम् ।

अस्मिन्नेव ग्रन्थे श्लो० 72. उभय्यः उभयविधाः । तयस्यायजादेशः । ङीप् ।

रघुवंशे—VIII. 23.

इति शत्रुषु चेन्द्रियेषु च प्रतिषिद्धप्रसरेषु जाग्रतौ ।
प्रसितावुदयापवर्गयोरुभयीं सिद्धिमुभाववापतुः ॥ 1696 ॥

**उभयीम्** । पूर्ववत् ।

चम्पूभारते—VIII. 73.

विनतेः पदयोरनन्तरं विहिताशीः परिरभ्य तं सुतम् ।
परिहर्तुमुवाच पञ्चतामुभयीं धर्मसुतादि सूनुषु ॥ 1697 ॥

**उभयीम्** । पूर्ववत् ।

॥ इति पाञ्चमिकप्रकरणम् ॥

---

## ॥ अथ मत्वर्थीयप्रकरणम् ॥



### १८४९ । तस्य पूरणे डट् । (५. २. ४८)

एकादशानां पूरणः एकादशः । एकादशानां पूरणी एकादशी । टित्त्वान्ङीप् ।

अस्मिन्नेव ग्रन्थे श्लो० 1575. त्रिंशत् । 'पंक्तिविंशति' (सू. 1725) इति निपातः । त्रिंशतः पूरणं त्रिंशत्तमम् । अनेन डट् । 'विंशत्यादिभ्यस्तमडन्यतरस्याम्' (सू. 1856) इति डटस्तमडागमः ।

अस्मिन्नेव ग्रन्थे श्लो० 46. कलां शततमीम् । शतस्य पूरणी शततमी । अनेन डट् । 'नित्यं शतादि' (सू. 1857) इति तमडागमः । टित्वान्ङीप् ।

अस्मिन्नेव ग्रन्थे श्लो० 913. द्वाविंशतेः पूरणं द्वाविंशम् । अनेन डट् । 'ति विंशतेर्डिति' (सू. 844) इति टिलोपः ।

### १८५० । नान्तादसंख्यादेर्मट् । (५. २. ४९)

डटो मडागमः स्यात् । पञ्चन् नान्तः । पञ्चानां पूरणः पञ्चमः । नान्तात्किम्, विंशः । असंख्यादेः किम् । एकादशः ।

अस्मिन्नेव ग्रन्थे श्लो० 47. अष्टन् नान्तः । अष्टानां पूरणी अष्टमी । तस्य पूरणे डट् । अनेन मडागमः । टित्त्वान्ङीप् ।

अस्मिन्नेव ग्रन्थे श्लो० 45. दशमीं दशाम् । दशन् नान्तः । पूर्ववत् ।

### १८५१ । षट्कतिकतिपयचतुरां थुक् । (५. २. ५१)

एषां थुगागमः स्याड्डटि । षण्णां पूरणष्षष्ठः । कतिथः । कतिपयशब्दस्यासंख्यात्वेऽप्यत एव ज्ञापकाड्डट् । कतिपयथः । चतुर्थः ।

वा० । चतुरश्छयतावाद्यक्षरलोपश्च । (3158.)

तुरीयः । तुर्यः ।

माघे—XV. 42.

विहितागसो मुहुरलङ्घ्यनिजवचनदामसंयतः ।
तस्य कतिथ इति तत्प्रथमं मनसा समाख्यदपराधमच्युतः ॥ 1698 ॥

**कतिथः** कतीनां पूरणः । तस्य पूरणे डट् । अनेन थुगागमः ।

अस्मिन्नेव ग्रन्थे श्लो० 709. उञ्छषष्ठाङ्कितसैकतानि । उञ्छानां षष्ठैर्भाग-भागैरङ्कितानि सैकतानि येषां तानि । 'षष्ठाष्टमाभ्यां च' (सू. 1996) इति षष्ठ-शब्दाद्भागार्थेऽन्प्रत्ययः । अत एवापूरणार्थत्वात् 'पूरणगुण' (सू. 705) इत्यादिना न षष्ठीसमासप्रतिषेधः ।

चम्पूरामायणे—V. 30.

ग—महाभाग ! सर्वथास्य दुरात्मनः प्रत्यासीदति मृत्युः । एवमनलाभिधानया विभीषणदुहित्रा स्वमात्रा प्रेषितया भाषितम् । अयमप्यनार्यशीलस्तुरीयमुपायमन्तरेण न मामार्यपुत्रस्य समर्पयिष्यति । नियतमहमपि मासादूर्ध्वं न शक्नुयां प्राणान् कृपणान्धारयितुमिति ॥ 1699 ॥

**तुरीयम्** । छः ।

नैषधे—IV. 123.

श्रीहर्षं कविराजराजिमुकुटालङ्कारहीरस्सुतं
श्रीहीरस्सुषुवे जितेन्द्रियचयं मामल्लदेवी च यम् ।
**तुर्यः** स्थैर्यविचारणप्रकरणभ्रातर्ययं तन्महा-
काव्येऽत्र व्यगलन्नलस्य चरिते सर्गो निसर्गोज्ज्वलः ॥ 1700 ॥

**तुर्यः** । यत् ।

**१८५२ । बहुपूगगणसङ्घस्य तिथुक् । (५. २. ५२)**

डटि इत्येव । पूगसङ्घयोरसंख्यात्वेऽप्यत एव डट् । बहुतिथ इत्यादि ।

किरातार्जुनीये—XII. 2.

अभिरश्मिमालि विमलस्य धृतजयधृतेरनाशुषः ।
तस्य भुवि **बहुतिथा**स्तिथयः प्रतिजग्मुरेकचरणं निषीदतः ॥ 1701 ॥

बहूनां पूरणा **बहुतिथाः** बहुसङ्ख्याका इत्यर्थः। 'तस्य पूरणे' (सू. 1840) इति डट्। अनेन तिथुक्। अत्र [illegible] 'बहुवचनान्तेषु [illegible]' I. iii.। इत्यभिधानात्। अन्यथा बहुतिथा इत्यत्र टित्त्वान्ङीप् स्यात्।

माघे—XIX. 107.

> एकेषुणा **सङ्घातिथान्** द्विषो भिन्दन् द्रुमानिव।
> स जन्मान्तरवैरस्य चक्रे सदृशमात्मनः॥ 1702॥

सङ्घानां पूरणान् **सङ्घातिथान्** सङ्घशः स्थितान्। पूर्ववत्।

## १८५३। वतोरिथुक्। (५. २. ५३)

डटि इत्येव। यावतिथः। 'यत्तदेतेभ्यः' (सू. 1840) इति वतुप्। वत्वन्तात् स्वार्थे द्वयसच्मात्रचौ।

## १८५४। द्वेस्तीयः। (५. २. ५४)

डटोऽपवादः। द्वयोः पूरणो द्वितीयः। स्त्रियां द्वितीया।

रघुवंशे—V. 10.

> अपि प्रसन्नेन महर्षिणा त्वं सम्यग्विनीयानुमतो गृहाय।
> कालो ह्ययं संक्रमितुं **द्वितीयं** सर्वोपकारक्षममाश्रमं ते॥ 1703॥

**द्वितीय**माश्रमम्।

## १८५५। त्रेस्संप्रसारणञ्च। (५. २. ५५)

तृतीयः। 'पूरणाद्भागे तीयादन्' (सू. 1994)। द्वितीयो भागो द्वितीयः। तृतीयः। 'तीयादीकक् स्वार्थे वा वाच्यः' (वा. 2691. सू. 1994) इति तु द्वैतीयीकः। तार्तीयीकः।

## १८५६। विंशत्यादिभ्यस्तमडन्यतरस्याम्। (५. २. ५६)

एभ्यो डटस्तमडागमो वा स्यात्। विंशतितमः विंशः। एकविंशतितमः एकविंशः।

अस्मिन्नेव ग्रन्थे श्लो० 1575. 'पङ्क्ति' (सू. 1725) इत्यत्र त्रिंशदिति निपातितः। त्रिंशतः पूरणं त्रिंशत्तमम्। 'तस्य पूरणे' (सू. 1849) इति डट्। अनेन डटस्तमडागमः।

१८५७। नित्यं शतादिमासार्धमाससंवत्सराच्च। (५. २. ५७)

शतस्य पूरणः शततमः। एकशततमः। मासतमः।

अस्मिन्नेव ग्रन्थे श्लो० 46. शतस्य पूरणी शततमी। डटि तमडागमः टित्त्वान्ङीप्।

अस्मिन्नेव ग्रन्थे श्लो० 1584. मासस्य पूरणान्मासतमात्। अनेन डटस्तमडागमः। एतस्मादेव ज्ञापकात् असंख्यावाचिनोऽपि डट्।

१८५८। षष्ट्यादेश्चासंख्यादेः। (५. २. ५८)

षष्टितमः। संख्यादेस्तु 'विंशत्यादिभ्यः' (सू. 1856) इति विकल्प एव। एकषष्टः। एकषष्टितमः।

१८६३। तत्र कुशलः पथः। (५. २. ६३)

वुन् स्यात्। पथि कुशलः पथकः। 'पथः ष्कन्' (सू. 1739) पन्थानं गच्छति पथिकः। 'पन्थो ण नित्यं' (सू. 1740) पन्थानं नित्यं गच्छति पान्थः।

भट्टिकाव्ये—II. 43.

ततो नदीष्णान्पथिकान् गिरिज्ञा-
नाह्वायकान् भूमिपतेरयोध्याम्।
दिदृक्षुस्तुतां योधवरैस्तुरङ्गै-
र्व्यसर्जयन्मैथिलमर्त्यमुख्यः ॥ 1704 ॥

पथिषु नानामार्गेषु कुशलान् पथिकान्। अनेन ठगिति व्याख्याने वर्तते। आह्वायकान्।

अस्मिन्नेव ग्रन्थे श्लो० 1242. पन्थानं गच्छन्तीति पथिकाः। 'पथः ष्कन्' (सू. 1739) इति ष्कन्॥

१८६४ । आकर्षादिभ्यः कन् । ( ५. २. ६४ )

आकर्षे कुशल आकर्षकः । आकषादिभ्य इति रेफरहितो मुख्यः पाठः । आकषो निकषः । आकर्षादिः— ५. २९.

१८६९ । अंशं हारी । ( ५. २. ६९ )

हारीत्यावश्यके णिनिः । अत एव तद्योगे षष्ठी न । अंशको दायादः ।

१८७० । तन्त्रादचिरापहृते । ( ५. २. ७० )

तन्त्रकः पटः । प्रत्यग्र इत्यर्थः ।

अस्मिन्नेव ग्रन्थे श्लो० 1521. तन्त्रात् तन्तुवायपरिच्छदादचिरापहृतस्तन्त्रपटः तन्त्रकं प्रत्यग्रपटः । कन्प्रत्ययः । 'तन्त्रं स्वराष्ट्रचिन्तायां तन्तुवायपरिच्छदे' इति यादवः ।

१८७१ । ब्राह्मणकोष्णिके संज्ञायाम् । ( ५. २. ७१ )

आयुधजीविनो ब्राह्मणा यस्मिन् देशे स ब्राह्मणकः । अल्पमन्नं यस्यां सा उष्णिका यवागूः । अन्नशब्दस्योष्णादेशो निपात्यते ।

१८७२ । शीतोष्णाभ्यां कारिणि । ( ५. २. ७२ )

शीतं करोतीति शीतकोऽलसः । उष्णं करोतीत्युष्णकः शीघ्रकारी । 'शीतोष्ण' ( वा. 3217. सू. 1928 ) इति तु शीतं न सहते शीतालुः । उष्णालुः ।

१८७३ । अधिकम् । ( ५. २. ७३ )

अध्यारूढशब्दात्कन् उत्तरपदलोपश्च । अधिकम् ।

१८७४ । अनुकाभिकाभीकः कमिता । ( ५. २. ७४ )

अन्वभिभ्यां कन्, अभेः पाक्षिको दीर्घश्च । अनुकामयते अनुकः । अभिकामयते अभिकः । अभीकः ।

भट्टिकाव्ये—IV. 19.

> प्राप्य चञ्चूर्यमाणासौ पतीयन्ती रघूत्तमम् ।
> **अनुका** प्रार्थयाञ्चक्रे प्रियाकर्तुं प्रियंवदा ॥1705 ॥

**अनुका** कामुकी । अनेन निपातः ।

अस्मिन्नेव ग्रन्थे श्लो० 303. **अभिकः** कामयिता ।

रघुवंशे—XIX. 4.

> सोऽधिकारमभि**कः** कुलोचितं काश्चन स्वयमवर्तयत्समाः ।
> सन्निवेश्य सचिवेष्वतः परं स्त्रीविधेयनवयौवनोऽभवत् ॥ 1706 ॥

**अभिकः** कामुकः । 'कम्रः कामयिताभीकः कमनः **कामनोऽभिकः**' III. i. 24. इत्यमरः ।

नैषधे—IV. 5.

> किमु तदन्तरुभौ भिषजौ दिवः
> स्मरनलौ विशतः स्म विगाहितुम् ।
> तद**भिकेन** चिकित्सितुमाशु तां
> मखभुजामधिपेन नियोजितौ ॥ 1707 ॥

तद**भिकेन** भैमीकामुकेन ।

अस्मिन्नेव ग्रन्थे श्लो० 349. **अभीकया** कामुकया ।

## १८७८ । स एषां ग्रामणीः । ( ५. २. ७८ )

देवदत्तो मुख्योऽस्य देवदत्तकः । त्वत्कः । मत्कः ।

अस्मिन्नेव ग्रन्थे श्लो० 922. **त्वत्काः** त्वद्ग्रामणीकाः । त्वं ग्रामणीरेषामिति कन् ।

अस्मिन्नेव ग्रन्थे श्लो० 1414. अहमेषां ग्रामणीरिति **मत्कानि** । मत्स्वामिकानीत्यर्थः । कन्प्रत्ययः । 'प्रत्ययोत्तरपदयोश्च' (सू. 1373) इति मदादेशः ।

अस्मिन्नेव ग्रन्थे श्लो० 1413. **मत्कम्** ।

१८७९ । शृङ्खलमस्य बन्धनं करभे । (५. २. ७९)

शृङ्खलकः करभः । 'करभाः स्युः शृङ्खलका दारवैः पादबन्धनैः' II. ix. 75. इत्यमरः ।

माघे—XII. 7.

अह्नाय यावन्न चकार भूयसे
निषेदिवानासनबन्धनध्वने ।
तीक्ष्णोत्थितास्तावदसह्यरंहसो
विशृङ्खलं शृङ्खलकाः प्रतस्थिरे ॥ 1708 ॥

१८८० । उत्क उन्मनाः । (५. २. ८०)

इति निपातः ।

माघे—IV. 18.

उच्चारणज्ञोऽथ गिरां दधानमुच्चा रणत्पक्षिगणास्तटीस्तम् ।
उत्कं धरं द्रष्टुमवेक्ष्य शौरिमुत्कन्धरं दारुक इत्युवाच ॥ 1709 ॥

उत्कमुत्सुकम् ।

१८८४ । श्रोत्रियश्छन्दोऽधीते । (५. २. ८४)

श्रोत्रियः । वा इत्यनुवृत्तेश्छान्दसः ।

रघुवंशे—XVI. 25.

कुशावतीं श्रोत्रियसात्स कृत्वा यात्रानुकूलेऽहनि सावरोधः ।
अनुद्रुतो वायुरिवाभ्रवृन्दैः सैन्यैरयोध्याभिमुखः प्रतस्थे ॥ 1710 ॥

श्रोत्रियेषु छान्दसेष्वधीनां श्रोत्रियसात् । 'श्रोत्रियच्छान्दसौ समौ' II. vii. 6. इत्यमरः ।

अनर्घराघवे—I. 9.

ग—अयं तु प्राचेतसीयं कथावस्तु बहुभिः प्रणीतमपि प्रयुञ्जानो नापराध्यति श्रोत्रियपुत्रः । 1711 ॥

श्रोत्रियः छन्दोऽध्येता ।

१८८८। इष्टादिभ्यश्च। (५. २. ८८)

इष्टमनेन इष्टी। अधीति। इष्टादिः— ५. ३०.

अस्मिन्नेव ग्रन्थे श्लो० 590. अध्वरेषु यागेषु इष्टमेभिरिति **इष्टिनः**। अध्वरानिष्टवन्त इत्यर्थः। अनेन इनिप्रत्ययः। 'क्तस्येन्विषयस्य' (वा. 1485. सू. 633) इति कर्मणि सप्तमी। कर्मसु पूर्ती। पूर्तमनेनेति पूर्ती। इनिः। पूर्ववत्सप्तमी।

अस्मिन्नेव ग्रन्थे श्लो० 589. वृद्धमतेषु श्रुतमनेन **श्रुती**। कृतमनेन **कृती**। तेषां श्रोतानुष्ठाता च। इनिः। सप्तमी।

रघुवंशे—III. 51.

> ततः प्रहस्यापभयः पुरन्दरं पुनर्बभाषे तुरगस्य रक्षिता।
> गृहाण शस्त्रं यदि सर्ग एष ते न खल्वनिर्जित्य रघुं **कृती** भवान्॥
> 1712॥

कृतमनेनेति **कृती** कृतकृत्यः। इनिः।

कुमारसंभवे—V. 16.

> कृताभिषेकां हुतजातवेदसं त्वगुत्तरासङ्गवतीम**धीतिनीम्**।
> दिदृक्षवस्तामृषयोऽभ्युपागमन् न धर्मवृद्धेषु वयस्समीक्ष्यते॥ 1713॥

अधीतमनया **अधीतिनी**। इनिः। 'ऋन्नेभ्यो ङीप्' (सू. 306) इति ङीप्।

अस्मिन्नेव ग्रन्थे श्लो० 588. नीतिषु **आम्नातिभिः** अभ्यस्तनीतिशास्त्रैः। इनिः। सप्तमी।

अनर्घराघवे—V. 39.

> एको वेषपरिग्रहः परिकरः साधारणः कर्मणा-
> माकृत्योर्मधुरत्वमेव सदृशं तुल्यैव गम्भीरता।
> तद्द्रष्टुं चिरमुत्सुकोऽस्मि कतरो वां रामभद्रः पुनः
> सर्वक्षत्रवधव्रती भृगुपतिर्येना**वकीर्णी**कृतः॥ 1714॥

**अवकीर्णी**। इनिः।

१८९० । अनुपद्यन्वेष्टा । (५. २. ९०)

अनुपदमन्वेष्टा गवामनुपदी ।

माघे—IX. 70.

दयिताहृतस्य युवभिर्मनसः परिमुष्टतानिव गतैः पदकम् ।
उदिते ततस्सपदि लब्धपदैः क्षणदाकरेऽनुपदिभिः प्रयये ॥ 1715 ॥

अनुपदिभिः अन्वेष्टृभिः । इनिप्रत्ययान्तो निपातितः ।

१८९१ । साक्षाद्द्रष्टरि संज्ञायम् । (५. २. ९१)

साक्षाद्द्रष्टा साक्षी ।

नैषधे—VI. 91.

स्तुतौ मघोनस्त्यज साहसिक्यं
वक्तुं कियत्तं यदि वेद वेदः ।
मृषोत्तरं साक्षिणि हन्त नृणा-
मज्ञातृविज्ञापि ममापि तस्मिन् ॥ 1716 ॥

साक्षिणि साक्षिभूते । इनिप्रत्ययः ।

१८९२ । क्षेत्रियच् परक्षेत्रे चिकित्स्यः । (५. २. ९२)

क्षेत्रियो व्याधिः । शरीरान्तरे चिकित्स्यः । अप्रतिकार्य इत्यर्थः ।

भट्टिकाव्ये—IV. 32.

अहं शूर्पणखा नाम्ना नूनं नाज्ञायिषि त्वया ।
दण्डोऽयं क्षेत्रियो येन मय्यपातीति साब्रवीत् ॥ 1717 ॥

अयं नासाच्छेदरूपः । क्षेत्रियः परक्षेत्रे चिकित्स्यः । परशब्दलोपो घच्प्रत्ययश्च निपात्यते । क्षेत्रियो नाम परत्र जन्मान्तरशरीरे चिकित्स्यो मरणान्तो व्याधिः । अयं दण्डोऽपि छिन्नस्याङ्गस्य पुनः प्ररोहासम्भवात् तत्प्राय इति तथा व्यपदिष्टः ।

१८९४ । तदस्यास्त्यस्मिन्निति मतुप् । (५. २. ९४)

गावोऽस्यास्मिन्वा सन्ति गोमान् ।

वा॰ । भूमनिन्दाप्रशंसासु नित्ययोगेऽतिशायने ।

संसर्गेऽस्तिविवक्षायां भवन्ति मतुबादयः ॥ (3183.)

अस्मिन्नेव ग्रन्थे श्लो॰ 813. हनुर्वदनैकदेशः । स निन्दितोऽस्यास्तीति **हनूमान्** । निन्दायां मतुप् ।

अस्मिन्नेव ग्रन्थे श्लो॰ 77. **इषुमति** प्रशस्तबाणवति । प्रशंसायां मतुप् ।

अस्मिन्नेव ग्रन्थे श्लो॰ 543. **प्रमादवान्** नित्यं प्रमादयुक्तः । नित्ययोगे मतुप् ।

भट्टिकाव्ये— VII. 49.

वणिक् **प्रग्राहवान्** यद्वत्काले चरति सिद्धये ।
देशापेक्षास्तथा यूयं यातादाया ङ्गुलीयकम् ॥ 1718 ॥

तुला प्रगृह्यते येन सूत्रेण स प्रग्राहः । स तुलासम्बन्धी विद्यते यस्य वणिजस्स **प्रग्राहवान्** । संसर्गे मतुप् ।

अस्मिन्नेव ग्रन्थे श्लो॰ 971. **अक्षमालावान्** । संसर्गे मतुप् । **शिखी** शिखावान् । नित्ययोगे व्रीह्यादित्वादिनिः ।

भट्टिकाव्ये—VI. 84.

समाविष्टं ग्रहेणेव ग्राहेणावात्तमर्णवे ।
दृष्ट्वा गृहान् स्मरस्येव वनान्तान्मम मानसम् ॥ 1719 ॥

अर्णः पानीयं यत्रास्तीत्यर्णवः । 'केशाद्वोऽन्यतरस्याम्' (सू. 1916) इत्यत्र 'अर्णसो लोपश्च' (वा. 5053) इति वार्तिकेन भूम्नि नित्ययोगेऽतिशायने वा वः सलोपश्च ।

## १८९५ । रसादिभ्यश्च । (५. २. ९५)

मतुप् । रसवान् । रूपवान् । रसादिः— ५. ३१.

## १८९६ । तसौ मत्वर्थे । (१. ४. १९)

तान्तसान्तौ भसंज्ञौ स्तो मत्वर्थे प्रत्यये परे ।

वा० । गुणवचनेभ्यो मतुपो लुगिष्टः । (३१३५.)

शुक्लो गुणोऽस्यास्तीति शुक्लः पटः । कृष्णः ।

१८९७ । मादुपधायाश्च मतोर्वोऽयवादिभ्यः । (८. २. ९.)

मस्य वः स्यात् । यवादेस्तु यवमान् भूमिमान् । यवादिः— ८. ३.

भट्टिकाव्ये—XIV. 68.

भ्रेजिरेऽक्षतवद्घोषा लेभे संज्ञाञ्च लक्ष्मणः ।
विभीषणोऽपि बभ्राजे गरुत्मानिव चान्तिकम् ॥ 1720 ॥

गरुतोऽस्य सन्तीति गरुत्मान् । यवादेराकृतिगणत्वाद्वत्वं न भवति ।

१८९९ । संज्ञायाम् । (८. २. ११)

मतोर्मस्य वः स्यात् । अहीवती । मुनीवती । 'शरादीनां च' (सू. 1042) इति दीर्घः ।

१९०० । आसन्दीवदष्ठीवच्चक्रीवत्कक्षीवद्रुमण्वच्चर्मण्वती । (८. २. १२)

एते षट् संज्ञायां निपात्यन्ते । आसनशब्दस्यासन्दीभावः । आसन्दीवान् ग्रामः । अन्यत्रासनवान् । अस्थिशब्दस्याष्ठीभावः । अष्ठीवान् । अस्थिमानन्यत्र । चक्रशब्दस्य चक्रीभावः । चक्रीवान्नाम राजा । चक्रवानन्यत्र । कक्ष्यायास्संप्रसारणम् । कक्षीवान्नामर्षिः । कक्ष्यावानन्यत्र । लवणशब्दस्य रुमण्भावः । रुमण्वान्नाम पर्वतः । लवणवानन्यत्र । चर्मणो नलोपाभावो णत्वञ्च । चर्मण्वती नाम नदी । चर्मवत्यन्यत्र ।

माघे—V. 8.

शैलोपशल्यनिपतद्रथनेमिधारा-
निष्पिष्टनिष्ठुरशिलातलचूर्णगर्भाः ।
भूरेणवो नभसि बद्धपयोदचक्रा-
श्चक्रीवदङ्गरुहधूम्ररुचो विसस्रुः ॥ 1721 ॥

चक्रवद्भ्रमणमस्यास्तीति चक्रीवान् गर्दभः । 'चक्रीवन्तस्तु बालेया रासभा गर्दभाः खराः' II. ix. 77. इत्यमरः । अनेन निपातः ।

१९०१ । उदन्वानुदधौ च । (८. २. १३)

उदकस्योदन्भावो मतावुदधौ संज्ञायां च । उदन्वान्समुद्रः ऋषिश्च ।

अस्मिन्नेव ग्रन्थे श्लो० 987. उदन्वतःसमुद्रस्य ।

भट्टिकाव्ये—VIII. 6.

अन्योऽन्यं स व्यतियुतः शब्दान् शब्दैस्तु भीषणान् ।
उदन्वांश्चानिलोद्धूतो म्रियमाणा च राक्षसी ॥ 1722 ॥

उदन्वानुदधिः ।

अस्मिन्नेव ग्रन्थे श्लो० 699. उदकान्यस्य सन्तीत्युदन्वानुदधिः ।

१९०२ । राजन्वान् सौराज्ये । (८. २. ११४)

राजन्वती भूः । राजवानन्यत्र । 'सुराज्ञि देशे राजन्वान्' II. i. 14. इत्यमरः ।

अस्मिन्नेव ग्रन्थे श्लो 161. भूमिमनेन राजन्वतीं शोभनराजवतीम् । निपातनात्साधुः । मतुप् । 'उगितश्च' (सू. 455) इति ङीप् ।

चम्पूरामायणे I. 106.

यत्कीर्तिस्तिलकायते सुरवधूसङ्गीतगोष्ठीमुखे
येनाद्यः पितृमान्सुमान् वसुमती येनैव राजन्वती ।
इन्द्रस्सङ्गरसङ्कटेषु विजहौ वीरस्य यस्योन्मुख-
प्रेङ्खत्स्यन्दनकेतनाम्बरदशासन्दर्शनाद्दुर्दशाम् ॥ 1723 ॥

वसुमती दशरथेन राजन्वती ।

अनर्घराघवे—I. 18.

असद्ध्रीनमहचरः क्रतुभुजामद्यायमाद्यो रवि-
र्यज्वानो वयमद्य ते भगवती भूरद्य राजन्वती ।

अद्य स्वं बहु मन्यते सहचरैरस्माभिराखण्डलो
येनैतावदरुन्धतीपतिरपि स्नेहानुगृह्णाति नः ॥ 1724 ॥

निपातनाल्लोपाभावो वत्वञ्च । 'उगितश्च' (सू. 455) इति ङीप् ।

अनर्घराघवे—VII. 147.

तदिदं रघुसिंहानां सिंहासनमलङ्कुरु ।
राजन्वन्तः प्रतन्वन्तु मुदमुत्तरकोसलाः ॥ 1725 ॥

**१९०३ । प्राणिस्थादातो लजन्यतरस्याम् । (५. २. ९६)**

**चूडालः चूडावान् ।** प्राणिस्थात्किम् । शिखावान्दीपः । आतः किम् । हस्तवान् ।

भट्टिकाव्ये—II. 30.

आपिङ्गरूक्षोर्ध्वशिरस्यकेशैस्सिरालजङ्घैर्गिरिकूटदघ्नैः ।
ततः क्षपाटैः पृथुपिङ्गलाक्षैः खं प्रावृषेण्यैरिव चानशेऽब्दैः ॥ 1726 ॥

**सिरालास्सिरावत्यः ।** लच् ।

चम्पूभारते—V. 114.

कटिलम्बितवल्कलो जटालः कमनीयस्मितधौतयज्ञसूत्रः ।
कुशबर्हवतंसितस्स देवः कुरुराजस्य पुरोऽवतीर्य तस्थौ ॥ 1727 ॥

**जटालः** जटावान् ।

चम्पूरामायणे —III. 1.

ग—तदनु कण्डूलवरशुण्डालकपोलकषणविषमितामितविटपसालषण्डनिर्यात-निर्यासगन्धानप्यात्तगन्धान् विदधानैराहुतिगन्धैरनुमीयमानानविनाभूतजलाशयानाश्रमभागानभितश्चरतोरातिथ्यशमितमार्गश्रमयो रामलक्ष्मणयोरध्वानं रुरोध विराधाभिधानो यातुधानः ॥ 1728 ॥

**शुण्डालाः** गजाः । कण्डूला इत्यत्र सिध्मादित्वाल्लच् ।

अनर्घराघवे — I. 24.

चिरादक्ष्णोर्जाड्यं शमयति समस्तासुरवधू-
कचाकृष्टिक्रीडाप्रसभमुभगंभावुकभुजः ।
त्रिलोकीजङ्घालोज्ज्वलसहजतेजा मनुकुल-
प्रसूतिस्सुत्राम्णो विजयसहकृत्वा दशरथः ॥ 1729 ॥

जङ्घालः ।

अस्मिन्नेव ग्रन्थे श्लो० 759. जिह्वाले ।

१९०४ । सिध्मादिभ्यश्च । (५. २. ९७)

लज्वा स्यात् । सिध्मलः सिध्मवान् ।

(ग. सू.) । वातदन्तबलललाटानामूङ् च । 115.

वातूलः । सिध्मादिः— ५. ३२.

चम्पूरामायणे—IV. 28.

अंभोधरोदरविनिर्गतवारिधारा-
संमर्दमांसलसमीरसमीर्यमाणैः ।
आमोदवीचिनिचयैः कुटजप्रसूनै-
राकाशमेतदवकाशविहीनमासीत् ॥ 1730 ॥

मांसलः । लच् ।

अनर्घराघवे—II. 25.

आलवालवलयेषु भूरुहां मांसलस्तिमितमन्तरान्तरा ।
केरलीचिकुरभङ्गिभङ्गुरं सारणीषु पुनरम्बु दृश्यते ॥ 1731

मांसलः । लच् ।

चम्पूभारते—I. 58.

आदाय भीममतिमांसलमुत्तमाङ्गे-
ऽप्याघ्राय जानुकृतचङ्क्रममाश्रमान्ते ।

बाहालतैव वहनाद्विरराम शश्वत्
कौतूहलं न तु कदाचन तापसीनाम् ॥ 1732 ॥

मांसलम् ।

भट्टिकाव्ये—VI. 146.

नामग्राहं कपिभिरशनैः स्तूयमानस्समन्ता-
दन्वग्भावं रघुवृषभयोर्वानरेन्द्रो विराजन् ।
अभ्यर्णेऽम्भःपतनसमये वर्णलीभूतसानुं
किष्किन्धाद्रिं न्यविशत मधुक्षीबकूजद्द्विरेफम् ॥ 1733 ॥

वर्णला वर्णवन्तः । मत्वर्थे लच् ।

चम्पूभारते—X. 56.

वीरं तनूजमनुचिन्त्य विलापभाजं
धारालदृष्टियुगलं धरणौ लुठन्तम् ।
वाग्भिश्चिरेण वसुधाधिपसंयुतस्तं
विश्वम्भरोऽर्जुनमपि न्यदधाद्शोकम् ॥ 1734 ॥

धारालं दृष्टियुगलम् ।

अनर्घराघवे—II. 24.

इयमेभिरालवालैः पदे पदे ग्रन्थिलासु कुल्यासु ।
तीव्रतमा जलवेणिः प्रवहति विश्रम्य विश्रम्य ॥ 1735 ॥

ग्रन्थिलासु पर्ववतीषु । लच् ।

अनर्घराघवे—III. 41.

सन्तुष्टे तिसृणां पुरामपि रिपौ कण्डूलदोर्मण्डली-
क्रीडाकृत्तपुनःप्ररूढशिरसो वीरस्य लिप्सोर्वरम् ।
याच्ञादैन्यपराञ्चि यस्य कलहायन्ते मिथस्त्वं वृणु
त्वं वृण्वित्यभितो मुखानि स दशग्रीवः कथं वर्ण्यताम् ॥ 1736 ॥

कण्डूला कण्डूयुक्ता । उपतापः कण्डूः । लच् ।

अस्मिन्नेव ग्रन्थे ग० 1728. कण्डूलः ।

अनर्घराघवे—IV. 69.

धनुष्मन्तौ वत्सौ दशरथभुजैरूष्मलतमाः
प्रदेशास्ते वत्सा शिशुरशिवश्वृत्ता वनभुवः ।
प्रिये राजा मुक्तैरसुभिरपमार्ष्टि स्वमयश-
श्चरित्रव्यत्यासः सखि कथमयं केकयकुले ॥ 1737 ॥

ऊष्मलतमा अत्यन्ततेजोयुक्ताः । लच् ।

वा० । वातात्समूहे च । (3220.)

वातं न सहते वातूलः । वातसमूहो वातूलः ।

अस्मिन्नेव ग्रन्थे श्लो० 1367. वातूलो वातसमूहः ।

१९०५ । वत्सांसाभ्यां कामबले । (५. २. ९८)

आभ्यां लच्चा स्याद्यथासंख्यं कामवति बलवति चार्थे । वत्सलः । अंसलः । 'बलवान् मांसलोंऽसलः' II. vii. 44. इत्यमरः । सिध्मादित्वान्मांसलः ।

माघे—IV. 47.

अपशङ्कमङ्कपरिवर्तनोचिताश्चलिताः पुरः पतिमुपैतुमात्मजाः ।
अनुरोदितीव करुणेन पत्रिणां विरुतेन वत्सलतयैष निम्नगाः ॥ 1738 ॥

वत्सलतया वात्सल्येन । लच् ।

भट्टिकाव्ये—XVIII. 29.

केन संविद्रते नान्यस्त्वत्तो बान्धववत्सलः ।
विरौमि शून्ये प्रोर्णौमि कथं मन्युसमुद्भवम् ॥ 1739 ॥

वत्सलः ।

रघुवंशे—XVI. 84.

तदेतदाजानुविलम्बिना ते ज्याघातरेखाङ्कितलाञ्छनेन ।
भुजेन रक्षापरिघेण भूमेरुपैतु योगं पुनरंसलेन ॥ 1740 ॥

अंसलेन बलवता ।

१९०६ । फेनादिलच्च । (५. २. ९९)

वालच् । फेनिलः । फेनलः । फेनवान् ।

रघुवंशे--XIII. 2.

वैदेहि पश्यामलयाद्विभक्तं मत्सेतुना फेनिलमम्बुराशिम् ।
छायापथेनेव शरत्प्रसन्नमाकाशमाविष्कृतचारुतारम् ॥ 1741 ॥

फेनिलं फेनवन्तम् । इलच् ।

चम्पूभारते—II. 54.

आलोकय यातुशवमेतदशेषपौरै-
रहोमुखे परवशीक्रियते स्म चेतः ।
आश्चर्यपूरपरिमेलनफेनिलाभि-
रानन्दसागरतरङ्गपरम्पराभिः ॥ 1742 ॥

फेनिलाभिः । इलच् । 'फेनाच्चेति वाच्यम्' (वा. 1764. सू. 2672)

फेनमुद्वमति फेनायते । क्यङ् ।

१९०७ । लोमादिपामादिपिच्छादिभ्यः शनेलचः । (५. २. १००)

लोमादिभ्यः शः । लोमशः लोमवान् । रोमशः रोमवान् । लोमादिः—५. ३३. पामादिभ्यो नः । पामनः । पामादिः—५. ३४. पिच्छादिभ्य इलच् । पिच्छिलः । पिच्छवान् । उरसिलः उरस्वान् । पिच्छादिः—५. ३५.

रघुवंशे—II. 41.

इति प्रगल्भं पुरुषाधिराजो मृगाधिराजस्य वचो निशम्य ।
प्रत्याहतास्त्रो **गिरिश**प्रभावादात्मन्यवज्ञां शिथिलीचकार ॥ 1743 ॥

गिरिरस्यास्तीति **गिरिशः** । लोमादित्वात् शप्रत्ययः । 'गिरौ डश्छन्दसि' (वा. 1919. सू. 2929) गिरौ शेते गिरिशः । डप्रत्ययः ।

रघुवंशे—XVI. 51.

आपिञ्जरा बद्धरजःकणत्वात् मञ्जर्युदारा शुशुभेऽर्जुनस्य ।
दग्ध्वापि देहं **गिरिशेन** रोषात् खण्डीकृता ज्येव मनोभवस्य ॥ 1744 ॥

गिरिरस्त्यस्य निवासत्वेन **गिरिशः** । लोमादित्वाच्छः । गिरौ शेते इति विग्रहे तु छन्दसि विधानाल्लोके प्रयोगानुपपत्तिः स्यात् ।

( ग. सू. ) । अङ्गात्कल्याणे । 118.

अस्मिन्नेव ग्रन्थे श्लो० 19. **अङ्गना** ।

अस्मिन्नेव ग्रन्थे श्लो० 339. **लक्ष्मणः** । 'लक्षेरट् च' ( उ. सू. 287 ) इति नप्रत्ययः ।

माघे—IX. 31.

अथ **लक्ष्मणा**नुगतकान्तवपुर्जलधिं व्यतीत्य शशिदाशरथिः ।
परिवारितः परितऋक्षगणैस्तिमिरौघराक्षसकुलं बिभिदे ॥ 1745 ॥

अस्मिन्नेव ग्रन्थे श्लो० 2. **लक्ष्मणः** ।

अनर्घराघवे—VII. 106.

स्वेदजल**पिच्छिला**भिस्तनुभिर्यूनाश्च शिथिलमाश्लेषम् ।
विपुलं पुलकशलाकापटलं झटिति प्रतिकरोति ॥ 1746 ॥

स्वेदजल**पिच्छिले** । इलच् ।

अस्मिन्नेव ग्रन्थे श्लो० 910. **ग्रहिला** । ग्रह आग्रहः तद्वती दीर्घरोषा । इलच् ।

चम्पूरामायणे—V. 20

ग—दाशरथेरजय्याया मैत्र्याः पात्रमपि भवितासि । किन्तु खरप्रमुखनिशाचरबलमथनसमयरुचिरलग्नसान्द्रवसा**पङ्किल**मुखमार्यपुत्रस्य शिलीमुखं भवन्तमन्तरेण कः श्रद्धधीत निजहृदयगलितरुधिरधारया प्रक्षालयितुम् ॥ 1747 ॥

**पङ्किलं** इलच् ।

अस्मिन्नेव ग्रन्थे श्लो० 1006. **जटिलो** जटावान् । पिच्छादित्वादिलच् ।

रघुवंशे—XIII. 71.

श्मश्रुप्रवृद्धिजनिताननविक्रियांश्च
प्लक्षान्प्ररोह**जटिला**निव मन्त्रिवृद्धान् ।

अन्वग्रहीत्प्रणमतः शुभदृष्टिपातै-
वार्तानुयोगमधुराक्षरया च वाचा ॥ 1748 ॥

**जटिलान्** जटावतः । इलच् । जटाल इत्यत्र 'प्राणिस्थादातो लजन्यतरस्याम्' (सू. 1903) इति लच् ।

१९०८ । प्रज्ञाश्रद्धार्चाभ्यो णः । (५. २. १०१)

प्राज्ञः । श्राद्धः । आर्चः ।

वा० । वृत्तेश्च । (3195.)

वार्तः ।

अनर्घराघवे—V. 40.

एष त्रैवर्ण्यमात्रव्यवसितजगतो भार्गवस्यास्त्रगर्भा-
दाकृष्टक्षत्रजातिस्त्वमसि पथि गिरामद्य नस्सुप्रभातम् ।
कक्षोष्मस्वेदसद्यःशमितदशमुखास्फोटकण्डूविकारो
वीरश्राद्धो भुजस्त्वां परिचरतु चिरं चक्षुषी नन्दतां च ॥ 1749 ॥

**श्राद्धः** श्रद्धायुक्तः । णः ।

१९०९ । तपस्सहस्राभ्यां विनीनी । (५. २. १०२)

तपस्वी । सहस्री ।

रघुवंशे—XI. 12.

नाम्भसां कमलशोभिनां तथा शाखिनां च न परिश्रमच्छिदाम् ।
दर्शनेन लघुना यथा तयोः प्रीतिमापुरुभयोस्तपस्विनः ॥ 1750 ॥

तपः एषामस्तीति **तपस्विनः** । विनिः ।

अस्मिन्नेव ग्रन्थे श्लो० 1185. **तपस्विनः** ऋषेः । विनिः ।

१९१० । अण् च । (५. २. १०३)

तापसः । साहस्रः ।

वा० । ज्योत्स्नादिभ्य उपसंख्यानम् । ( 3197. )

ज्यौत्स्नः । तामिस्रः । ज्योत्स्नादिः—५. २६.

किरातार्जुनीये—XII. 15.

मरुतां पतिः स्विदहिमांशुरुत पृथुशिखः शिखी तपः ।
तप्तुमसुकरमुपक्रमते न जनोऽयमित्यवयये स तापसैः ॥ 1751 ॥

तापसैः तपस्विभिः । मत्वर्थीयोऽण् ।

अस्मिन्नेव ग्रन्थे श्लो० 534. तापसकुञ्जरेण ।

चम्पूभारते—I. 39.

यथा यथा सेवनयत्नजन्मना निदाघतोयेन निषिक्तमङ्गकम् ।
तथा तथावर्धत तापसान्तिके महाविकासा मम भक्तिवल्लरी ॥ 1752 ॥

## १९११ । सिकताशर्कराभ्यां च । (५. २. १०४)

सैकतो घटः । शार्करः ।

## १९१२ । देशे लुबिलचौ च । (५. २. १०५)

चादण्मतुप् च । सिकताः सन्त्यस्मिन् देशे सिकताः, सिकतिलः, सैकतः, सिकतावान् । एवं शर्करेत्यादिः ।

किरातार्जुनीये—IV. 6.

कृतोर्मिरेखं शिथिलत्वमायता शनैःशनैः शान्तरयेण वारिणा ।
निरीक्ष्य रेमे स समुद्रयोषितां तरङ्गितक्षौमविपाण्डु सैकतम् ॥ 1753 ॥

सिकता अस्यास्तीति सैकतं पुलिनं देशः । अतो देशे इति चकारादण् ।

अस्मिन्नेव ग्रन्थे श्लो० 132. सैकतानाम् ।

अस्मिन्नेव ग्रन्थे श्लो० 709. सैकतम् ।

'स्त्री शर्करा शर्करिलश्शार्करः शर्करावति ।

देश एवादिमावेवमुन्नेयास्सिकतावति ' ॥ II. i. 12. इत्यमरः ।

अस्मिन्नेव ग्रन्थे श्लो० 118. सिकता एषु विद्यन्ते सैकतानि ।

१९१३ । दन्त उन्नत उरच् । (५. २. १०६)

उन्नता दन्तास्सन्त्यस्य दन्तुरः ।

अस्मिन्नेव ग्रन्थे श्लो० 777. दन्तुरं निम्नोन्नतम् ।

अनर्घराघवे—VII. 130.

यूपाङ्कुरप्रकरदन्तुरतीरलेखा-
संख्यायमानमनुसन्ततिसततन्तुः ।
इक्ष्वाकुराजमहिषीपदपट्टलक्ष्मी-
र्देव्या भुवो भगवती सरयूरियं नः ॥ 1754 ॥

यूपाङ्कुरप्रकरेण दन्तुरा उन्नतदन्ता इव ।

१९१४ । ऊषसुषिमुष्कमधो रः । (५. २. १०७)

ऊषरः । सुषिरः । मुष्कोऽण्डः मुष्करः । मधु माधुर्यं मधुरः ।

वा० । रप्रकरणे खमुखकुञ्जेभ्य उपसंख्यानम् । (3198.)

खरः । मुखरः । कुञ्जो हस्तिहनुः । कुञ्जरः ।

वा० । नगपांसुपाण्डुभ्यश्च । (3199.)

नगरं । पांसुरः । पाण्डुरः । पाण्डरशब्दस्त्वव्युत्पन्न एव ।

वा० । कच्छ्वा ह्रस्वत्वञ्च । (3200.) कच्छुरः ।

'ऊषवानूषरो द्वावप्यन्यलिङ्गौ' II. i. 6. इत्यमरः । 'स्यादूषः क्षारमृत्तिका' II. i. 5. इत्यमरः ।

अस्मिन्नेव ग्रन्थे श्लो० 547. ऊषवत्क्षेत्रमूषरं रप्रत्ययः ।

चम्पूरामायणे— I. 47.

इति विविधरसाभिः कौशिकव्याहृताभिः
श्रुतिपथमधुराभिः पावनीभिः कथाभिः ।
गलितगहनकृच्छ्रं गच्छतोर्दाशरथ्यो-
स्समकुचदिव सद्यस्तादृशं मार्गदैर्घ्यम् ॥ 1755 ॥

**मधुराभिः** । रः ।

अस्मिन्नेव ग्रन्थे श्लो० 1446. **मुखरः** ।

चम्पूभारते—IV. 74.

मुनिरेष यदाभ्ययाद्वराहं मुखरज्यालतिको जवाज्जिघांसुः ।
शबरो ददृशे तदाभिधावन् धनुराकृष्य सहानुयायिवर्गैः ॥ 1756 ॥

**मुखरा** शब्दायमाना ।

चम्पूरामायणे—I. 16.

ग—इति प्रणम्योत्थितानेतान् स्तुतिरवमुखरितहरिन्मुखान् हरिहयप्रमुखानखिलानमरानरुणारुणतामरसविलासचोरैर्लोचनमरीचिसन्तानैरानन्दयन् अरविन्दलोचनः स्फुटमभाषत ॥ 1757 ॥

**मुखरितं** मुखरं कृतम् । मुखरशब्दात् तत्करोती ण्यन्तात् कर्मणि क्तः ।

अस्मिन्नेव ग्रन्थे श्लो० 35. **कुरुकुञ्जरः** कुरुश्रेष्ठः । कुञ्जरो गजः ।

अस्मिन्नेव ग्रन्थे श्लो० 577. **अनन्तकविकुञ्जरः** ।

अस्मिन्नेव ग्रन्थे श्लो० 283. **पाण्डुरम्** । रप्रत्ययः ।

माघे—XVIII. 9.

उद्यन्नादं धन्विभिर्निष्ठुराणि स्थूलान्युच्चैर्मण्डलत्वं दधन्ति ।
आस्फाल्यन्ते कार्मुकाणि स्म कामं हस्त्यारोहैः **कुञ्जराणां** शिरांसि ॥1758॥

**कुञ्जराणां** गजानाम् ।

**१९१५ । द्युद्रुभ्यां मः । (५. २. १०८)**

घुनः । द्रुमः ।

अस्मिन्नेव ग्रन्थे श्लो० 530. पादपद्रुमाः ।

१९१६ । केशाद्वोऽन्यतरस्याम् । (५. २. १०९)

केशवः केशी केशिकः केशवान् ।

वा० । अर्णसो लोपश्च । ( 5053. )

अर्णवः ।

अस्मिन्नेव ग्रन्थे श्लो० 1719. अर्णः पानीयं यत्रास्तीत्यर्णवः । भूम्नि नित्ययोगेऽतिशायने वा वः सलोपश्च ।

१९१७ । गाण्डयजगात्संज्ञायाम् । (५. २. ११०)

गाण्डिवं गाण्डीवमर्जुनस्य धनुः । अजगवं पिनाकः । 'कपिध्वजस्य गाण्डीवगाण्डिवौ पुंनपुंसकम्' II. viii. 85. इत्यमरः । 'पिनाकोऽजगवं धनुः' I. i. 35. इत्यमरः ।

किरातार्जुनीये—XIII. 16.

प्रविकर्षनिनाद‌भिन्नरन्ध्रः पदविष्टम्भनिपीडितस्तदानीम् ।
अधिरोहति गाण्डिवं महेषौ सकलस्संशयमारुरोह शैलः ॥ 1759 ॥

गाण्डिवम् ।

चम्पूभारते—X. 61.

गाण्डीवनेनैव मुहुर्विकृष्टं ह्रस्वं च दीर्घं च बभूव युद्धे ।
तुलामिवर्णेन तदाधिरोढुं स्वनामधेयस्थितिशालिनेव ॥ 1760 ॥

गाण्डीवं स्वनामधेये स्थित्या शालत इति स्वनामधेयस्थितिशालिना । इवर्णेन इकारेण तुलामधिरोढुमिवेत्युत्प्रेक्षा । मुहुः ह्रस्वं च दीर्घं च बभूव ।

चम्पूभारते—V. 62.

गम्भीरगाण्डिवगुणाद्गलितैः पृषत्कै-
र्गण्डस्थले हृदि भुजे गमितव्रणास्ते ।

गर्वं विहाय चकिता गगनान्तराले
गन्धर्वभावसदृशं गमनं वितेनुः ॥ 1761 ॥

गाण्डिवम् ॥

१९१८ । काण्डाण्डादीरन्नीरचौ । (५. २. १११)

काण्डीरः । आण्डीरः ।

अस्मिन्नेव ग्रन्थे श्लो० 1521. काण्डीरः बाणवान् । 'काण्डोऽस्त्री दण्ड बाण' III. iii. 43. इत्यमरः । मत्वर्थीय ईरन्प्रत्ययः ।

अनर्घराघवे—IV. 58.

परैराहूतानां विहितमपि शस्त्रं भवतु नः
प्रकृत्या विप्रेभ्यः पुनरकृतिशिल्पा रघुभुवः ।
चिरादण्डीरेण त्वयि तदपि रामे न गणितं
तपोविद्यावीरव्रतमय मयि क्षाम्यतु भवान् ॥ 1762 ॥

अण्डीरेण दर्पिष्ठेन । 'अण्डीरः पुरुषे शक्ते' इति मेदिनीकारः । ईरच् ।

१९१९ । रजःकृष्यासुतिपरिषदो वलच् । (५. २. ११२)

रजस्वला स्त्री । कृषीवलः । 'वले' (सू. 1040) इति दीर्घः । आसुतीवलः शौण्डिकः । परिषद्वलः । पर्षदिति पाठान्तरम् । पर्षद्वलम् ।

वा० । अन्येभ्योऽपि दृश्यते । (3210.)

भ्रातृवलः । पुत्रवलः । शत्रुवलः । 'वले' (सू. 1040) इत्यत्र 'संज्ञायां' इत्यनुवृत्तेर्नेह दीर्घः । 'दैवज्ञाथ रजस्वला' II. vi. 20. 'कृषिकश्च कृषीवलः' II. ix. 6. इत्यमरः ।

रघुवंशे—XI. 60.

श्येनपक्षपरिधूसरालकाः सान्ध्यमेघरुधिरार्द्रवाससः ।
अङ्गना इव रजस्वला दिशो नो बभूवुरवलोकनक्षमाः ॥ 1763 ॥

रजो धूलिः आर्तवञ्च आसामस्तीति रजस्वलाः । वलच् ।

माघे—XVII. 61.

अनुल्लसद्दिनकरवक्त्रकान्तयो रजस्वलाः परिमलिनाम्बरश्रियः
दिगङ्गनाः क्षणमविलोकनक्षमाः शरीरिणां परिहरणीयतां ययुः ॥ 1764 ॥

रजो रेणुरेवं रजः आर्तवमासामस्तीति रजस्वलाः । मत्वर्थीयो वलच् ।

अस्मिन्नेव ग्रन्थे श्लो० 1218. कृषीवलाः कर्षकाः । मत्वर्थीयो वलच् । 'वले' (सू. 1040) इति पूर्वस्य दीर्घः ।

अस्मिन्नेव ग्रन्थे श्लो० 1575. कृषिर्येषामस्तीति कृषीवलाः । वलच् । दीर्घः ।

अस्मिन्नेव ग्रन्थे श्लो० 860. परितः सीदन्तीति परिषत् सभा । क्विप् । परिषद्वलान् परिषद्वतः । पर्षद्वलानिति च पाठः । पर्ष स्नेहने । पर्षन्ते स्निह्यन्तीति 'शृदृभसोऽदिः' (उ. सू. 127) इत्यत्र पर्षे बाहुलकादौणादिकोऽदिः । पर्षद्विद्यते येषामिति वलच् ।

१९२० । दन्तशिखात्संज्ञायाम् । (५. २. ११३)

दन्तावलो हस्ती । शिखावलः केकी ।

चम्पूरामायणे—I. 21.

ग—स एष मानुषादवमाननमागमिष्यतीत्यमन्वानस्तदितरैरवध्यत्वं चतुराननवराल्लब्ध्वा समुद्धतस्संप्रति संप्रहारसमाक्रान्तदिगन्तदन्तावलदन्तकुन्तव्रणकिणखपुटितवक्षःस्थलः स्थलकमलिनीं वनवारण इव रावणस्त्रिलोकीमभिभवन् भवदीयानस्मान्न जातु किञ्चिदपि जानातीति ॥ 1765 ॥

दन्तावलाः ।

अस्मिन्नेव ग्रन्थे श्लो० 1219. दन्तावलो हस्ती । वलच् । 'वले' (सू. 1040) इति दीर्घः । शिखाया वलच् शिखावलम् ।

१९२१ । ज्योत्स्नातमिस्राशृङ्गिणोर्जस्विन्नूर्जस्वलगोमिन्मलिनमलीमसाः । (५. २. ११४)

मत्वर्थे निपात्यन्ते । ज्योतिष उपधालोपो नश्च प्रत्ययः । ज्योत्स्ना । तमसः उपधाया इत्वं रश्च । तमिस्रा । शीत्वमतन्त्रम् । तमिस्रम् । शृङ्गादिनच् । शृङ्गिणः । ऊर्जसो वलच्, विनिरपि । ऊर्जस्वी ऊर्जस्वलः । गोशब्दान्मिनिः । गोमी । मलशब्दादिनच् । मलिनः । ईमसच्च । मलीमसः ।

अस्मिन्नेव ग्रन्थे श्लो० 113. ज्योत्स्ना ।

रघुवंशे—VI. 34.

असौ महाकालनिकेतनस्य
वसन्नदूरे किल चन्द्रमौलेः ।
तमिस्रपक्षेऽपि सह प्रियाभि-
ज्योत्स्नावतो निर्विशति प्रदोषान् ॥ 1766 ॥

तमिस्रपक्षे, ज्योत्स्नावतः ।

रघुवंशे—II. 50.

तद्रक्ष कल्याणपरम्पराणां भोक्तारमूर्जस्वलमात्मदेहम् ।
महीतलस्पर्शनमात्रभिन्नमृद्धं हि राज्यं पदमैन्द्रमाहुः ॥ 1767 ॥

ऊर्जं बलमस्यास्तीति ऊर्जस्वलम् ।

नैषधे—II. 23.

नलिनं मलिनं विवृण्वती पृषतीमस्पृशती तदीक्षणे ।
अपि खञ्जनमञ्जनाञ्चिते विदधाते रुचिगर्वदुर्विधम् ॥ 1768 ॥

मलिनं मलीमसम् ।

माघे—VI. 66.

अधिलवङ्गममी रजसाधिकं मलिनितास्सुमनोदलतालिनः ।
स्फुटमिति प्रसवेन पुरोऽहसत्सपदि कुन्दलता दलतालिनः ॥ 1769 ॥

मलिनशब्दात् तत्करोतीति ण्यन्तात् कर्मणि क्तः ।

अनर्घराघवे—II. 79.

तरुणतमालकोमलमलीमसमेतदयं
कलयति चन्द्रमाः किल कलङ्कमिति ब्रुवते ।
तदनृतमेव निर्दयविधुन्तुददन्तपद-
व्रणविवरोपदर्शितमिदं हि विभाति नभः ॥ 1770 ॥

मलीमसम् ।

रघुवंशे—III. 46.

तदङ्गमग्र्यं मघवन्महाक्रतोरमुं तुरङ्गं प्रतिमोक्तुमर्हसि ।
पथः श्रुतेर्दर्शयितार ईश्वरा मलीमसामाददते न पद्धतिम् ॥ 1771 ॥

मलीमसाम् ।

नैषधे—II. 92.

सममेणमदैर्यदापणे तुलयन् सौरभलोभनिश्चलम् ।
पणिता न जना रवैरवैदपि कूजन्तमलिं मलीमसम् ॥ 1772 ॥

माघे—I. 38.

उपप्लुतं पातुमदो मदोद्धतै-
स्त्वमेव विश्वम्भर विश्वमीशिषे ।
ऋते रवेः क्षालयितुं क्षमेत कः
क्षपातमस्काण्डमलीमसं नभः ॥ 1773 ॥

मलीमसम् ।

माघे—V. 64.

मेदस्विनस्सरभसोपगतानभीकान्
भङ्क्त्वा पराननडुहो मुहुराहवेन ।
ऊर्जस्वलेन सुरभीरनु निस्सपत्नं
जग्मे जयोद्धुरविशालविषाणमुक्ष्णा ॥ 1774 ॥

ऊर्जस्वलेन ऊर्जस्विना ।

१९२२ । अत इनिठनौ । (५. २. ११५)

दण्डः अदन्तः । दण्डी । दण्डिकः ।

माघे—I. 17.

विधाय तस्यापचितिं प्रसेदुषः
प्रकाममप्रीयत यज्वनां प्रियः ।
ग्रहीतुमार्यान् परिचर्यया मुहु-
र्महानुभावा हि नितान्तमर्थिनः ॥ 1775 ॥

**अर्थिनः** अभिलाषवन्तो हि । अर्थनमर्थोऽभिलाष एषामस्तीति मत्वर्थीय इनिः न तु णिनिः । कृद्वृत्तेस्तद्धितवृत्तिर्बलीयसीति भाष्ये उक्तत्वात् । 'अर्थाच्चासन्निहिते' (सू. 1941) अर्थी । सन्निहिते त्वर्थवान् ।

अस्मिन्नेव ग्रन्थे श्लो० 1506. श्वगणा विद्यन्ते येषामिति **श्वगणिनः** । इनिः ।

अनर्घराघवे—VI. 81.

भूयिष्ठानि मुखानि चुम्बति भुजैर्भूयोभिरालिङ्ग्यते
चारित्रव्रतदेवतापि भवता कान्तेन मन्दोदरी ।
हा लम्बोदर कुम्भमौक्तिकमणिस्तोमैर्ममैकावली-
शिल्पे वागधमर्णिकस्य भवतो लङ्केन्द्र निद्रारसः ॥ 1776 ॥

अधमं च तदृणं चाधमर्णम् । तदस्यास्तीति **अधमर्णिकः** । ठन् ।

अस्मिन्नेव ग्रन्थे श्लो० 619. **रसिका** रसवती । ठन् ।

अस्मिन्नेव ग्रन्थे श्लो० 91. लावण्यं कान्तिविशेषोऽस्यास्तीति **लावणिकं** लावण्यवत् । ठनि इकः । 'हलस्तद्धितस्य' (सू. 472) इति यकारलोपः ।

माघे—XII 20.

व्यावृत्तवक्त्रैरखिलैश्चमूचरैर्व्रजद्भिरेव क्षणमीक्षिताननाः ।
वल्गद्गरीयःकुचकम्पकञ्चुकं ययुस्तुरङ्गाधिरुहोऽवरोधिकाः ॥ 1777 ॥

अवरोधः आसामस्तीत्यवरोधिकाः अन्तःपुरस्त्रियः । ठन् ।

अस्मिन्नेव ग्रन्थे श्लो० 1521. खड्गोऽस्यास्तीति खड्गिकः। ठन्।

१९२३। व्रीह्यादिभ्यश्च। (५. २. ११६)

इनिठनौ। व्रीही व्रीहिकः। न च सर्वेभ्यो व्रीह्यादिभ्य इनिठनाविष्येते। किं तर्हि। शिखामालासंज्ञादिभ्य इनिः। यवखदादिभ्य इक्। अन्येभ्य उभयम्। व्रीह्यादिः— ५. ३७.

अस्मिन्नेव ग्रन्थे श्लो० 1351. व्रीहिणां व्रीहिमताम् इनिः।

अस्मिन्नेव ग्रन्थे श्लो 971. शिखी शिखावान्। नित्ययोगे इनिः। ठन् न।

माघे—XIV. 27.

स्पर्शमुष्णमुचितं दधच्छिखी यद्ददाह हविरद्भुतं न तत्।
गन्धतोऽपि हुतहव्यसम्भवादेहिनामदहदोघमंहसाम् ॥ 1778 ॥

शिखी अग्निः। इनिः।

माघे—XI. 25.

व्रजति विषयमक्ष्णामंशुमाली न यावत्
तिमिरमखिलमस्तं तावदेवारुणेन।
परपरिभवि तेजस्तन्वतामाशु कर्तुं
प्रभवति हि विपक्षोच्छेदमग्रेसरोऽपि ॥ 1779 ॥

अंशुमाली सूर्यः। इनिः। ठन्न।

(ग. सू.) माला क्षेपे। 116.

माली।

अस्मिन्नेव ग्रन्थे श्लो० 997. वीणिभिः वीणावद्भिः। इनिः। ठन्न।

अस्मिन्नेव ग्रन्थे श्लो० 1520. वीणा शिल्पमस्य वैणिकः। 'शिल्पम्' (सू. 1605) इति ठक्।

कुमारसंभवे—VII. 39.

तासाञ्च पश्चात्कनकप्रभाणां काली कपालाभरणा चकाशे ।
बलाकिनी नीलपयोदराजी दूरं पुरः क्षिप्तशतह्रदेव ॥ 1780 ॥

**बलाकिनी** बलाकावती । इनिः । ठन्न स्यात् ।

रघुवंशे—XI. 15.

ज्यानिनादमथ गृह्णती तयोः प्रादुरास बहुलक्षपाच्छविः ।
ताटका चलकपालकुण्डला कालिकेव निबिडा **बलाकिनी** ॥ 1781 ॥

**बलाकिनी** बलाकावती । इनिः । कालिका घनावलीव प्रादुरास ।

माघे—XIV. 70.

सत्यवृत्तमपि **मायिनं** जगद्वृद्धमप्युचितनिद्रमर्भकम् ।
जन्म बिभ्रतमजं नवं बुधाः यं पुराणपुरुषं प्रचक्षते ॥ 1782 ॥

**मायिनं** इनिः । ठन्नपि स्यात् । 'अस्माया' ( सू. 1928 ) इति विनिरपि। मायावी ।

माघे—XIII. 4.

अपदान्तरञ्च परितः क्षितिक्षिता-
मपतन् द्रुतभ्रमितहेमनेमयः ।
जविमारुताञ्चितपरस्परोपम-
क्षितिरेणुकेतुवसनाः **पताकिनः** ॥ 1783 ॥

पताका एषु सन्तीति **पताकिनः** । रथाः ।

माघे—XII. 33.

शौरेः प्रतापोपनतैरितस्ततः समागतैः प्रश्रयनम्रमूर्तिभिः ।
एकातपत्रा पृथिवीभृतां गणैरभूद्बहुच्छत्रतया **पताकिनी** ॥ 1784 ॥

**पताकिनी** सेना । इनिः । ऋन्नेभ्यो ङीप् ।

अस्मिन्नेव ग्रन्थे श्लो० 512. **शाखिभिः** वृक्षैः । इनिः ।

माघे—V. 42.

सेव्योऽपि सानुनयमाकलनाय यन्त्रा
नीतेन वन्यकरिदानकृताधिवासः ।
नाभाजि केवलमभाजि गजेन शाखी
नान्यस्य गन्धमपि मानभृतस्सहन्ते ॥ 1785 ॥

**शाखी** वृक्षः । इनिः ।

माघे—V. 26.

त्रासाकुलः परिपतन् परितो निकेतान्
पुंभिर्न कैश्चिदपि **धन्विभि**रन्वबन्धि ।
तस्थौ तथापि न मृगः कचिदङ्गनाना-
माकर्णपूर्णनयनेषुहतेक्षणश्रीः ॥ 1786 ॥

**धन्वी** धनुष्मान् । व्रीह्यादित्वादिनिरिति स्वामी ।

अस्मिन्नेव ग्रन्थे श्लो० 1758. **धन्विभिः** ।

अस्मिन्नेव ग्रन्थे श्लो० 1522. धनुः प्रहरणमस्येति **धानुष्कः** । 'प्रहरणम्' (सू. 1607) इति ठक् । धनुषा जीवति वा धानुष्कः । 'वेतनादिभ्यो जीवति' (सू. 1562) इति ठक् ।

माघे—XIV. 20.

शब्दितामनपशब्दमुच्चकैर्वाक्यलक्षणविदोऽनुवाक्यया ।
याज्यया **यजनकर्मिणो**ऽत्यजन् द्रव्यजातमपदिश्य देवताम् ॥ 1787 ॥

**यजनकर्मिणः** यजनव्यापारवन्तः । व्रीह्यादिरिनिः ।

किरातार्जुनीये—XI. 59.

शक्तिवैकल्यनम्रस्य निस्सारत्वाल्लघीयसः ।
**जन्मिनो** मानहीनस्य तृणस्य च समा गतिः ॥ 1788 ॥

**जन्मिनो** जन्तोः । व्रीह्यादिरिनिः ।

कुमारसंभवे—VIII. 35.

उत्तरन्ति विनिकीर्य पल्वलं गाढपङ्कमतिवाहितातपाः ।
दंष्ट्रिणो वनवराहयूथपा दष्टभङ्गुरबिसाङ्कुरा इव ॥ 1789 ॥

दंष्ट्रिणो दंष्ट्रावन्तः । व्रीह्यादिरिनिः ।

१९२४ । तुन्दादिभ्य इलच्च । (५. २. ११७)

चादिनिठनौ मतुप् च । तुन्दिलः तुन्दी तुन्दिकः तुन्दवान् । विवृद्धौ कर्णौ यस्य स कर्णिलः कर्णी कर्णिकः कर्णवान् । तुन्दादिः— ५. ३८.

अस्मिन्नेव ग्रन्थे श्लो० 1073. तुन्दिलाः प्रवृद्धाः । 'तुन्दिवलि' (सू. 1945) इति मे तुन्दिभः । 'तुन्दिलस्तुन्दिभस्तुन्दी' II. vii. 44. इत्यमरः ।

१९२५ । एकगोपूर्वाट्ठञ्नित्यम् । (५. २. ११८)

एकशतमस्यास्तीति ऐकशतिकः । ऐकसहस्रिकः । गौशतिकः । गौसहस्रिकः ।

१९२६ । शतसहस्रान्ताच्च निष्कात् । (५. २. ११९)

ठञ् स्यान्मत्वर्थे । नैष्कशतिकः । नैष्कसहस्रिकः ।

१९२७ । रूपादाहतप्रशंसयोर्यप् । (५. २. १२०)

आहतं रूपमस्यास्तीति रूप्यः कार्षापणः । प्रशस्तं रूपमस्यास्तीति रूप्यो गौः । आहत इति किम् । रूपवान् ।

वा० । अन्येभ्योऽपि दृश्यते । (3210.)

हिम्याः पर्वताः । गुण्याः ब्राह्मणाः ।

माघे—XIV. 47.

प्रेम तस्य न गुणेषु नाधिकं
न स वेद न गुणान्तरं च सः ।
दित्सया तदपि पार्थिवोऽर्थिनं
गुण्यगुण्य इति न व्यजीगणत् ॥ 1790 ॥

अगुण्यः अगुणवान् ।

१९२८ । अस्मायामेधास्रजो विनिः । (५. २. १२१)

यशस्वी यशस्वान् । मायावी । व्रीह्यादिपाठात् इनिठनौ । मायी मायिकः । क्विन्नन्तत्वात्कुः स्रग्वी ।

वा० । आमयस्योपसंख्यानं दीर्घश्च । (3213.)

आमयावी ।

वा० । शृङ्गवृन्दाभ्यामारकन् । (3214.)

शृङ्गारकः । वृन्दारकः ।

वा० । फलबर्हाभ्यामिनच् । (3215.)

फलिनः बर्हिणः ।

वा० । हृदयाच्चालुरन्यतरस्याम् । (3216.)

इनिठनौ मतुप् च । हृदयालुः हृदयी हृदयिकः हृदयवान् ।

वा० । शीतोष्णतृप्रेभ्यस्तदसहने । (3217.)

शीतं न सहते शीतालुः । उष्णालुः । तृप्रः पुरोडाशः तं न सहते तृप्रालुः । तृप्रं दुःखमिति माधवः ।

वा० । हिमाच्चेलुः । (3218.)

हिमं न सहते हिमेलुः ।

वा० । बलादूलः । (3219.)

बलं न सहते बलूलः ।

वा० । वातात्समूहे च । (3220.)

वातं न सहते वातानां समूहो वा वातूलः ।

वा० । तप्पर्वमरुद्भ्याम् । (3221.)

पर्वतः । मरुत्तः ।

अस्मिन्नेव ग्रन्थे श्लो० 1774. मेदस्विनः मांसलान् । असन्ताद्विनिः ।

अस्मिन्नेव ग्रन्थे श्लो० 1750. तप एषामस्तीति **तपस्विनः**। अत्र 'तपःसहस्राभ्यां विनिः' (सू. 1909) इति विनिः।

किरातार्जुनीये—I. 30.

> व्रजन्ति ते मूढधियः पराभवं
> भवन्ति **मायाविषु** ये न मायिनः।
> प्रविश्य हि घ्नन्ति शठास्तथाविधा-
> नसंवृताङ्गान्निशिता इवेषवः ॥ 1791 ॥

**मायाविषु** मायावत्सु। मायिनो मायावन्तः। व्रीह्यादित्वादिनिः।

रघुवंशे—X. 45.

> अचिराद्यज्वभिर्भागं कल्पितं विधिवत्पुनः।
> **मायाविभि**रनालीढमादास्यध्वे निशाचरैः ॥ 1792 ॥

**मायाविभिः** मायावद्भिः।

रघुवंशे—XVII. 25.

> आमुक्ताभरणः **स्रग्वी** हंसचिह्नदुकूलवान्।
> आसीदतिशयप्रेक्ष्यः स राज्यश्रीवधूवरः ॥ 1793 ॥

स्रजोऽस्य सन्तीति **स्रग्वी**। विनिः।

अनर्घराघवे—V. 36.

> मन्ये दर्पा**मयाविभ्यां** नित्यं दोर्भ्याममर्षणः।
> जाम्बवत्प्रेरणादीप्तः प्राप्तोऽयं प्लवगेश्वरः ॥ 1794 ॥

दर्पेण **आमयावी** रोगी। विनिः दीर्घत्वं च।

अस्मिन्नेव ग्रन्थे श्लो० 31. वृन्दं गुणवृन्दमस्या अस्तीति **वृन्दारिका** मुख्या। आरकन्। कात्पूर्वस्येत्त्वम्।

भट्टिकाव्ये—XXI. 20.

> प्रेता वरेण शक्रस्य प्रणन्तः कपयस्ततः।
> सञ्जाताः **फलिना**नम्ररोचिष्णुद्रुमसद्रवः ॥ 1795 ॥

फलिनाः फलवन्तः । आनम्राः रोचिष्णवो द्रुमाः । 'फलवान्फलिनः फली' II. iv. 7. इत्यमरः । इनच् ।

अस्मिन्नेव ग्रन्थे श्लो० 116. वनबर्हिणत्वं वनमयूरत्वम् 'मयूरो बर्हिणो बर्ही' II. v. 31 इत्यमरः ।

अस्मिन्नेव ग्रन्थे श्लो० 169. जितबर्हिणध्वनौ ।

चम्पूभारते—VI. 102.

> प्रसुप्तबर्हिणश्वासपारणासुकृती हरिः ।
> कण्डूविनोदनोत्कण्ठी कण्ठीरवनखैर्मृगः ॥ 1796 ॥

बर्हिणः मयूरः । इनच् ।

अस्मिन्नेव ग्रन्थे श्लो० 17. शीतं न सहत इति शीतालुः । शीतभीरुः । आलुच् ।

अस्मिन्नेव ग्रन्थे श्लो० 1367. वातानां समूहो वातूलः ।

अस्मिन्नेव ग्रन्थे श्लो० 1179. पर्वतः नारदसखो मुनिः शैलश्च । 'पर्वतः शैलदेवर्ष्योः' इति विश्वः । तप् ।

## १९३० । वाचो ग्मिनिः । (५. २. १२४)

वाग्मी ।

अस्मिन्नेव ग्रन्थे श्लो० 1522. वाचोऽस्य सन्तीति वाग्मी । 'वाचोयुक्तिपटुर्वाग्मी वावदूकश्च वक्तरि' III. i. 35. इत्यमरः । ग्मिनिप्रत्ययः ।

## १९३१ । आलजाटचौ बहुभाषिणि । (५. २. १२५)

वा० । कुत्सित इति वक्तव्यम् । (3223.)

कुत्सितं बहु भाषते वाचालः वाचाटः । यस्तु सम्यग्बहु भाषते स वाग्मीत्येव ।

अस्मिन्नेव ग्रन्थे श्लो०. 491. वाचो बह्व्योऽस्य सन्तीति वाचालः । 'स्याज्जल्पाकस्तु वाचालो वाचाटो बहुगर्ह्यवाक्' III. i. 36. इत्यमरः । आलच् ।

भट्टिकाव्ये—V. 23.

प्रत्यूचे राक्षसेन्द्रस्तामाश्वसिहि बिभेषि किम् ।
त्यज नक्तंचरि क्षोभं वाचाटे रावणो ह्यहम् ॥ 1797 ॥

हे वाचाटे बहुभाषिणि ।

अस्मिन्नेव ग्रन्थे श्लो० 1360. वाचाटाः कृता वाचाटिताः । वाचाट-शब्दात् तत्करोतीति ण्यन्तात्कर्मणि क्तः ।

अनर्घराघवे—I. 11.

धातुश्चतुर्मुखीकण्ठशृङ्गाटकविहारिणीम् ।
नित्यं प्रगल्भवाचालामुपतिष्ठे सरस्वतीम् ॥ 1798 ॥

वाचालामुत्कृष्टभाषिणीमिति केचित् । 'आलजाटचौ' (सू. 1931) इति योगविभागात्प्रशंसायामप्यालजाटचावित्याहुः ।

## १९३२ । स्वामिन्नैश्वर्ये । (५. २. १२६)

ऐश्वर्यवाचकात्स्वशब्दात् मत्वर्थे आमिनच् । स्वामी ।

अस्मिन्नेव ग्रन्थे श्लो० 974. स्वमस्यास्तीति स्वामी ईश्वरः । निपातः ।

अस्मिन्नेव ग्रन्थे श्लो० 1106 स्वामी ।

## १९३३ । अर्शआदिभ्योऽच् । (५. २. १२७)

अर्शांस्यस्य विद्यन्ते अर्शसः । अर्शादिः—५. ३९. । आकृतिगणोऽयम् ।

अस्मिन्नेव ग्रन्थे श्लो० 1201. कावाद ईषद्वादो वाक्कलहः । 'ईषदर्थे' (सू. 1031) इति कुशब्दस्य कादेशः । तद्वति कावादे । अच् ।

अस्मिन्नेव ग्रन्थे श्लो० 383. पीतं पानमस्यास्तीति पीतः । पीतवानित्यर्थः । अच् ।

## १९३४ । द्वन्द्वोपतापगर्ह्यात्प्राणिस्थादिनिः । (५. २. १२८)

द्वन्द्वः । कटकवलयिनी । शङ्खनूपुरिणी । उपतापो रोगः । कुष्ठी । किलासी । गर्ह्यं निन्द्यम् । ककुदावर्ती । काकतालुकी ।

वा० । प्राण्यङ्गात् ।

पाणिपादवती ।

१९३५ । वातातीसाराभ्यां कुक् च । ( ५. २. १२९ )

चादिनिः । वातकी । अतीसारकी ।

वा० । पिशाचाच्च । ( 3224. )

पिशाचकी । 'वातकी वातरोगी स्यात्सातिसारोऽतिसारकी' II. vi. 58. इत्यमरः । 'उपसर्गस्य घञ्यमनुष्ये बहुलं' ( सू. 1044 ) इत्युत्तरपदस्य वैकल्पिको दीर्घः ।

१९३७ । सुखादिभ्यश्च । ( ५. २. १३१ )

इनिर्मत्वर्थे । सुखी दुःखी । सुखादिः—५. ४०.

( ग. सू. ) माला क्षेपे । 116.

माली ।

अनर्घराघवे—I. 511.

कच्चिदसद्वियोगार्तिदुःखी दुःखाकरिष्यति ।
अपूर्वविषयालोकसुखी च सुखयिष्यति ॥ 1799 ॥

सुखी । दुःखी । दुःखाकरिष्यति डाच् । सुखादेर्धर्मधर्मिवचनत्वम् । अत एव क्षीरस्वामी च 'शस्तं चाथ त्रिषु द्रव्ये पापपुण्यसुखादि च' I. iii. 26 इत्यत्र आदिशब्दात् श्रेयःकलुषशिवभद्रादीन् सङ्ग्रमाह ।

नैषधे—III. 31.

श्रियस्तदालिङ्गनभूर्न भूता व्रतक्षतिः कापि पतिव्रतायाः ।
समस्तभूतात्मतया न भूतं तद्भर्तुरीर्ष्याकलुषाणुनापि ॥ 1800 ॥

कलुषं कालुष्यम् ।

१९३८ । धर्मशीलवर्णान्ताच्च । (५. २. १३२)

धर्माद्यन्तादिनिर्मत्वर्थे । ब्राह्मणधर्मी । ब्राह्मणशीली । ब्राह्मणवर्णी ।

भट्टिकाव्ये—IV. 22.

मानुषानभिलष्यन्ती रोचिष्णुर्दिव्यधर्मिणी ।
त्वमप्सरायमाणेह स्वतन्त्रा कथमञ्चसि ॥ 1801 ॥

दिव्यानां देवतानां धर्माः रूपलावण्यादयः तद्वती तद्धर्मिणी ।

अस्मिन्नेव ग्रन्थे श्लो० 944. मनुष्यस्येव धर्मो यस्य सः मनुष्यधर्मा । 'धर्मादनिच् केवलात्' (सू. 813) बहुव्रीहेरनिच् ।

१९३९ । हस्ताज्जातौ । (५. २. १३३)

हस्ती । जातौ किम् । हस्तवान् पुरुषः ।

अस्मिन्नेव ग्रन्थे श्लो० 1494. हस्ती ।

माघे—XVIII. 45.

दूरोत्क्षिप्तक्षिप्रचक्रेणकृत्तं मत्तो हस्तं हस्तिराजः स्वमेव ।
भीमं भूमौ लोलमानं सरोषः पादेनासृक्पङ्कपेषं पिपेष ॥ 1802 ॥

हस्तिराजः ।

अस्मिन्नेव ग्रन्थे श्लो० 741. अधिहस्ति ।

रघुवंशे—VII. 45.

अप्यर्धमार्गे परबाणलूना धनुर्भृतां हस्तवतां पृषत्काः ।
संप्रापुरेवात्मजवानुवृत्त्या पूर्वार्धभागैः फलिभिः शरव्यम् ॥ 1803 ॥

हस्तवतां धनुर्भृताम् ।

१९४० । वर्णाद्ब्रह्मचारिणि । (५. २. १३४)

वर्णी ।

कुमारसंभवे—V. 52.

सखी तदीया तमुवाच वर्णिनं निबोध साधो तव चेत्कुतूहलम् ।
यदर्थमम्भोजमिवोष्णवारणं कृतं तपःसाधनमेतया वपुः ॥ 1804 ॥

वर्णः प्रशस्तिरिति क्षीरस्वामी । सोऽस्यास्तीति वर्णिनं ब्रह्मचारिणम् ।

१९४१ । पुष्करादिभ्यो देशे । (५. २. १३५)

पुष्करिणी पद्मिनी । देशे किम् । पुष्करवान् करी ।

वा० । बाहूरुपूर्वपदाद्बलात् । (3225.)

बाहुबली । ऊरुबली ।

वा० । सर्वादेश्च । (3226.)

सर्वधनी । सर्वबीजी ।

वा० । अर्थाच्चासन्निहिते । (3327.)

अर्थी । संनिहिते तु अर्थवान् ।

वा० । तदन्ताच्च । (3228.)

धान्यार्थी हिरण्यार्थी । पुष्करादिः— ५. ४१.

अस्मिन्नेव ग्रन्थे ग० 1765. कमलिनी.

चम्पूरामायणे—I. 76.

दिलीपेऽपि दिवं याते श्रुत्वा वृत्तं भगीरथः ।
अमर्त्यसरितं कर्तुं मेने मर्त्यतरङ्गिणीम् ॥ 1805 ॥

तरङ्गिणीम् ।

रघुवंशे—V. 31.

जनस्य साकेतनिवासिनस्तौ द्वावप्यभूतामभिनन्द्यसत्त्वौ ।
गुरुप्रदेयाधिकनिस्पृहोऽर्थी नृपोऽर्थिकामादधिकप्रदश्च ॥ 1806 ॥

अर्थी ।

अस्मिन्नेव ग्रन्थे श्लो० 696. **अर्थवान्** धनिकः ।

अस्मिन्नेव ग्रन्थे श्लो० 1271. **गुरुदक्षिणार्थी** ।

रघुवंशे—XV. 2.

लवणेन विलुप्तेज्यास्तामिस्रेण तमभ्ययुः ।
मुनयो यमुनाभाजः शरण्यं **शरणार्थिनः** ॥ 1807 ॥

**शरणार्थिनः** ।

१९४२ । **बलादिभ्यो मतुबन्यतरस्याम्** । (५. २. १३६)

बलवान् बली । उत्साहवान् उत्साही । बलादिः— ५. ४२.

चम्पूरामायणे—VI. 77.

ग—अनन्तरमपक्रान्तासुषु विक्रान्तेषु पुरन्दरारिमुखेषु नन्दनेषु, निहतेषु कुम्भकर्णादिषु भ्रातृषु, विध्वस्तेषु प्रहस्तपूर्वेषु सचिवेषु, व्यापादितेषु विरूपाक्षप्रभृतिषु सेनापतिषु, विकीर्णे भवति निखिले **बलवति** बले समन्ततः करुणपरिपूरितपौरवधूजनपरिदेवनोत्तरङ्गायां लङ्कायामातङ्कातिशयरोषणो रावणस्तत्क्षणमिक्ष्वाकुकुलनायकदयितां धरणीसुतां जिघांसुरन्तिकगतमन्त्रिणा निवार्यमाणस्सारथिना विधिना च चोदितरथो दाशरथिविजयविहितसङ्गरस्सङ्गराङ्गणमवततार ॥ 1808 ॥

**बलवति** । मतुप् ।

अस्मिन्नेव ग्रन्थे श्लो० 1090. **बली** । इनिः ।

अस्मिन्नेव ग्रन्थे श्लो० 971. **शिखी** । व्रीह्यादित्वाद्बलादित्वाच्च इनिः ।

अस्मिन्नेव ग्रन्थे श्लो० 1778. **शिखी** ।

१९४४ । **कंशंभ्यां बभयुस्तितुतयसः** । (५. २. १३८)

कं शं इति मान्तौ । कमित्युदकसुखयोः । शमिति सुखे । आभ्यां सप्त प्रत्ययास्स्युः । कंवः । कंभः । कंयुः । कन्तिः । कन्तुः । कंतः । कंयः । शंवः । शंभः । शंयुः । शंतिः । शंतुः । शंतः । शंयः ।

अस्मिन्नेव ग्रन्थे श्लो० 972. शं सुखमेषामस्तीति शंयून् पाण्डवान्।

१९४५। तुन्दिवलिवटेर्भः। (५. २. १३९)

वृद्धा नाभिस्तुन्दिः। 'मूर्धन्योरघोऽयं' इति माधवः। तुन्दिभः। वलिभः। वटिभः। पामादित्वाद्वलिनोऽपि। 'वलिनो वलिभस्समौ' II. vii. 45. इत्यमरः।

अस्मिन्नेव ग्रन्थे श्लो० 179. वलयो विद्यन्ते यस्यास्तया वलिभया। भप्रत्ययः।

अस्मिन्नेव ग्रन्थे श्लो० 327. वलिभम्।

१९४६। अहंशुभमोर्युस्। (५. २. १४०)

अहमिति मान्तमव्ययम् अहङ्कारे। शुभमिति शुभे। अहंयुः अहङ्कारवान्। शुभंयुः शुभान्वितः। 'अहंयुः स्यादहङ्कारी शुभंयुस्तु शुभान्वितः' III. I. 50. इत्यमरः।

चम्पूरामायणे—IV. 26.

अयं कालः कालप्रमथनगलाभैरभिनवै-
रहंयूनां यूनामपहरति धैर्यं जलधरैः।
सराधारा धारापरिचयजडा वान्ति सहसा
नभस्वन्तः स्वन्तः कथमिव वियोगः परिणमेत्॥ 1809॥

अहंयूनाम्। युस्।

अनर्घराघवे—IV. 9.

प्रीते विधातरि पुरा परिभूय मर्त्यान्
वव्रेऽन्यतो यदभयं स भवानहंयुः।

तन्मर्मणि स्पृशति मामतिमात्रमद्य
हा वत्स शान्तमथवा दशकन्धरोऽसि ॥ 1810 ॥

अहंयुः । युस् ।

अस्मिन्नेव ग्रन्थे श्लो० 534. अहंयुना अहंकारवता । शुभंयुः शुभवान् । उभयत्र मत्वर्थीयो युस्प्रत्ययः ।

अस्मिन्नेव ग्रन्थे श्लो० 1470. शुभंयुना शुभवता । युस् ।

॥ इति मत्वर्थीयप्रकरणम् ॥

---

## ॥ अथ प्राग्दिशीयप्रकरणम् ॥



### १९४७ । प्राग्दिशो विभक्तिः । (५. ३. १)

दिक्शब्देभ्य इत्यतः प्राक् वक्ष्यमाणाः प्रत्यया विभक्तिसंज्ञाः स्युः ।

### १९५३ । पञ्चम्यास्तसिल् । (५. ३. ७)

पञ्चम्यन्तेभ्यः किमादिभ्यस्तसिल् स्याद्वा । किमादिभ्यः किंसर्वनामबहुभ्यः । कुतः कस्मात् । यतः । ततः । अतः । इतः । अमुतः । बहुतः । 'अपादाने' (सू. 2112) इति तसिः । ग्रामादागच्छति ग्रामत आगच्छति । अहीयरुहोरिति निषेधात् । स्वर्गाद्धीयते । पर्वतादवरोहति । वृक्षाद्वृक्षं परिक्रामन् । वृक्षात्सकाशादित्यपादाने पञ्चमी । जनस्यालोकपथात् । द्यौर्विशिखै रुरुधे । पापाज्जुगुप्सते । विरमति । धर्मात्प्रमाद्यति । चोराद्बिभेति । चोरात्त्रायते । अध्ययनात् पराजयते । यवेभ्यो गां वारयति । मातुर्निलीयते कृष्णः । उपाध्यायादधीते । ब्रह्मणः प्रजाः प्रजायन्ते । हिमवतो गङ्गा प्रभवति । एते पञ्चम्यन्ता अपादानसंज्ञाः ।

भट्टिकाव्ये—III. 24.

> सुतो **नभस्तः** पतितं निरीक्षाञ्चक्रे विवस्वन्तमथ स्फुरन्तम् ।
> आख्यद्द्रुसन्मातृकुले सखिभ्यः पश्यन्प्रमादं भरतोऽपि राज्ञः ॥1811॥

**नभस्तः** पतितम् । 'पञ्चम्यास्तसिल्' इति व्याख्याने । पतनस्यापायरूपत्वादपादाने पञ्चम्यास्तसिरिति मन्ये ।

भट्टिकाव्ये—VI. 15.

> अक्षेमः परिहासोऽयं परीक्षां मा कृथा मयि ।
> **मत्तो** मान्तर्धिथास्सीते मा रंस्था जीवितेन नः ॥ 1812 ॥

**मत्तो** मान्तर्धिथाः । 'पञ्चम्यास्तसिल्' इति व्याख्याने । 'अन्तर्धौ येनादर्शनमिच्छति' (सू. 591) इति अपादाने पञ्चम्यास्तसिरिति मन्ये ।

अस्मिन्नेव ग्रन्थे श्लो० 469. अम्भस्तो जलादुत्तरन्तीम् । 'ध्रुवमपायेऽपादानम्' (सू. 586) इत्यपादाने पञ्चमी । 'अपादाने' (सू. 2112) इति तसिरिति मन्ये ।

अस्मिन्नेव ग्रन्थे श्लो० 637. मुकुरेण वधूकरतः पाणितलात् । नापाति न पतितम् । पूर्ववत् ।

नैषधे—I. 4.

अधीतिबोधाचरणप्रचारणै-
र्दशाश्चतस्रः प्रणयन्नुपाधिभिः ।
चतुर्दशत्वं कृतवान् कुतस्स्वयं
न वेद्मि विद्यासु चतुर्दशस्वयम् ॥ 1813 ॥

कुतः कस्मात्कारणात् । पञ्चम्यास्तसिल् ।

## १९५६ । पर्यभिभ्यां च । (५. ३. ९)

आभ्यां तसिल् स्यात् ।

### वा० । सर्वोभयार्थाभ्यामेव । (3240.)

परितः । सर्वत इत्यर्थः । अभितः । उभयत इत्यर्थः । 'अभितःपरितः' (वा. 1442. सू. 544) इति द्वितीया ।

अस्मिन्नेव ग्रन्थे श्लो० 284. वेदिं **परितः** वेदेस्सर्वतः । प्रधानमभितः प्रधानयागस्योभयतः । क्रमात्सर्वोभयार्थे तसिल् ।

अस्मिन्नेव ग्रन्थे श्लो० 286. रणं **परितः** । रणे सर्वतः । सर्वार्थे तसिल् ।

अस्मिन्नेव ग्रन्थे श्लो० 1604. लङ्कामभितः बाह्यतोऽभ्यन्तरतश्च । उभयार्थे तसिल् ।

अस्मिन्नेव ग्रन्थे श्लो० 615. **अभितः**पातुका उभयतःपातिनी । उभयार्थे तसिल् ।

## १९५७ । सप्तम्यास्त्रल् । (५. ३. १०)

कुत्र । यत्र । तत्र । बहुत्र ।

अस्मिन्नेव ग्रन्थे श्लो० 1494 यत्र शैले ।

अस्मिन्नेव ग्रन्थे श्लो० 1512. यत्र सभायाम् ।

अस्मिन्नेव ग्रन्थे श्लो० 309. तत्र तरुमूले ।

अस्मिन्नेव ग्रन्थे श्लो० 800. तत्र देवगिरौ ।

१९५८ । इदमो हः । ( ५. ३. ११ )

त्रलोऽपवादः । इशादेशः । इह ।

अस्मिन्नेव ग्रन्थे श्लो० 676. इह अद्रौ ।

१९५९ । किमोऽत् । ( ५. ३. १२ )

सप्तम्यन्तात्किमोऽद्वा स्यात् । पक्षे त्रल् ।

१९६० । क्वाति । ( ७. २. १०५ )

किमः क्वादेशः स्यादति । क्व । कुत्र ।

अस्मिन्नेव ग्रन्थे श्लो० 1405. क्वचिद्देशे । 'अव्ययात्त्यप्' ( सू. 1324 ) इति त्यप् । अमात्यः । इहत्यः । क्वत्यः । ततस्त्यः । तत्रत्यः ।

१९६३ । इतराभ्योऽपि दृश्यन्ते । ( ५. ३. १४ )

पञ्चमीसप्तमीतरविभक्त्यन्तात् तसिलादयो दृश्यन्ते । सभवान् । ततोभवान् । तत्रभवान् । तंभवन्तम् । ततोभवन्तम् । तत्रभवन्तम् ।

किरातार्जुनीये—XI. 18.

जयमत्रभवान्नूनमरातिष्वभिलाषुकः ।
क्रोधलक्ष्म क्षमावन्तः क्वायुधं क्व तपोधनाः ॥ 1814 ॥

अत्रभवान् पूज्य इत्यर्थः । प्रथमार्थे प्राग्दिशीयस्त्रल् । सुप्सुपेति समासः ।

भट्टिकाव्ये—XXI. 3.

अपि तत्रभवान् रिपुः सीतां नार्थयिष्यत दुर्मतिः ।
क्रूरं जात्ववदिष्यच्च जात्वस्तोष्यच्छ्रियं स्वकाम् ॥ 1815 ॥

तत्ररिपुः सभवान् रिपुः । भवच्छब्दोऽर्थाद्गम्यते ।

माघे—XIV. 2.

लज्जते न गदितः प्रियं परो वक्तुरेव भवति त्रपाधिका ।
व्रीडमेति न तव प्रियं वदन् ह्रीमतात्रभवतैव भूयते ॥ 1816 ॥

अत्रभवता पूज्येन । सार्वविभक्तिकस्त्रल् । सुप्सुपेति समासः ।

अस्मिन्नेव ग्रन्थे श्लो० 630. अत्रभवते अर्घं दत्वा । त्रल् ।

१९६४ । सर्वैकान्यकिंयत्तदः काले दा । ( ५. ३. १५ )

सप्तम्यन्तेभ्यः कालार्थेभ्यः स्वार्थे दा स्यात् । सर्वस्मिन् काले सदा सर्वदा । एकदा । अन्यदा । कदा । यदा । तदा । काले किम् । इह देशे ।

भट्टिकाव्ये—III. 13.

असूष्ट यो यश्च भयेष्वरक्षीत्
यस्सर्वदासानपुषत्स्वपोषम् ।
महोपकारस्य किमस्ति तस्य
तुच्छेन यानेन वनस्य मोक्षः ॥ 1817 ॥

सर्वदा ।

चम्पूरामायणे—I. 39.

ग—एकदा सुन्दे विनिहते मारीचः कुम्भसम्भवमभिभूय तस्य शापादवाप कोणपताम्, ताटका चाभूत्पुरुषादिनी ॥ 1818 ॥

एकदा ।

अस्मिन्नेव ग्रन्थे श्लो० 467. अन्यदा अन्यस्मिन्काले ।

अस्मिन्नेव ग्रन्थे श्लो० 1468. तदा ।

१९६५ । इदमो र्हिल् । (५. ३. १६)

सप्तम्यन्तात्काल इत्येव । अस्मिन्काले एतर्हि । काले किम् । इह देशे ।

किरातार्जुनीये—I. 32.

भवन्तमेतर्हि मनस्विगर्हिते
 विवर्तमानं नरदेव वर्त्मनि ।
कथं न मन्युर्ज्वलयत्युदीरितः
 शमीतरुं शुष्कमिवाग्निरुच्छिखः ॥ 1819 ॥

एतर्हि इदानीमस्मिन्काले ।

१९६६ । अधुना । (५. ३. १७)

इदमस्सप्तम्यन्तात्कालवाचिनः स्वार्थे अधुनाप्रत्ययः स्यात् ।

अस्मिन्नेव ग्रन्थे श्लो० 1326. अधुना अस्मिन्काले ।

१९६७ । दानीं च । (५. ३. १८)

इदानीम् ।

१९६८ । तदो दा च । (५. ३. १९)

तदा । तदानीम् ।

अस्मिन्नेव ग्रन्थे श्लो० 772. तदानीम् ।

१९६९ । अनद्यतने र्हिलन्यतरस्याम् । (५. ३. २१)

कर्हि कदा । यर्हि यदा । तर्हि तदा । एतस्मिन् काले एतर्हि ।

१९७० । सद्यःपरुत्परार्यैषमःपरेद्यव्यद्यपूर्वेद्युरन्येद्युरन्यतरेद्युरितरेद्युरपरेद्यु-
रधरेद्युरुभयेद्युरुत्तरेद्युः । (५. ३. २२)

एते निपात्यन्ते ।

वा० । समानस्य सभावो द्यस् चाहनि । (3245.)

समानेऽहनि सद्यः ।

वा० । पूर्वपूर्वतरयोः परभाव उदारी च प्रत्ययौ संवत्सरे । (3246.)

पूर्वस्मिन् वत्सरे परुत् । पूर्वतरे वत्सरे परारि ।

वा० । इदम इश् समसण्प्रत्ययश्च संवत्सरे । (3247.)

अस्मिन् संवत्सरे एषमः ।

वा० । परस्मादेद्यव्यहनि । (3248.)

परस्मिन्नहनि परेद्यवि ।

वा० । इदमोऽश् द्यश्च । (3249.)

अस्मिन्नहनि अद्य ।

वा० । पूर्वान्यान्यतरेतरापराधरोभयोत्तरेभ्य एद्युस् । (3250.)

पूर्वस्मिन्नहनि पूर्वेद्युः । अन्यस्मिन्नहनि अन्येद्युः । उभयोरह्नोरुभयेद्युः ।

वा० । द्युश्चोभयाद्वक्तव्यः । (3251.)

उभयद्युः ।

अस्मिन्नेव ग्रन्थे श्लो० 130. अद्य ।

भट्टिकाव्ये—XI. 21.

पीतोष्ठरागाणि हृताञ्जनानि भास्वन्ति लोलैरलकैर्मुखानि ।
प्रातः कृतार्थानि यथा विरेजुस्तथा न पूर्वेद्युरलङ्कृतानि ॥ 1820 ॥

अस्मिन्नेव ग्रन्थे श्लो० 1628. अन्यस्मिन्नहनि अन्येद्युः ।

रघुवंशे—II. 26.

अन्येद्युरात्मानुचरस्य भावं जिज्ञासमाना मुनिहोमधेनुः ।
गङ्गाप्रपातान्तनिरूढशष्पं गौरीगुरोर्गह्वरमाविवेश ॥ 1821 ॥

अन्येद्युः ।

चम्पूभारते—II. 47.

ग—अपरेद्युर्निखिलजनानन्दकरे भगवति दिनकरेऽपि मन्देहकुलमवकलितु-मुदयगिरिशिखरमधिरूढे ॥ 1822 ॥

अपरेद्युः । एद्युस् ।

अस्मिन्नेव ग्रन्थे श्लो० 1370. अत्र परेद्युरिति एद्युस्प्रत्ययान्तः कश्चिन्नेकः । एद्यविप्रत्ययान्तोऽत्र निपातितः । अपरेद्युरिति पदच्छेदे एद्युस् ।

१९७१ । प्रकारवचने थाल् । ( ५. ३. २३ )

किमादिभ्यस्थाल्प्रत्ययः स्यात् स्वार्थे । तेन प्रकारेण तथा । यथा ।

अस्मिन्नेव ग्रन्थे श्लो० 1752. यथा । तथा ।

१९७२ । इदमस्थमुः । ( ५. ३. २४ )

थालोऽपवादः ।

वा० । एतदो वाच्यः । ( 3235. )

अनेन एतेन वा प्रकारेण इत्थम् ।

अस्मिन्नेव ग्रन्थे श्लो० 424. इत्थमनेन प्रकारेण ।

१९७३ । किमश्च । ( ५. ३. २५ )

केन प्रकारेण कथम् ।

अस्मिन्नेव ग्रन्थे श्लो० 586. कथम् ।

॥ इति प्राग्दिशीयप्रकरणम् ॥

---

## ॥ अथ प्रागिवीयप्रकरणम् ॥



१९७४ । दिक्शब्देभ्यः सप्तमीपञ्चमीप्रथमाभ्यो दिग्देशकालेष्वस्तातिः ।
(५. ३. २७)

अस्मिन्नेव ग्रन्थे श्लो० 1439. उदक् । उदीचीं दिशं प्रतीत्यर्थः । अस्तातिप्रत्ययस्य 'अञ्चेर्लुक्' (सू. 1980) इति लुक् । 'लुक् तद्धितलुकि' (सू. 1408) इति स्त्रीप्रत्ययस्यापि लुक् ।

अस्मिन्नेव ग्रन्थे श्लो० 1448. प्रत्यक् पश्चिमद्वारम् । पूर्ववल्लुक् ।

१९७५ । पूर्वाधरावराणामसिपुरधवश्चैषाम् । (५. ३. ३९)

एभ्योऽस्तात्यर्थेऽसिप्रत्ययः स्यात् । तद्योगे चैषां क्रमात् पुर्, अध्, अव् इत्यादेशाः स्युः ।

१९७६ । अस्ताति च । (५. ३. ४०)

अस्तातौ परे पूर्वादीनां पुरादयः स्युः । पूर्वस्यां पूर्वस्याः पूर्वा वा दिक् पुरः, पुरस्तात् । अधः, अधस्तात् । अवः, अवस्तात् ।

अस्मिन्नेव ग्रन्थे श्लो० 988. पुरस्तात् पूर्वस्यां दिशि ।

अस्मिन्नेव ग्रन्थे श्लो० 626. पुरस्तात् पूर्वस्यां दिशि । अनेन पूर्वशब्दात्सप्तम्यर्थात् अस्तातिप्रत्ययः । पूर्वस्य पुरादेशश्च ।

१९७७ । विभाषावरस्य । (५. ३. ४१)

अवरस्य अस्तातौ परे अव् स्याद्वा । अवस्तात् अवरस्तात् ।

१९७८ । दक्षिणोत्तराभ्यामतसुच् । (५. ३. २८)

अस्तातेरपवादः । दक्षिणतः । उत्तरतः । 'षष्ठ्यतसर्थप्रत्ययेन' (सू. 609) इति षष्ठी ।

अस्मिन्नेव ग्रन्थे श्लो० 418. ह्वगतोयस्य दक्षिणतो दक्षिणदिग्भागे । अनुष्टुप् । तद्योगे षष्ठी ।

## १९७९ । विभाषा परावराभ्याम् । ( ५. ३. २९ )

परतः । अवरतः । परस्तात् । अवरस्तात् ।

## १९८० । अञ्चेर्लुक् । ( ५. ३. ३० )

'दिक्शब्देभ्यः' ( सू. 1974 ) इत्यत्र द्रष्टव्यम् ।

## १९८१ । उपर्युपरिष्टात् । ( ५. ३. ३१ )

अस्तातेर्विषये ऊर्ध्वशब्दस्योपादेशः स्यात् रिल्रिष्टातिलौ च प्रत्ययौ । उपरि । उपरिष्टाद्वा । 'उपर्यध्यधसः सामीप्ये' ( सू. 2143 ) इति द्विर्भावः । 'उभसर्वे' ( वा. 1444. सू. 544 ) इति द्वितीया ।

अस्मिन्नेव ग्रन्थे श्लो० 459. शिरस उपरि । 'षष्ठ्यतसर्थप्रत्ययेन' ( सू. 609 ) इति षष्ठी ।

अस्मिन्नेव ग्रन्थे श्लो० 281. दृषदः, द्वितीया । उपर्युपरि दृषदां समीपोपरिप्रदेश इत्यर्थः । 'उपर्यध्य' ( सू. 2142 ) इति द्विर्भावः । तद्योगे द्वितीया ।

## १९८२ । पश्चात् । ( ५. ३. ३२ )

अपरस्य पश्चभावः आतिश्च प्रत्ययोऽस्तातेर्विषये ।

## १९८३ । उत्तराधरदक्षिणादातिः । ( ५. ३. ३४ )

उत्तरात् । अधरात् । दक्षिणात् ।

## १९८४ । एनबन्यतरस्यामदूरेऽपञ्चम्याः । ( ५. ३. ३५ )

उत्तरादिभ्य एनब्वा स्यादवध्यवधिमतोस्सामीप्ये पञ्चम्यन्तं विना । उत्तरेण । अधरेण । दक्षिणेन । पक्षे यथास्वं प्रत्ययाः । इह केचित् उत्तरादीननुवर्त्य दिक्शब्दमात्रादेनपमाहुः । पूर्वेण ग्रामम् । अपरेण ग्रामम् । 'एनपा द्वितीया' ( सू. 610 ) इति तद्योगे द्वितीया ।

अस्मिन्नेव ग्रन्थे श्लो० 460. दण्डकां **दक्षिणेन** । दण्डकाया दक्षिणतः । अनेन एनप् । 'एनपा द्वितीया' (सू. 610) इति द्वितीया । दण्डकाया दक्षिणत इत्यत्र 'दक्षिणोत्तराभ्यामतसुच्' (सू. 1978) इत्यतसुच् । 'षष्ठ्यतसर्थप्रत्ययेन' (सू. 609) इति तद्योगे षष्ठी ।

अस्मिन्नेव ग्रन्थे श्लो० 461. धनपतिगृहानुत्तरेण कुबेरगृहेभ्यः उत्तरस्मिन्नदूरे प्रदेशे । अनेन एनप् । अव्ययमेतत् । तद्योगे द्वितीया ।

चम्पूभारते—VI. 85.

ग—तत्र **दक्षिणेन** पुरं व्यग्रतरसैन्येन काल्यमानं क्वचिदरुणतया निमग्नजमदग्निकुमारोष्णनिःश्वासवेगविलुलितविचित्रवीचीप्रपञ्चमिव स्यमन्तपञ्चकम्, क्वचिन्नीलतया मदकण्डूलवेतण्डशुण्डाविधूनितविटपमालमिव तमालकाननम्, क्वचिद्धवलतया मन्दरगिरिमथनविक्षोभितफेनकूटमिव क्षीरोदमध्यमुन्नमितलाङ्गूलमुद्गमितहुङ्कारमुल्ललितधूलीकमुद्दामघण्टारवं गोधनं दक्षिणेन पुरं व्यग्रतरसैन्येन तेन काल्यमानं निशम्य सेनाकुम्भिकुलगम्भीरबृंहितारम्भैर्मन्दिराग्रसिंहप्रतिच्छन्दवृन्दमुखकन्दरमौननियमं विभिन्दन्ननुकूलपवमानपुरोनाटितपटैर्वैरिभटजीविताहरणाय वैवस्वतमिवाह्वयद्भिः केतुदण्डैः परिमोटितगगनतटिनीतटविटपिवाटो विराटोऽपि रणप्रयाणारम्भमाटीकत॥ 1823 ॥

**दक्षिणेन** पुरम् । एनप् । द्वितीया ।

अस्मिन्नेव ग्रन्थे ग० 462. लङ्कां **पूर्वेण** । सुवेलं **पश्चिमेन** ।

अनर्घराघवे—VII. 125.

ग—एते भगवत्यौ भूमिदेवानां मूलायतनमन्तर्वेदीं **पूर्वेण** कृष्णागरुमलयजमयमङ्गरागमिवान्योन्यस्य कुर्वाणे कलिन्दकन्यामन्दाकिन्यौ सङ्गच्छेते ॥ 1824 ॥

अन्तर्वेदीं **पूर्वेण** ।

अनर्घराघवे—II. 14.

ग—नन्वेतावेव यज्ञवाटमुत्तरेण विहारभूमिषु क्रीडतः । तदुपेत्य निःशङ्कमवलोकय ॥ 1825 ॥

यज्ञवाटं 'एनपा द्वितीया' (सू. 610) इति षष्ठ्यर्थे द्वितीया । **उत्तरेण** । **अनेन** इति सप्तम्यर्थे एनप् ।

१९८५ । दक्षिणादाच् । ( ५. ३. ३६ )

अस्तातेर्विषये । दक्षिणा वसति । अपञ्चम्या इत्येव । दक्षिणादागतः ।

१९८६ । आहि च दूरे । ( ५. ३. ३७ )

दक्षिणाद् दूरे आहि स्यात् । चादाच् । दक्षिणाहि दक्षिणा ।

१९८७ । उत्तराच्च । ( ५. ३. ३८ )

उत्तराहि उत्तरा । 'अन्यारात्' ( सू. 595 ) इति तद्योगे पञ्चमी ।

अस्मिन्नेव ग्रन्थे श्लो० 418. समुद्रादुत्तराहि । उत्तरस्मिन् दूरे । अनेनाहिप्रत्ययः । तद्योगात् 'अन्यारात्' (सू. 595) इत्यादिना पञ्चमी ।

१९८८ । सङ्ख्याया विधार्थे धा । ( ५. ३. ४२ )

क्रियाप्रकारार्थे वर्तमानात् सङ्ख्याशब्दात्स्वार्थे धा स्यात् । चतुर्धा । पञ्चधा । 'प्रकारवचने थाल्' (सू. 1971) किमादिभ्यस्थाल् । तथा तेन प्रकारेण ।

रघुवंशे—X. 84.

स चतुर्धा बभौ व्यस्तः प्रसवः पृथिवीपतेः ।
धर्मार्थकाममोक्षाणामवतार इवाङ्गभाक् ॥ 1826 ॥

चतुर्धा । अनेन धाप्रत्ययः । व्यस्तो विभक्तः दशरथस्य प्रसवः ।

अनर्घराघवे—I. 50.

ब्रह्मज्योतिर्विवर्तस्य चतुर्धा देहयोगिनः ।
ऋश्यशृङ्गचरोरंशः प्रथमोऽयं महाभुजः ॥ 1827 ॥

चतुर्धा देहयोगिनः ऋश्यशृङ्गचरोरंशः ।

79

चम्पूभारते—I. 67.

नवतरुणिमलक्ष्मीनन्दनीयं शरीरं
कुरुवृषभसुतानां कुर्वती नेत्रपात्रम् ।
मुनिततिरिति मेने मोहनाय त्रिलोक्याः
स्वविशिख इव कामः सोऽपि किं पञ्चधाभूत् ॥ 1828 ॥

चम्पूभारते—I. 84.

पञ्चधा प्रवहन्तीनां पवनात्मज एव सः ।
कौरवक्रोधसिन्धूनां क्रमात्सङ्गमभूरभूत् ॥ 1829 ॥

१९९० । एकाद्धो ध्यमुञन्यतरस्याम् । (५. ३. ४४)

ऐकध्यम् । एकधा ।

अस्मिन्नेव ग्रन्थे श्लो 777. नैकधा अनेकधा । नञर्थस्य नशब्दस्य सुप्सुपेति समासः । नञ्समासे नलोपप्रसङ्गः ।

१९९१ द्वित्र्योश्च धमुञ् । (५. ३. ४५)

आभ्यां धा इत्यस्य धमुञ्स्याद्वा । द्वैधम् द्विधा । त्रैधं त्रिधा ।

१९९२ । एधाच्च । (५. ३. ४६)

द्वेधा त्रेधा ।

माघे—XIV. 61.

पद्मभूरिति सृजञ्जगद्रजः सत्त्वमच्युत इति स्थितं नयन् ।
संहरन् हर इति श्रितस्तमस्त्रैधमेष भजति त्रिभिर्गुणैः ॥ 1830 ॥

त्रैधं त्रैविध्यम् । धमुञ् ।

अस्मिन्नेव ग्रन्थे श्लो० 172. त्रेधा । एधाच ।

चम्पूभारते—VI. 30.

अक्षीणवक्त्रशशिसेवनलाभतोषा-
दालिङ्गितामिव मिथो रजनेन्द्रियाणाम् ।
वेधा विभज्य रचितां वहसेऽद्य वेणीं
कं सिंहसंहननमूहयितुं वियुक्तम् ॥ 1831 ॥

वेधा । एधाच् ।

१९९३ । याप्ये पाशप् । (५. ३. ४७)

कुत्सितो भिषक् भिषक्पाशः ।

अस्मिन्नेव ग्रन्थे श्लो० 1. भृत्यपाशकः कुत्सितभृत्यः । भृत्यपाश एव भृत्यपाशकः ।

भट्टिकाव्ये—IX. 59.

वानरः कुलशैलाभः प्रसह्यायुधशीकरम् ।
रक्षस्पाशान्यशस्काम्यंस्तमस्कल्पानदुद्रुवत् ॥ 1832 ॥

रक्षस्पाशान् कुत्सितराक्षसान् । पाशप् । 'पाशकल्पककाम्येष्विति वाच्यम्' (वा०. 5033. सू. 152) इति विसर्जनीयस्य सः । यथा पयस्पाशं, यशस्कल्पं, यशस्कं, यशस्काम्यति । केशपाश इत्यत्र 'पाशः पक्षश्च हस्तश्च कलापार्थाः कचात्परे' II. vi. 98. इत्यमरोक्तः पाशशब्दः । न पाशप् ।

विश्वगुणादर्शे—495.

कठिनशठनरेन्द्रस्तावकान् श्लोकपाशान्
जठरपिठरपूर्त्यै जातु मा संगिरध्वम् ।
लुठत दृढतमस्के मा च संसारकूपे
पठत शठजिदुक्तीरश्रमानीतमुक्तीः ॥ 1833 ॥

१९९४ । पूरणाद्भागे तीयादन् । (५. ३. ४८)

द्वितीयो भागः द्वितीयः । तृतीयः ।

वा० । तीयादीकक् स्वार्थे वा वाच्यः । ( 2691. )

द्वैतीयीकः द्वितीयः । तार्तीयीकः तृतीयः ।

वा० । न विद्यायाः । ( 2692. )

द्वितीया तृतीया विद्या ।

नैषधे—II. 110.

श्रीहर्षं कविराजराजिमुकुटालङ्कारहीरस्सुतं
श्रीहीरस्सुषुवे जितेन्द्रियचयं मामल्लदेवी च यम् ।
द्वैतीयीकतया मितोऽयमगमत्तस्य प्रबन्धे महा-
काव्ये चारुणि नैषधीयचरिते सर्गो निसर्गोज्ज्वलः ॥ 1834 ॥

द्वितीय एव द्वैतीयीकः ।

नैषधे—III. 136.

श्रीहर्षमित्यादि पूर्ववत् ।

तार्तीयीकतया मितोऽयमगमत्तस्य प्रबन्धे महा-
काव्ये चारुणि नैषधीयचरिते सर्गो निसर्गोज्ज्वलः ॥ 1835 ॥

तृतीय एव तार्तीयीकः । ईकक् स्वार्थिकः ।

१९९५ । प्रागेकादशभ्योऽछन्दसि । ( ५. ३. ४९ )

पूरणप्रत्ययान्ताद्भागे अन् । चतुर्थः । पञ्चमः ।

१९९६ । षष्ठाष्टमाभ्यां ञ च । ( ५. ३. ५० )

चादन् । षष्ठो भागः षाष्ठः षष्ठः । आष्टमः अष्टमः ।

अस्मिन्नेव ग्रन्थे श्लो० 709. उञ्छानां षष्ठैः षष्ठभागैः अङ्कितानि सैकतानि येषां तानि उञ्छषष्ठाङ्कितसैकतानि । षष्ठशब्दाद्भागार्थेऽन् । अत एवापूरणार्थत्वात् 'पूरणगुण' ( सू. 705 ) इत्यादिनान षष्ठीसमासप्रतिषेधः ।

१९९८ । एकादाकिनिच्चासहाये । (५. ३. ५२)

चात्कन्लुकौ । एकः । एकाकी । एककः ।

अस्मिन्नेव ग्रन्थे श्लो० 1833. एकाकिनः असहायाः । आकिनच् ।

भट्टिकाव्ये—V. 66.

का त्वमेकाकिनी भीरु निरन्वयजने वने ।
क्षुभ्यन्तोऽप्यवसन् व्यालास्त्वामपालं कथं न वा ॥ 1836 ॥

एकाकिनी असहाया । आकिनच् । 'ऋन्नेभ्यो ङीप्' (सू. ३०७) इति ङीप् ।

अस्मिन्नेव ग्रन्थे श्लो० 15. एकाकिनीं एकाकिनीम् , असहायाम् । कात्पू-र्वस्येत्वम् ।

१९९९ । भूतपूर्वे चरट् । (५. ३. ५३)

आढ्यो भूतपूर्वः आढ्यचरः ।

नैषधे—IV. 17.

करपदाननलोचननामभिः शतदलैस्तनुतोऽविरहज्वरे ।
रविमहो बहु पीतचरं चिरादनिशतापमिषादुदमुज्यत ॥ 1837 ॥

पीतचरं पूर्वं पीतम् । चरट् ।

अस्मिन्नेव ग्रन्थे श्लो० 48. निरीक्षितचरी पूर्वं निरीक्षिता ।

चम्पूरामायणे—VI. 60.

अजनि पुनस्समीकमनयोरुभयोर्बलयो-
रवदलिते मुखेऽपि यदनुज्झितरोषभरम् ।
अमरमृगीदृशामपि यदाशयपूर्तिकरं
समरसमुत्सुकेन मुनिना यददृष्टचरम् ॥ 1838 ॥

अदृष्टचरं पूर्वमदृष्टम् । पुंवद्भावः ।

२००० । षष्ठ्या रूप्य च । (५. ३. ५४)

षष्ठ्यन्ताद् भूतपूर्वेऽर्थे रूप्यः स्याच्चरट् च । कृष्णस्य भूतपूर्वो कृष्णरूप्यः कृष्णचरः गौः । तसिलादिषु रूप्यस्यापरिगणितत्वान्न पुंवत् । शुभ्रायाः भूतपूर्वः शुभ्रारूप्यः ।

२००१ । अतिशायने तमबिष्ठनौ । (५. ३. ५५)

अयमेषामतिशयेन आढ्यः आढ्यतमः । लघुतमो । लघिष्ठः ।

अस्मिन्नेव ग्रन्थे 900. अतिशयेन प्रिया प्रियतमा । तमप् । 'तसिलादिष्वा' (सू. 836) इति पुंवद्भावः ।

२००२ । तिङश्च । (५. ३. ५६)

तिङन्तादतिशये द्योत्ये तमप् स्यात् ।

माघे—I. 36.

लघूकरिष्यन्नतिभारभङ्गुराममूं किल त्वं त्रिदिवादवातरः ।
उदूढलोकत्रितयेन सांप्रतं गुरुर्धरित्री क्रियतेतरां त्वया ॥ 1839 ॥

क्रियतेतराम् अतिशयेन क्रियते । 'द्विवचन' (सू. 2005) इति तरप् । 'किमेत्तिङ्' (सू. 2004) इत्याम्प्रत्ययः ।

अनर्घराघवे—I. 23.

नमन्नृपतिमण्डलीमुकुरचन्द्रिकादुर्दिन-
स्फुरच्चरणपल्लवप्रतिपदोक्तदोस्सम्पदा ।
अनेन ससृजेतरां तुरगमेधमुक्तभ्रम-
तुरङ्गखुरचन्द्रकप्रकरदन्तुरा मेदिनी ॥ 1840 ॥

ससृजेतरां अतिशयेन सृष्टा । पूर्ववत्तरप् । आमुः ।

माघे—XIV. 42.

यं लघुन्यपि लघूकृताहितः शिष्यभूतमशिषत्स कर्मणि ।
सस्पृहं नृपतिभिर्नृपोऽपरैर्गौरवेण ददृशेतरामसौ ॥ 1841 ॥

द्दशेतराम् । 'तद्धितश्च' (सू. 448) इत्यव्ययसंज्ञा ।

२००३ । तरप्तमपौ घः । (१. १. २२)

एतौ घसंज्ञकौ स्तः ।

२००४ । किमेत्तिङव्ययघादाम्वद्रव्यप्रकर्षे । (५. ४. ११)

किम एतदन्तात्तिङोऽव्ययाच्च यो घस्तदन्तादामुः स्यान्न तु द्रव्यप्रकर्षे । किंतमाम् । प्राह्णेतमाम् । पचतितमाम् । उच्चैस्तमाम् । द्रव्यप्रकर्षे तु उच्चैस्तमस्तरुः ।

अस्मिन्नेव ग्रन्थे श्लो० 1839. क्रियतेतरां अतिशयेन क्रियते । द्विवचन (2005) इति तरप् । अनेन आमुः ।

अस्मिन्नेव ग्रन्थे श्लो० 1840. संसृजेतराम् । तरपि आमुः ।

माघे—II. 106.

मन्यसेऽरिवधः श्रेयान् प्रीतये नाकिनामिति ।
पुरोडाशभुजामिष्टमिष्टं कर्तुमलंतराम् ॥ 1842 ॥

अलंतराम् । अतिपर्याप्तम् । तरप् । अव्ययादामुः ।

अनर्घराघवे—IV. 19.

एष स्त्रैणकपोलकुङ्कुमलिपिस्तेयातिभीरौ भुजे
बिभ्राणश्चतुरन्तराजविजयि ज्यानादरौद्रं धनुः ।
तूणावेव पुनस्तरां द्रढयति स्वादन्तरस्मात्पटा-
दाकृष्टैः कुशचीरतन्तुभिरभिक्रुद्धो मुनिर्भार्गवः ॥ 1843 ॥

पुनस्तराम् । तरप् । आमुः ।

किरातार्जुनीये—XIII. 22.

नयनादिव शूलिनः प्रवृत्तेर्मनसोऽप्याशुतरं यतः पिशङ्गैः ।
विदधे विलसत्तडिल्लताभैः किरणैर्व्योमनि मार्गणस्य मार्गः ॥ 1844 ॥

आशुतरं शीघ्रतरम् । आशुशब्दादनव्ययात्तरप् । अतः आमुर्न । 'क्लीबे शीघ्राद्यसत्त्वे स्यात् त्रिष्वेषां सत्वगामि यत्' I. i. 67. इत्यमरः ।

अस्मिन्नेव ग्रन्थे श्लो० 988. द्रुततरम् । पूर्ववत् ।

कुमारसंभवे—VII. 68.

> अनेन सम्बन्धमुपेत्य दिष्ट्या मनोरथप्रार्थितमीश्वरेण ।
> मूर्धानमालि क्षितिधारणोच्चमुच्चैस्तरं वक्ष्यति शैलराजः ॥ 1845 ॥

क्षितिधारणोच्चमुन्नतं मूर्धानमुच्चैस्तरमुन्नततरम् । उच्चैरित्यव्ययात्तरप् । मूर्ध्नो द्रव्यत्वान्नामुः ।

अनर्घराघवे—II. 81.

> भूयस्तराणि यदमूनि तमस्विनीषु
> ज्यौत्स्नीषु च प्रविरलानि ततः प्रतीमः ।
> संध्यानलेन भृशमम्बरमूषिकाया-
> मावर्तितैरुडुभिरेव भृतोऽयमिन्दुः ॥ 1846 ॥

भूयस्तराणि उडूनि । नामुः ।

माघे—VII. 48.

> मृदुचरणतलाग्रदुःस्थितत्वादसहतरा कुचकुम्भयोर्भरस्य ।
> उपरि निरवलम्बनं प्रियस्य न्यपतदथोच्चतरोच्चिचीषयान्या ॥ 1847 ॥

असहतरा । पचाद्यजन्तात् नञ्समासात्तरप् । 'तसिलादि' (सू. 836) इति पुंवद्भावः । उच्चतराणामत्युन्नतकुसुमानाम् ।

२००५ । द्विवचनविभज्योपपदे तरबीयसुनौ । (५. ३. ५७)

द्वयोरेकस्यातिशये विभक्तव्ये चोपपदे सुप्तिङन्तादेतौ स्तः । पूर्वयोरपवादः । अयमनयोरतिशयेन लघुः लघुतरः लघीयान् । उदीच्याः प्राच्येभ्यः पटुतराः पटीयांसः ।

२००६ । अजादी गुणवचनादेव । (५. ३. ५८)

इष्ठन्नीयसुनौ गुणवचनादेव स्तः । म्रदिष्ठः म्रदीयान् । नेह । पाचकतरः पाचकतमः ।

माघे—V. 66.

सार्धं कथञ्चिदुचितैः पिचुमर्दपत्रैरास्यान्तरालगतमाम्रदलं म्रदीयः ।
दासेरकस्सपदि संवलितं निषादैर्विप्रं पुरा पतगराडिव निर्जगार ॥ 1843 ॥

म्रदीयः मृदुतरम् । ईयसुन् । 'पृथुमृदु' (वा. 4211. सू. 1787) इति रः ॥

२००८ । तुरिष्ठेमेयस्सु । (६. ४. १५४)

तृशब्दस्य लोपः स्यात् इष्ठेमेयस्सु परेषु । अतिशयेन कर्त्री करिष्ठः । दोहीयसी धेनुः । ईयसुनि 'उगितश्च' (सू. 455) इति ङीप् ।

२००९ । प्रशस्यस्य श्रः । (५. ३. ६०)

अस्य श्रादेशः स्यादजाद्योः ।

२०१० । प्रकृत्यैकाच् । (६. ४. १६३)

इष्ठादिष्वेकाच् प्रकृत्या स्यात । श्रेष्ठः श्रेयान् ।

अस्मिन्नेव ग्रन्थे श्लो० 1842. श्रेयान् प्रशस्यतरः । श्रादेशः । ईयसुन् ।

२०११ । ज्य च । (५. ३. ६१)

प्रशस्यस्य ज्यादेशः स्यादिष्ठेयसोः । ज्येष्ठः ।

अस्मिन्नेव ग्रन्थे श्लो० 899. ज्येष्ठम् । 'वृद्धस्य च' (सू. 2018) इति ज्यादेशः । तत इष्ठम् ।

२०१२ । ज्यादादीयसः । (६. ४. १६०)

ज्यायान् ।

अनर्घराघवे— VI. 7.

ग— तथा धर्मवृत्तिरार्यसन्तानश्च कुमारः कथं ज्यायांसं भ्रातरमवभूय प्रतिपक्षवर्ती संवृत्तः ॥ 1849 ॥

ज्यायांसं ज्येष्ठम् । 'वृद्धस्य च' (सू. 2013) इति ज्यादेशः । अनेन आत्वम् ।

२०१३ । वृद्धस्य च । (५. ३. ६२)

ज्येष्ठः । ज्यायान् ।

अस्मिन्नेव ग्रन्थे श्लो० 894. ज्येष्ठे ।

रघुवंशे—XII. 35.

ज्येष्ठाभिगमनात्पूर्वं तेनाप्यनभिनन्दिता ।
साभूद्रामाश्रया भूयो नदीवोभयकूलभाक् ॥ 1850 ॥

ज्येष्ठः ।

२०१४ । अन्तिकबाढयोर्नेदसाधौ । (५. ३. ६३)

नेदिष्ठः नेदीयान् । साधिष्ठः साधीयान् ।

भट्टिकाव्ये—II. 55.

अथ पुरुजवयोगान्नेदयद्दूरसंस्थं
दवयदतिरयेण प्राप्तमुर्वीविभागम् ।
क्रमरहितमचेतन्नीरजीकारितक्ष्मां
बलमुपहितशोभां तूर्णमायादयोध्याम् ॥ 1851 ॥

नेदयत् अन्तिकस्थं कुर्वत् । अन्तिकशब्दात् तत्करोतीति ण्यन्ताल्लटः शत्रादेशः । णाविष्ठवद्भावात् नेदादेशः ।

अस्मिन्नेव ग्रन्थे श्लो० 1566. नेदयति अन्तिकं करोति । अन्तिकशब्दस्य नेदादेशः ।

२०१५ । स्थूलदूरयुवह्रस्वक्षिप्रक्षुद्राणां यणादिपरं पूर्वस्य च गुणः ।

( ६. ४. १५६ )

एषां यणादिपरं लुप्यते पूर्वस्य च गुणः इष्ठादिषु । स्थविष्ठः । दविष्ठः । यविष्ठः । ह्रसिष्ठः । क्षेपिष्ठः । क्षोदिष्ठः । एवमीयसुन् । इमनिच्क्षिप्रक्षुद्राणां पृथ्वादित्वात् ह्रसिमा क्षेपिमा क्षोदिमा ।

माघे—XVII. 21.

मुहुः प्रतिस्खलितपरायुधा युधि
स्थवीयसीरचलनितम्बनिर्भराः ।
अदंशयन्नरहितशौर्यदंशना-
स्तनूरयं नय इति कृत्रिमभृतः ॥ 1852 ॥

स्थवीयसीः स्थूलतराः । स्थूलशब्दादीयसुन् । 'उगितश्च' (सू. ४५६) इति ङीप् ।

किरातार्जुनीये—XVI. 60.

प्रवृद्धसिन्धूर्मिचयस्थवीयसां
चयैर्विभिन्नाः पयसां प्रपेदिरे ।
उपात्तसंध्यारुचिभिस्सरूपतां
पयोदविच्छेदलवैः कृशानवः ॥ 1853 ॥

स्थवीयसां स्थूलतराणाम् ।

माघे—II. 51.

तेजस्विमध्ये तेजस्वी दवीयानपि गण्यते ।
पञ्चमः पञ्चतपसस्तपनो जातवेदसाम् ॥ 1854 ॥

दवीयान् अतिदूरस्थः । दूरशब्दादीयसुन् ।

अस्मिन्नेव ग्रन्थे श्लो० 1851. दवयत् दूरीकुर्वत् । दूरशब्दात् तत्करोतीति ण्यन्तात् लटः शत्रादेशः ।

अस्मिन्नेव ग्रन्थे श्लो० 8. यवीयसीं गां कनिष्ठाम् । युवन्शब्दादीयसुन् 'उगितश्च' (सू. 455) इति ङीप् ।

अस्मिन्नेव ग्रन्थे श्लो० 1292. यविष्ठवत् युवतमवत् । युवन्शब्दादिष्ठन् प्रत्ययः ।

अस्मिन्नेव ग्रन्थे श्लो० 1416. क्षुद्राः नः क्षोदयन्ति । क्षुद्रशब्दात् तत्करोतीति ण्यन्तात् लट् । णाविष्ठवद्भावात् अनेन यणादिपरलोपः पूर्वस्य च गुणः ।

माघे—II. 100.

> बृहत्सहायः कार्यान्तं क्षोदीयानपि गच्छति ।
> सम्भूयाम्भोधिमभ्येति महानद्या नगापगा ॥ 1855 ॥

क्षोदीयान् क्षुद्रतरः ।

२०१६ । प्रियस्थिरस्फिरोरुबहुलगुरुवृद्धतृप्रदीर्घवृन्दारकाणां प्रस्थस्फवर्बंहिगर्वर्षित्रब्द्राघिवृन्दाः । (६. ४. १५७)

प्रियादीनां क्रमात् प्रादयः स्युरिष्ठादिषु । प्रेष्ठः । स्थेष्ठः । स्फेष्ठः । वरिष्ठः बंहिष्ठः । गरिष्ठः । वर्षिष्ठः । त्रपिष्ठः । द्राघिष्ठः । वृन्दिष्ठः । एवमीयसुन् । प्रेयान् । प्रियोरुबहुलगुरुदीर्घाणां पृथ्वादित्वात् प्रेमा इत्यादि ।

अस्मिन्नेव ग्रन्थे श्लो० 1194. बंहिष्ठकीर्तिः बहुलतरकीर्तिजनकः । वृन्दिष्ठं वृन्दारकतमं श्रेष्ठमित्यर्थः । प्रेष्ठं प्रियतमं, गरिष्ठं गुरुतमं, वरिष्ठं उरुतमं दशरथं आर्चीदर्चितवान् । बंहिष्ठादौ बहुलादिभ्य इष्ठन् । बंह्याद्यादेशः ।

किरातार्जुनीये—XIII. 50.

> को न्विमं हरितुरङ्गमायुधस्थेयसीं दधतमङ्गसंहतिम् ।
> वेगवत्तरमृते चमूपतेर्हन्तुमर्हति शरेण दंष्ट्रिणम् ॥ 1856 ॥

स्थेयसीं स्थिरतराम् । स्थिरशब्दादीयसुन् । 'उगितश्च' (सू. 455) इति ङीप् ।

अनर्घराघवे—III. 39.

स्यातां नाम कपीन्द्रहैहयपती तस्यावगाढान्तर-
स्थेमानौ दशकन्धरस्य महती स्कन्धस्थिता तु नः ।
सद्यः पातितकण्ठकीकसकणा कीर्णाग्रदंष्ट्राङ्कुरैः
स्वेनेभाजिनपल्लवेन मुदितः स्फोटयद्भूर्जटिः ॥ 1857 ॥

**स्थेमा** स्थिरत्वम् । स्थिरशब्दादिमनिच् ।

भट्टिकाव्ये—I. 15

आर्चीद्द्विजातीन्परमार्थविन्दानुदेजयान् भूतगणान् न्यषेधीत् ।
विद्वानुपानेष्ट च तान्स्वकाले यतिर्वसिष्ठो यमिनां वरिष्ठः ॥ 1858 ॥

**वरिष्ठः** श्रेष्ठः । उरुशब्दस्य वरादेशः ।

अस्मिन्नेव ग्रन्थे श्लो० 1455. **संबंहयन्तीं** सम्यग्बहुलीकुर्वन्तीं । संपूर्वाद्बहुलशब्दात् तत्करोतीति ण्यन्तात् लटश्शतरि ङीप् । णाविष्ठवद्भावात् अनेन बहुलशब्दस्य बंह्यादेशः ।

माघे—III. 6.

तमङ्गदे मन्दरकूटकोटिव्याघट्टनोत्तेजनया मणीनाम् ।
**बंहीयसा** दीप्तिवितानकेन चकासयामासतुरुल्लसन्ती ॥ 1859 ॥

**बंहीयसा** बहुलतरेण । बहुलशब्दस्य ईयसुनि बंह्यादेशः ।

माघे—I. 29.

विलोकनेनैव तवामुना मुने
कृतः कृतार्थोऽस्मि निबर्हितांहसा ।
तथापि शुश्रूषुरहं **गरीयसी-**
र्गिरोऽथवा श्रेयसि केन तृप्यते ॥ 1860 ॥

**गरीयसीः** अर्थवत्तराः । ईयसुनि ङीप् । अनेन गुरोर्गरादेशः ।

अस्मिन्नेव ग्रन्थे श्लो० 1236. **गरिम्णः** गुरुत्वस्य । गुरुशब्दादिमनिच् । गरादेशः ।

अस्मिन्नेव ग्रन्थे श्लो० 550. गरीयसा गुरुतरेण। गुरुशब्दादीयसुनि गरादेशः।

किरातार्जुनीये—XI. 10.

त्वया साधु समारम्भि नवे वयसि यत्तपः।
ह्रियते विषयैः प्रायो **वर्षीयानपि** मादृशः॥ 1861 ॥

**वर्षीयान्** अतिवृद्धः। वृद्धशब्दादीयसुन्। अनेन वर्षादेशः।

भट्टिकाव्ये—III. 42.

आतिथ्यमेभ्यः परिनिर्विवित्सोः कल्पद्रुमायोगबलेन फेलुः।
धामप्रथिम्नो म्रदिमान्वितानि वासांसि च **द्राघिमवन्त्युदूहुः** ॥ 1862 ॥

**द्राघिमवन्ति** दैर्घ्ययुक्तानि। दीर्घशब्दस्य द्राघादेशः। पश्चान्मतुप्।
अस्मिन्नेव ग्रन्थे श्लो० 682. **द्राघीयसा** अतिदीर्घेण। अनेन दीर्घशब्दस्य द्राघादेशः।

## २०१७। बहोर्लोपो भू च बहोः। (६. ४. १५८)

बहोः परयोरिमेयसोर्लोपः स्यात् बहोश्च भूरादेशः। भूमा। भूयान्।

चम्पूभारते—III. 2.

प्राणायमानमहिलानथ पाण्डुपुत्रान्
क्षोणाविमाननुजिघृक्षुरु**दारभूमा**।
एणाजिनेन घटितोद्गमनीयकृत्यो
वीणाविनोदरसिको मुनिराविरासीत्॥ 1863 ॥

**उदारभूमा**।

अस्मिन्नेव ग्रन्थे श्लो० 1604. **भूमयन्ति** स्वसामर्थ्यम्। बहोर्भावः भूमा। 'पृथ्वादिभ्य इमनिच्' (सू. 1784)। अनेन भूरादेशः। भूमा अस्यास्तीति भूमवत्। 'तदस्यास्ति' इति (सू. 1894) मतुप्। भूमवत्कुर्वन्ति भूमयन्ति। भूमवच्छब्दात् तत्करोतीति णिचि लट्। णाविष्ठवद्भावात् 'विन्मतोर्लुक्' (सू. 2020) इति मतुपो लुक्।

अस्मिन्नेव ग्रन्थे श्लो० 1708. भूयसे अध्वने ।

माघे—II. 23.

नैतल्लघ्वपि भूयस्या वचो वाचातिशय्यते ।
इन्धनौघधगप्यग्निस्त्विषा नात्येति पूषणम् ॥ 1864 ॥

**भूयस्या** बहुतरया । 'द्विवचन' ( सू. 1005 ) इतीयसुनि अनेन भूरादेशः । ङीप् ।

अस्मिन्नेव ग्रन्थे श्लो० 169 **भूयसीम्** ।

**२०१८ । इष्ठस्य यिट् च । ( ६. ४. १५९ )**

बहोः परस्य इष्ठस्य लोपः स्यात् यिडागमश्च । भूयिष्ठः ।

रघुवंशे—VI. 4.

परार्ध्यवर्णास्तरणोपपन्नमासेदिवान् रत्नवदासनं सः ।
भूयिष्ठमासीदुपमेयकान्तिर्मयूरपृष्ठाश्रयिणा गुहेन ॥ 1865 ॥

**भूयिष्ठम**त्यर्थम् ।

**२०१९ । युवाल्पयोः कनन्यतरस्याम् । ( ५. ३. ६४ )**

एतयोः कनादेशो वा स्यात् इष्ठेयसोः । कनिष्ठः कनीयान् । पक्षे यविष्ठः अल्पिष्ठः इत्यादि ।

अस्मिन्नेव ग्रन्थे श्लो० 3. **कनीयांसं** कनिष्ठम् ।

अस्मिन्नेव ग्रन्थे श्लो० 959. **स्वकनीयांसम्** ।

अस्मिन्नेव ग्रन्थे श्लो० 8. **यवीयसीं** गाम् । विकल्पात्कनादेशो न । 'स्थूलदूर' ( सू. 2015 ) इत्यादिना लोपः । गुणः ।

अस्मिन्नेव ग्रन्थे श्लो० 1604. **कनयन्ति** अल्पां कुर्वन्ति । अल्पां कुर्वन्तीत्यर्थे णिचि णाविष्ठवद्भावात्कनादेशः ।

## २०२० । विन्मतोर्लुक् । (५. ३. ६५)

विनो मतुपश्च लुक् स्यादिष्ठेयसोः । अतिशयेन स्रग्वी स्रजिष्ठः स्रजीयान् । अतिशयेन त्वग्वान् त्वचिष्ठः त्वचीयान् ।

किरातार्जुनीये—XIV. 57.

अजिह्ममोजिष्ठममोघमक्लमं क्रियासु बह्वीषु पृथङ्नियोजितम् ।
प्रसेहिरे सादयितुं न सादिताः शरौघमुत्साहमिवास्य विद्विषः ॥ 1866 ॥

ओजः अस्यास्तीति ओजस्वी । 'अस्माया' (सू. 1928) इति विनिः । अतिशयेन ओजस्वी ओजिष्ठः । इष्ठन् । अनेन विनो लुक् ।

अस्मिन्नेव ग्रन्थे श्लो० 679. अतिशयेन ब्रह्मवन्तं ब्रह्मिष्ठम् । ब्रह्मशब्दान्मतुबन्तादिष्ठन्प्रत्ययेऽनेन मतुपो लुक् ।

अस्मिन्नेव ग्रन्थे श्लो० 1566. स्रगस्यास्तीति स्रग्वी । 'अस्माया' (सू. 1928) इति विनिः । स्रग्विणं करोति स्रजयति । तत्करोतीति णिच् । णाविष्ठवद्भावादनेन विनो लुक् ।

माघे—VI. 62.

कुसुमयन् फलिनीरलिनीरवै-
मदविकासिभिराहितहुङ्कृतिः ।
उपवनं निरभर्त्सयत प्रियान्
वियुवतीर्युवतीश्शिशिरानलः ॥ 1867 ॥

फलिनीः कुसुमयन् कुसुमवतीः कुर्वन् । कुसुमयतेर्मत्वन्तप्रकृतिकात् तत्करोतीति ण्यन्ताल्लटश्शत्रादेशः । अनेन मतुपो लुक् ।

## २०२१ । प्रशंसायां रूपप् । (५. ३. ६६)

सुबन्तात्तिङन्ताच्च । प्रशस्तः पटुः पटुरूपः । प्रशस्तं पचति पचतिरूपम् । प्रशस्ता ब्राह्मणी ब्राह्मणिरूपा । 'घरूप' (सू. 985) इति ह्रस्वः ।

कुमारसंभवे—V. 69.

अयुक्तरूपं किमतः परं वद त्रिनेत्रवक्षःसुलभं तवापि यत् ।
स्तनद्वयेऽस्मिन् हरिचन्दनास्पदे पदं चिताभस्मरजः करिष्यति ॥ 1868 ॥

अयुक्तरूपमत्यन्तायुक्तम् ।

अस्मिन्नेव ग्रन्थे श्लो० 433. अमुष्याः पितृवनवसुमत्यां वर्तनं युक्तरूप-मत्यन्तयुक्तम् ।

२०२२ । ईषदसमाप्तौ कल्पब्देश्यदेशीयरः । (५. ३. ६७)

ईषदूनो विद्वान् विद्वत्कल्पः । यशस्कल्पम् । यजुष्कल्पम् । विद्वद्देश्यः । विद्वद्देशीयः । पचतिकल्पम् । ब्राह्मणिकल्पा । 'घरूप' (सू. ९५५) इति ह्रस्वः । पाशकल्पा ।

अस्मिन्नेव ग्रन्थे श्लो० 730. शतमन्युकल्पः ॥

भट्टिकाव्ये—II. 5.

वनानि तोयानि च नेत्रकल्पैः
पुष्पैस्सरोजैश्च विलीनभृङ्गैः ।
परस्परं विस्मयवन्ति लक्ष्मी-
मालोकयाञ्चक्रुरिवादरेण ॥ 1869 ॥

नेत्रकल्पैः ।

अस्मिन्नेव ग्रन्थे श्लो० 11. नयनाम्बुकल्पैः ।

भट्टिकाव्ये—VI. 41.

ऐक्षेतामाश्रमादाराद्गिरिकल्पं पतत्रिणम् ।
तं सीताघातिनं मत्वा हन्तुं रामोऽभ्यधावत ॥ 1870 ॥

गिरिकल्पम् ।

भट्टिकाव्ये—III. 3.

आदिक्षदादीप्तकृशानुकल्पं सिंहासनं तस्य सपादपीठम् ।
सन्तप्तचामीकरवल्गुवज्रं विभागविन्यस्तमहार्घरत्नम् ॥ 1871 ॥

आदीप्तकृशानुकल्पम् ।

अस्मिन्नेव ग्रन्थे श्लो 36. ईषदसमाप्ता प्रभाता **प्रभातकल्पा** । 'तसिलादि' (सू. 836) इति प्रभातशब्दस्य पुंवद्भावः ।

अस्मिन्नेव ग्रन्थे श्लो० 155. ईषदसमाप्तां पार्शीं **पार्शीकल्पाम्** । 'बह्वादिभ्यश्च' (सू. 503) इति विकल्पादीकारः । अभाषितपुंस्कत्वात् 'घरूप' (सू. 985) इत्यादिना ह्रस्वो न भवति ।

माघे—XVI. 18.

अतिकोमलमेकतोऽन्यतः सरसाम्भोरुहवृन्तकर्कशम् ।
वहति स्फुटमेकमेव ते वचनं **शाकपलाशदेश्यताम्** ॥ 1872 ॥

ईषदसमाप्तं शाकपलाशं **शाकपलाशदेश्यम्** । देश्यप्रत्ययः ।

अस्मिन्नेव ग्रन्थे ग० 1607. **अग्निदेश्यमग्निकल्पम्** । देश्यप्रत्ययः ।

अस्मिन्नेव ग्रन्थे श्लो० 741. षड्वर्षाणि भूतः षड्वर्षः । 'तद्धितार्थ' (सू. 728) इति समासः । 'तमधीष्टो' (सू. 1744) इति तद्धितस्य लुक् । ईषदसमाप्तः षड्वर्षः **षड्वर्षदेशीयः** । अनेन देशीयप्रत्ययः ।

## २०२३ । विभाषा सुपो बहुच् पुरस्तात्तु । (५. ३. ६८)

ईषदसमाप्तिविशिष्टेऽर्थे सुबन्ताद्बहुज्वा स्यात् । स च प्रागेव न तु परतः । ईषदूनः पटुः बहुपटुः । पटुकल्पः । सुपः किम् । यजतिकल्पम् ।

माघे—II. 50.

स्वयं प्रणमतेऽल्पेऽपि परवायावुपेयुषि ।
निदर्शनमसाराणां **लघुर्बहुतृणं** नरः ॥ 1873 ॥

ईषदसमाप्तं तृणं बहुतृणम् । तृणकल्प इत्यर्थः । बहुच्प्रत्ययः । 'स्यादीषदसमाप्तौ तु बहुच् प्रकृतिलिङ्गता' इति वचनात् प्रकृतिलिङ्गता ।

माघे—XVIII. 79.

कीर्णा रेजे साजिभूमिस्समन्तादप्राणद्भिः प्राणभाजां प्रतीकैः ।
बह्वारब्धैरर्धसंयोजितैर्वा रूपैः स्रष्टुः सृष्टिकर्मान्तशाला ॥ 1874 ॥

बह्वारब्धैः ईषदसमाप्तसमारब्धैः । किञ्चिन्न्यूनं सृष्टैरित्यर्थः । बहुच् ।

२०२४ । प्रकारवचने जातीयर् । (५. ३. ६९)

पटुप्रकारः । पटुजातीयः ।

२०२६ अव्ययसर्वनाम्नामकच् प्राक् टेः । (५. ३. ७१)

'तिङश्च' (सू. 2002) इत्यनुवर्तते ।

अस्मिन्नेव ग्रन्थे श्लो० 349. असकौ राक्षसी । पापासौ । कुत्सायामकच् ।

माघे—VII. 53.

न खलु वयममुष्य दानयोग्याः पिबति च पाति च यासकौ रहस्त्वाम् ।
व्रज विटपममुं ददस्व तस्यै भवति यतस्सदृशोश्चिराय योगः ॥ 1875 ॥

असकौ ।

माघे—VI. 10.

समभिसृत्य रसादवलम्बितः प्रमदया कुसुमावचिचीषया ।
अविनमन्न रराज वृथोच्चकैरनृतया नृतया वनपादपः ॥ 1876 ॥

उच्चकैः ।

२०२९ । कुत्सिते । (५. ३. ७४)

कुत्सितोऽश्वः अश्वकः ।

२०३१ । अनुकम्पायाम् । (५. ३. ७६)

पुत्रकः । अनुकम्पितः पुत्र इत्यर्थः ।

अस्मिन्नेव ग्रन्थे श्लो० 731. कुब्रह्मयज्ञके । कुत्सितो यज्ञो यज्ञकः । कुत्सायां कन् ।

अस्मिन्नेव ग्रन्थे श्लो० 587. क्षत्त्रियकान्तिके । कुत्सायां कन् ।

भट्टिकाव्ये—V. 43.

वनतापसके वीरौ विपक्षे गलितादरौ ।
किं चित्रं यदि सावज्ञौ मम्रतुः खरदूषणौ ॥ 1877 ॥

खरदूषणौ तापसके तापसाभासे । कुत्सायां कन् ।

२०३५ ठाजादावूर्ध्वं द्वितीयादचः । (५. ३. ८३)

वा० । विनापि प्रत्ययं पूर्वोत्तरपदयोर्वा लोपो वाच्यः । (3299.)

देवदत्तः, दत्तः, देवः । सत्यभामा, भामा, सत्या ।

चम्पूभारते—I. 63.

अत्यन्तबाल्यादमृताशिताभि-
रन्योन्यमर्धोक्तिभिराह्वयत्सु ।
स भीमसेनोऽजनि पाण्डुपुत्रे-
ष्वर्धोक्तनामापि च पूर्णनामा ॥ 1878 ॥

भीमसेनः अर्धोक्तनामापि भीम इत्युक्तोऽपि पूर्णनामाऽजनि । सेनपदस्य लोपेन तस्य सर्वार्थबोधकत्वादिति भावः ।

चम्पूभारते—XII. 9.

आजगाम स सरस्वतीतटादाजिसीम्नि बलवान् बलस्तदा ।
आयते सह यदाख्यया खलु भद्रदेवपदयोस्समागमः ॥ 1879 ॥

बल आजगाम । यदाख्यया सह भद्रदेवपदयोस्समागमः ।

माघे—XII. 3.

हस्तस्थिताखण्डितचक्रशालिनं
द्विजेन्द्रकान्तं श्रितवक्षसं श्रिया ।
सत्यानुरक्तं नरकस्य जिष्णवो
गुणैर्नृपाः शार्ङ्गिणमन्वयासिषुः ॥ 1880 ॥

सत्यानुरक्तं सत्यायां सत्यभामायामनुरक्तम् ।

२०४० । अल्पे । (५. ३. ८५)

अल्पं तैलं तैलकम् ।

माघे—XIII. 48.

अलसैर्मदेन सुदृशः शरीरकैः
स्वगृहान्प्रति प्रतिययुः शनैः शनैः ।
अलघुप्रसारितविलोचनाञ्जलि-
द्रुतपीतमाधवरसौघनिर्भरैः ॥ 1881 ॥

शरीरकाणि अल्पशरीराणि । कन् ।

अस्मिन्नेव ग्रन्थे श्लो० 1752. अङ्गकम् । कन् ।

२०४१ । ह्रस्वे । (५. ३. ८६)

ह्रस्वो वृक्षो वृक्षकः ।

रघुवंशे—I. 51

सेकान्ते मुनिकन्याभिस्तत्क्षणोज्झितवृक्षकम् ।
विश्वासाय विहङ्गानामालवालाम्बुपायिनाम् ॥ 1882 ॥

वृक्षकाः ह्रस्ववृक्षाः । ह्रस्वार्थे कन् ।

२०४३ । कुटीशमीशुण्डाभ्यो रः । (५. ३. ८८)

ह्रस्वा कुटी कुटीरः । शमीरः । शुण्डारः ।

अनर्घराघवे—I. 55.

ग—अपि चेदानीं पटीरतरुकोटरकुटीरमध्यासीनाः ॥ 1883 ॥
पटीरतरुकोटर एव कुटीरः ह्रस्वा कुटी । ह्रस्वार्थे रप्रत्ययः ।

२०४४ । कुत्वा डुपच् । ( ५. ३. ८९ )

ह्रस्वा कुतूः कुतुपः । 'कुतूः कृत्तेः स्नेहपात्रं ह्रस्वा सा कुतुपः पुमान् ।' II. ix. 33. इत्यमरः ।

२०४५ । कासूगोणीभ्यां ष्टरच् । ( ५. ३. ९० )

आयुधविशेषः कासूः । ह्रस्वा सा कासूतरी । गोणीतरी ।

२०४६ । वत्सोक्षाश्वर्षभेभ्यश्च तनुत्वे । ( ५. ३. ९० )

वत्सतरः । द्वितीयं वयः प्राप्तः उक्षतरः । अश्वतरः । ऋषभतरः ।

अस्मिन्नेव ग्रन्थे श्लो० 1098. वत्सतरः दम्यः । 'दम्यवत्सतरौ समौ' II. ix. 62. इत्यमरः ।

अस्मिन्नेव ग्रन्थे श्लो० 124. वत्सतरी । वर्षद्वयवयस्का गौः । ष्टरच् । षित्वात् स्त्रियां 'षिद्गौरादिभ्यश्च' ( सू. 198 ) इति ङीष् ।

अस्मिन्नेव ग्रन्थे ग० 125. वत्सतरीम् । पूर्ववत् ।

अस्मिन्नेव ग्रन्थे श्लो० 142. तनुरुक्षा उक्षतरः । अदम्यो गौः । ष्टरच् ।

२०४७ । किंयत्तदो निर्धारणे द्वयोरेकस्य डतरच् । ( ५. ३. ९२ )

अनयोः कतरो वैष्णवः । यतरः । ततरः ।

२०४८ । वा बहूनां जातिपरिप्रश्ने डतमच् । ( ५. ३. ९३ )

बहूनां मध्ये एकस्य निर्धारणे डतमज्वा स्यात् । कतमो भवतां कठः । यतमः । ततमः ।

किरातार्जुनीये—VI. 40.

सुकुमारमेकमणु मर्मभिदामतिदूरगं युतममोघतया ।
अविपक्षमस्त्रपरं कतमद्विजयाय यूयमिव चित्तभुवः ॥ 1334 ॥

मर्मभिदामस्त्राणां मध्येऽपरं कतमत् । इत्यत्र ।

२०४९ । एकाच्च प्राचाम् । (५. ३. ९४)

डतरच् डतमच्च स्यात् । अनयोरेकतरो मैत्रः । एषामेकतमः ।

माघे—IX. 9.

द्रुतशातकुम्भनिभमंशुमतो वपुरर्धमग्नवपुषः पयसि ।
रुरुचे विरिञ्चिनखभिन्नबृहज्जगदण्डकैकतरखण्डमिव ॥ 1335 ॥

पयसि अर्धमग्नवपुषः अंशुमतः वपुर्मण्डलं जगदण्डैकतरखण्डमिव रुरुचे ।

अस्मिन्नेव ग्रन्थे श्लो० 634. एकतरः । द्वयोरेकस्य निर्धारणे डतरच् ।

॥ इति प्रागिवीयप्रकरणम् ॥

---

## ॥ अथ स्वार्थिकप्रकरणम् ॥



### २०५१ । इवे प्रतिकृतौ । (५. ३. ९६)

कन् स्यात् । अश्व इव प्रतिकृतिः अश्वकः ।

### २०५४ । जीविकार्थे चापण्ये । (५. ३. ९९)

जीविकार्थं यद्विक्रीयमाणं तस्मिन्वाच्ये कनो लुप् स्यात् । वासुदेवः । शिवः । स्कन्दः ।

### २०५६ । वस्तेर्ढञ् । (५. ३. १०१)

इवेत्यनुवर्तत एव । प्रतिकृताविति निवृत्तम् । वसतिरिव वास्तेयम् । वास्तेयी ।

### २०५७ । शिलाया ढः । (५. ३. १०२)

शिलाया इति योगविभागात् ढञपीत्यके । शिलेव शिलेयम् । शैलेयम् ।

रघुवंशे—VI. 51.

अध्यास्य चाम्भःपृषतोक्षितानि शैलेयगन्धीनि शिलातलानि ।
कलापिनां प्रावृषि पश्य नृत्यं कान्तासु गोवर्धनकन्दरासु ॥ 1886 ॥

ढञ् ।

### २०५८ । शाखादिभ्यो यः । (५. ३. १०३)

शाखेव शाख्यः । मुखमिव मुख्यः । जघनमिव जघन्यः । अग्र्यः । शरण्यः । शाखादिः— ५. ४५. शरणे साधुश्शरण्यः । 'तत्र साधुः' (सू. 1650) इति यत् ।

अस्मिन्नेव ग्रन्थे श्लो० 1124. अग्रणीरिव अग्र्याः श्रेष्ठाः । तेषां वनेचराग्र्याणां जघनमिव जघन्या नीचाः ।

अस्मिन्नेव ग्रन्थे श्लो० 1704. मुखमिव मुख्यः प्रधानम् ।

### २०६० । कुशाग्राच्छः । (५. ३. १०५)

अस्मिन्नेव ग्रन्थे श्लो० 1650. कुशाग्रीयां कुशाग्रमिव सूक्ष्माम्। इवार्थे छप्रत्ययः।

२०६१। समासाच्च तद्विषयात्। (५. ३. १०६)

इवार्थविषयात्समासात् छः स्यात्। काकतालीयो देवदत्तस्य वधः।

२०६२। शर्करादिभ्योऽण्। (५. ३. १०७)

शर्करेव शार्करम्। शर्करादिः— ५. ४६.

२०६५। कर्कलोहितादीकक्। (५. ३. ११०)

कर्कः शुक्लोऽश्वः। स इव कार्कीकः। लौहितीकः स्फटिकः।

२०७५। स्थूलादिभ्यः प्रकारवचने कन्। (५. ४. ३)

जातीयरोऽपवादः। स्थूलकः। अणुकः।

वा०। चञ्चद्बृहतोरुपसंख्यानम्। (3315.)

चञ्चत्कः। बृहत्कः।

(ग. सू.) सुराया अहौ। 130.

सुरकः।

२०७८। बृहत्या आच्छादने। (५. ४. ६)

कन् स्यात्। 'द्वौ प्रावारोत्तरासङ्गौ समौ बृहतिका तथा' II. vi. 117. इत्यमरः।

२०७९। अषडक्षाशितङ्ग्वलङ्कर्मालंपुरुषाध्युत्तरपदात्खः। (५. ४. ७)

अषडक्षीणो मन्त्रः। द्वाभ्यामेव कृत इत्यर्थः। आशिता गावोऽस्मिन्निति आशितङ्गवीनमरण्यम्। निपातनात्पूर्वस्य मुम्। अलं कर्मणे अलङ्कर्मीणः। अलम्पुरुषीणः।

ईश्वराधीनः । नित्योऽयं खः । 'अषडक्षीणो यस्तृतीयाद्यगोचरः' II. viii. 23. इत्यमरः ।

अनर्घराघवे—III. 6.

मनोऽपि शङ्कमानाभिर्बालाभिरुपजीव्यते ।
अषडक्षीणषाड्गुण्यमन्त्री मकरकेतनः ॥ 1887 ॥

न विद्यन्ते षडक्षीणि यत्र तदषडक्षीणम् । षड्गुणा एव षाड्गुण्यम् । सन्धिविग्रहादिको मन्त्रः । अनयोः कर्मधारयः । तयोर्मन्त्री कामः । खः ।

भट्टिकाव्ये—IV. 11.

हित्वाशितङ्गवीनानि फलैर्येष्वाशितम्भवम् ।
तेष्वसौ दन्दशूकारिर्वनेष्वानभ्र निर्भयः ॥ 1888 ॥

आशिता आशितवत्यो गाव एष्विति आशितङ्गवीनानि । गोभक्षितकुशपलालादिकानीत्यर्थः । स्वार्थे खः । मुम् ।

अस्मिन्नेव ग्रन्थे ग० 1191. अलङ्कर्मीणः समर्थः । 'कर्मक्षमोऽलङ्कर्मीणः' III. i. 18. इत्यमरः ।

चम्पूरामायणे—II. 32.

ग—सीतापि निजाभरणजातं सुयज्ञपत्न्यै न्यदात् । ततस्सौमित्रिरपि स्वाधीनेन धनेन कञ्चित् कौसल्याश्रितमुपाध्यायमतोषयत् ॥ 1889 ॥

अस्मिन्नेव ग्रन्थे श्लो० 1666. स्वाधीने । खः ।

## २०८० । विभाषाञ्चेरदिक्स्त्रियाम् । ( ५. ४. ८ )

खः स्याद्वा स्वार्थे ।

माघे—I. 2.

गतं तिरश्चीनमनूरुसारथेः प्रसिद्धमूर्ध्वज्वलनं हविर्भुजः ।
पतत्यधो धाम विसारि सर्वतः किमेतदित्याकुलमीक्षितं जनैः ॥1890॥

तिरश्चीनं तिर्यग्भूतम् । तिर्यग्भूतादञ्चत्यन्तादिदिक्स्त्रियां स्वार्थे खः ।

चम्पूरामायणे—IV. 37.

> प्राचीनं व्यसनं सुरेन्द्रतनयाज्जातं वने भ्राम्यतः
> सुग्रीवस्य निराकृतं खररिपोर्बाणेन सालच्छिदा ।
> अद्यान्यद्व्यसनं तु पञ्चविशिखादासीदुपेन्द्रात्मजात्
> सौमित्रे तदपि प्रशान्तमभवज्ज्यावेषणात्तेन ते ॥ 1891 ॥

## २०८४ । विसारिणो मत्स्ये । (५. ४. १६)

अण् स्यात् । वैसारिणः । मत्स्ये किम् । विसारी देवदत्तः ।

## २०८५ । संख्यायाः क्रियाभ्यावृत्तिगणने कृत्वसुच् । (५. ४. १७)

अभ्यावृत्तिर्जन्म । क्रियाजन्मगणनवृत्तेः संख्याशब्दात्स्वार्थे कृत्वसुच् स्यात् । पञ्चकृत्वो भुङ्क्ते ।

अस्मिन्नेव ग्रन्थे श्लो० 470. रघूत्तमः एकस्याह्नः एकस्मिन्नहनि । 'कृत्वोऽर्थप्रयोगे कालेऽधिकरणे' (सू. 622.) इत्यधिकरणे षष्ठी । शतकृत्वः शतवारम् तव स्मरति ।

अस्मिन्नेव ग्रन्थे श्लो० 1574. त्रीन्वारान् त्रिः । सुच् । त्रिरावृत्तास्सप्त । सुप्सुपेति समासः । त्रिस्सप्तकृत्वः ।

अस्मिन्नेव ग्रन्थे श्लो० 503. सहस्रकृत्वः सहस्रवारम् ।

## २०८६ । द्वित्रिचतुर्भ्यस्सुच् । (५. ४. १८)

कृत्वसुचोऽपवादः । द्विर्भुङ्क्ते । त्रिः । चतुः ।

भट्टिकाव्ये—IX. 63.

> द्विष्कुर्वतां चतुष्कुर्वन् अभिघातं नगैर्द्विषाम् ।
> बहिष्करिष्यन् संग्रामात् रिपून् ज्वलनपिङ्गलः ॥ 1892 ॥

द्विष्कुर्वतां द्वौ वाराविभिघातं कुर्वतां द्विषाम् । चतुष्कुर्वन् चतुरो वारान्नगैरभिघातं कुर्वन् । सुच् । 'द्विस्त्रिश्चतुः' (सू. 157) इति विसर्जनीयस्य विकल्पेन षत्वम् ।

अस्मिन्नेव ग्रन्थे श्लो० 1574. त्रीन्वारान् त्रिः । सुच् ।

अस्मिन्नेव ग्रन्थे श्लो० 258. दम्पती कर्मभूतौ । वह्निं त्रिस्त्रिवारम् । सुच् । परिणीय प्रदक्षिणीकार्य ।

किरातार्जुनीये—XVIII. 45.

स पिङ्गाक्षः श्रीमान्भुवनमहनीयेन महसा
तनुं भीमां बिभ्रत्त्रिगुणपरिवारप्रहरणः ।
परीत्येशानं त्रिः स्तुतिभिरुपगीतस्सुरगणैः
सुतं पाण्डोर्वीरं जलदमिव भास्वानभिययौ ॥ 1893 ॥

त्रिः त्रिवारम् । सुच् ।

२०८७ । एकस्य सकृच्च । (५. ४. १९)

सकृदित्यादेशः स्यात् । चात्सुच् । सकृद्भुङ्क्ते । सुचः संयोगान्तलोपः ।

माघे—XII. 52.

सावज्ञमुन्मील्य विलोचने सकृत्क्षणं मृगेन्द्रेण सुषुप्सुना पुनः ।
सैन्यान्न यातस्समयापि विव्यथे कथं सुराजंभवमन्यथाथवा ॥ 1894 ॥

सकृदेकवारम् । निपातः ।

२०८९ । तत्प्रकृतवचने मयट् । (५. ४. २१)

प्राचुर्येण प्रस्तुतं प्रकृतं तस्य वचनं प्रतिपादनम् ।

२०९२ । देवतान्तात्तादर्थ्ये यत् । (५. ४. २४)

तदर्थ एव तादर्थ्यम् । स्वार्थे ष्यञ् । अग्निदेवतायै इदमग्निदेवत्यम् । पितृदेवत्यम् ।

२०९३ । पादार्घाभ्यां च । (५. ४. २५)

पादार्थमुदकं पाद्यम् । अर्घ्यम् ।

अस्मिन्नेव ग्रन्थे श्लो० 1136. पाद्यं पादार्थं जलम् । 'पाद्यं पादाय वारिणि' II. vii. 33. इत्यमरः । यत् । 'पद्यत्यतदर्थे' (सू. [illegible]) इति सूत्रे पादस्य पत्स्यात् अतदर्थे इति पदादेशो पादौ विध्यन्तीति पद्याः शर्कराः । तदर्थे तु पाद्यमित्यत्र पादस्य पन्न ।

अस्मिन्नेव ग्रन्थे श्लो० 984. अर्घ्यादिकया । अर्घ्यमर्घार्थं पूजार्थं द्रव्यम् । अनेन यत् । अन्यत्रार्घ्यं पूजार्हम् । 'दण्डादिभ्यो यः' (सू. 1781) इति यः ।

अस्मिन्नेव ग्रन्थे श्लो० 1551. अर्घार्थमिदमर्घ्यम् । यत् ।

रघुवंशे—I. 44.

ग्रामेष्वात्मविसृष्टेषु यूपचिह्नेषु यज्वनाम् ।
अमोघाः प्रतिगृह्णन्तावर्घ्यानुपदमाशिषः ॥ 1895 ॥

अर्घः पूजाविधिः । तदर्थं द्रव्यमर्घ्यम् । यत् ।

अस्मिन्नेव ग्रन्थे श्लो० 1151. उत्सितस्फुटितसरोरुहमेवार्घ्येण [illegible] । पाद्यं पादोदकम् । यत् ।

भट्टिकाव्ये—VI. 71.

अथार्घ्यमधुपर्काद्यमुपनीयादरादसौ ।
अर्चयित्वा फलैरर्च्यौ सर्वत्राख्यदनामयम् ॥ 1896 ॥

अर्घ्यमर्घार्थं जलम् ।

नैषधे—V. 7.

विष्टरं तटकुशालिभिरद्भिः पाद्यमर्घ्यमथ कच्छरुहाभिः ।
पद्मवृन्दमधुभिर्मधुपर्कं स्वर्गसिन्धुरदितातिथयेऽस्मै ॥ 1897 ॥

अद्भिः पाद्यं पादार्थं जलम् । लताभिरर्घ्यमर्घार्थंपुष्पफलादि । यत् ।

वा० । नवस्य नू आदेशो त्नप्तनप्खाश्च प्रत्यया वक्तव्याः । (3327.)

नूत्नम् । नूतनम् । नवीनम् ।

अस्मिन्नेव ग्रन्थे श्लो० 1445. नूत्नम् ।

वा० । नश्च पुराणे प्रात् । (3328.)

पुराणार्थे वर्तमानात्प्रशब्दात् नो वक्तव्यः । चात्पूर्वोक्ताः । प्रणं, प्रत्नं, प्रतनं, प्रीणम् ।

अस्मिन्नेव ग्रन्थे श्लो० 1446. प्रत्नम् ।

वा० । भागरूपनामभ्यो धेयः । (3330.)

भागधेयम् । रूपधेयम् । नामधेयम् ।

चम्पूरामायणे—I. 99.

ग—अस्यां खलु नगर्यामारब्धयज्ञस्य राज्ञो जनकस्य **भागधेयात्** सीता-**नामधेय**भाजनमजीजनत्कन्यारत्नं रत्नगर्भा भगवती ॥ 1898 ॥

भाग एव **भागधेयः** । नामैव **नामधेयम्** । स्वार्थे धेयप्रत्ययः ।

वा० । आग्नीध्रसाधारणादञ् । (3334.)

आग्नीध्रम् । साधारणम् । स्त्रियां ङीप् । आग्नीध्री । साधारणी ।

अस्मिन्नेव ग्रन्थे श्लो० 480. क्षितिभृतां मृगया **साधारणी** ।

**२०९४ । अतिथेर्ञ्यः । (५. ४. २६)**

तादर्थ्य इत्येव । अतिथये इदमातिथ्यम् ।

चम्पूरामायणे—I. 95.

तिष्ठन् क्षत्त्राईवृत्तौ मुनिरगमदसावाश्रमं ब्रह्मसूनो-
**रातिथ्यं** तत्र लब्ध्वा निरवधि सुरभेः प्राभवादित्यवेत्य ।
सा तेन प्रार्थिताभूत्तदनु मुनिवरे नाभ्युपेते चकर्ष
क्रोशन्तीं तां तथैव प्रचुरबलजुषा कान्दिशीको बभूव ॥ 1899 ॥

**आतिथ्यम्** ।

**२०९५ । देवात्तल् । (५. ४. २७)**

देव एव देवता । स्वार्थे तल् ।

चम्पूरामायणे—I. 92.

> इत्थं विदितवृत्तान्ते देवतानां गणे ततः ।
> पितॄणां प्राभवाल्लेभे मेषस्य वृषणं वृषा ॥ 1900 ॥

देवा एव देवतास्तासाम् । देवशब्दात्स्वार्थे तल् ।

भट्टिकाव्ये—XII. 1.

> ततो विनिद्रं कृतदेवतार्चं हुतैधसं चित्रशिखण्डिकल्पम् ।
> आविष्कृताङ्गप्रतिकर्मरम्यं विभीषणं वाचमुवाच माता ॥ 1901 ॥

देवता ।

चम्पूरामायणे—I. 58.

> शिवयोर्युञ्जतोर्वीर्यं दृष्ट्वा धात्र्यां समर्पितम् ।
> पावकः प्रतिजग्राह दैवतैरनुनाथितः ॥ 1902 ॥

देवता एव दैवतानि तैः । प्रज्ञादित्वात्स्वार्थेऽण् ।

## २०९६ । अवेः कः । (५. ४. २८)

अविरेवाविकः ।

## २०९७ । यावादिभ्यः कन् । (५. ४. २९)

याव एव यावकः । मणिकः । यावादिः— ५. ५२.

अस्मिन्नेव ग्रन्थे श्लो० 670. याव एव यावकोऽलक्तः । 'राक्षा लाक्षा जतुक्लीबे यावोऽलक्तो द्रुमामयः' II. vi. 125. इत्यमरः । स्वार्थे कन् ।

## २०९८ । लोहितान्मणौ । (५. ४. ३०)

लोहित एव मणिर्लोहितकः ।

अस्मिन्नेव ग्रन्थे श्लो० 40. लोहितमणयो लोहितकानि । पद्मरागाः । कन् ।

२१०२ । विनयादिभ्यष्ठक् । ( ५. ४. ३४ )

विनय एव वैनयिकः । सामयिकः ।

( ग. सू. ) उपायात् ह्रस्वत्वञ्च । 144.

औपयिकः । विनयादिः— ५. ५३.

नैषधे—II. 14.

अचिरादुपकर्तुराचरेदथ वात्मौपयिकीमुपक्रियाम् ।
पृथुरित्थमथाणुरस्तु सा न विशेषे विदुषामिह ग्रहः ॥ 1903 ॥

उपाय एव औपयिकः । विनयादित्वात्स्वार्थे ठक् । उपधाया ह्रस्वः । तत आगता औपयिकी । तां औपयिकीम् । 'तत आगतः' (सू. 1453) इत्यणि ङीप् ।

नैषधे—III. 127.

त्वद्गुच्छावलिमौक्तिकानि गुलिकास्तं राजहंसं विभो-
र्वेध्यं विद्धि मनोभुवः स्वमपि तां मञ्जुं धनुर्मञ्जरीम् ।
यन्नित्याङ्कनिवासलालिततमज्यामुज्यमानं लस-
न्नाभीमध्यबिला विलासमखिलं रोमालिरालम्बते ॥ 1904 ॥

मुक्ता एव मौक्तिकानि । विनयादित्वात्स्वार्थे ठगिति वामनः ।

रघुवंशे—XIV. 38.

पौरेषु सोऽहं बहुलीभवन्तमपां तरङ्गेष्विव तैलबिन्दुम् ।
सोढुं न तत्पूर्वमवर्णमीशे आलानिकं स्थाणुमिव द्विपेन्द्रः ॥ 1905 ॥

आलानमेव आलानिकम् । स्वार्थे ठक् ।

२१०३ । वाचो व्याहृतार्थायाम् । ( ५. ४. ३५ )

स्वार्थे ठक् । 'सन्देशवाग्वाचिकं स्यात्' I v. 18. इत्यमरः ।

नैषधे—VI. 77.

लिपिर्न दैवी सुपठा भुवीति तुभ्यं मयि प्रेषितवाचिकस्य ।
इन्द्रस्य दूत्यां रचय प्रसादं विज्ञापयन्त्यामवधानदानम् ॥ 1906

व्याहृतार्था वाक् वाचिकं सन्देशवाक्यम् । ठक् ।

माघे—II. 70.

संप्रत्यसांप्रतं वक्तुमुक्ते मुसलपाणिना ।
निर्धारितेऽर्थे लेख्येन खलूक्त्वा खलु वाचिकम् ॥ 1907 ॥

वाचिकं व्याहृतार्थां वाचम् । ठक् ।

२१०४ । तद्युक्तात्कर्मणोऽण् । (५. ४. ३६)

कर्मैव कार्मणम् । वाचिकं श्रुत्वा क्रियमाणं कर्मेत्यर्थः ।

२१०५ । ओषधेरजातौ । (५. ४. ३७)

स्वार्थेऽण् । औषधं पिबति ।

२१०६ । प्रज्ञादिभ्यश्च । (५. ४. ३८)

स्वार्थेऽण । प्रज्ञ एव प्राज्ञः । प्राज्ञी स्त्री । दैवतः । बान्धवः । प्रज्ञादिः—५. ५४.

अस्मिन्नेव ग्रन्थे श्लो० 1687. प्राज्ञः ।

अस्मिन्नेव ग्रन्थे श्लो० 931. चरतीति चरः । पचाद्यच् । स एव चारः । अण् ।

माघे—II. 82.

बुद्धिशस्त्रः प्रकृत्यङ्गो घनसंवृतिकञ्चुकः ।
चारेक्षणो दूतमुखः पुरुषः कोऽपि पार्थिवः ॥ 1908 ॥

चरतीति चरः । पचाद्यच् । स एव चारो गूढपुरुषः । प्रज्ञादित्वात्स्वार्थेऽण् ।

अस्मिन्नेव ग्रन्थे श्लो० 837. बन्धव एव बान्धवाः । स्वार्थेऽण् ।

अस्मिन्नेव ग्रन्थे श्लो० 1789. बन्धुरेव बान्धवः । पूर्ववदण् ।

अस्मिन्नेव ग्रन्थे श्लो० 1902. देवता एव दैवतानि । अण् ।

अस्मिन्नेव ग्रन्थे श्लो० 316. शत्रूनेव शात्रवान् । अण् ।

माघे—XVIII. 20.

नीते भेदं धौतधाराभिघाता-
दम्भोदाभे शात्रवेणापरस्य ।
सासृग्राजिस्तीक्ष्णमार्गस्य मार्गो
विद्युद्दीप्तः कङ्कटे लक्ष्यते स्म ॥ 1909 ॥

**शात्रवेण** शत्रुणा । स्वार्थेऽण् ।

माघे—XIV. 44.

आगताद्व्यवसितेन चेतसा सत्त्वसम्पदविकारिमानसः ।
तत्र नाभवदसौ महाहवे शात्रवादिव पराङ्मुखोऽर्थिनः ॥ 1910 ॥

मन एव **मानसम्** । अण् ।

अस्मिन्नेव ग्रन्थे श्लो० 1451. अश्मैव**आश्मनम्** । स्वार्थेऽण् । 'अश्मनो विकारे टिलोपो वक्तव्यः' (वा. 4185. सू. 1514) इति विकार एव टिलोपविधानात् नात्र टिलोपः ।

माघे—XVII. 24.

जेतुं जैत्राश्शेकिरे नारिसैन्यैः
पश्यन्तोऽघोलोकमस्तेषुजालाः ।
नागारूढाः पार्वतानि श्रयन्तो
दुर्गाणीव त्रासहीनास्त्रसानि ॥ 1911 ॥

जेतार एव **जैत्रा** जयशीलाः । जेस्तृन्नन्तात् प्रज्ञादित्वादण् ।

अस्मिन्नेव ग्रन्थे श्लो० 1430. **जैत्रं** जयशीलम् । पूर्ववदण् ।

किरातार्जुनीये—XIV. 23.

रणाय जैत्रः प्रदिशन्निव त्वरां
तरङ्गितालम्बितकेतुसन्ततिः ।
पुरो बलानां सघनाम्बुशीकरः
शनैः प्रतस्थे सुरभिस्सुरभिर्गजः ॥ 1912 ॥

जेतैव जैत्रो जयशीलः । स्वार्थेऽण् ।

२१०७ । मृदस्तिकन् । (५. ४. ३९)

मृदेव मृत्तिका ।

२१०८ । सस्नौ प्रशंसायाम् । (५. ४. ४०)

रूपपोऽपवादः । प्रशस्ता मृत् मृत्सा मृत्स्ना । 'मृन्मृत्तिका प्रशस्ता तु मृत्स्ना मृत्सा च मृत्तिका' II. i. 5. इत्यमरः ।

२११० । सङ्ख्यैकवचनाच्च वीप्सायाम् । (५. ४. ४३)

द्वौ द्वौ ददाति द्विशः । माषं माषं माषशः ।

रघुवंशे—XI. 43.

व्यादिदेश गणशोऽथ पार्श्वगान्
कार्मुकाभिहरणाय मैथिलः ।
तैजसस्य धनुषः प्रवृत्तये
तोयदानिव सहस्रलोचनः ॥ 1913 ॥

गणान् गणान् गणशः । शस्प्रत्ययः ।

२१११ । प्रतियोगे पञ्चम्यास्तसिः । (५. ४. ४४)

'प्रतिः प्रतिनिधि' (सू. 599) इति कर्मप्रवचनीयेन प्रतिना योगे 'प्रतिनिधि' (सू. 600) इति या पञ्चमी विहिता तदन्तात्तसिः स्यात् । प्रद्युम्नः कृष्णतः प्रति । कृष्णसदृश इत्यर्थः । मुख्यसदृशः प्रतिनिधिः ।

अस्मिन्नेव ग्रन्थे श्लो० 299. रामो नारायणतः प्रति। तेन तुल्य इत्यर्थः।

वा०। आद्यादिभ्य उपसङ्ख्यानम्। (3339.)

आदौ आदितः। मध्यतः। अन्ततः। पृष्ठतः। पार्श्वतः।

अस्मिन्नेव ग्रन्थे श्लो० 1389. इतोऽत्र देशे। आद्यादित्वात्तसिरिति व्याख्यानम्। पञ्चम्यास्तसिल्। किमादिभ्यस्तसिल् सार्वविभक्तिकः। आद्यादिः—५.५५.

२११२। अपादाने चाहीयरुहोः। (५. ४. ४५)

अपादाने या पञ्चमी तदन्तात्तसिः स्यात्। ग्रामादागच्छति। ग्रामतः। अहीयरुहोः किम्। स्वर्गाद्धीयते। पर्वतादवरोहति।

अस्मिन्नेव ग्रन्थे श्लो० 215. केकयीतः कैकेय्याः। अपादानपञ्चम्यन्तात्तसिः। भरतोऽभूत्।

अस्मिन्नेव ग्रन्थे श्लो० 1527. दिलीपः तां पत्नीं रथादवारोहयत्। निषेधात्र तसिः। पञ्चम्यास्तसिल्। कुतः इतः इत्यादयः। दक्षिणतः। उत्तरतः। अतसुच्।

२११७। कृभ्वस्तियोगे सम्पद्यकर्तरि च्विः। (५. ४. ५०)

वा०। अभूततद्भाव इति वक्तव्यम्। (3340.)

२११८। अस्य च्वौ। (७. ४. ३२)

अवर्णस्य ईत्स्यात्। च्व्यन्तत्वादव्ययत्वम्। अकृष्णः कृष्णस्सम्पद्यते कृष्णी भवति। तं करोति कृष्णी करोति। ब्रह्मी भवति। गङ्गी स्यात्।

वा०। अव्ययस्य च्वावीत्वं नेति वाच्यम्। (5052.)

दोषाभूतमहः। दिवाभूता रात्रिः।

अस्मिन्नेव ग्रन्थे श्लो० 56. धरन्तीति धराः। पचाद्यच्। पयसां धराः पयोधराः स्तनाः। अपयोधराः पयोधरास्सम्पद्यमानाः पयोधरीभूताः। च्विः। 'कुगति' (सू. 1761) इति समासः।

अस्मिन्नेव ग्रन्थे श्लो० 510. अकरदाः करदाः सम्पद्यमानाः कृताः करदी-कृताः । च्विः । 'ऊर्यादि' (सू. 762) इति च्वेर्गतिसंज्ञा । 'कुगति' (सू. 761) इति समासः ।

अस्मिन्नेव ग्रन्थे श्लो० 916. नवा नूतना भवन्तो गीर्वाणा नवभवद्गीर्वाणाः । अभूततद्भावस्याविवक्षितत्वात् च्विप्रत्ययाभावः, विकल्पो वा तद्विधेः ।

अस्मिन्नेव ग्रन्थे श्लो० 752. अपूगाः पूगाः कृताः तान् पूगकृतान् । 'श्रेण्यादिषु च्व्यर्थवचनं कर्तव्यम्' (वा. 1296. सू. 738) इति च्व्यर्थसमासः । न च्व्यन्तः । 'ऊर्यादि' (सू. 762) इति गतिसंज्ञा । 'कुगति' (सू. 761) इति समासः ।

## २१२० । च्वौ च । (७. ४. २६)

च्वौ परे पूर्वस्य दीर्घः स्यात् । शुची भवति । पटू स्यात् ।

## २१२१ । अरुर्मनश्चक्षुश्चेतोरहोरजसां लोपश्च । (५. ४. ५१)

एषां लोपः स्यात् च्विश्च । अरू करोति । उन्मनी स्यात् । उच्चक्षू करोति । विचेती करोति । विरही करोति । विरजी करोति ।

भट्टिकाव्ये—II. 54.

जिते नृपारौ **सुमनी भवन्ति** शब्दायमानान्यशनैरशङ्कम् ।
वृद्धस्य राज्ञोऽनुमतेर्बलानि जगाहिरेऽनेकमुखानि मार्गान् ॥ 1914 ॥

असुमनांसि सुमनांसि सम्पद्यमानानि भवन्ति **सुमनीभवन्ति** । अनेन च्वौ -अन्तस्य लोपे 'अस्य च्वौ' (सू. 2118) इतीकारः । लटः शत्रादेशः ।

भट्टिकाव्ये—III. 2.

ततस्**सुचेतीकृत**पौरभृत्यो राज्येऽभिषेक्ष्ये सुतमित्यनीचैः ।
आघोषयन् भूमिपतिस्समस्तं भूयोऽपि लोकं **सुमनी चकार** ॥ 1915 ॥

**सुचेतीकृताः** अनुरक्तचित्तीकृताः । **सुमनी चकार** । सुचेतीसुमनीशब्दौ साधू ।

भट्टिकाव्ये—VIII. 55.

दृष्ट्वा दयितया साकं रहीभूतं दशाननम् ।
नाल सीतेत्युपारंस्त दुर्मना वायुसम्भवः ॥ 1916 ॥

अरहो रहस्यभूतो रहीभूतो रहसि स्थितः तम् । च्वौ सलोपः । ईकारः ।

अस्मिन्नेव ग्रन्थे श्लो० 1851. अनीरजा नीरजा सम्पद्यमाना कारिता **नीरजीकारिता** । सुमनीवत्प्रक्रिया ।

माघे—XIII. 49.

नवगन्धवारिविरजीकृताः पुरो
घनधूपधूमकृतरेणुविभ्रमाः ।
प्रचुरोद्धतध्वजविलम्बिवाससः
पुरवीथयोऽथ हरिणातिपेतिरे ॥ 1917 ॥

अविरजसो विरजसस्सम्पद्यमानाः कृता **विरजीकृताः** । सलोपः । ईकारः ।

**२१२२ । विभाषा साति कार्त्स्न्ये । (५. ४. ५२)**

च्विविषये सातिर्वा स्यात्साकल्ये ।

**२१२३ । सात्पदाद्योः । (८. ३. १११)**

सस्य षत्वं न स्यात् ।

अस्मिन्नेव ग्रन्थे श्लो० 28. **ज्योतिस्सात्** कार्त्स्न्येन ज्योतिर्मयं कुर्वतीम् । सातिः । 'नुम् विसर्जनीय' (सू. 434) इत्यादिना षत्वे प्राप्ते अनेन षत्वनिषेधः ।

भट्टिकाव्ये—IX. 86.

**मधुसाद्भूतकिञ्जल्कपिञ्जरभ्रमराकुलाम् ।**
उल्लसत्कुसुमां पुण्यां हेमरत्नलतामिव ॥ 1918 ॥

**मधुसाद्भूताः** कार्त्स्न्येन मधुभूताः । पूर्ववत्कार्त्स्न्ये सातिप्रत्ययः । 'आदेशप्रत्ययोः' (सू. 212) इति षत्वे प्राप्ते पूर्ववत्प्रतिषेधः ॥

भट्टिकाव्ये—IV. 7.

तस्मिन् कृशानुसाद्भूते सुतीक्ष्णमुनिसन्निधौ ।
उवास पर्णशालायां प्रसन्नविधमाश्रमान् ॥ 1919 ॥

शरभङ्गे कृशानुसाद्भूते भस्मीभूते सति । कार्त्स्न्ये सातिः ।

भट्टिकाव्ये—XIV. 85.

स भस्मसाच्चकारारीन् दुद्राव च कृतान्तवत् ।
चुक्रोध मारुतिस्तालमुच्चखान महाशिखम् ॥ 1920 ॥

भस्मसाच्चकार कार्त्स्न्येन भस्मभूतान् कृतवान् ॥

रघुवंशे—VIII. 20.

अकरोदचिरेश्वरः क्षितौ द्विषदारम्भफलानि भस्मसात् ।
इतरो दहने स्वकर्मणां ववृते ज्ञानमयेन वह्निना ॥ 1921 ॥

भस्मसादकरोत् कार्त्स्न्येन भस्मीकृतवान् ।

रघुवंशे—XI. 86.

भस्मसात्कृतवतः पितृद्विषः पात्रसाच्च वसुधां ससागराम् ।
आहितो जयविपर्ययोऽपि मे श्लाघ्य एव परमेष्ठिना त्वया ॥ 1922 ॥

भस्मसात्कृतवतः कोपेन भस्मीकुर्वतः । कार्त्स्न्ये सातिः । वसुधां पात्रसात् पात्राधीनं देयं कृतवतः । 'देये त्रा च' (सू. 2126) इति चकारात्सातिः ।

## २१२३ । सात्पदाद्योः । (८. ३. १११)

सस्य षत्वं न स्यात् ।

अस्मिन्नेव ग्रन्थे श्लो० 28. ज्योतिस्सात्कुर्वतीम् । षत्वनिषेधः ।

अस्मिन्नेव ग्रन्थे श्लो० 1918. मधुसाद्भूताः । पूर्ववत्प्रतिषेधः ।

भट्टिकाव्ये—IX. 87.

विलोचनाम्बु सिञ्चन्तीं कुर्वाणां परिसेसिचान् ।
हृदयस्येव शोकाग्निसन्तप्तस्योत्तमं व्रतम् ॥ 1923 ॥

विलोचनाम्बु सिञ्चन्तीम् । पदादित्वात् षत्वप्रतिषेधः ।

## २१२५ । तदधीनवचने । (५. ४. ५४)

सातिः स्यात् कृभ्वस्तिभिस्सम्पदा च योगे । राजसात्करोति । राजसात्सम्पद्यते । राजाधीनमित्यर्थः ।

भट्टिकाव्ये—V. 3.

अथ तीक्ष्णायसैर्बाणैरधिमर्म रघूत्तमौ ।
व्याधं व्याधममूढौ तौ यमसाच्चक्रतुर्द्विषौ ॥ 1924 ॥

यमसादन्तकाधीनम् ।

रघुवंशे—VIII. 2.

दुरितैरपि कर्तुमात्मसात्प्रयतन्ते नृपसूनवो हि यत् ।
तदुपस्थितमग्रहीदजः पितुराज्ञेति न भोगतृष्णया ॥ 1925 ॥

आत्मसात् स्वाधीनम् ।

अस्मिन्नेव ग्रन्थे श्लो॰ 290. अग्निसात् अग्न्यधीनम् ।

अस्मिन्नेव ग्रन्थे श्लो॰ 1710. स कुशः कुशावतीं श्रोत्रियेष्वधीनां श्रोत्रियसात् ।

नैषधे—I. 82.

धनुर्मधुस्विन्नकरोऽतिभीमजा-
परं परागैस्तव धूलिहस्तयन् ।
प्रसूनधन्वा शरसात्करोति मा-
मिति क्रुधाकुश्यत तेन कैतकम् ॥ 1926 ॥

शरसात् शराधीनम् ।

## २१२६ । देये त्रा च । ( ५. ४. ५५ )

तदधीने देये त्रा स्यात्सातिश्च कृभ्वस्तियोगे । विप्राधीनं देयं करोति विप्रत्रा करोति । विप्रत्रा सम्पद्यते । पक्षे विप्रसात्करोति । देये किम् । राजसाद्भवति राष्ट्रम् ।

नैषधे—III. 24.

राजा स यज्वा **विबुधव्रजत्रा**
कृत्वाध्वराज्योपमयेव राज्यम् ।
भुङ्क्ते श्रित**श्रोत्रियसात्कृत**श्रीः
पूर्वं त्वहो शेषमशेषमन्त्यम् ॥ 1927 ॥

**श्रोत्रियसात्कृता** दानेन तदधीना कृता । राज्यं **विबुधव्रजत्रा** कृतेन तदधीनं कृत्वा । अत्र त्राप्रत्ययः । चकारात् इतरत्र सातिप्रत्ययः ।

अस्मिन्नेव ग्रन्थे श्लो० 1060. **देवसात्कृत्वा** देवेभ्यो दत्त्वा तदधीनं कृत्वा । सातिः ।

## २१२८ । अव्यक्तानुकरणाद् द्व्यजवरार्धादनितौ डाच् । ( ५. ४. ५७ )

डाच् स्यात्कृभ्वस्तिभिर्योगे ।

**वा०** । नित्यमाम्रेडिते डाचीति वक्तव्यम् । ( 3638. )

पटपटाकरोति ।

भट्टिकाव्ये—VII. 104.

ततः प्रास्थिषताद्रीन्द्रं महेन्द्रं वानरा द्रुतम् ।
सर्वे **किलकिलायन्तो** धैर्यञ्चाधिषताधिकम् ॥ 1928 ॥

**किलकिलायन्तः** किलकिलाशब्दं कुर्वाणाः । अनेन डाचि 'लोहितादिडाज्भ्यः क्यष्' ( सू. 2668 ) इति क्यषि 'वा क्यषः' ( सू. 2669 ) इति पक्षे परस्मैपदम् । शतृ ।

अस्मिन्नेव ग्रन्थे श्लो० 207. **शकशकायद्भिः** तथा ध्वनद्भिः । डाच् ।

**वा०** । डाचि विवक्षिते द्वे बहुलम् । ( 4697. )

इति द्विर्वचनम् । पूर्ववत्त्वयष् । परस्मैपदं । शतृप्रत्ययः । अनितौ किम् । पटिति करोति ।

## २१२९ । कृञो द्वितीयतृतीयशम्बबीजात्कृषौ । ( ५. ४. ५८ )

द्वितीयादिभ्यो डाच् स्यात् कृञ एव योगे कर्षणेऽर्थे । द्वितीयं तृतीयं कर्षणं करोति द्वितीयाकरोति । तृतीयाकरोति । शम्बशब्दः प्रतिलोमे । अनुलोमं कृष्टं क्षेत्रं पुनः प्रतिलोमं कर्षति शम्बाकरोति । बीजेन सह कर्षति बीजाकरोति । 'बीजाकृतन्तूप्त-कृष्टम्' II. ix. 8. 'त्रिगुणाकृतं तृतीयाकृतम्' II. ix. 9. 'द्विगुणाकृते तु सर्वं पूर्वं शम्बाकृतमपीह' II. ix. 9. इत्यमरः ।

## २१३० । संख्यायाश्च गुणान्तायाः । ( ५. ४. ५९ )

कृञो योगे कृषौ डाच्स्यात् । द्विगुणा करोति क्षेत्रम् ।

## २१३१ । समयाच्च यापनायाम् । ( ५. ४. ६० )

कृषौ इति निवृत्तम् । कृञो योगे डाच्स्यात् । समया करोति । कालं यापयतीत्यर्थः ।

## २१३२ । सपत्त्रनिष्पत्त्रादतिव्यथने । ( ५. ४. ६१ )

सपत्त्राकरोति मृगम् । सपुङ्खशरप्रवेशेन सपत्त्रं करोतीत्यर्थः । निष्पत्त्रा करोति । सपुङ्खस्य शरस्यापरपार्श्वे निर्गमनान्निष्पत्त्रं करोतीत्यर्थः । अतिव्यथने किम् । सपत्त्रं निष्पत्त्रं वा करोति भूतलम् ।

अस्मिन्नेव ग्रन्थे ग० 785. धनञ्जयेन सपत्त्राकृतः सैन्धवः । डाच् । 'ऊर्यादि' (सू. 762) इति गतिसंज्ञा । 'कुगति' (सू. 761) इति समासः ।

## २१३३ । निष्कुलान्निष्कोषणे । ( ५. ४. ६२ )

निष्कुला करोति दाडिमम् । निर्गतं कुलमन्तरवयवानां समूहो यस्मादिति बहुव्रीहेर्डाच् ।

## २१३४ । सुखप्रियादानुलोम्ये । ( ५. ४. ६३ )

सुखा करोति प्रिया करोति गुरुम् । अनुकूलाचरणेन तच्चित्तं [illegible] ।

भट्टिकाव्ये—V. 64.

> सन्दिदर्शयिषुस्सान निजुह्नुः क्षपाटताम् ।
> लङ्कामवाप्समागम्य सीतामूचे सुखा कुरु ॥ 1929 ॥

सुखा कुरु अस्यचित्ताराधनं कुरु । सुखशब्दात्कृञो योगे डाच् । स्वस्वामि-चित्ताराधनमानुलोम्यम् ।

अनर्घराघवे—V. 6.

ग—भो भो परिव्राजक, कालसर्पखलीकारखर्दूलता न खलु सुखाकरी वृश्चिकमन्त्रतान्त्रिकस्य ॥ 1930 ॥

न सुखाकरी न सुखजनिका । डाच् ।

अनर्घराघवे—II. 8.

> प्रियाकर्तुं त्वस्मै नवनिजशिरःकर्तनरस-
> प्रहृष्यद्रोमा यस्स परमिह लङ्कापरिवृढः ।
> विलक्षव्यापारं किमपि ददृशुर्यस्य दशमं
> शिरस्ते मूर्धानः क्षणधृतपुनर्जन्मसुभगाः ॥ 1931 ॥

प्रियाकर्तुम् । डाच् ।

अस्मिन्नेव ग्रन्थे श्लो० 1705. प्रियाकर्तुमनुलोमयितुम् ।

## २१३५ । दुःखात्प्रातिलोम्ये । (५. ४. ६४)

दुःखा करोति । स्वामिनं पीडयतीत्यर्थः ।

अस्मिन्नेव ग्रन्थे श्लो० 65. मां दुःखा करोति दुःखमनुभावयतीत्यर्थः । डाच् ।

अनर्घराघवे—I. 57.

> कच्चिदस्मद्वियोगार्तिदुःखी दुःखा करिष्यति ।
> अपूर्वविषयालोकसुखी च सुखयिष्यति ॥ 1932 ॥

दुःखा करिष्यति । डाच् ।

२१३६ । शूलात्पाके । (५. ४. ६५)

शूला करोति मांसम् । शूलेन पचतीत्यर्थः ।

२१३७ । सत्यादशपथे । (५. ४. ६६)

सत्या करोति भाण्डं वणिक् । क्रेतव्यमिति तथ्यं करोतीत्यर्थः । शपथे तु सत्यं करोति विप्रः ।

अनर्घराघवे—VI. 32.

अगस्त्याज्ञासद्यःशमितविपुलोच्छ्रायविषमा-
नुदस्यन्तस्सेतावलगितवतो विन्ध्यशिखरान् ।
शिरःसङ्ख्यासत्याकृतदशमुखालोकरभसा-
दुपेत्यातित्रस्ताश्चपलमपसर्पन्ति कपयः ॥ 1933 ॥

सत्याकृतो ज्ञातः । डाच् ।

२१३८ । मद्रात्परिवापणे । (५. ४. ६७)

मद्रशब्दो मङ्गलार्थः । परिवापणं मुण्डनम् । मद्रा करोति । माङ्गल्यमुण्डनेन संस्करोतीत्यर्थः ।

वा० । भद्राच्चेति वक्तव्यम् । (3344.)

भद्रा करोति । अर्थः प्राग्वत् । परिवापणे किम् । मद्रं करोति ।

॥ इति स्वार्थिकप्रकरणम् ॥

---

॥ इति तद्धितप्रक्रिया समाप्ता ॥

## ॥ अथ द्विरुक्तप्रकरणम् ॥



### २१३९ । सर्वस्य द्वे । (८. १. १)

इत्यधिकृत्य ।

### २१४० । नित्यवीप्सयोः । (८. १. ४)

आभीक्ष्ण्ये वीप्सायां च द्योत्ये पदस्य द्विर्वचनं स्यात् । आभीक्ष्ण्यं तिङन्तेष्व-व्ययसंज्ञककृदन्तेषु च । पचति पचति । भुक्त्वा भुक्त्वा । वीप्सायां, वृक्षं वृक्षं सिञ्चति । ग्रामो ग्रामो रमणीयः । 'आभीक्ष्ण्ये णमुल् च' (सू. 3343) इत्यत्र चकारात् क्त्वा च ।

भट्टिकाव्ये—V. 51.

> स्थायं स्थायं क्वचिद्यान्तं क्रान्त्वा क्रान्त्वा स्थितं क्वचित् ।
> वीक्षमाणो मृगं रामश्चित्रवृत्तिं विसिष्मिये ॥ 1934 ॥

स्थायं स्थायं पुनः पुनः स्थित्वा । णमुल् । द्विर्वचनम् । पौनःपुन्यमाभीक्ष्ण्यम् । क्रान्त्वा क्रान्त्वा । चकारात् क्त्वा ।

भट्टिकाव्ये—XXII. 11.

> स्यन्त्वा स्यन्त्वा दिवश्शम्भोर्मूर्ध्नि स्कन्त्वा भुवं गताम् ।
> गाहितासेऽथ पुण्यस्य गङ्गां मूर्तिमिव द्रुताम् ॥ 1935 ॥

स्यन्त्वा स्यन्त्वा श्रुत्वा श्रुत्वा । चकारात् कृत्वा । आभीक्ष्ण्ये द्विर्वचनम् ।

भट्टिकाव्ये—XVIII. 27.

> शमं शमं नमस्यन्तः पुनन्ति परितो जगत् ।
> उज्जिहीषे महाराज त्वं प्रशान्तो न किं पुनः ॥ 1936 ॥

शमं शमं शान्त्वा शान्त्वा । आभीक्ष्ण्ये णमुल् । अनेन द्विर्वचनम् ।

अस्मिन्नेव ग्रन्थे श्लो० 16. मत्तमत्तनयनमिति पाठे मत्तमत्ते नयने अभी-क्ष्णमत्ते ।

नैषधे—V. 33.

शैशवव्ययदिनावधि तस्या यौवनोदयिनि राजसमाजे ।
आदरादहरहः कुसुमेषोरुल्ललास मृगयाभिनिवेशः ॥ 1937 ॥

अहरहः प्रत्यहम् । वीप्सायां द्विर्भावः । अत्यन्तसंयोगे द्वितीया ।

नैषधे—I. 132.

पदे पदे सन्ति भटा रणोद्भटा न तेषु हिंसारस एष पूर्यते ।
धिगीदृशं ते नृपतेः कुविक्रमं कृपाश्रये यः कृपणे पतत्रिणि ॥ 1938 ॥

पदे पदे सर्वत्र । वीप्सायां द्विर्भावः ।

मेघसंदेशे—I. 13.

मार्गं तावच्छृणु कथयतस्त्वत्प्रयाणानुरूपं
सन्देशं मे तदनु जलद श्रोष्यसि श्रोत्रपेयम् ।
खिन्नः खिन्नः शिखरिषु पदं न्यस्य गन्तासि यत्र
क्षीणः क्षीणः परिलघु पयः स्रोतसां चोपभुज्य ॥ 1939 ॥

खिन्नः खिन्नः अभीक्ष्णं क्षीणबलस्सन् । नित्यार्थे द्विर्भावः कृदन्तत्वात् । क्षीणः क्षीणः । पूर्ववत् ।

मेघसंदेशे—I. 9.

मन्दं मन्दं नुदति पवनश्चानुकूलो यथा त्वां
वामश्चायं नदति मधुरं चातकस्ते सगन्धः ।
गर्भाधानक्षणपरिचयान्नूनमाबद्धमालाः
सेविष्यन्ते नयनसुभगं खे भवन्तं बलाकाः ॥ 1940 ॥

मन्दं मन्दमतिमन्दमित्यर्थः । मन्दशब्दः कृदन्तो न । अत्र कथञ्चिद्वीप्सायामेव द्विरुक्तिर्निर्वाह्या । प्रकारे गुणवचनस्य' (सू. 2147) इति तदाश्रयणे कर्मधारयवद्भावेन सुब्लुकि मन्दमन्दमिति स्यात् ।

चम्पूरामायणे—I. 26.

मन्दमन्दमपयद्वलित्रया गाधतां विषयतामभिगन्तुम् ।
कोसलेन्द्रदुहितुश्शनैरभून्मध्ययष्टिरपि दृष्टिगोचरा ॥ 1941 ॥

मन्दमन्दं मन्दप्रकारम् । 'प्रकारे गुणवचनस्य च' (सू. 2147) इति द्विर्भावः ।

## २१४१ । परेर्वर्जने । (८. १. ५)

परि परि वङ्गेभ्यो वृष्टो देवः । वङ्गान्परिहृत्येत्यर्थः ।

### वा० । परेर्वर्जने वावचनम् । (4683.)

परि वङ्गेभ्यः । 'अपपरी वर्जने' (सू. 596) इति कर्मप्रवचनीयत्वम् ; 'पञ्चम्यपाङ्परिभिः' (सू. 598) इति तद्योगे पञ्चमी । 'अपपरिबहिरञ्चवः पञ्चम्या' (सू. 666) इति समासः । पर्युदधि । द्विर्भावे समासो न । परिपर्युदधेः ।

अस्मिन्नेव ग्रन्थे श्लो० 434. उदधेः परि परि उदधिं वर्जयित्वा । असमासपक्षे 'परेर्वर्जने' इति द्विर्वचनम् ।

## २१४२ । उपर्यध्यधसस्सामीप्ये । (८. १. ७)

'उभसर्वे' (वा. 1444. सू. 544) इति द्वितीया । उपर्युपरि ग्रामम् । ग्रामस्योपरिष्टात्समीपकाले दुःखमित्यर्थः । अधोऽधो लोकं लोकस्याधस्तात्समीपे देश इत्यर्थः ।

अस्मिन्नेव ग्रन्थे ग० 282. पुष्करावर्तकानुपर्युपरि । द्विरुक्तिः । तद्योगे द्वितीया ।

अस्मिन्नेव ग्रन्थे श्लो० 281. दृषदस्तटीः उपर्युपरि दृषदां समीपोपरिप्रदेशे । द्विर्भावे तद्योगाद्द्वितीया । यथाह वामनः 'उपर्यादिषु सामीप्ये द्विरुक्तेषु द्वितीया' इति ।

अस्मिन्नेव ग्रन्थे श्लो० 283. पयोधरानधोऽधः । मेघानां समीपाधःप्रदेशे । द्विर्भावः । 'उभसर्वे' (वा. 1444. सू. 544) इति तद्योगे द्वितीया ।

२१४३ । वाक्यादेरामन्त्रितस्यासूयासम्मतिकोपकुत्सनभर्त्सनेषु ।

(८. १. ८)

असूयायाम्, सुन्दर सुन्दर वृथा ते सौन्दर्यम् । संमतौ, देव देव वन्द्योऽसि । कोपे, दुर्विनीत दुर्विनीत इदानीं ज्ञास्यसि । कुत्सने, धानुष्क धानुष्क वृथा ते धनुः । भर्त्सने, चोर चोर घातयिष्यामि त्वाम् ।

२१४४ । एकं बहुव्रीहिवत् । (८. १. ९)

द्विरुक्त एकशब्दो बहुव्रीहिवत्स्यात् । एकैकमक्षरम् ।

भट्टिकाव्ये—XIV. 29.

कोट्या कोट्या पुरद्वारमेकैकं रुरुधे द्विषाम् ।
षट्त्रिंशद्धरिकोट्यश्च निवव्रुर्वानराधिपम् ॥ 1942 ॥

अस्मिन्नेव ग्रन्थे श्लो० 504. एकैकस्मिन्नहनि । एकमेकमित्यत्र बहुव्रीहिवन्न ।

२१४७ । प्रकारे गुणवचनस्य । (८. १. १२)

सादृश्ये द्योत्ये गुणवचनस्य द्वे स्तस्तच्च कर्मधारयवत् । पटुपट्वी । पटुपटुः । पटुसदृशः । ईषत्पटुरिति यावत् । शुक्लशुक्लं रूपम् । शुक्लशुक्लः पटः ।

वा० । संभ्रमेण प्रवृत्तौ यथेष्टमनेकधा प्रयोगो न्यायसिद्धः । (5056.)

सर्पः सर्पः बुध्यस्व बुध्यस्व । सर्पः सर्पः सर्पः बुध्यस्व बुध्यस्व बुध्यस्व ।

वा० । क्रियासमभिहारे च । (4665.)

लुनीहि लुनीहीत्येवायं लुनाति ।

वा० । कर्मव्यतिहारे सर्वनाम्नो द्वे वाच्ये, समासवच्च बहुलम् । (4700.)

बहुलग्रहणात् अन्यपरयोर्न समासवत् । इतरशब्दस्य तु नित्यम् ।

वा० । स्त्रीनपुंसकयोरुत्तरपदस्थाया विभक्तेराम्भावो वा वक्तव्यः । (4701.)

मेघसन्देशे—I. 14.

**अद्रेः** शृङ्गं हरति पवनः किंस्विदित्युन्मुखीभि-
  र्दृष्टोत्साहश्चकितचकितं मुग्धसिद्धाङ्गनाभिः ।
स्थानादस्मात्सरसनिचुलादुत्पतोदङ्मुखः खं
  दिङ्नागानां पथि परिहरन् स्थूलहस्तावलेपान् ॥ 1943 ॥

**चकितचकितं** चकितप्रकारं यथा भवति तथा । द्विर्भावः ।
असिन्नेव ग्रन्थे श्लो० 1941. **मन्दमन्दं** मन्दप्रकारम् ।

किरातार्जुनीये—XVIII. 41.

अणीयसे विश्वविधारिणे **नमो**
  **नमो**ऽन्तिकस्थाय **नमो** दवीयसे ।
अतीत्य वाचां मनसां च गोचरं
  स्थिताय ते तत्पतये **नमो नमः** ॥ 1944 ॥

ते तुभ्यं **नमो नमः** । 'चापले द्वे भवत इति वक्तव्यम्' इति द्विरुक्तिः ।
'सम्भ्रमेण प्रवृत्तिश्चापलम्' इति काशिका ।

अनर्घराघवे—VII. 117.

त्रिपुरहरकिरीटक्रीडितैः क्रीडयद्भि-
  र्भुवनममृतभानोर्बालमित्रैः पयोभिः ।
सगरसुतचितायाः पावनीतोयराशे-
  **रियमियम**घमग्रे जाह्नवी निह्नुते नः ॥ 1945 ॥

**इयमियम्** । 'सम्भ्रमे द्वे भवतः' इति द्वित्वम् ।

भट्टिकाव्ये—XX. 29.

त्वं **पुनीहि पुनीही**ति पुनन्वायो जगत्त्रयम् ।
चरन् देहेषु भूतानां विद्धि मे बुद्धिविप्लवम् ॥ 1946 ॥

हे वायो **पुनीहि पुनीही**ति जगत्त्रयं पुनः पुनः पुनामि भृशं वा पुनामी-
त्यभिप्रायः । त्वं जगत्त्रयं पुनन् '**क्रियासमभिहारे लोट्**' (सू. 2825) इति लोट् .

तस्य परस्मैपदसम्बन्धी हिरादेशः 'क्रियासमभिहारे च' इति द्विर्वचनम् । पुनन्तित्यनुप्रयोगः ।

अस्मिन्नेव ग्रन्थे श्लो० 1087. वसुन्धरे! त्वं धत्स्व धत्स्वेति अहं पुनः पुनर्दधे भृशं वा दध इत्येवमभिप्राया जगन्ति दधती । पूर्ववल्लोट् । तस्यात्मनेपदसम्बन्धी स्वादेशः । पूर्ववद्द्विर्वचनम् । पूर्ववदनुप्रयोगः ।

अस्मिन्नेव ग्रन्थे श्लो० 1722. उदन्वानुदधिर्निशाचरी च अन्योन्यं अन्योन्यस्येत्यर्थः । 'कर्मव्यतिहारे' इति द्वित्वम् । 'समासवच्च बहुलम्' इति बहुलग्रहणाद्यदा न समासवत्ता तदा पूर्वपदस्य प्रथमैकवचनम् उत्तरपदस्याम्भावः ।

वा० । स्त्रीनपुंसकयोरुत्तरपदस्थाया विभक्तेराम्भावो वक्तव्यः । (4701.)

कर्मव्यतिहारे आत्मनेपदस्य 'इतरेतर' (सू. 2682) इति प्रतिषेधः ।

माघे—XVIII. 32.

**अन्योऽन्येषां** पुष्करैरामृशन्तो
दानोद्भेदानुच्चकैर्भुग्नवालाः ।
उन्मूर्धानस्सन्निपत्यापरान्तैः
प्रायुध्यन्त स्पष्टदन्तध्वनीभाः ॥ 1947 ॥

**अन्योऽन्येषां** परस्परेषाम् । कर्मव्यतिहार इति द्वित्वम् । समासवच्चेति विकल्पादसमासपक्षे पूर्वपदस्य प्रथमैकवचनम् । 'इतरेतरान्योन्य' (सू. 2682) इत्यात्मनेपदप्रतिषेधः ।

## २१४८ । अकृच्छ्रे प्रियसुखयोरन्यतरस्याम् । (८. १. १३)

प्रियप्रियेण ददाति प्रियेण वा । सुखसुखेन ददाति सुखेन वा । अतिप्रियमपि वस्त्वनायासेन ददातीत्यर्थः ।

## २१४९ । यथास्वे यथायथम् । (८. १. १४)

इति निपातः ।

अस्मिन्नेव ग्रन्थे श्लो० 307. यथायथं यथास्वम् । यथागतमिति पाठे यतो यतस्तत्पादुत्थायागताः । 'यथाऽसादृश्ये' (सू. 661) इति वीप्सायामव्ययीभावः ।

२१५० । द्वन्द्वं रहस्यमर्यादावचनव्युत्क्रमणयज्ञपात्रप्रयोगाभिव्यक्तिषु ।

(८. १. १५)

द्विशब्दस्य द्विर्वचनं पूर्वपदस्याम्भावोऽत्वं चोत्तरपदस्य नपुंसकत्वं च निपात्यते एष्वर्थेषु ।

रघुवंशे—VII. 14.

परस्परेण स्पृहणीयशोभं
न चेदिदं द्वन्द्वमयोजयिष्यत् ।
अस्मिन् द्वये रूपविधानयत्नः
पत्युः प्रजानां वितथोऽभविष्यत् ॥ 1948 ॥

॥ इति द्विरुक्तप्रकरणम् ॥

इति सोदाहरणश्लोकायां पाणिनिसूत्रव्याख्यायां
पूर्वार्धं समाप्तम् ।



Rathnam Press, Madras-1